150'10'

श्री ·

वेदान्तग्रन्थरत्नमाला · २.

## श्रीमहाभारतान्तर्गत-

# श्रीमद्भगवद्गीता

## प्रथमषट्कं.

श्रीरामानुजभाष्येण, तद्व्याख्यया श्रीकवितार्किकसिंह
सर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्तदेशिकविरचितया
तात्पर्यचन्द्रिकया, श्रीशङ्करभाष्येण, श्री
मदानन्दतीर्थभाष्येण, जयतीर्थमुनि
विरचितया तद्व्याख्यया च
अनुगतं



श्री अ. वी नरसिंहाचार्य, ति वे नरसिंहाचार्याभ्यां
परिशोधितम्

—

Sa 2G1 NAR

इदञ्च
आर्. वेङ्कटेश्वरसभाध्यक्षैः रक्षिकायाम्
आनन्दमुद्राशालायां मुद्रितं
विजयताम्

1910

ANANDA PRESS MADRAS

VOL I [Copyright Registered]




श्रीः

# उपोद्घातः.

आर्यमिश्राः! विदितमिदमखिलैरपि भवादृशैः यद्वयमनादिनि कर्माविद्यादिचक्रे भ्राम्यन्तः प्राकृतैः करणकलेवरैः चिराय संसृज्यमानाः प्रकृतिभाविताः प्रकृतिसाम्यमश्नुवानाः स्वमानसहजमपि ज्ञानानन्दामलत्वादिकं परमपुरुषशेषत्वमपि सुदूरं विस्मृत्य प्रतिक्षणमुपचीयमानवैभवयाऽनया प्रकृतिपिशाचिकया गुणमय्या दुरन्तया दुरत्यययाऽऽवेश्यमाना विविधान् सांसारिकांस्तापाननुभवाम इति। इदमेवास्माकं बद्धत्वं नाम, यत् क्षणमपि न पारयामः प्रकृतिबन्धमन्तरेणावस्थातुम्। किञ्च विचित्रोऽयमभिषङ्गः, यदनुभावयन्नपि दुरत्ययं क्लेशजालं सुखरूपताम् आपाततः प्रदर्शयति। अतः कथमयमुच्छेद्य इति साधुविचार्यमापतितम्। तत्र च कानि विद्यन्ते साधनानीति विमृशन्तः प्रत्यक्षस्यातीन्द्रियविषयावेदनशक्तिवैकल्यात् अनुमानस्य तदेकसाधनत्वात् शब्दमेव प्रमाणयामः। स च पौरुषेयः अर्थसिद्धिं प्रतिपादकस्य विस्रम्भणीयताज्ञानमवलम्ब्य तदुक्तार्थेषु पुरुषं प्रवर्तयति। अतः कथमस्तु सजातीयेषु विस्रम्भोऽस्माकम्। अविस्रम्भे च नैव तदुपदिष्टार्थेषु प्रवर्तमहि। तदिदमेव साधनमित्यपास्तम्। सम्प्रति पुनर्मार्गणीयमुपायान्तरं, येन दुरुत्तरमिममुत्तरेम संसारसागरम्। इदमेव विचिन्त्य भगवान् निरुपाधिकवत्सलः अशेषशरण्यश्च स्वाज्ञारूपां प्रतिकल्पमभिन्नानुपूर्वीकतया नित्याम् अशेषजनानुग्रहाय विविधपुरुषार्थप्रवर्तिनीं दुरन्तसंसारनिगलनिस्फुटनैकव्यवसायां श्रुतिं स्वनाभिनलिनजनिताय वेधसे प्रथममुपादिशत्। सा चेयन्तमवधिं प्रसरत्यनुच्छिन्नसन्तानेति नन्वनुभवसाक्षिकमिदम्। सा च सर्वानुग्रहप्रवृत्ता तत्तदधिकारोचितानात्मनि विस्रम्भोपजननायानुपेक्षणाय च प्रकाशयन्ती पुमर्थानतिगहनभावमासादयतीति विवरणसापेक्षतामस्या निध्याय सोऽयं भगवान् कांश्चिदनुगृह्य स्वयं तेष्वनुप्रविश्य च तां विवरीतुं प्रावर्तिष्ट। तानि च विवरणानि—स्मृतयः, इतिहासाः, पुराणानि, आगमाः, इति व्यपदिश्यन्ते। तत्राद्याः भगवदाराधनरूपस्य फलापेक्षिजनानुग्राहकस्य कर्मकाण्डस्य व्याख्यारूपाः। इतिहासश्च महापुरुषचरिताश्रयो वेदान्तभागव्याख्या। पुराणानि सर्गादिलक्षणपञ्चकसङ्गतानि। आगमाः शैवादयो देवतोपासनादिबोधकाः। तेषु इतिहासो रामायणभारतादिः। स ह्युपनिषद्व्याख्यारूपतया प्राधान्येन च स्मृतिपुराणेभ्यः प्रमाणतमः। श्रीरामायणं हि भगवता वाल्मीकिना मानुषं वेषमास्थितवतो भगवतश्चरितमधिकृत्य चतुर्मुखप्रेरणयाऽऽदौ विरचितं हिततमं मोक्षसाधनं भगवत्प्रपदनं श्रियः सीतारूपमाश्रितायाः पुरुषकारतावैभवमुदञ्चयतीति 'वेदवेद्ये परे पुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना' इत्यादिना प्रशस्यते। अनेन हि अजायमानं सर्वजनकं च तादात्विकनरपतिललामभूताद्दशरथादुत्पद्यमानमाज्ञाय प्रमेयानुसारसन्धया प्रमाणभूतो नित्योऽपि वेदस्तात्कालिकमुनिपरिषदुपसेव्यमानाद्वाल्मीकेराविरभवदिति प्रतिपाद्यते। तथा महाभारतमपि भगवतो देवकीनन्दनवेषस्य निसृष्टभरपाण्डुपुत्रपरित्राणवैभवं तदत्यन्तभक्तपाण्डवचरितकथनमिषेणोदाहरत् प्रपदनैकहार्यतां परमपुरुषस्य प्रकाशयत्, साक्षान्नारायणांशसम्भवाद्व्यासमहर्षेः प्रादुरासीत्। इदञ्च 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्। को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत्' 'कार्ष्णं वेदमिमं विद्वान्' 'चत्वार एकतो वेदाः भारतञ्चैकमेकतः' 'वेदानध्यापयामास महाभारतपञ्चमान्' 'तदिदमवगतं पञ्चमादेव वेदात्' इत्यादिभिः प्रकाश्यते। अस्य भगवच्चरितकीर्तनपरत्वं 'नारायणकथामिमाम्' इति स्वेनाप्युक्तम्। अत्र च श्रीमतो नारायणस्य पारम्यं चतुर्मुखादीनां तत्सृज्यत्वं पञ्चरात्रशास्त्रप्रामाण्यमित्यादिकं स्फुटं बहुधा प्रपञ्चितम्। प्रसङ्गेषु परमार्थयोजनञ्च भग-

यता वेदव्यासेनैव प्रतिज्ञातमादिपर्वणि। अनेनैव स्वप्रणीतानि शारीरकमीमांसासूत्राण्यपि व्याख्यातानीति तेषामपि संवादसम्पादनेन चरितार्थोऽयं प्रबन्ध इति प्रतिभाति । निखिलांशतोऽपि सारभूतेऽस्मिन् प्रबन्धे भगवद्गीता महत्त्वनामाध्याय इत्यादिकमाद्रियन्ते हि जनाः । तत्रेयं भगवद्गीता सुयोधनात्प्रवृत्ते महति समरे गुरुजनादरेण कुलक्षयभयेन बन्धुस्नेहेन च युद्धश्रद्धाविकलं मध्यमपाण्डवं प्रकृतौ पर्यवस्थापयितुं भगवान् वासुदेवः स्वधर्मानुष्ठानमद्योपायानामावश्यकमित्युपदिदेशेतीदं प्रकरणमवलम्ब्य प्रवर्त्तेयमष्टादशाध्यायी। तत्र हि शरीरनाशेऽपि नित्यस्य जीवस्य न कदाचन हानिः, शरीरनाशादिप्रयुक्तव्यथाया आभिमानिकत्वेन स्थिरत्वाभावान्मर्षणीयत्वमिति दारुणरसस्यापि व्यथाहेतोः समरस्य क्षत्रधर्मत्वेन तदनुष्ठाने न पराङ्मुखता कार्येति, शत्रुविजयादिफलाभावेऽपि परायत्तकर्तृत्वयुक्तस्य जीवस्य फलं प्रति स्वाम्यविरहात् कर्मण्येवाधिकारो न फलेष्विति, प्रकीर्णविषयतया शास्त्राणां तत्तदधिकारानुरोधेन परिग्राह्यत्वादहिंसामार्दवादीनां समरव्यतिरिक्तविषयत्वेन व्यवस्थेति, उद्वेगदायितया विगुणस्यापि रणस्य क्षत्रधर्मत्वादवश्यानुष्ठेयत्वमिति, धर्मानुष्ठाने निरहङ्कारस्य फले निर्ममस्य चाधिकारिणः सर्वानर्थमूलभूतयोरहङ्कारममकारयोः सुदूरनिरासेन भगवत्परतन्त्रत्वाध्यवसायेन निष्कामकर्माचरणेन च सवासनं निरस्तसमस्तसांसारिकसङ्गस्य परमार्थसिद्धिरप्यवश्यं भाविनीति, एतादृशं विलम्बमप्यसहुष्णो द्रुततरमेव परमां सिद्धिमधिजिगांसमानस्य स्वस्वातन्त्र्यसाध्यादुपासनादुपरिरंसोश्च पुरुषस्य पुरुषोत्तमः स्वयमेवोपायभूतइति चास्यां सारोद्धारः ॥

एतदध्यायानुक्रमणिकेयम्—



षट्कत्रयात्मिकायामस्यामष्टादशाध्याय्या पूर्वषट्केन—

" ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते ।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्के न चेदिते ॥ "

इति परमात्मसाक्षात्कारनिःश्रेणिभूतप्रत्यगात्मयाथात्म्यज्ञानसहकारिभूतौ सपरिकरौ कर्मयोगज्ञानयोगावुपदिष्टौ । द्वितीयषट्केन—

" मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये ।
ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः "

इति भगवत्तत्त्वज्ञानसंपत्तिहेतुर्ज्ञानकर्मपरिकर्मितः भक्तियोग उक्तः। तृतीयषट्केन प्रथमपट्कशेषभूतेन-

" प्रधानपुरुषव्यक्तसर्वेश्वरविवेचनम् ।
कर्मधीर्भक्तिरित्यादिः पूर्वशेषोऽन्तिमोदित. "

इति मूलप्रकृतेः महदादीनां तत्कार्याणा भोक्तुः पुरुषस्य कर्मज्ञानभक्तियोगानां च विवेचनमिति संगत्या निदर्शितोऽयं विभाग इति भगवद्यामुनपरमाचार्यपादाः *गीतार्थं समग्रहन्।* भगवद्गीता चेयमर्जुनाय भगवदुपदिष्टस्य अध्यात्मशास्त्रस्य व्यासकृतः श्लोकरूपेणानुवाद इति बहवः । तदन्ये न मन्य-

न्ते, मन्यन्ते च भगवन्मुखोदितानुपूर्व्या एव महाभारते भगवतो द्वैपायनमुने सयोजनमात्रमेव व्यापार इति। दर्शयन्ति चानार्थे भगवद्गीताष्टादशाध्यायीसमनन्तरोपात्तभीष्मवधपर्वादिभागनिविष्टान् वैशम्पायनवचनत्वेनोपनिविष्टान् श्लोकान्—

" गीता सुगीता कर्तव्या किमन्यैश्शास्त्रसङ्ग्रहै ।
या स्वय पद्मनाभस्य मुखपद्माद्विनिस्सृता ॥
सर्वशास्त्रमयी गीता सर्वदेवमयो हरि ।
सर्वतीर्थमयी गङ्गा सर्ववेदमयो मनु ॥
गीता गङ्गा च गायत्री गोविन्देति हृदि स्थिते ।
चतुर्गकारसयुक्ते पुनर्जन्म न विद्यते ॥
षट् शतानि सर्विंशानि श्लोकाना प्राह केशव । ( ६२० )
अर्जुनस्सप्तपञ्चाशत् ( ५७ ) सप्तषष्टिं तु सञ्जय ॥ ६७ )
धृतराष्ट्र श्लोकमेक ( १ ) गीताया मानमुच्यते ।
भारतामृतसर्वस्वगीताया मथितस्य च ॥
सारमुद्धृत्य कृष्णेन अर्जुनस्य मुखे हुतम् ॥ " इति ॥

अत्रेद पूर्वेषा प्रतिवचनम्—

इमानि पद्यानि महाभारतगतानीति नाङ्गीक्रियन्ते, पुराण हयग्रीवशास्त्रिमुद्रितेषु प्रतापचन्द्रराजमुद्रितेषु ग्रन्थाक्षरै चतुर्वेदशतक्रतुकुलतिलक श्रीमद्रामानुजार्यसूरिशोधितेषु नैभ्रवकाश्यपकविराजशेखर गोपालसूरिसङ्गीकृतेषु च मुद्रितपुस्तकेषु प्राचीनेषु तालपत्रपुस्तकेषु चैषामदर्शनेन साशयिकत्वात्, अनुपपन्नत्वात्, अफलत्वाच्च । तथाहि—नोपपन्नमिद, विकल्पासहत्वात्, 'धृतराष्ट्र उवाच' इति निवेशमात्रेण प्रथमपद्यस्य धृतराष्ट्रकर्तृकत्वाभ्युपगमे तत्तत्प्रकरणेषु ' राजिल उवाच' 'जरत्कारुरुवाच' इत्यादीनामपि कथ तत्तद्विरचितत्व नाभ्युपगम्यते । अभ्युपगमे च भगवत कृष्णद्वैपायनस्य प्रकृतप्रबन्धप्रणयनव्यापार 'धृतराष्ट्र उवाच' इत्यादिवक्यर्योजनमात्रम्, अध्यायविभागश्चेति पर्यवस्यति। तावन्मात्रस्य 'को ह्यन्यो मुनिभिस्त्वय महाभारतकृद्भवेत्' इत्यादिके एतद्बहिर्भूते 'द्वैपायनोष्ठपुटनिस्सृतम्' 'इतिहासमिम चक्रे पुण्य सत्यवतीसुत ' ' चतुर्विंशतिसाहस्रीं चक्रे भारतसहिताम्' 'ग्रन्थग्रन्थि तदा चक्रे मुनिर्गूढ कुतूहलात् ' अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च' तच्छ्लोककूटमद्यापि ग्रथित सुदृढ मुने' ' तावच्चकार व्यासोऽपि श्लोकानन्यान् बहूनपि ' षष्टिं शतसहस्राणि चकारान्या स सहिताम् नारदोऽश्रावयद्देवानसितो देवल पितॄन् । गन्धर्वयक्षरक्षासि श्रावयामास वै शुक ' 'अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान्' इत्यादिभिरेतद्ग्रन्थघटकैश्च भूयोभिर्वचनैर्विरोधस्य कण्ठेगड्डुयमानत्वात् । को हि स्वय तपोमहिमसपन्न पुराणसहिताप्रणेतापि सन् तत्तद्वचनानुधारणमात्रसुलभेन सन्दर्भयोजनकवाक्यविन्यासमात्रेणामानुषता नारायणानतरत्वञ्च सम्भाव्य प्रशसेत् । को वा परकर्तृकस्य स्वकर्तृकता वा प्रकाशयेत्, प्रकाश्य वा वहुम यत । अत श्रुतहानमश्रुतकल्पनञ्चेति महदिद साहसम् । *गीताबहिर्भूतविषयस्य मुनिसन्दर्भत्वेऽपि गीताया* अतथाभाव इति च न सुन्दरम्, वैलक्षण्यस्य दुरुपपादत्वात् । भगवद्गीतेतिनाम्न एव भगवता वासुदेवेन गीता अर्जुनायोपदिष्टेत्यर्थकतया तथात्वमिति च न साधु, अष्टावक्रगीता श्रुतिगीता भ्रमरगीता इत्यादिष्वपि तत्तदुच्चरितानुपूर्वीमात्रार्थकत्वापत्ते., श्लोकसख्यानिरेकापत्तेश्च । अफलञ्चेद गीताया भगवद्वासुदेवप्रणीतपद्यात्मकत्वारोपणम् । नास्य प्रामाण्य फलम्, अतथाभावेऽपि तस्य सिद्धे , तथाभावेऽप्यसिद्धेश्च। न हि व्यासकर्तृकमित्यप्रमाण, न वा *किञ्चिद्वासुदेवकर्तृकमिति प्रमाण भवितुमर्हति , प्रामाण्य प्रत्यविप्लुतत्वस्यैव धौरेयत्वात्* । न हि व्यास-

कर्तृकाणीति ब्रह्मविचारसूत्राणि प्रामाणिकैर्दूरीक्रियन्ते, न वा भगवद्भक्तृकाणीत्येव बौद्धशास्त्रवचनान्याद्रियन्ते । तेषां मोहनैकप्रयोजनत्वदर्शनादप्रामाण्यमितिचेत्—हन्त तर्हि वक्त्रधीनप्रामाण्यवादादेवारूढो विषयाधीने तस्मिन्निपण्णश्चेति भवानेव विमृशतु।नापि प्रयोजनान्तरं सुवचम्,येन जरत्कर्पटशकल'कन्यासगन्धाऽपि प्रकृतकल्पना क्षणमप्युच्छ्वसितुमीष्टे । नच 'न हि वचनविरोधे न्यायशतं प्रभवति' इति नयेन प्राङ्निर्दिष्टानां गीताप्रशंसापराणां वैशम्पायनप्रोक्तानां पद्यानां विमतिकूलङ्कषत्वादकाण्डताण्डवमेवेदं भवत इति वाच्यम्, महाभारतकोशान्तरेष्वदृष्टानां प्रागुपन्यस्तप्रबलविरोधपराहतानां भगवद्गीतापर्वान्तःस्थ भीष्मवधपर्वणि सुतरामसङ्गतानां प्रक्षिप्तत्वं प्रामाणिकावसेयमिति स्वसिद्धावपि दुर्बलैः परायत्तैः पद्यैरेतादृशबहुवचनबाधस्य परिहास्यत्वात् । किञ्च 'किमकुर्वत सञ्जय' इति प्रश्नमन्तरेणोत्तरानुपपत्त्या कल्पितं धृतराष्ट्रस्य 'धर्मक्षेत्रे कुरुक्षेत्रे' इत्यादिपद्यनिर्माणमार्मिकत्वं 'पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्' इत्यादिपद्यनिर्मातृत्वं सुयोधने न कथं कल्पयितुमीष्टाम्। वैशम्पायनोक्तिशेषत्वादिति चेत्—तुल्यमिदमन्यत्रापि विनाभिनिवेशात् । विंशत्युत्तरशतकपट्कस्य केशवोक्तार्थवर्णनपरत्व, सप्तपञ्चाशतः पद्यानामर्जुनप्रश्नानुवादकत्वमित्यादिनाऽन्यथासिद्धेश्च नैतावन्मात्रेणानुपपत्तिसहस्रपराहतेयं कल्पना क्षणमपि जीवतीति मन्तव्यम्—इति । अत्र निर्णयस्तु न दूरे सुमनसामिति विरमामः । अस्याश्च वेदान्तार्थगर्भत्वेन श्रीशारीरकमीमांसासूत्रभाष्ये प्रवृत्तैः विशिष्टाद्वैताद्वैतद्वैतभाष्यकारैः स्वस्वमतानुयायीनि भाष्याणि प्राणीयन्त । तदनुसारिभिश्च तान्यपि व्याख्यायन्त। तानि च पण्डितानाम् एकत्र भाष्यत्रयं तद्व्याख्याश्च दिदृक्षूणां गुणदोषतः स्वान्यभाष्याणि परीचिक्षिषमाणानाञ्च सौकर्याय ग्रन्थविस्तरं कियताचिदंशेनोपेक्ष्यापि महान्तं यत्नमास्थायास्माभिरमुद्यन्त । शाङ्करभाष्यस्यैव वैपुल्यात् तद्व्याख्यायोजने भूयांसं विघ्नमुत्प्रेक्षमाणैः न तद्व्याख्यासंयोजनयत्नोऽङ्गीकृतः । अस्मद्भाष्यतद्व्याख्योपन्यस्तानां प्रमाणानामाकरनिर्देशः लघुव्याख्या च समयोजिषाताम् । दृढतरैः मसृणावदातैः धवलैश्च पत्रैः मुद्रणश्रमस्सफलीकृतः।प्रागुपदर्शितक्रमेण प्रथमषट्कमिदमद्यावगाहितम् । सर्वांशैस्समग्रस्यास्य गौरवातिरेकेण महाभारतायमानत्वमालोच्य पृथग्बन्धनसौकर्यमाहितम् । उपरितनांशमुद्रणेऽपि परमवधीयते । त्रिचतुरैरेव मासैः मन्यामहे प्रभविष्यामः प्रदर्शयितुमार्यमिश्रान्मध्यममपि षट्कमिति । तद्यथा यथाऽयं महानुद्यमस्सफलो भवेत्,यथाच मुद्रणे प्रवृत्तानां व्ययायासमञ्जुषा नोपहन्येतोत्साहः;तथाऽस्माभिरिवार्यमिश्रैरपि सविशेषानुतर्षं प्रयतितव्यं प्रकाशफले सविभागश्च पूर्णपात्रवृत्त्या परिभाष्य इति शतकृत्वः प्रार्थयामहे ॥

वीतोपसर्गमिदमद्भुतसर्गकर्ता नारायणस्स तनयोऽप्यथ सत्यवत्याः ।
सौजन्यधन्यचरितस्सुकृतिव्रजश्च निर्वर्तयेयुरिति नित्यमिमे नतास्स्मः ॥

इति

श्री· ति· अ· ति· कुमारताताचार्यः·

(कविभूषणः)

एतन्मुद्रणावसरे प्रत्यवेक्षितानि पुस्तकानीमानि—

१. श्रीमदित्यादि श्रीशैलानन्तपूरुषवंशावतंसानां निखिलतार्किकचक्रचूडामणीनां सुगृहीताभिधानानामेकम्·
२. तैरेव संशोधितं श्रीरङ्गपट्टणं योगिपार्थसारथ्यय्यङ्गार्याणामेकम्.
३. राजकीयामुद्रितपुस्तकशालास्थमेकम्.
४. श्रीमतां· ति· चे. नरसिंहाचार्यविदुषामेकम्.
५. त्रिशिरःपुरस्थतटे वाधूलश्रीनिवासाचार्याणामेकम्.

श्रीः

# श्रीभगवद्गीताप्रथमपदक्रमश्लोकानामकारादिक्रमः

श्रीः

श्रीगुरुभ्यो नमः.



श्रीभगवद्रामानुज भाष्यम्.

[1]यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

वेदान्ताचार्यविरचित तात्पर्यचन्द्रिका.

यतिपतिरिहृदो यद्गीतानामदर्शयदञ्जसा
निगमपरिषच्छेदीयांसं [2]निरामयमाशयम् ।
जननपदवीयातायातश्रमापहरा धियं
जनयतु स मे देवः श्रीमान्धनञ्जयसारथिः ॥
अनुचितपदवीभिश्छिन्तयित्वा प्रयाता-
न्यलमल [3]मतिमात्रत्रासचिन्ताविषादैः ।
उपनिषदमुदारा [4]मुद्गमन्पाण्डवार्थे
शरणमुपगतानत्रायते शार्ङ्गधन्वा ॥
[5]सन्तः सारलिहश्चित्ततम प्रमथिनीमिमाम् ।
भजन्तु भगवद्गीताभाष्यतात्पर्यचन्द्रिकाम् ॥

श्रीमद्गीता व्याचिख्यासु, अविघ्नपरिपूरणप्रचयगमनार्थं परमाचार्यस्य संग्रहश्लोकनिर्माणमुखेन तदर्थोपदेष्टृता तदनुवृत्ते स्वाचार्यप्रीणनतामप्यनुसन्दधान, परमाचार्यभजनरूप मङ्गलमाचरति—**यत्पदाम्भोरुहेत्यादि**। [6]यच्छब्देन महात्तमाचार्यगुणपौष्कल्यहेतुका प्रसिद्धि सूचयति। अम्भोरुहशब्देन भोग्यत्वप्रतीतेर्भक्तिरूपत्व ध्यानस्य व्यज्यते। [7]यामुनाचार्यस्य, द्रोणाचार्यस्य एकलव्य इवाहमित्यभिप्रायेण ध्यानशब्द। सकृत्सन्दर्शनेन प्रायश कल्मषाणि विध्वस्तानि, तन्मूलनिरन्तरस्मरणेन तेषा सवासनोन्मूलन कृतमित्यभिप्रायेण 'ध्यानविध्वस्ताशेषकल्मष' इत्युक्तम्। **वस्तुताम्** [8]'अस्ति ब्रह्मेति चेद्वेद सन्तमेन ततो विदुः'

## प्रमाणानामाकरा पाठभेदाश्च.

१. यत्पदाम्बुरुहध्यानानन्दनिर्वृत नेम । मुक्तिमप्यवजानाति त व द पुरुषोत्तमम् ॥

२ सुधामय  ३ अतिमात्रैरघ चित्ते विषादे, अघ चिन्ते विषादे ग ग ड अघ चित्ते विषादे क घ पा.  ४ मुद्गृह्यन्नापि लक्ष्य, मुद्गमन्नापि लक्ष्ये

५ सन्त सारमर्दश्चित्तैस्तम प्रमथनीमिमाम्। इति क ख ग घ ङ पा

६ यत्पदेन.  ७ यामुनाचार्यस्य एकलव्य. पा.

८ तैत्तिरीयोपनिषदि २ ६ १ अस्याय वाक्यशेष, 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति, ब्रह्म वेदति ब्रह्मविषयक ज्ञानम् असच्चेत्, स असन्नेव भवति। ब्रह्म वेदति अस्ति सत्तायोगि चेत्, एन तदाश्रय तत तमेन स न विदु जानन्ति।

ना॥इत्याद्युक्तप्रकारम्। **अहं वस्तुतामुपयात** इत्याश्चर्यगर्भम्। एवमनिष्टनिवर्तनेष्टप्रापणरूपोपकारस्मृतिप्रेरितवागादि१त्रितयकरणकः प्रणामः शिष्यशिक्षणार्थं श्रोतृणां फलसिद्ध्यर्थं च ग्रन्थे निवेशितः। तेन स्वाचार्यवत्तदाचार्यपरम्पराया अपि भजनमत्यादरेण करणीयमित्यपि शिक्षितम्। तथा च श्रूयते, २'३स चाचार्यवंशो ज्ञेयो भवति, आचार्याणामसावसावित्या भगवत्तः' इति॥

अथाभिमतपरदैवतस्य भगवतः ४स्वरूपरूपगुणविभवादिभावनावर्णनाभ्यामर्थादभङ्गुरं मङ्गलमाचरन्, ५'स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः। नारायणः परं ब्रह्म गीताशास्त्रे समीरितः' इति संग्रहानुरोधेन व्याख्येयशास्त्रप्रधानप्रतिपाद्यं च सप्रकारं दर्शयन्, शास्त्रप्रामाण्यस्थापनाय वक्तुः स्वतः सर्वज्ञत्वपरमकारुणिकत्वसाधुपरित्राणोन्मुखावस्थत्व६सर्वशक्तित्वादिना भ्रमविप्रलम्भ७प्रमादाशक्त्याद्यभावप्रदर्शनेनाप्ततमत्वं समर्थयन्, अपवर्गप्रधानचतुर्वर्गोपायबोधात्मकमवान्तरप्रयोजनम् अपवर्गदशानुभाव्य८सप्रकारभगवत्स्वरूपं च परमप्रयोजनं प्रकाशयन्, शंकरादिपक्षे शास्त्रोपदेशारम्भाद्यनुपपत्तेर्वक्ष्यमाणायाः स्वपक्षे प्रसङ्गाभावाय शास्त्रोपदेशाद्यनुकूलजीवपरमात्मपारमार्थिकभेदादिकथनेन शास्त्रारम्भं समञ्जसयन्, कारणशोधकशोधनभेदाभेदघटकवचसा सर्वेषामपि मुख्यतां ख्यापयन्, गुणतनुजनिविभवविहरणादिविधिनिषेधोपनिषदामल्पश्रुतकुमतिविहितप्रतारणकृतकलहकूलङ्कषां ९विषयव्यवस्थामपि स्थापयन्, अवाप्तसमस्तकामस्यापि लीलामात्रविहितनिखिलव्यापारत्वेन शारीरकद्वितीयाध्यायसिद्धं विरोधपरिहारमुपलक्षयन्, जिज्ञास्यजगत्कारणपरब्रह्मभूतदेवताविशेषमपि सर्वशास्त्रप्रत्ययसामान्यविशेषादिन्यायैः१०त्रिमूर्त्यैक्यसाम्योत्तीर्णव्यक्त्यन्तरत्वव्युदासेन निरूपिताकारं ११निर्दिशन्, १२'बहु स्याम्' इति संकल्पमारभ्य सारथ्यचर्यापर्यन्तस्य सर्वस्य जगद्व्यापारस्याश्रितार्थतया व्याजमात्रलाभादपि परमपुरुषार्थभूतस्वात्मोपलम्भकाध्यात्मशास्त्रावतरणादिना च सौलभ्यातिशयमुद्घोषयन्, प्राप्यत्वोपास्यत्वैकान्तपरत्वसौलभ्यस्थापनौपयिकगुण १३वर्गद्वये जगत्पतित्वसर्वज्ञत्वसर्वशक्तित्वसर्वेश्वरत्वादिकं परमकारुणिकत्वद्युभाश्रयत्वाश्रितार्थावतारत्वविरोधिनिरसनशीलत्वासेचनकदर्शनत्वादिकं चोदाहरन्, एवमवेदपरमप्रतिपाद्यस्य भगवतो नारायणस्य प्रागुक्तनोदन्तं गीतोपनिषदुपदेशेन सगमयति—**श्रियः पतिरित्यादिना अवतारयामासेत्यन्तेन।तत्रेत्यादिना चकारेत्यन्तेन** द्वितीयेन वाक्येन मुमुक्षोर्भूतराश्रयस्य ज्ञातव्यनिष्कर्षः।**एवं ज्ञात्वापीत्यादिना** तु१४तृतीयेन वाक्येन १५शास्त्रोपोद्घातारम्भभूतप्रश्नसंगतिः। अत्र दिव्यात्मस्वरूपव्यतिरिक्तं समस्तमपि नारशब्दार्थतया विविच्य दर्शयिष्यन्, तदयनं स्वरूपमन्यपदार्थतया उत्तरपदार्थतया १६वा समासद्वयेऽपि प्रधानभूतं प्रथमं निष्कृष्य दर्शयति—

---

**प्र-पा** ॥ अतश्चेदं ब्रह्मविषयकज्ञानासद्भावसद्भावाभ्यामात्मनाशमात्मसत्तां च वदति॥

१. त्रयकरणक. पा. २. रहस्याम्नायब्राह्मणे, स आचार्यवंशः स्वाचार्यपरम्परा आचार्याणां मध्ये असावसाविति भ्रान्तिविशेषज्ञानपूर्वकम् आ भगवत्तः परमाचार्यभगवत्पर्यन्तं ज्ञेयः. शिष्येणानवरतानुसन्धानाय ज्ञातव्यः॥

३. स चैव. क. ख. ग. घ. ङ. पा.

४. स्वरूपरूपादि. पा. ५. गीतार्थसङ्ग्रहे. श्लो.१.

६. सर्वशरीरत्वादिना. पा.

७. प्रमादाशक्त्यभाव. क. ख. ग. घ. ङ. पा.

८. प्रकार. क. ख. पा.

९. विषयव्यवस्थामापादयन्, विषयव्यवस्थामुपस्थापयन् पा.

१०. त्रिमूर्तिसाम्यैक्योत्तीर्ण. ११. निदर्शयन् पा.

१२. छान्दोग्योपनिषदि ६-२-३. तदैक्षत बहु स्यां प्रजायेयेति॥ तच्छब्दवाच्यं ब्रह्मैव बहु विचित्रानन्तचिदचिन्मिश्रजगद्रूपेण स्याम् अहमेव स्याम्, तदर्थं प्रजायेय इति ऐक्षत समकल्पत॥

१३. वर्गद्वयं. क. ख. ग. घ. ङ. पा.

१४. तृतीयेन शास्त्रोपो. पा.

१५. शास्त्रारम्भोपो. पा १६. च. पा.

रा ॥ ज्ञानानन्दैकस्वरूपः, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्य-संख्येयकल्याणगुणगणमहोदधिः, स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्य-

ता॥ शब्दत्वात् १'षड्द्रव्यम्' इत्यादिवत् 'आनन्दज्ञानम्' इति वक्तव्यमिति चेत्, तन्न; बहुलग्रहणेन सर्वोपपत्तेः। यद्वा आनन्दशब्दस्य अनुकूलवेदनीयेषु जडेष्वपि प्रयोगात्तद्विशेषणतया ज्ञानशब्दस्य पूर्वत्वोपपत्तिः । स्वरूपं प्रतीदं विशेषणद्वयं वा ॥

**स्वाभाविकेति** । स्वरूपापेक्षया गुणविग्रहादीनामस्थिरसिद्धिमात्र्येऽपि विग्रहादिधारणनियमनादौ ज्ञानादिगुणगणापेक्षत्वप्रदर्शनाय उत्तरोत्तरसुमहत्त्वसिद्धये च प्रथमं गुणोक्तिः । समस्तगुणवृन्दप्रधानतया षाड्गुण्यस्य स्वरूपेणोपादानम्; इतरेषां च सौशील्यादीनां प्रभृतिशब्देन संग्रहणं कृतम् । २'तवानन्तगुणस्यापि षडेव प्रथमे गुणाः । यैस्त्वयेव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः' इति ह्याहुः । संहृतिसृष्टिस्थितिहेतुभूतसंकर्षणादिव्यूहत्रये ज्ञानबलादि ३द्वन्द्वत्रिकस्य यथाक्रमं तत्तत्कार्यविशेषोन्मुखत्वेनाविर्भावविशेषात् ज्ञानबलैश्वर्यादिक्रमविशेषः कृतः । स्वतः सर्वं सर्वथा ४सर्वदा साक्षात्करोति, तथा साक्षात्कृतं च सर्वं धारयति, धारयन्नेव नियच्छति, धारयन्नियच्छं५श्चाशिथिलो भवति, अघटितं च घटयति, तत्र च सहकारिनिरपेक्षो न ६केनचिदभिभूयते किंतु सर्वाभिभूर्भवति, इति च गुणक्रमपाठ ७विवक्षा । स्वाभाविकत्वमनन्याधीनत्वम् । मुक्तनित्ययोरपि हि तादृशं ज्ञानादिकं तदनुगुणपरमात्मसंकल्पाधीनम् । अनवधिकत्वमत्रोत्कर्षावधिराहित्यम् । द्वाभ्यां विशेषणाभ्यां ८'परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च' इत्याम्नाते परत्वस्वाभाविकत्वे प्रतिगुणमन्विते प्रदर्शिते । असङ्ख्येयशब्देन महोदधिशब्देन च ९'यथा रत्नानि जलधेरसङ्ख्येयानि पुत्रक । तथा गुणा १०ह्यनन्तस्य असङ्ख्येया महात्मनः' इत्यादि स्मारितम् । कल्याणशब्देन गुणनिषेधवचनानां हेयगुणविषयत्वमुत्सर्गा ११पवादन्यायसिद्धं १२सूचितम् ॥

अथ कारणोपासनादिप्रकरणेष्वन्तर्भूषणाध्यायादिषु च प्रतिपन्नं विलक्षणविग्रहयोगं दर्शयति—**स्वाभिमतेति** । अभिमतेऽप्यननुरूपत्वस्य अनुरूपेऽप्यनभिमतत्वस्य लोके दृष्टत्वात्तदुभयव्यवच्छेदाय

प्र-पा॥ १. षड्द्रव्यम् . पा.
२. तवेति ॥ अनन्तगुणस्यापि अनन्तत्वमत्र सङ्ख्यातः, तव षडेव गुणा. ज्ञानबलैश्वर्यवीर्यशक्तितेजांसि, प्रथमे-मुख्याः। यैः गुणैः, त्वया कुक्षौ जगदिव अन्येऽपि गुणाः अन्तर्निवेशिताः अन्तर्भाविताः ॥
३. द्वयत्रिकस्य.पा ४. सर्वथा साक्षा.पा.५ च न शिथिलो भवति.पा.६. केनचिदपीति. क.ख.ग.ज.पा. ७. विवक्षया. पा. ८. श्वेताश्वतरोपनिषदि ६-८. परास्येति ॥ ज्ञानशक्त्यादीनां स्वाभाविकत्वमुच्यते, क्रिया-नियमनम् ॥ ९. वामनपुराणे ७४-४०. यथेति ॥ यथा जलधेः रत्नानि असङ्ख्येयानि, तथा अनन्तस्य स्वरूपरूपगुणविभूतिभिरपरिच्छिन्नस्य, महात्मनो भगवतो गुणाः असङ्ख्येयाः । इति प्रसिद्धौ । गुणानां रत्नसाम्येन मनोहरत्वादिकं, गुणिनो जलधिसाम्येन गम्भीरत्वादिकञ्चाभिप्रेतम् ॥
१०. ह्यनन्तस्य. पा. ११. पवादादिन्याय. पा. १२. स्मारितम्. पा.

---

च ॥ अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥

---

श्रीमदानन्दतीर्थ भाष्यम्.

## देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।

ज ॥ तद्गुरुप्रणामं ग्रन्थारम्भप्रतिज्ञां चादौ निबध्नाति भगवान् भाष्यकारः—**देवमिति** ॥ अत्र देवशब्दो देवताशब्दपर्यायः। प्रतिमात्रमाह॥ सन्निधानाच्च भगवद्गीताया इति लभ्यते । तेनेदानीं नारायणस्य प्रणामे समुचितमाचष्टे॥अज्ञानपारतन्त्र्यादिभिः सर्वदोषैर्विशेषेण सर्वदा सर्वात्मना वर्जितम् परितो देशतः कालतो

रा॥ निरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूप ,

ता॥ स्वाभिमतानुरूपेत्युक्तम्।एकरूपेणानेन व्यूहविभवाद्यवस्थास्वपि हेयप्रत्यनीकत्वानन्दावहत्वमुमुक्षूपास्यत्व प्राप्यत्वादिस्वभावापरित्यागोऽभिहित ।यद्वा व्यूहादिपरिणामे सत्यपि परमव्योम१ नित्यस्य विग्रहस्य प्राच्या नवस्थानापत्तिरुक्ता । 'सावयवत्वादनित्यम् ' इत्यादीना धर्मिग्राहकबाधादिभिराभासतामभिप्रेत्य अनि त्यत्वोक्ति । एको दिव्यशब्द स्वस्थानवैलक्षण्यपर , परमव्योमवर्तित्वमात्रपरो वा, इतरस्त्वप्राकृतत्वपर । विचित्रावतारयोग , प्रतिक्षणमपूर्ववदनुभाव्यत्वम् , यदपत्यमयनविश्वरूपाद्यवस्थागतमाश्चर्यं च, अद्भु तशब्देन विवक्षितम् । नित्यत्व २कालापरिच्छिन्नत्वम् । तथा चामनन्ति रहस्याम्नायविद , ३'नित्या लिङ्गा स्वभावसंसिद्धाश्चेन्द्रियाकाराकारवर्ज्यास्व्यञ्जनवती ' इति । श्रीपौष्करे च, ४'५नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर । यस्यास्ति सत्ता हृदये तस्यासौ सन्निधिं व्रजेत् 'इति । निरवद्यत्व जगादिराहित्यम् । उत्तरोत्तरनिरवद्यशब्देषु पूर्वपूर्वस्य सुग्रहत्वं वा विवक्षितम् । शुभाश्रयत्वभोग्यत्वानुपयुक्तमङ्गलगुणयोगो निरतिशयौज्ज्वल्येत्यादिनोक्त । निरतिशयत्व स्वापेक्षया उत्कृष्टराहित्यम् , अनुत्तमत्ववत् । तच्च प्रति गुणमन्वेतव्यम् । औज्ज्वल्यं भास्वरत्वम् । सौन्दर्यम् ६अवयवशोभा ।७' सर्वगन्ध ' इति श्रुतिरनुकूल गन्धविषया , स्रक्चन्दनादि चास्य कृतकर्मित्यभिप्रायेण सौगन्ध्यशब्द ।सौकुमार्यं महानलरवऽपि८'पुष्प हास ' इति नाम दुग्धन मार्दवम् , यथोक्तम् , ९'सुकुमारौ महाबलौ' इति । लावण्य समुदायशोभा । यत्तदुच्यते भगवच्छास्त्रे, १० 'विश्वमाप्याययन्कान्त्या पूर्णेन्द्वयुतनुल्यया'इति ।११'भूयिष्ठ तेज एवाद्भिर्न

प्र पा॥१ नित्यविग्रहस्य पा २ कालानवच्छिन्नत्व पा

३ रहस्याम्नायब्राह्मण नित्याति ॥ नित्या कालप रिच्छेदविधुरा, अलिङ्गा कमहत्तत्त्वोपुसयजनरहिता, स्वस्य भगवत , भावन इच्छया, संसिद्ध नियतस्स्थान यस्यास्तादृशी, किञ्च इन्द्रियाकाराणि अस्मदादी न्द्रियसदृशानि वा यद्गलहृञ्यञ्जनानि तद्वती मूर्ते । अत्र 'इच्छागृहीताभिमतोरुदेह ' 'नयनश्रवणा दृना शृणोषि इत्यादिश्च प्रमाणम् । अपाणिपादो जवनो ग्रहीता' इत्यादि तु कर्मकृतेन्द्रियराहित्यपरमित्य सदविरोधेन नयम् ॥

४ पाञ्चरात्रपौष्करसंहितायाम् ॥ नित्यसिद्ध इति॥ यस्य नित्यसिद्धे कालापरिच्छिन्नतया स्व च्छापरिकल्पित, तदाकार 'तदिति वा तस्य महतो भूतस्य नाम भवति' 'ओन्तत्सदिति निर्देशो ब्रह्म णस्त्रिविधस्मृत ' इति श्रुतिस्मृतिभ्या तच्छब्दाभि धेयतया निर्दिष्टस्य ब्रह्मणो रूपे, सत्ता 'अस्ति ब्रह्मेति चेद् ' इत्याद्युक्तलक्षणा, अस्ति वर्तेत , तस्य पुस , सन्निधिम् असौ भगवान् , व्रजेत् भक्तप्रियतया स्वय सन्निध्य प्राप्नुयादिति, यस्य हृदये सत्ता अस्ति अस्मा वेव तस्य निर्दिष्टपूर्वस्य भगवत , सन्निधिम् आलयम् अथवा पर धाम व्रजेत् ॥ ५ नित्य पा

६ अवयवशोभा । लावण्य समुदायशोभा । पा

७ छान्दोग्ये ३ प्र १४ ख ४ वा

८ भारत आनुशासनिकपर्वणि सहस्रनामाध्याय १०२ श्लो एव निष्पादितरसानुभवशक्तीना भाय मिव पुष्पस्य हासो भोग्यतोल्लासोऽस्येति पुष्पहास ॥

९ श्रीरामाय । आरण्यकाण्डे १९ सर्गे १४ श्लो तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥

राम कामयमानाया लक्ष्मणच्छिन्ननासिकाया कुपिताया अपि तत्सौन्दर्याकृष्टचित्ताया शूर्पणखाया , सर प्रत्युक्तिरियम् तरुणाविति ॥ तरुणौ कामिजनाना प्रथमाकर्षणेन वयसा भासमानौ, रूपसम्पन्नौ रूप सौन्दर्यम् , तेन समृद्धौ, सुकुमारौ पुष्पहाससुकु मारौ महाबलौ सौकुमार्येऽपि 'रामस्तु सीतया सार्धं विजहार बहूनृतून् ' इत्याश्चर्यतया बहुशो विहरण ऽपि श्रमलवरहितौ, एव समुदायशोभासुक्त्वाऽवयव शोभामाह पुण्डरीकविशालाक्षौ सर्वदा सरवसम्पन्ननयनौ चीरकृष्णाजिनाम्बरौ 'किमिव हि मधुराणा मण्डन नाकृतीनाम् ' इतिन्यायेन कृष्णाजिनधारणेऽप्यतिर मणीयाविति ॥

१० सात्त्वतसंहितायाम् २ ७० विश्वमिति ॥ अयुतशब्द आनन्त्यपर , विश्वशब्दन भक्तजन गृह्य त, तथामेवाऽप्यायनसिद्ध ॥

११. अहिर्बुध्न्यसंहितायाम् ५२

रा॥म्योचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यापरिमितदिव्यभूषणः, स्वानुरूपासंख्येयाचिन्त्यशक्तिनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुधः, स्वाभिमतानुरूपनित्यनिरवद्य-

ता॥हुत्याभिमृदूकृतम्। चक्षुरानन्दजननं लावण्यमिति कथ्यते' इति ह्याहुः। यौवनं कौमारानन्तर्योपलक्षणीयः स्वभावविशेषः, न तु कौमारानन्तरभाविन्येव दशा ; तद्यौवनस्यानादित्वात्, देवादिषु च केषांचित् युवत्वेनैवोत्पत्तिदर्शनात्। आदिशब्देन शुभाश्रयत्वप्रकरणोक्ताः सर्वे विग्रहगुणाः संगृहीताः ॥

एवं स्वरूपतद्गुणौ विग्रहतद्गुणौ च प्रतिपाद्य, विग्रहाश्रितमाभरणवर्गमायुधवर्गं च दर्शयति—स्वो-चितेत्यादिपदद्वयेन। पूर्वोक्तविलक्षणविग्रहविशिष्टं स्वरूपमिह स्वशब्दार्थः। अत्र १'आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः। सर्वभूषणभूषार्हाः' इत्यादि भाव्यम्। किरीटहारादिरूपेण वैविध्यम्। एकजातीयेष्वपि मणिकाञ्चनादिद्रव्यविशेषवर्णसंस्थानादिविशेषविशिष्टव्यक्तिभेदाद्वैचित्र्यम्। अपरिमितेत्यसंख्येयत्वोक्तेः अनन्तत्वमाश्चर्यविशेषणम्। अनवधिकाश्चर्यसमावहत्वमनन्ताश्चर्यत्वम्; अथवा अनन्तानि आश्चर्याणि संस्थानविशेषसौगन्ध्यसुखस्पर्शत्वादीनि येषां भूषणानां तानि तथोक्तानि। नित्यनिरवद्यशब्दौ पूर्ववत्। अपरिमितत्वमसंख्येयत्वमेव, न तु ह्रस्वदीर्घादिपरिमाणविरहः। यद्वा अनन्तेत्यसंख्येयत्वम्, अपरिमितेति च विग्रहानुरूपमहत्त्वं विवक्षितम्। भूषणायुधयोर्दिव्यत्वमप्राकृतत्वम्। पूर्वोक्तगुणविग्रहाभरणविशिष्टः 'स्वानुरूप' इत्यत्र स्वशब्दार्थः। असंख्येयेति। पत्रायुधत्वप्रसिद्धिः प्राधान्यादिति भावः। अचिन्त्यशक्तीति। कुठारटङ्कुद्दालादिभिः प्रत्येकं कृच्छ्रसाध्यं सालशैलवसुधातलविदारणम् एकेन हि महेषुणा कृतमिति भावः। निरतिशयकल्याणत्वं निरतिशयानन्दावहत्वम्, भूषणकोटावप्यनुप्रवेशात्; यद्वा लोके यान्यायुधलक्षणानि मङ्गलावहतया प्रसिद्धानि, तैः सर्वैः सपूर्णत्वम् ॥

पूर्वं स्वरूपनिरूपकतया सामान्यतोऽभिहिता श्रिय विभूतिमध्येऽपि स्थिता विशेषतो दर्शयन्नर्था-त्तत्स्वरूपादिकमप्याह—स्वाभिमतेति। स्वरूपं स्वासाधारणधर्मविशिष्टं श्रियो दिव्यात्मस्वरूपम्। रूपं दिव्यविग्रहः। रूपानन्तरो गुणशब्दस्तद्गतनिरतिशयौज्ज्वल्यसौन्दर्यादिपरः। विभवशब्दः परिजनपरिबर्हादिपरः। परत्वसौलभ्योपयिकगुणवर्गद्वयम् ३ऐश्वर्यशीलपदाभ्यामुपलक्षितम्। ततश्चादिशब्दः प्रत्येकमन्वयात् ज्ञानशक्त्यादिकं वात्सल्यादिकं च संगृह्णाति। ऐश्वर्यशीलादयः अनवधिकातिशयाश्च असंख्येयाश्च कल्याणाश्च गुणा इति विशेषणसमासः। एवंविधगुणाना गण इति षष्ठीतत्पुरुषः। ऐश्वर्यशीलादेर्गणविशेषणत्वानौचित्यात्, अनवधिकातिशयत्वस्यापि गणविशेषणत्वे प्रत्येकं गुणानामुत्कर्षस्याशाब्दत्वात्, गुणविशेषणतयैव समास उचितः। स्वरूपम्, रूपम्, ४तद्गुणः, विभवः, ऐश्वर्यादिगुणगणश्च,

प्र-पा॥भूयिष्ठमिति ॥ कदुलाभिरद्भिः शरीरारम्भकेणामत्वेन, मृदुकृत मार्दवमापादितम्, अत एव चक्षुरानन्दजननं लोचनाभिनन्दनकम्, भूयिष्ठम् उल्बणं, तत एव तादृश तेजस्तत्वमेव लावण्यमिति व्यपदिश्यते ॥ सर्वेषां भूषणानां कटकमकुटादीनामलङ्काराणामपि भूषायामर्हा इति ; यद्वा सर्वैर्भूषणैर्या भूषा सदर्हाः इति ; अस्मिन् पक्षे भूषाशब्दः आच्छादनमात्राभिप्रायेण,दृष्टिदोषनिराचिकीर्षायामेदमर्थतः।रामलक्ष्मणरूपावयविद्वित्वाविवक्षया बहुवचनम् ।।

१. श्रीरामायणे किष्किन्धाकाण्डे ३-१५. आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः। सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः॥आयताश्चेति॥ सर्वभूषणभूषार्हाः

२. महत्तरत्वम्. पा. ३. ऐश्वर्यशीलाभ्याम्. पा. ४. तद्गुणाः, विभवाः. पा.

गी॥ स भगवान् सृष्ट्वेदं जगत् तस्य च स्थितिं चिकीर्षुः मरीच्यादीन् अग्रे सृष्ट्वा प्रजाप-

ज्ञा॥गुणतश्च पूर्णमिति वैशिष्ट्यमाचष्टे। परमवैष्णवस्य भगवतो भाष्यकारस्य विष्णुरिष्टदेवतेति प्रसिद्धमेव। यद्वा भगवद्गीताप्रतिपाद्यत्वं नारायणस्य न परेषामिव जीवत्वनिर्विशेषत्वादिरूपेण ॥

रा ॥ स्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभः,

ता॥इति द्वन्द्वः। स्वरूपादिपञ्चकं भगवदभिमतानुरूपं नित्य निरवद्यं यस्याः, सा स्वाभिमतेत्यादिगुणगणे व्यन्तेनोक्ता। स्वरूपम्, रूपम्, तद्गुण, विभव., ऐश्वर्यम्, शीलम्, इत्यादिगुणगण इति योजनाया स्वरूप रूपयोरपि गुणानुप्रवेशभ्रमः। स्वरूपादे. सर्वस्य परमात्माभिमतत्व व्यक्तम्।स्वरूपस्य नित्यत्व निर्विकारतया सर्वदाप्यवर्तमानत्वम्। निरवद्यत्व पूर्वं परमात्मस्वरूपे प्रतिपादितप्रकारम्, तद्वत् विभुत्वप्रयुक्तशदानि रसोपलव्यादिराहित्य वा। अनुरूपत्व तु यथाप्रमाणं प्रागेव कल्याणैस्तानत्याकादिरूम्।१ 'शान्तानन्त' इत्यादिकमिह भाष्यम्। रूपस्य नित्यत्वमवतारादिदशायामपि परमपदनित्यभगवद्देहसमानस्थितस्य तथा वस्थितत्वम्। अनुरूपत्व च,२'अस्या देव्या यथा रूपमङ्गप्रत्यङ्गसौष्ठवम्। रामस्य च यथा रूप तस्येयममिते क्षणा' ३'विष्णोर्देहानुरूपा वै करोत्येषात्मनस्तनुम्' इत्यादिप्रतिपादितम्। विग्रहगुणाना नित्यत्व नाम औज्ज्वल्यादे. कदाचिदप्यपरपाद्विभाव। निरवद्यत्व च दुष्प्रेक्षतादिराहित्यम्। अनुरूपत्व, ४'घन-स्तनस्तुती युवदशामपि मुग्धदशाम्' इत्याद्युक्तप्रकारम्। विभवस्यानुरूपत्वं, ५'देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः। स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्' इत्यादिभिरनुसन्धेयम्। अनवधि कातिशयत्वरचनादीश्वर्यातिरिक्तविशेषगोचरस्यापि तदैश्वर्यस्य ईश्वराभिमतत्वात्र द्वैराज्यादिदोषः। ७'अस्येशाना जगतो विष्णुपत्नी'इति विष्णुपत्नीत्वेनैव हि सर्वस्य जगत इयमीष्टे।८'ईश्वरी सर्वभूतानाम्' इत्यत्र तु,यद्यपि सर्वभूतानामिति प्रतिसम्बन्धिनिर्देशात् स्वप्रत्ययानुसारेण ईश्वरपत्नीति विवक्षा न शक्या।

प्र पा॥ १. स्तु श्लोक ४.

२ श्रीरामायणे सुन्दरकाण्डे १५ ५१. अस्या इति॥ अस्या सीताया रूप शरीर अङ्गप्रत्यङ्गसौष्ठवञ्च यथा यथाविधम् तथाविधमेव रामस्यापि रूपमङ्गप्रत्यङ्गसौष्ठवञ्च। तथा रामस्य रूपमङ्गप्रत्यङ्गसौष्ठवञ्च, यथा यथाविध तथाविध मवास्या रूपमङ्गप्रत्यङ्गसौष्ठवञ्च। अत इयमसितेक्षणा तस्य योग्येतिशेष। इयमसितेक्षणेति विशेष॥

३ श्रीविष्णुपुराणे १ ९ १४५ 'देवत्वे देवदेहेय मनुष्यत्वे च मानुषी' इति पूर्वाधम् विष्णोर्देवत्वे इय लक्ष्मीश्च, देवदेहा देवसजातीय संस्थानविग्रहा तस्य मनुष्यत्व मनुष्यदेहपरिग्रह स्वयमपि मानुषी। एवम् आत्मन स्वस्य तनु देह विष्णो देहस्य अनुरूपाम् अनुगुणा करोति॥

४ श्रीगुणरत्नकोशे २९ श्लो.

५ श्रीविष्णुपुराणे १-८-३५ देवेति॥ अनयो रास्या लक्ष्मीनारायणाभ्याम् परम् अन्यद् चतुर्विधेष्वपि भूतग्रामेषु भगवन् पुमधिष्ठानाद्, श्रियश्च स्वयमधिष्ठानादेनयोरितरत्र विद्यत इत्यादमभिमानविशयाभिप्रायेण, नानयो परमस्तीतिचेदमनिदमात्मकाभिधाभिप्रायकम्; अतैव देवतिर्यगादिनिर्देशात्॥

६ श्रीश्च विजेया. पा.

७ यजुषि ४-४ १२-५७ अस्येशानेति॥ श्रीरिति श्रीसूक्तप्रकरणालभ्यते, इयम् अस्य जगत इशाना ईश्वरी। विष्णो पत्नी च। विष्णुपत्नीत्वकृत श्रियो जगदीश्वरत्वमिति भाव॥

८ श्रीसूक्ते ईश्वरीमिति॥सर्वभूतानाम् ईश्वरी श्रिय

शा॥तान् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम्। ततः अन्यांश्च सनकसनन्दनादीन् उत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास। द्विविधो हि वेदोक्तो धर्मः

आ॥ परिपूर्णं गुरुंश्चान् गीतार्थं वक्ष्यामिलेशतः॥ १॥

विनाम १ सर्वदोषवर्जिततया परिपूर्णतया चेति पदद्वयेनाख्याति॥ आन् व्यासान् 'अआअंअः पुराणर्षिर्व्यासः शास्त्रसदसत्कृत्, इत्यकारस्य तन्नामसु पाठात्।बहुवचन च गौरवादेव। गीतेति भगवद्गीते-

रा ॥ स्वसंकल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्यनिरति-

ता॥तथापि वाक्यान्तरबलादर्थस्य तथात्वसिद्धिः१।निरवद्यत्वं भगवदैश्वर्यैकरसत्वं वा निग्रहादिप्रसङ्गाभावो वा । प्रतिकूल २दण्डकत्वं हि पुरुषत्वानुरूपं तद्वल्लभस्यैव भागः । शीलस्य नित्यत्वं महत्त्वे सत्यपि मन्दैः सह नीरन्ध्रसंश्लेषे कदाचिदपि स्वोत्कर्षप्रकाशनाभावः ; निरवद्यत्वं तत्र विप्रलम्भाभिप्रायादिविरहः । अनुरूपत्वम्, अनवधिकातिशयत्वं च, ३'तुल्यशीलवयोवृत्ताम्' इत्याद्युक्तप्रकारम् । एवं श्रियः पृथङ्नित्यस्वरूपरूपगुणविभवैश्वर्यशीलादिप्रतिपादनेन ज्ञानादिगुणवदर्थविसदृशशक्तिमात्रत्वम्, व्यूहविशेषत्वम्, स्वरूपैक्यम् ४अन्यदपि, वदन्तो निरस्ताः । शक्तित्ववादास्तु पत्नीत्वेन कार्योपयुक्तविशेषणत्वाभिप्रायाः। प्रयुज्यते हि शास्त्रेषु सर्वत्र स्त्रीपुंसात्मकेषु द्वन्द्वान्तरेष्वपि स्त्र्यंशे शक्तिशब्दः । एकत्ववादास्तु सम्बन्धप्रपञ्चप्रतियोगिकैकशेषित्वाश्रयत्वेन, विशिष्टैक्येन, आत्महविःप्रत्युद्देश्ये ५कदेवतात्वादिवेषेण वा, निर्वाह्याः । अत एव हि ६'व्यापकावतिसंश्लेषादेकतत्त्वमिवोदितौ' इत्युच्यते । उक्तं च श्रीरामामिश्रैः षडर्थसंक्षेपे ७'उभयाधिष्ठानं चैकं शेषित्वम्' इत्यादि । एवंविधाया भगवत्याः श्रियो वल्लभः प्रियतमः, श्रीः वल्लभा यस्येति वा । न चाभिमतशब्दपुनरुक्तिः, प्रत्येकसमुदायविषयतयाभिमतत्वातिशयव्यञ्जनपरत्वादिति ॥

अथ नित्यपरिजनविशिष्टतां दर्शयति—स्वसङ्कल्पेति । स्वरूप धर्म्यंशः । स्थितिः अप्रच्युततयावस्थानम् । प्रवृत्तिः व्यापारः । नित्यानां स्वरूपस्थित्योः परमात्मसंकल्पानुविधायित्वं नाम तन्नित्येच्छा-

प्र-पा॥ त्वाम् इह उपह्वये अत्र भगवतीमावाहयामि । सा विशेष्यते ईश्वरीमित्यादिना ॥

१. अयं भावः—यद्यपि 'ईश्वरीं सर्वभूतानाम्' इत्यत्र 'सर्वभूतानाम्' इति षष्ठ्या 'ईश्वरीम्' इति पुंयोगविहितङीषन्तैकदेशभूतेश्वरशब्दे अन्वयबोधविध्याद् ईशित्रीमित्येवार्थवर्णनं युज्यते ; तदा च 'ईश ऐश्वर्ये' इति धातोः वनिपि 'वनो र च'इति ङीब्रयोः ईश्वरीमितिसिद्धिः । तथाऽपि 'अस्येशाना जगतो विष्णुपत्नी' इत्यादिसमानप्रकरणपठितवाधितवाक्यान्तरबलात् विष्णुपत्नीत्वरूपोपाधिप्रयुक्तमेव देव्या ईशनमिति । इदमेव 'लोकैकेश्वरि ! लोकनाथदयिते' इत्यादिपरमाचार्यवचसाभ्याकृतम् ॥

२. दण्डत्वम् पा. ३. श्रीरामायणे सुन्दरकाण्डे. १६-५ तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् । राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥ तुल्येति ॥ समानस्वभाववयोवृत्ता, सदृशवंशभवा, समानलक्षणा, सामुद्रिकादिप्रतिपादितस्वस्थानविशेषो लक्षणशब्देनोक्तः । अतइमां राघव एवार्हति, नान्यः । तञ्चेयमेवार्हति न स्वितरा । अत्रापि पूर्ववदसितेक्षणेति विशेषः ॥

४. अन्यदन्यदपि. पा.

५.एकदेवतात्वाविशेषेण;एकदेवतात्वादिविशेषेण.पा.

६. भगवच्छास्त्रे. व्यापकाविति॥ लक्ष्मीनारायणौ, व्यापकौ व्यापनशीलौ, अतिसंश्लेषात् अपृथक्सिद्धसम्बन्धात् एकं तत्त्वं द्रव्यमिव एकद्रव्यत्वेनोपेक्षणीयतयेति भावः, उदितौ ॥

७. षडर्थसंक्षेपे. उभयेति ॥ उभयाधिष्ठानम् उभयवृत्ति उभयविषयमित्यर्थः, एकम् अभिन्नम् ॥

शं ॥ प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च जगतः स्थितिकारणम्। प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यस्स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिरनुष्ठीयमानो दीर्घेण कालेन । अनुष्ठातृणां

ज॥नाभिप्रेयते,'मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्यय'इतिन्यायात्।यद्यपि सर्वार्था गीता शक्यश्चाहं तद्वचने,तथापि श्रोतृणां मन्दां मतिमपेक्ष्याल्पमेवोच्यत इति भावेनोक्तं लेशतइति । इत्थंभूतलक्षणार्थतृतीयान्तात्तसिः । अर्थशब्देन सर्वार्थग्रहणप्रसक्तौ सर्वेषां भाष्ये चादर्शनादन्ध्येयं प्रतिज्ञेति मन्दाशङ्कानिरासायेदमुदितम् ॥ नन्वस्तु नमस्कारस्तावत् शिष्यशिक्षणार्थं,प्रतिज्ञा तु किमर्थं ग्रन्थे निवेशनीयाऽउच्यते, बहुभिर्व्याख्यातृभिः

रा ॥ शयज्ञानक्रियैश्वर्याद्यनन्तगुणगणापरिमितसूरिभिरनवरताभिष्टुतचरणयुगलः,

ता॥सिद्धत्वम्।तथानिच्छासम्भवे निवर्तयितुं शक्यतामात्रम्।तेषु त्वनिच्छायाः कदाचिदप्यभावात् स्थितेः सदातनत्वम्। इदं च परमात्मसङ्कल्पानुविधायिस्वरूपस्थितिप्रवृत्तित्वं बद्धमुक्तप्रकृतिप्राकृतकालादिष्वपि भाव्यम्। तच्च सर्वं प्रपञ्चयिष्यते। शेषता शेषवृत्तिरित्यर्थः। अशेषशेषता १यथाभिमताकारता। अत्र २'शरा नानाविधाश्चापि धनुरायतविग्रहम्। अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः' ३'निवासशय्यासनपादुका' इत्यादि द्रष्टव्यम्। एवंस्वरूपस्यैव हि कैङ्कर्यस्य मिथः सर्वार्थतयाऽनुसन्धानात् ४सर्वेऽप्यस्य सर्वकैङ्कर्यकारिणो भवेयुः। यद्वा स्वरूपस्थितिप्रवृत्तिभेदा एव अशेषशब्देन सगृह्यन्ते, तेषामशेषाणां परमात्मानं प्रति शेषता शेषभावः। एवमुक्तप्रकाराया ५शेषतायामितरपरित्यागेन तदेकावलम्बिनी प्रीतिरेव रूपं स्वरूपं स्वभावो वा येषां ते अशेषशेषतैकरतिरूपाः। ते च सदा नित्याः। स्वरूपनित्यत्वस्य सर्वात्मसाधारणत्वात् मुक्तवत्कदाचिदाविर्भूत६स्वरूपत्वमिह नित्यशब्देन व्युदस्यते, नित्यासङ्कुचितज्ञानादिगुणा इत्यर्थः। तत एव निरवद्याः क्लेशकर्मस्वातन्त्र्याभिमानादिदोषात्यन्ताभाववन्तः। एषां ज्ञानस्य निरतिशयत्वं परमात्मज्ञानतुल्यत्वम्। क्रियाया निरतिशयत्वं स्वच्छन्दानन्तकैङ्कर्यात्मकत्वम्। ऐश्वर्यस्य निरतिशयत्वं परमात्मकैङ्कर्योपयोगिस्वेच्छागृहीतशरीरेन्द्रियादिनियमने निर्विघातत्वम्, न तु सर्वनियन्तृत्वम्, ७'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' इति न्यायात्। अत्र निरतिशयज्ञानक्रियैश्वर्यादिरनन्तो गुणगणो येषामिति विग्रहः। ते च अपरिमिता ८असङ्ख्येयाः सूरयः। ९'सदा पश्यन्ति सूरयः', तद्विप्रासो विपन्यवो जागृवांसः समिन्धते' इत्याद्यनुसन्धानेनाह— अनवरताभिष्टुतचरणयुगल इति। विपन्यवः विशे-

प्र पा ॥ १ यथाभिमताकारा पा

२. श्रीरामायणे उत्तरकाण्डे १०९ ७. शरा इति ॥ नानाविधाः महाशिरःस्थूणाकर्णादिविविधलक्षणाः शराः आयतविग्रहं महाप्रमाणं धनुश्च, इति सर्वे सर्वाण्यायुधानि पुरुषविग्रहाः अङ्गुष्ठमात्रपुरुषाकाराः काकुत्स्थं श्रीरामम् अन्वगच्छन्त (महाप्रस्थानकाले) अन्वगच्छन् ॥

३ स्तोत्ररत्ने ४०. श्लो निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः। शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरिते जनैः ॥ निवासेति ॥ पूर्वोक्तोऽनन्त एवात्र समाख्यया सकारणया विशेष्यते। निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः दिव्यायतनप्रभृतिच्छत्रपर्यन्तैः तव कैङ्कर्यप्रतिसम्बन्धिनो भगवतः शेषतां पारार्थ्यं गतैः आश्रितैः शरीरभेदैः परिगृहीतैर्मूर्तिविशेषैः यथोचितं प्रवृत्तिनिमित्तानुगुणे शेषशब्दे इतीरिते शेषसमाख्यया व्यवहृत, शेषत्वं च परा-

। र्थ्यपाधानेनान्तत्वमिति विस्तरः परत्र।

४ सर्वे सव, सर्वेऽपि सर्वे घ ख ध ड पा

५ अशेषशेषताया पा ६ स्वभावत्वमिह पा.

७ ब्रह्मसूत्रे ४ ४ १७ जगद्व्यापारेति ॥ मुक्तैश्वर्यं प्रकरणोच्यते, मुक्तस्यैश्वर्यं जगतो जन्मस्थित्यादीन् व्यापारान् वर्जयित्वा, जगत्कारणत्वं मुक्तस्य नास्तीत्यर्थः। तत्र हेतुमाह। प्रकरणात् कारणवाक्येषु मुक्तभिन्नस्य भगवतः कर्तृतयाऽन्वयात्, मुक्तस्य च निरेकत्वे ॥ ८ असङ्ख्या क. ख ध ड पा.

९ सामवेदे ३ प्र १८-अ. २ ख ४ वा तद्विप्रासइति ॥ विप्रासः भगवद्गुणपूरकाः भगवद्गुणपूर्णान्तरङ्गा वा, विप्रशब्दाज्जसि 'आज्जसेरसुक्' इत्यसुगागमः, विपन्यवः विशेषेण स्तुतिशीलाः जागृवांसः कदा विस्मापनेदिति अस्थाने भयशङ्कया जागरूकाः समिन्धते दीप्यन्ते, 'इन्धी दीप्तौ' ॥

शं॥कामोद्भवाद्धीयमानविज्ञानहेतुकेन अधर्मेण अभिभूयमाने धर्मे, प्रवर्धमाने चाधर्मे,जगतः स्थितिं परिपिपालयिषुस्स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य

ज ॥ भगवद्गीताया व्याख्यातत्वाद्व्यर्थमिदं भाष्यमित्याशङ्कानिरसनं प्रयोजनमस्याः। अन्यैः स्वपक्षनिक्षिप्तदृष्टिभिः स्वाभिप्रायो भगवद्गीतार्थत्वेनारोप्योक्तः, अहं तु गीतार्थमेव वक्ष्यामीति सूचनात् ॥

नचात्र यतिभङ्गो दोषः, तस्य काव्यविषयत्वात्, शास्त्रे 'यउपाधिर्लगति साध्ये सम्बन्धनिरो

रा ॥ **वाङ्मनसापरिच्छेद्यस्वरूपस्वभावः, स्वोचितविविधविचित्रानन्तभोग्यभोगोपकरण-**

**ता** ॥ येण स्तुतिशीलाः। १'पण व्यवहारे स्तुतौ च । पन च ।'अभिष्टुतेत्यभिर्निशब्दार्थः । स्तुतिशीलत्वा-दनवरतत्वोक्तिः ॥

स्तुतिविषयत्व २प्रसक्तमैश्वर्यादेरियत्तारूपं परिच्छेदमपाकरोति—**वाङ्मनसेति** । एतेन ३'यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्' ४'सो अङ्ग वेद यदि वा न वेद' ५'यतो वाचो निवर्तन्ते,अप्राप्य मनसा सह' इत्यादीनां वाङ्मनसयोरवेद्यत्वार्थतां वदन्तो निरस्ताः। तथा सति ६'तद्विजिज्ञासस्व'७'मनसा तु विशुद्धेन' ८'ब्रह्मवित्'९'आनन्दं ब्रह्मणो विद्वान्'इत्यादिभिः, 'यतो वाचो निवर्तन्ते' इत्यत्र यच्छब्दादिभिश्च, विरोधप्रसङ्गः । विरोधपरिहाराय मुख्यवृत्तिनिषेधविषयतया व्यवस्थाप्यत इति चेत्,आगतोऽसि पन्थानम्; विषयव्यवस्था तु यथाप्रमाणमस्माभिः क्रियत इति विशेषः । वाङ्मनसेत्यादिकं परमव्योमविशेषणतया केचिद्व्याचक्षते, श्रीवैकुण्ठगद्ये तथोक्तेः । वयं तु अत्रैव षष्ठाध्याये 'योगिनामपि' इति श्लोके 'वाङ्मनसापरिच्छेद्यस्वरूपस्वभावम्' इति परमात्मविशेषणत्वेनैवाभिधानात्, कुमतिनिरासार्थमपेक्षितत्वाच्च, अत्रापि तथा विवक्षामाचक्ष्महे ॥

**स्वोचितेत्यादि** । अत्राप्यनन्ताश्चर्यशब्दः पूर्ववत्। विभवशब्देन वाहनरत्नादि १०संग्रहः। अनन्तपरिमाणत्वं तिर्यगूर्ध्वादिदेशापेक्षया, अधस्तात् प्रकृत्यवच्छिन्नत्वात् । अनन्तशब्दावृत्तिः प्रत्येकमान-

प्र-पा ॥ १. धातुपाठे भ्वादिषु. २. प्रयुक्तभे. पा. ३. केनोपनिषदि २ - ३. यस्येति ॥ यस्य पुंसः ब्रह्म अमतम् अप्रमेयमिति (मतम्) तस्य नैवैवेत्यर्थः., मतं वस्तुनो ज्ञातम्, यस्य तु परिच्छिन्नत्वेन मतमिति मतम् स न वेद, अतद्रूपत्वाद्विषयस्य । अतः विजानतां विज्ञम्मन्यानामविज्ञातम्, अविजानतामताद्दृशां तु विज्ञातं भवति पूर्ववाक्येन स्वरूपं प्रकाशितम्, उत्तरेण तु फलमिति न पौनरुक्त्यम् ॥

४. ऋग्वेदे अष्ट ८-अध्या ७-मण्ड १०. अनु ११-वा ७- कृष्णयजुषि. २-अष्टके. ८-प्रश्ने. ९-अनु. ६-सोअङ्गेति ॥ अङ्ग भोः स. भगवानेव वेद प्रकरणात्स्वमहिमानं जानाति, यदि वा न वेद ॥

५. तैत्तिरीयोपनिषदि. ४-१. यत इति ॥ मनसा सह मनस्सहिताः वाचः यतः यस्माद्ब्रह्मानन्दात् अप्राप्य निवर्तन्ते, तमिति शेषः । एतेन वाङ्मनसागोचरत्वमुक्तम् ॥

६. तैत्तिरीयोपनिषदि भृगुवल्ल्याम् १-१. तद्विजिज्ञासस्व । तद्ब्रह्मेत्युत्तरांशः, यतो वा इमानीत्यादिः, यत् जगदुदयविभवलयलीलम्, तद् वस्तु तत् प्रसिद्धं ब्रह्मेति, विजिज्ञासस्व विशेषेण इच्छापूर्वकं जानीहीत्यर्थः, उपायदशाप्रभृति भगवज्ज्ञानस्य प्रीतिरूपत्वेनेच्छाविषयत्वात्सन्नन्तनिर्देशः ॥

७. मनुव्याख्याने (१. ८.) इदं व्याससमृतित्वेनोक्तम्,श्रुतिरेवेति भाष्यकारादिभिः,श्रुतिरन्वेषणीया.

८.तैत्तिरीयोपनिषदि.आनन्दवल्ल्याम्१-१. ब्रह्मविदिति ॥ ब्रह्मवित् निरतिशयबृहत्त्वबृंहणत्वाश्रयतया ब्रह्मशब्दवाच्यश्रीमन्नारायणोपासकः विच्छब्दः उपासनपरः 'वेदनमुपासनम्' इत्युक्तेः, परं ब्रह्मरुद्रादिभ्यः परं, यद्वा चेतनाचेतनविलक्षणं, परमात्मानम्, आप्नोति प्राप्नोति ॥

९. तैत्तिरीयोपनिषदि. आनन्दवल्ल्याम्. ४-१. आनन्दमिति ॥ ब्रह्मणः ब्रह्मसम्बन्धिनम् आनन्दं विद्वान् कुतश्चन मात्सारिकादपि न बिभेति भयं न प्राप्नोति ॥ १०. संग्रहः. क. ख. ग. ङ. पा.

नं ॥ *चाभिरक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव। ब्राह्मणत्वस्य हि रक्षणे रक्षितस्स्याद्वैदिको धर्मः, तदधीनत्वाद्वर्णाश्रमधर्मभेदानाम् ॥

ज॥ पणे' इत्याद्यभियुक्तवाक्ये दर्शनादिति ॥ १ ॥

ननु प्राधान्येन व्याख्येयनाप्रामाण्ये अधिकारिविषयप्रयोजनाभिसंबन्धे दुर्गमार्थत्वे च सति संभवति तत्कथं भगवद्गीतायाः प्रामाण्यादिकम् ? सति वा तस्मिंस्तथाविधविविधग्रन्थान्तरपरिहारेणास्या एव

' ' ॥ * रक्षणार्थं.

रा॥ भोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाणनित्यनिरवद्याक्षरपरमव्योम निलय, विविधविचित्रानन्तभोग्यभोक्तृवर्गपरिपूर्णनिखिलजगदुदयविभवलयलील,

ता॥न्ये तात्पर्यातिरेकात्। निलयत्व प्राकृतव्योमवद्व्ययरहितत्वम्। निरवद्यत्व शुद्धसत्त्वमयत्वेन रजस्तमस्त त्कार्यराहित्यम्। अक्षरत्वम् अशतोऽपि सङ्क्षिमहाराविरह। परमशब्देन परनिर्दिष्टप्रक्रियया प्राकृतव्योम व्यवच्छेद। एतेन १'तदक्षरे परमे व्योमन्' इत्यादिश्रुतिसूचनम्। एव नित्यविभूतियोग उक्त॥

अथ लीलाविभूतियोगप्रतिपादनमुखेन२'यतो वा इमानि' इत्यादि३वाक्यै, ४'जन्माद्यस्य यत' इति सूत्रेण च, निरूपित जिज्ञास्यब्रह्मलक्षणयोग दर्शयति—विविधेति। शब्दस्पर्शादिरूपेण दिव्या दिव्यादिभेदेन चात्र भोग्यवैविध्यवैचित्र्ये। 'इमानि' इत्यादिश्रुत्या हस्तप्रसारणेन तत्तत्प्रमाणसिद्धसम स्तकार्यप्रकारनिर्देशात् बहुत्ववचनासङ्कोचाच्च भोक्तृणा ज्ञानसुखादितारतम्यहेतुभूत देवादिरूपेण वैविध्यम्, तदवान्तरविधाभूतब्राह्मणादिरूपेण वैचित्र्य च, दर्शितम्। यद्वा विविधशब्द एव नानान्तरभेद समस्त वैविध्य सगृह्णाति। विचित्रशब्दस्त्वा५श्चर्यवस्त्वेनान्यानक्यत्वपर, ६'मेघोदय' इत्यारभ्य 'विष्णोर्वि चित्रा प्रभवन्ति माया' इत्यादिवत्। ज्ञानसुखादितारतम्याभावेन परमव्योम्नि भोक्तृवैविध्याभावात् परभोग्यवैच७रसाना नित्यसूरीणा पृथगुक्तत्वाच्च तत्र भोक्तृवर्गानुक्ति। भोगोपकरणभोगस्थानान्यत्रा प्यर्थसिद्धानि। एवविधायाश्च विषमसृष्टेर्विचित्रानादिचेतनकर्मप्रवाहमूलत्वान्न वैषम्यादिदोष। निखि लशब्देन कतिपयसृष्ट्यादिनिमित्तोपादानभूतचतुर्मुखादिव्यावर्तनम्। उदयशब्देन सद्वारकाद्वारकसम स्तसृष्टिसग्रहणम्। एव विभवशब्देन विष्णुत्वतारान्तर्यामित्वादिकृतविविधस्थितिसग्रह। लयोऽपि नित्यनैमित्तिकादिरूप। निखिलसृष्ट्यादिष्वन्यतमस्यैव ब्रह्मलक्षणत्वे सभवत्यपि, उपात्तव्यतिरिक्तयो किमन्य कृतेति शङ्काव्यावर्तनाय सृष्ट्यादित्रयोपादानम्। ८जगद्गतानां त्रयाणामुदयविभवलयानामे तद्गतलीलात्वेन व्यपदेशादुपादानत्व सूचितम्। जगदाकारेण ९जायमानत्वादीन्यस्य लीला, १०'बहु

प्र पा॥ १ तैत्तिरीयोपनिषद् नारा ६ १ २

२ तैत्तिरीयोपनिषदि भृगुवल्याम् १ १ यत इति॥ इमानि परिदृश्यमानानि भूतानि स्थावरजङ्ग मात्मकानि यतो जायन्त, जातानि भूतानि च येन आत्मभूतेन वर्तन्ते, प्रयन्ति यान्ति भूतानि यदभिम विशन्ति लीयन्त, स विलेकीभवन्ति, एकीकृततया प्रवश सवेश, यद्वा य प्रयन्तीति भाष्य, अभिसविशन्तीति प्रलय, तद्विजिज्ञासस्वेत्यादि व्याख्यातम् १० पु ६ भ

३ वाक्य जन्माद्यस्य यत' इति सूत्रेण निरू क ख ग घ ङ पा ४ शारी १ अ १ पा २ सू

५ आश्चर्यरूपत्वेन मननाशक्य पा

६ मेघोदय सागरसान्निवृत्तिरिन्दोर्विभाग स्फु रितानि वायो। विद्युद्विभङ्गो गतमुष्णरश्मेर्विष्णोर्वि चित्रा प्रभवन्ति माया' इत्यभियुक्तैश्चति सहस्रनाम भाष्य (३०३ नामपाठे) भट्टारकैरुक्तम्

७ रसनित्य पा

८ जगद्गतानामुदय क ख ग घ ङ पा

९ जायमानत्वादित्यस्य पा

१० तैत्तिरीयोपनिषद् आनन्दवल्या ६ २ छान्दोग्य च ६ २ ३ व्याख्यातमिदम् १ पु १२ स

शा॥स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिस्सदा सपन्नस्त्रिगुणात्मिका वैष्णवीं स्वां माया "प्रकृतिं वशीकृत्य अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रह कुर्वन् लक्ष्यते। स्वप्रयोजनाभावेऽपि

आ॥ नष्टधर्मज्ञानलोकरक्षपालुमि,

ज॥ व्याख्याने को हेतुरित्याशङ्क्य महाभारतान्तर्गतत्वाद्भगवद्गीतायास्तस्य प्रामाण्य [illegible] तत्प्रेत्स्यतीत्याशयवा महाभारतस्य प्रामाण्यादिक साधयितुमाह नष्टधर्मज्ञानेति॥

पा॥ * मूलप्रकृतिम्

रा॥परं ब्रह्म पुरुषोत्तमो नारायणो ब्रह्मादि स्थावरान्तमखिलं जगत्सृष्ट्वा स्वेन रूपेणावस्थितः,

ता॥स्यां प्रजायेय' इति हि जगत्कारणस्य तस्य संकल्पः। सूक्ष्मचिदचिद्विशिष्टस्यैवोपादनत्वात् 'बालस्येव युवत्वादिप्राप्तौ न स्वरूपतो विकार इति निर्विकारत्वश्रुत्याविरोधः । अवाप्तसमस्तकामस्य कथं जगद्व्यापार इति शङ्कां परिहरता लीलाशब्देन निमित्तत्वमपि तस्यैवेति सिद्धम् । एतेन निमित्तोपादानभेदं वदन्तो निरस्ताः । न च लोके निमित्तोपादानभेददर्शनमात्राद्विरोधः, लौकिककारणविलक्षणत्वाच्छ्रुतिसिद्धस्य ब्रह्मणः । अन्ततो वैशेषिकादिभिरपि घटेश्वरगतसंयोगविभागद्वित्वपृथक्त्वादिकार्येष्वीश्वरस्यैव निमित्तत्वम् उपादानत्वं च अभ्युपगतमिति न कश्चिदस्मिन्मते दोषः । तथा १बुद्धिपूर्वकस्वमुखोत्पादनादावपि द्रष्टव्यम् ॥

एव ब्रह्मलक्षणयोगात् नारायणस्यैव परब्रह्मत्वं दर्शयन्, मद्ब्रह्मात्मादिसामान्यशब्दाना नारायणाख्यविशेषपर्यवसानं च सूचयन्, २'नारायण परं ब्रह्म' इति श्रुत्यनुकारिणः ३'नारायणः परं ब्रह्म गीताशास्त्रे समीरितः' इति ४गीतार्थसंग्रहश्लोकस्य प्रपञ्चनमिह क्रियत इति च ज्ञापयन्, उक्तैः प्रकारैः समाख्यात्रयस्यैव संगतमिति चोदाहरन्, उक्तेष्वर्थेषु वा समाख्यात्रयं प्रमाणयन्, ५'परं ब्रह्म परं धाम पवित्रं परमं भवान्' ६'प्रथितः पुरुषोत्तमः' ७'एष नारायणः श्रीमान्' इत्यमीषां कृष्णैकविषयत्वं च दर्शयन्, अभेदश्रुतीनां भेदश्रुतीनां घटकश्रुतीनां कारणबोधकोपासनश्रुतीनां च निष्कृष्टमर्थं संगृह्णाति—परं ब्रह्म पुरुषोत्तमो नारायण इति । सर्वसामानाधिकरण्यं सर्ववैलक्षण्यं च सर्वान्तर्यामित्वेनोपपन्नमिति पदत्रयाभिप्रायः । अत एव अत्र प्रपञ्चबाधभेदाभेदादिना सामानाधिकरण्यं वदन्तो निरस्ताः । ८'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यारभ्य, ९'तत्र ब्रह्मा चतुर्मुखोऽजायत' १०'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्याद्युक्तकरणकलेवरप्रदानहितोपदेशत्यादिकमभिप्रेत्याह—ब्रह्मादि स्थावरान्तमखिलं जगत् सृष्ट्वेति । ब्रह्मसृज्यस्य स्थावरपर्यन्तस्य जगतः परमात्मसृज्यत्ववचनात् ब्रह्मादिकञ्चुकितः परमात्मा तत्तत्सृजतीति सिद्धम् ॥

प्र·पा ॥ १. बुध्यपूर्वपूर्वकस्य. पा.

२. तैत्तिरीयोपनिषदि. नारा. १२ अनु ४. नारायणेनि 'सुपा सुलुक्' इत्यादिना सोर्लुक्।

३. गीतार्थसङ्ग्रहे श्लो.१. ४. शास्त्रयां पा.

५. गी.१०-१२. ६.गी. १५-१८. ७.हरिवंशे विष्णुपर्वणि ५४-५०. व्याख्यातम् ३-पु. १-स.

८. महोपनिषदि १-१-१. एकइति ॥ सृष्टेः प्राक्, हवै इति प्रसिद्धौ, नारायणएकएवासीत्, ब्रह्मेशानादयो नासन्नित्यर्थः ॥

९.महोपनिषदि १-२-१. तत्रेति॥ तत्र हिरण्मयेऽण्डे चतुर्मुखो ब्रह्माऽजायत ॥

१०. श्वेताश्वतरोपनिषदि. ६-१८. योब्रह्माणमिति ॥ त ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ इत्युत्तरार्धम्॥ यः पूर्वं व्यष्टिसृष्टेः प्राक् ब्रह्माणं चतुर्मुखं विदधाति सृजति, तस्मै ब्रह्मणे वेदान् यः प्रहिणोति सृष्टिप्रकारपरिज्ञानाय उपदिशति, वै प्रसिद्धौ, आत्मबुद्धिप्रकाशम् आत्मना विशुद्धमनोगम्यं तं देवं मुमुक्षुरहं शरणं प्रपद्ये उपायतयाश्रये ॥

शं॥भूतानुजिघृक्षया वैदिकं धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश, गुणाधिकैर्गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । *तद्धर्मद्वयं भगवता यथोपदिष्टं

आ॥किमनया कुटिलिकया, पृथग्गीताया एव प्रामाण्यादिकं साध्यताम्, मैवम्। महावाक्यप्रामाण्यात्ऽनधिगतावन्तान्तरवाक्यप्रामाण्यादेरसंभावनाग्रस्तत्वेन साधयितुमशक्यत्वात्॥ यथोक्तं—'संभावितः प्रतिज्ञाया अर्थः साध्येत हेतुना' इति । नष्टशब्दोऽदर्शनवाची, 'णश अदर्शने' इति स्मरणात् । धर्मो निवृत्तिलक्षणः, ज्ञानशब्देन ज्ञेयं परं तत्त्वं वासुदेवाख्यम् अपरं च प्रकृत्यादिकं लक्ष्यते ॥

पा॥ * त धर्म.

रा॥ब्रह्मादिदेवमनुष्याणां ध्यानाराधनाद्यगोचरोऽपारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः,स्वमेवरूप तत्तत्सजातीयसंस्थानं स्वस्वभावमजहदेव कुर्वंस्तेषुतेषु लोकेष्ववतीर्यावतीर्य

ता॥अथ स्वेच्छयावतार तत्प्रयोजन च १वक्तुमनवतारदशाया २तत्प्रयोजनानिवृत्तिं दर्शयति—स्वेनेत्यादिना अगोचर इत्यन्तेन।अगोचरत्वम् अव्यक्तत्वात् । यथोच्यते—३'यैर्लक्षणैरुपेतो हि हरिरव्यक्तरूपधृत्। ४तैर्लक्षणैरुपेता हि व्यक्तरूपधरा युगाम्' इति। ब्रह्मादिदेवेति वचनात्५'तदुपर्यपि बादरायण. सम्भवात् ' इत्यधिकरणेऽर्थित्वसामर्थ्याभ्या समर्थितं ब्रह्मरुद्रेन्द्रादिदेवजातीनामपि परमात्मोपासनाधिकारित्व सूचितम्। स्वप्रयोजनाभावे कथ प्रवर्तनेत्यत्राह—अपारेति । स्वार्थनिरपेक्षया परदुःखासहिष्णुतया, महत्याप्रतिहतया मन्दैः सह निरन्तरसंश्लेषरसिकतया, स्वाभाविकेन परदोषतिरस्कारिणा सनन्धविशेषेण, पिशाचगोपालगोपिकादिभ्य' स्वात्मसमर्पणे कृतेऽपि किंयद्दत्तमिति भावयता महौदार्येण च, प्रेरितोऽवतरतीत्यर्थ । अस्त्रभूषणाध्यायोक्त विग्रह ६'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्य रूपमन्यद्धरेर्महत् ' इति परामृश्य, ७'समस्तशक्तिरूपाणि तत्करोति जनेश्वर । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ' इत्युक्तप्रकारेणावतारविग्रहस्याप्यप्राकृतपरमपदनिलयविग्रहाविशेषत्व दर्शयितु, स्वमेव रूपम् इत्यादि ८उपन्यस्तम् । ९'नैष गर्भत्वमापेदे न योन्यामवसत्प्रभुः'१०'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा' ११'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' इति चोच्यते। १२'अजोऽपि सन्' इत्यादि वक्ष्यमाणमनुसदधान आह—स्वस्वभावमजहदेवेति।१३'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत' १४'सम्भवामि युगे युगे' १५इत्यादिवीप्सार्थम् , १६'बहूनि मे

प्र पा॥ १ वक्तुमनवतारदशाया स्वप्रयोजननिवृत्ति क ङ.पा २ तत्प्रयोजनानिवृत्ति ग.ग घ पा

३

४ तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवाम . पा

५ ब्रह्मसूत्रे १ ३ २५ तदिति ॥ तत् ब्रह्मोपासनम् उपर्यपि देवादिष्वपि सम्भवतीति बादरायणो मन्यते, तेषामर्थित्वसामर्थ्ययोस्सम्भवात् ॥

६ श्रीविष्णुपुराण ६ ७ ७० समस्ताइति ॥ एता कार्यगता समस्ता शक्तय यत्र ईश्वर सर्वकारणभूत प्रतिष्ठिता , अत एव विश्वरूपवैरूप्यम् उक्तविश्वरूपविलक्षणम् अत एव महत् सर्वोत्कृष्टम् ॥

७ श्रीविष्णुपुराण ६ ७ ७१ समस्तेति ॥ समस्तशक्तियुक्तानि रूपाणि देवाद्यनुरूपचेष्टायुक्तानि तदेव प्रकटयति, देव उपेन्द्रादि , तिर्यक् मत्स्यादि , मनुष्यो रामादि , आदिशब्दात् मिश्रो नृसिंहादि ॥

८ उक्तम् घ ङ ग घ पा

९. महाभारते सभापर्वणि अर्घाहरणपर्वणि ६१ ३२.आसनम्तेनमा कृष्ण सवथा कुरुते गतिम्॥ इत्युत्तरार्धम् ॥ नैषइति ॥ एष कृष्ण गर्भत्व गर्भस्थितजन्तुत्वं गर्भवासमिति यावत् , नाऽपेदे न प्राप्त , अत एव न योन्यामवसत् योनिसम्बन्ध च नालभतेत्यर्थ । किन्तु कृष्ण सर्वेषा गतिं कुरुते, स्वाधीनात्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदइत्यर्थ ॥

१० वायुपुराणे पूर्वखण्डे. ३४ ४० वराहपुराणे च १४ ४१ नतस्येति ॥ तस्य भगवत प्राकृता प्रकृतिसम्बन्धिनी अत एव मांसमेदोऽस्थिसम्भवा मूर्ति न, अपितु दिव्यमङ्गलविग्रह इत्यर्थः ॥

११ भारते नभूतेति॥ अस्य परमात्मन परमपुरुषस्य भूतसङ्घसंस्थान पृथिव्यादिपञ्चभूतात्मकः देहो न, अपितु 'इच्छागृहीताभिमतोरुदेह ' इति भाव ॥

१२ गी ४ ६ १३ गी ४-७,

१४ गी ४ ८ १५ इति वीप्सार्थे क ख ग घ ङ पा.

१६. गी ४ ५

शा॥भगवान् वेदव्यासस्सर्वज्ञो गीताख्यैस्सप्तभिः श्लोकशतैरुपनिबबन्ध ॥

तदिद गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम्।तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं सङ्क्षेपतो विवरण करिष्यामि ॥

आ॥लक्षणाया च प्रयोजन यथा धर्मो शास्त्रोत्पादनीयो न तथेदम् , किंतु ज्ञानपरम्परैव तद्विषयानुष्ठेयेति ज्ञापनम् । लोक इति सज्जनो विवक्षितः । नष्टे अदर्शनं गते धर्मज्ञाने यस्य तस्मिल्लोके विषये कृपालुभिः । यद्यपि 'स्पृहिगृहि' इत्यादिना कृपेरालुच्प्रत्ययो न विहित.। तथापि व्याकरणान्तरबलादवगन्तव्यः । कलशवाची वा आलुशब्दः। कृपापूर्णकलशैरित्यर्थः । मोक्षसाधनयोर्धर्मज्ञानयोरदर्शनात्ससारे

रा॥नैस्तैराराधितस्तत्तदिष्टानुरूपं धर्मार्थकाममोक्षाख्यं फलं प्रयच्छन्,भूभारावतारणापदे-
शेनास्मदादीनामपि समाश्रयणीयत्वायावतीर्योर्व्यामकलमनुजनयनविषयतां गतः,परावर-

ता॥व्यतीतानि जन्मानि' १इत्यादर्थं च मावयन्नाह—तेषुतेषु लोकेष्ववतीर्यावतीर्येति । २ 'स उ श्रेयान्भवति जायमानः' ३' यस्यावताररूपाणि समर्चन्ति दिवौकसः । अपश्यन्तः परं रूपम्' इत्यादिकं स्मारयितुम् अवतीर्यावतीर्य तैस्तैराराधितः इत्युक्तम् । तत्तदिष्टानुरूपम् इति वचनात् फलप्रदाने वैषम्यदोषः परिहृतः । ४' तस्मिन्प्रसन्ने किमिहास्त्यलभ्यम्' इत्यादि चात्रानुसंधेयम् ॥

एवमवतारसामान्यं तत्प्रयोजनं च दर्शितम् । अथ तद्विशेषं प्रस्तुतान्वितं दर्शयति—भूभारावतारणेत्यादिना । ५भूभारावतारणं व्याजमात्रम् । सर्वसमाश्रयणीयत्वं तु साक्षादुद्देश्यम् । दुष्कृद्विनाशस्य साधुपरित्राणाल्पमहाप्रयोजनानुषङ्गिकत्वात् ६भूभारावतारणापदेशेन इत्युक्तम् । अस्मदादीनामपि अयोगिनामित्यर्थः । समाश्रयणीयत्वं विवृणोति—सकलेति । ७' यत्र देवा न मुनयो न चाहं न च शंकरः । जानन्ति परमेशस्य तद्विष्णोः परमं पदम्' इत्यादिप्रतिपादितप्रकारेण महायोगिनां परिशुद्धेन मनसापि दुर्गहः सौलभ्यातिरेकात् ८मनुष्याणां तत्राप्यागोपालमयवीरितविरुद्धाविरुद्ध-९विभागानां मांसचक्षुषा ग्राह्योऽभूदिति भावः । एवमवतरणनयनविषयत्वयोर्न केवलमाराध्यत्वमेव प्रयोजनम्, किंतु तदनुभवोऽपीत्यभिप्रायेणाह—परावरेति । पराः उपासनसमर्था ब्रह्मरुद्रमीष्माक्रूरादयः । अवरास्तु आभीरप्रभृतयः । निखिलजन इति स्त्रीपुमादिविभागोऽपि नास्तीत्यभिप्रेतम्, १०' पुंसां दृष्टिचित्तापहारिणम्' इतिवत् । दिव्यचेष्टितानि नवनीतनटनादीनि । एवं विशेष-

प्र॰पा॥ १. इत्यादिश्लोकार्थम्. पा.

२. यजुषि-३ अष्टक-६ प्रश्न-१ अनु-३. स इति ॥ उ इत्यवधारणे । स. परमपुरुष जायमानः अवतरन् सन् श्रेयानेव भवति, जन्मन' कर्मकृतत्वे स्वभावहानिमादिदोषः स्यात्, इच्छागृहीताभिमनोरदेहस्य भगवतो जायमानस्याप्योज्ज्वल्यमेवेति भाव. ॥

३. वि. पु. १-१९-८०. यस्येति ॥ नमस्तस्मै परात्मन इति चतुर्थः पादः ।

४. वि. पु. १-१७-९१. तस्मिन्निति ॥ धर्मार्थकामैरल्पमल्पकाले । समाश्रितानामनरांरनन्ताविस्मयो मुक्तिफलप्रदानः ॥ सर्वत्र सन्निहितात् महाकल्पतरोर्मोक्षफललाभो निस्संशयः ॥

५. भूभारावतरण. क. ख. ग. घ. ङ. पा

६. भूभारावतरणा क. ख. ग. घ. ङ. पा.

७. वि. पु १९-५५. यत्रेति ॥ महावाक्यमिदम् ॥

८ मानुषाणां. क. ख. ग घ. ङ. पा.

९. विभागो माम. क. ख. ग. घ. ङ. पा.

१०.श्रीरामायणे अयोध्याकाण्डे३-२९ पुंसामिति॥ रूपौदार्यगुणैरिति शेषः । रूप विग्रह: औदार्यम् अनुभवितृभ्योऽनुभवदानम्, 'य आत्मदा बलदाः' इति श्रुतेः । गुण्यते सदाऽनुमन्धीयत इति गुणः, तेन सदाऽनुसन्धीयमाने सौशील्यमुच्यते, अहो ! महानयमस्मादृशेषु क्षुद्रेष्वप्यतिसंश्लेषेण वर्तत इति सर्वदानुसन्धीयमानत्वात्, पुंसामिति कठिनचित्तानामपि, किमुत स्त्रीणामिति भावः । यद्वा पुंशब्देन स्त्रीपुंसाधारणमात्ममात्रमुच्यते 'पुमानेको व्यवस्थितः' इति श्रीविष्णुपुराणप्रयोगात्, तेन सुरनरतिर्यगादिभेदभिन्ना स्त्रीपुन्नपुंसकभेदभिन्ना च सर्वेषां

शं ॥ तस्यास्य शास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम् । तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति । तथेममेव गीतार्थं धर्ममुद्दिश्य भगवतैवोक्तम्—'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' इत्यनु-

आ ॥ ब्रह्मरुद्रेन्द्रादिभिरर्थितो ज्ञानप्रदर्शनाय भगवान्,

ज॥क्लिश्यमानान् मन्नानवलोक्य उत्पन्नकृपेति यावत् । अन्यपदार्थानां देवानां ब्रह्मरुद्रेन्द्रादिभिरिति यद्विशेषणम्,तत्प्रसिद्धप्रमाणानामपि भगवदितरेषामशक्यमिदं कार्यमिति ज्ञापनार्थम्। ज्ञानपदेन धर्मोऽ-

रा॥निखिलजनमनोनयनहारिदिव्यचेष्टितानि कुर्वन्,पूतनाशकटयमलार्जुनारिष्टप्रलम्बधेनुककालियकेशिकुवलयापीडचाणूरमुष्टिक *तोसलकंसादीन्निहत्य अनवधिकदयासौहार्दानुरागगर्भावलोकनालापामृतैर्विश्वमाप्याययन्, निरतिशयसौन्दर्यसौशील्यादिगुणगणाविष्कारेणाक्रूरमालाकारादीन् परमभागवतान् कृत्वा, पाण्डुतनययुद्धप्रोत्साहनव्याजेन

ता॥एतद्वय साधुपरित्राणप्रकारविशेषतयाभिहितम्।अथ साधुपरित्राणानुपङ्गिकं दुष्कृद्विनाशनप्रकार प्रपञ्चयति—**पूतनेति**। भगवतो बलभद्रस्याप्येतदंशरूपत्वात् प्रलम्बमुष्टिकादिहननमप्येतत्कर्तृकतयोपात्तम्। पुनः साधुपरित्राणान्तर्गता भोग्यता दर्शयति—**अनवधिकेति**। प्रियतमस्वरूप१दर्शन धारकम्; तच्चेष्टितदर्शन पोषकम्; तेन सहालापादिः भोगप्रकार., इति नयनविषयत्वचेष्टितालोकनादिविभागनिर्देशाभिप्रायः। दया स्वार्थनिरपेक्षा परदुःखनिराकरणेच्छा, सौहार्दं हितैषित्वम्; अनुरागः प्रीतिः। एवं साधुपरित्राण तदौपयिकं दुष्कृद्विनाशनं चोक्तम्। अथ धर्मसंस्थापनम् आराध्यस्वरूपप्रदर्शनेन देशकालविप्रकृष्टानामपि परम्परयानुग्राहकेणोपदेशेन च दर्शयति—**निरतिशयेत्यादिना** वाक्यशेषेण। एतच्चाखिल २'परित्राणाय' इति श्लोके ३व्याख्यास्यते। तत्र हि साधूना लक्षणस्वभावादिमुक्त्वानन्तरमेवमुक्तम्—'मत्स्वरूपचेष्टितावलोकनालापादिदानेन तेषा परित्राणाय, तद्विपरीताना विनाशाय च क्षीणस्य वैदिकस्य धर्मस्य मदाराधनरूपस्य आराध्यस्वरूपप्रदर्शनेन स्थापनाय च, देवमनुष्यादिरूपेण युगे युगे सम्भवामि' इति। ४उपदेशतो धर्मस्थापन व्यासादिमुखेनापि कर्तुं शक्यम्। आराध्याकारप्रदर्शनेन स्थापनं तु स्वेनैवावश्यकर्तव्यमिति भाव। बाह्यान्तरकरण ६ग्राह्यगुणवर्गद्वयप्रदर्शनतया सौन्दर्यसौशील्ययोर्ग्रहणम्। परमभागवतान् कृत्वेति भगवद्भक्तिरूपपरधर्मनिष्ठान् कृत्वेत्यर्थः॥

एव प्राचीनभगवच्चरितस्य श्रीमद्गीतार्थोपदेशेन सगतिः प्रदर्शिता। **पाण्डुतनययुद्धप्रोत्साहनव्याजेन** इति तु भारतकथासंगति। अत्र व्याजशब्देन७'अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलम्। पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरण कृतम्' इत्यत्र 'उद्दिश्य' इति पदस्याभिप्रायो विवृतः। 'परमपुरुषार्थ' इत्यादिना शास्त्रस्य परमप्रयोजनाभिधानम्। तेनात्र ८भूमविद्यायामिवात्मानुभवोक्तिरप्यैश्वर्योक्तिवद्भगवदनुभवापेक्षया ९निकृष्टपर्वज्ञापनायेति सूचितम्। **मोक्षसाधनतया** इति साध्यसाधनभावनिर्देशेन ससारात्मन एव नित्यमुक्तिं वदन्तो निरस्ताः। वेदान्तोदित वेदान्तनिहितम्, न तु वेदान्तोत्पादितमित्यर्थः। एतेन अविधेयज्ञानवादिनो निरस्ताः। वेदान्तोदितस्यार्थस्योपबृंहण-

प्र पा॥दृष्टिचित्तापहारकम्।वक्ष्यति रामविरहे स्थावर जङ्गमवस्तुमात्र परिम्लानमिति। यद्वा पुमामभिराम पश्यता स्त्रीभूयाहमनुभवेयमित्यभिलाषो भवति, यथाऽऽहुः "पाञ्चाल्या पद्मपत्राक्ष्या स्वायन्त्या जघनं घनम्। या स्त्रियो दृष्टवत्यस्ता पुम्भाव मनसा ययुः" इति॥ *कोसलेति. पा.

१. सन्दर्श. क ख घ पा.

२ गी ४-अ ८ श्लो

३ व्याख्यास्यति क ग. घ. ङ पा.

४ उपदशेन या ५ नापि शक्यम्. पा.

६. ग्र ह्यगुणवर्गनिदर्शनतया. पा.

७ गीतार्थसङ्ग्रह ५-श्लो

८. भूमविद्यायामिवात्मा. पा.

९ निकृष्टपुरुषार्थत्व, निकृष्टपर्वत्व. पा.

शा॥गीतासु। तत्रैव चोक्तम्—'नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी। यस्स्यादेकासने

आ॥ व्यासोऽवततार॥ ततश्चेष्टानिष्टप्राप्तिपरिहारसाधनादर्शनाद्वेदार्थाज्ञानाच्च संसारे

ज॥त्युपलक्ष्यते। समस्तक्षत्रनिरासाय स्वशब्देनाग्रहणम्,एतच्च पूर्वेणोत्तरेण च संबध्यते, **ज्ञानप्रदर्शनार्थितो ज्ञानप्रदर्शनायावततारेति।भगवान्** समग्रज्ञानैश्वर्यवैराग्यादिगुणसपन्नो नारायणो व्यासरूपेणावततारेत्यर्थः। ततः किं प्रकृत इत्यत आह—**ततश्चेति**॥ तस्माद्धर्मज्ञानप्रदर्शनार्थमवतीर्णत्वादेव,

रा॥परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास। तत्र पाण्डवानां कुरूणां च युद्धे प्रारब्धे स भगवान् पुरुषोत्तमः सर्वेश्वरे-

ता॥मत्र क्रियत इति भावः।१स्वविषयमिति—मोक्षार्थोपासनवाक्यानामनन्यपरतया साक्षात्परमपुरुषाराधनविषयत्वमेव। अथर्वशिरःप्रतर्दनविद्यादिषु २रुद्रेन्द्रादिभिः स्वस्य मुमुक्षूपास्यत्व३वचनेऽपि रुद्रेन्द्राद्यन्तर्यामिभूतः परमात्मैवोपास्य इति ४'शास्त्रदृष्ट्या तूपदेशो वामदेववत्'इति सूत्रकारैरेव प्रतिपादितमिति भावः । एतेन वेदान्तोदितमाहात्म्यवादिनो भगवतः ५'स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः' इति सूचितम् । स्वविषयम् इति भक्तियोगस्य सिद्धरूपपरमप्रतिपाद्यानुबन्धित्वं दर्शितम् । ६प्रधानविधेयांशनिष्कर्षाय भक्तियोगम् इत्युक्तम् । ज्ञानकर्मानुगृहीतत्वं ज्ञानकर्मसाध्यत्वम् । ७एतेन समुच्चयादिपक्षा निरस्ताः । वैराग्यस्य ८संग्रहश्लोके पृथगुक्तस्यापि निःश्रद्धयानुप्रविष्टत्वादिहानुक्तिः । एवमुपायोपेयात्मकमुभयमपि शास्त्रप्रतिपाद्यमिति संग्रहश्लोकतात्पर्यमुक्तं भवति । मोक्षसाधनतया वेदान्तोदितं भक्तियोगम् इति वचनात् उपासनस्यार्वाचीनब्रह्मप्राप्त्यादिसाधनत्वं वाक्यार्थज्ञानमात्रस्य मोक्षसाधनत्वं च वदन्तः प्रत्युक्ताः । ज्ञानध्यानादिसामान्यवचसां भक्तिरूपविशेषे पर्यवसानमिति च भावः । एतद्यथाभिलमुत्तरत्र व्यक्तं भविष्यति ॥

एवं शास्त्रं संगमय्य, शास्त्रोपोद्घातं संगमयितुं पाण्डुतनय इत्यादिना सूचित ९पूर्ववृत्तान्तं प्रकटयन्, सारथित्वेनावस्थायाचार्यकृत्यकरणे १०प्रतारकत्वशङ्का च वारयति—तत्रेति । तत्र प्रथमं भक्तियोगमवतारयितुमेनं चकारेत्यर्थः ; यद्वा तत्र युद्धे प्रारब्धे इत्यन्वयः ; भक्तियोगावतरणव्याजभूतप्रोत्साहनविषयभूते ११युद्धे प्रारब्धे इत्यर्थः । भगवतोऽवतारदशायामपि पूर्णत्वस्वाच्छन्द्यादिकं वात्सल्यादिमूलसारथ्याद्यपकृष्टकर्मानुष्ठानस्य गुणरूपत्वादिकं च प्रदर्शयितुं स भगवान् इत्याद्युक्तम्।स भगवान् पुरुषोत्तमः सर्वेश्वरेश्वरः इति चतुर्भिः पदैः स्वरूपगुणवैलक्षण्यविभूत्यादिप्रतिपा-

प्र॰पा॥ १.वेदान्तोदितं स्वविषय. क. ख. ग. घ. पा.
२. रुद्रादिभि.. पा. ३. वचनमरेऽपि. पा.
४. ब्रह्मसूत्रं. अ. १. पा. अधि. ११ सू. ३१. शास्त्रदृष्ट्येति ॥ प्रज्ञातजीवभावेनेन्द्रेण 'मामेव विजानीहि' 'मामुपास्स्व' इत्युपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः; अपितु शास्त्रेण स्वात्मदृष्टिकृतः; वामदेववत्—यथा नाम वामदेवः परस्य ब्रह्मण. सर्वान्तरात्मत्वं, सर्वस्य च तच्छरीरत्वं, शरीरवाचिना च शब्दाना शरीरिणि पर्यवसानं पश्यन् 'अहम्' इति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र.' इत्यादिना ॥
५. काव्यादर्शे प्रथमपरिच्छेदे.
६. विधेयांशनिष्कर्षाय. पा. ७. समुच्चय. पा.
८. गी. भ. १-श्लो.
९ पूर्ववृत्तं.प . १०.प्रतारकत्वशङ्कानिवारयति.पा.
११. युद्धे वा भगव. पा.

शां॥लीनस्तूष्णीं किञ्चिदचिन्तयन्' 'ज्ञानं संन्यासलक्षणम्' इति च । इहापि च अन्ते उक्तमर्जुनाय—'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति । अभ्युदयार्थोऽपि प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः । स देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पण-

आ ॥ क्रियमाणानां वेदानधिकारिणां स्त्रीशूद्रादीनां च धर्मज्ञानद्वारा मोक्षो भवेदिति कृपालुः सर्ववेदार्थोपबृंहितां तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्तां च सर्वप्राणिनामवगाह्यानवगाह्यरूपां केवलभगवत्स्वरूपपरां परोक्षार्थां महाभारतसंहितामचीक्लृपत् ॥

ज॥ अवतारानन्तरमेव या विजातीयव्यापारव्यवधानमन्तरेणेति यावत् । धर्मज्ञानप्रदर्शनाय महाभारतसंहितां महाभारताख्यं शास्त्रम् अचीक्लृपत् समर्थितवान् ; व्यास इति सम्बन्धः ॥

रा ॥ श्वरो जगदुपकृतिमर्त्य आश्रितवात्सल्यविवश॰ पार्थं रथिनमात्मानं च सारथिं सर्वलोकसाक्षिक चकार। एव ज्ञात्वापि सर्वात्मनान्धो धृतराष्ट्र॰ सुयोधनविजयबुभुत्सया सञ्जय पप्रच्छ ॥

ता॥दनेन परत्वसग्रह ।सर्वेश्वरेश्वर इत्यनेन''सर्वेश्वरेश्वर कृष्ण 'इत्यादिवचनोक्त स्वाच्छन्द्य जगदुद्भिल्व च शासितम्। **जगदुपकृतिमर्त्य आश्रितवात्सल्यविवश॰** इति सौलभ्यसग्रह । अविप्रलम्भकत्वे चानेन व्यञ्जितम् २'जगतामुपकाराय', ३ 'जगदुपकृतिमर्त्यं को विजेतु समर्थ ' इत्यादिकमिह स्मारितम्। जगदुपकृतिमर्त्यत्वेऽप्युत्कृष्टचरित परित्यज्य निकृष्टसारथ्यादिकृत्य ४किमर्थं कुरुते इत्यत्रोक्तम्—**आश्रितवात्सल्यविवश॰** इति । **पार्थं रथिनमात्मान च सारथिमिति**—अपकृष्ट पार्थमुत्कृष्टकृत्ये स्वयमेवावस्थाप्य आत्मानमुत्कृष्ट निकृष्टकृत्ये चकारेति भाव । पार्थशब्देन ५नात्यौपधिकलौकिकसम्बन्धविशेषोऽपि सूचित , पितृष्वसा हि पृथा भगवत । **सर्वलोकसाक्षिकमिति**—न चासौ निकृष्टकृत्य सापनयो रहस्ये कृतवान्, अत इदमपि आश्रितवात्सल्यस्य नैरपेक्ष्यस्य अर्थापह्नवाय सभजस्य च लिङ्गमिति भाव । यद्वा सर्वथा ६ स्वसमाश्रयणेन पुरुषार्थलाभाय स्वस्य शास्त्रैकसमाधिगम्य माश्रितपारतन्त्र्य सर्वलोकमन्यथ चकारेति भाव ॥

७ अथ ८'स्वा शीलरूप ' इत्यादिकमेगानन्यसाधारणशीलरूपचरितपरमसत्त्वप्रवरशास्त्रदेवता॰ पारमार्थ्यैर्वेदिशान्तनवसञ्जयादिवचनैरप्यासुरप्रकृतीना यथावदवगन्तुमशक्यता प्रदर्शयन्, गीतोपनिषत्प्रस्तावनार्थं प्रथमश्लोकमवतारयति—**एवमिति** श्रिय पतिरित्यादिना पूर्वोक्तप्रकारेणेत्यर्थ । **सर्वात्मनेति**—न केवलं चक्षुषा, परन्तु च हितमनानता मनसापीत्यर्थ । एवविधमान्ध्य सुयोधनविजयाभिलाषेण ९प्रश्ने हेतु । १०अत्र 'मामका ' इति प्रथमोक्त्या ममकारेण,११'यत्र योगेश्वर ' इत्यादिप्रतिवचनप्रक्रियया च, सूचित प्रष्टुरभिप्राय दर्शयितु **सुयोधन** इत्यादिकमुक्तम् । **सञ्जयमिति**—

प्र दा॥१ सर्वेश्वरेश्वर कृष्ण प्रोच्यत यदि पाण्डवै । तथापि स्वल्पमवाक्त भूतार्थ कतमा स्तुति ॥ सर्वेश्वरानि ॥ सर्वेश्वराणा ब्रह्मरुद्रादीनामीश्वर कृष्ण पण्डितैस्तत्त्वज्ञै प्रोच्यत यदि प्रकर्षेण यदि परिभाष्यते, तथापि स्वल्पमवाक्त स्यात् । भूतार्थे सत्येऽर्थे स्तुति कतमा न कापीत्यर्थ , 'स्तोत्र नाम किमामनन्ति कवयो यद्यदीया गुणान यत्र स्वमताऽधिरोप्य कथिति इयुक्तरिति भाव ॥

२ वि पु ६ अ ७ अ ७२ श्लो जगतामुपकाराय न सा कर्मनिमित्तजा। यथा तस्याप्रमेयस्य व्यापिन्य व्याहताभिका॥ इति॥'समस्तशक्तिरूपाणि तत्करोति जनेश्वर । देवतिर्यङ्मनुष्यादिचेष्टावन्ति स्वलीलया, इत्युक्त समर्थयन् जगतामिति ॥ कर्मनिमित्ता जाता हि यथा परि ... ना सप्रतिघाता न मा हु कर्मनिमित्ता न भवति अत व्यापिनी अप्रतिहता व्याहताभिका न । अतस्मा चेष्टा स्वतन्त्रस्याप्रमेयस्येश्वरस्य लीलैवत्यर्थं ।

३ वि पु,५ अ ३० अ ८० श्लो जगदुपकृताविति॥ पारिजातापहारप्रकरणे भगवता कृष्णेन पराजितस्य इन्द्रस्य वाक्यमिदम् ।'सकलभुवनसूतिमूर्तिरल्पाल्पसूक्ष्मा विदितसकलवेद्यायन यस्य नान्यै ।तमजमकृतमीशं शाश्वत स्वेच्छयैन जगदुपकृतिमर्त्य को विजेतु समर्थ ॥इति॥

४ कुरुतऽइत्यतो पा ५ नात्यौपधिकसम्बन्ध पा
६ समाश्रयणेन पा ७ तत्रैव पा
८ स्तोत्ररत्ने १५ श्लो
९ प्रश्नहेतु , प्रीतिहेतु । पा
१० मामका इति पा ११ गी १८ ७८

ज ॥ धर्मादिज्ञानमपुरुषार्थं कथ शास्त्रप्रयोजनमभिप्रेतवानित्यत उक्त **धर्मज्ञानलक्षणया द्वारा सज्जनानां मोक्षो भवेदिति** अभिप्रायेणेति। अत्र ज्ञानशब्दो मुख्यार्थं एव। ग्रन्थनिर्माणे भगवत कि प्रयोजनमित्यत उक्त **कृपालुरिति**। ससारे स्वाभाविके मोक्षार्थं प्रयत्न कारीयकारुण्यापनयनार्थप्रयत्नतुल्य इत्यत उक्तम् **इष्टानिष्टप्राप्तिपरिहारसाधनादर्शनात्संसारे क्लिश्यमानानामिति** ।

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः । १
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय? ॥

सञ्जय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा । २
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् । ३
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि । ४
युयुधानो विराटश्च द्रुपदश्च महारथः ॥

---

ता॥व्यासप्रसादलब्धसकलभारतसमरवृत्तान्तसाक्षात्कारं१'शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्' इत्यादिवादिनम्; एवं यथार्थदर्शित्वयथादृष्टार्थवादित्वाभ्यामाप्ततमतया निर्णीतमिति भावः। **पप्रच्छ,** समरवृत्तान्तमिति शेषः ॥

**धर्मक्षेत्रे**—धर्मस्य स्थानभूते समराध्वरसमुचिते इति भावः । **कुरुक्षेत्रे** पाण्डवधार्तराष्ट्राणां स्वकूटस्थनामोपलक्षितत्वेन बहुमानविषय इति भावः । **युयुत्सवः समवेताः** मिथः प्रत्यनीकरूपेण व्यूढा इत्यर्थः । **च, एव,** इत्यव्ययद्वयमनतिरिक्तार्थम्; यद्वा समस्तभूमण्डलवर्तिनां राज्ञां तत्र समाहारेऽपि तादर्थ्याद्वर्गद्वयमेव तथाभूदित्येवकाराभिप्रायः। **अकुर्वत** इत्यात्मनेपदेन कर्त्रभिप्रायक्रियाफलविषयेण स्वार्थतोक्ता ॥

---

प्र॰पा॥१.भारते-उद्योगपर्वणि.६८-५ शुद्धभावमिति॥ धृतराष्ट्रं प्रति सञ्जयवाक्यमिदम्। माया न सेवे भद्रं ते न वृथा धर्ममाचरे। इति पूर्वार्धम्॥ मायामिति॥ मायां न सेवे न वञ्चनैस्समयाकरोमि। राज्ञोऽपकर्षमात्मन उत्कर्षं चाभिहितं मत्वा प्राह भद्रं त इति। न वृथा धर्ममाचरे नाहं कदापि छलधर्माननुतिष्ठामि। शुद्धभावं गतः मनोवाक्कायैरनन्योऽस्मि। भक्त्या शास्त्राद्वेद्मि जनार्दनं भक्तिसहकृतेन शास्त्रेणतं विजानामि। स्वयत्नेन जानतां खलु स दुर्ज्ञेयः ॥

---

ज॥मोक्षस्य पुरुषार्थतासमर्थनार्थं वादिविप्रतिपत्तेस्तत्स्वरूपनिर्धारणार्थं च इष्टेत्याद्युक्तम्। आत्यन्तिकेतिचोपस्कर्तव्यम्। साधनं च धर्मज्ञानरूपम्। ननु वेदानामुद्धृतत्वात्तत एव धर्मादिप्रतीतिसम्भवात्किं भारतनिर्माणेनेत्यत उक्तं **सर्ववेदार्थेति।** अनेन वेदाधिकारिणा त्रैवर्णिकानां पुंसां वेदार्थज्ञानोपायो भारतमिति सूचयति। वेदानधिकारिणां वेदतुल्यत्वाच्च तन्निर्माणं युक्तमित्याशयवानाह **वेदेति ॥** तदनेन परमाप्तिमूलत्वान्महाभारतस्य प्रामाण्यम् ॥

धर्मः परमपरं च तत्त्वं विषयः। तज्ज्ञानं चावान्तरप्रयोजनम्,मोक्षः परमम्। सज्जनाश्चाधिकारिण इत्युक्तं भवति। नष्टधर्मेत्यादिना बहुशो विषयप्रयोजनाभिधानेन तयोरनन्यलभ्यत्वं सूचयति।यदभावात्सतां संसारक्लेशः,यदर्थं देवतानां प्रार्थनम्,यदर्थश्च भगवतोऽवतारः,तद्भारतनिर्माणेनैव पर्यवसितमिति॥ एतेनैतदपि प्रत्युक्तम्,यदाह भास्करः—'शास्त्रप्रयोजनाभिधाने प्रस्तुतेऽवतारप्रयोजनाभिधानमसंगतम्' इति। शंकरः कृष्णावतारपुरस्कारेण गीतायाः संगतिमाह। तदतिक्रमेण व्यासावतारपुरस्कारे को हेतुरिति चेत्; कृष्णस्य बलकार्यत्वेन ज्ञानोपदेशस्य प्रासङ्गिकत्वम्, व्यासस्य ज्ञानकार्यत्वेन प्राधान्यमिति ॥

धृष्टकेतुश्चेकितानः काशीराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६
अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७
भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ॥ ८
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १०
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११

**रा॥**दुर्योधनः स्वयमेव भीमाभिरक्षितं पाण्डवानां बलम् आत्मीयं च भीष्माभिरक्षितं बलमवलोक्य, आत्मविजये तस्य बलस्य पर्याप्तताम् आत्मीयस्य बलस्य तद्विजये चापर्याप्ततामाचार्याय निवेद्य, अन्तर्विषण्णोऽभवत् ।

---

**ता॥**एवं सुयोधननिजयमनुभुत्सया कृतस्य प्रश्नस्य १'यत्र योगेश्वरः' इति साक्षादुत्तरं वक्ष्यन्, तत्प्रत्यायनार्थमखिलमनान्तरवृत्तमपि सञ्जय उवाच—**दृष्ट्वेति** । पाण्डवानीकं व्यूढं दृष्ट्वा इति सुयोधनस्य ३धैर्यभ्रंशहेतु. । तदधीनो धैर्यभ्रंशरूपोऽवस्थाविशेष तुशब्देन सूच्यते । दृष्ट्वेत्यादेरनुनादयन्नित्यन्तस्याव्यक्तार्थं व्यञ्जयति—**दुर्योधन इत्यादिना अकथयदित्यन्तेन** । संज्ञार्थं सम्यग्ज्ञानार्थम्; संज्ञया परिसंख्यानार्थं वा। तत्र अन्तर्विषण्णोऽभवत् इत्यन्तेन **भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि** इत्येतदन्तं व्याख्यातम् । अपर्याप्तम् इति श्लोकस्यायमर्थः—तत् तस्मात्; अस्माकं बलं भीष्माभिरक्षितमपर्याप्तं परबलविजयाय नालम्, इदं त्वेतेषां पाण्डवानां बलं भीमाभिरक्षितं पर्याप्तमस्मद्बलविजयायालम् —इति । नन्विदमनुपपन्नं तद्बलमिति सामानाधिकरण्यप्रतीतिभङ्गायोगात्; पूर्वेण च परबलस्वबलयोः सामर्थ्यासामर्थ्यहेतूपन्यासाभावात् । न च भीष्मद्रोणादिरक्षितं स्वबलमयम-



---

**ज॥** वेदादिसंवादेनापि भारतस्य प्रामाण्यनिश्चय इत्याशयेनाह **सर्वेति॥** नैतावता वेदादिसमं भारतं किंतु तदनुक्तार्थस्यापि प्रतिपादनेन ततोऽधिकमिति भावेनाह **तदिति** । तर्हि निर्मूलत्वेनाप्रामाण्यं प्रसज्यत इत्यत उक्तम् **ईश्वरेति** ॥ ज्ञानदृष्टो ज्ञानविषयीकृत. । सार्वज्ञस्य झडिति स्फुरणार्थं स्वेत्यनुक्त्वा ईश्वरेत्युक्तम् । ईश्वरज्ञानस्य कुतः प्रामाण्यमित्यत उक्तं **केवलेति।** **इन्द्रियाद्यनपेक्षम्,** अनेन सत्स्वप्यन्येषु ग्रन्थेषु किमेतद्व्याख्यानेनेति परिहृतम्। ननु नष्टधर्मेत्यादिना मन्दान् प्रतीद निर्मितमिति सूचितम् ।

ता॥समर्थं मन्यते।प्रबलानामेव हि भीष्मद्रोणादीनां वधः सोपाधिकः। १'न भेतव्यं महाराज'इत्यादिषु च बहुशः स्वबलस्यैव सामर्थ्यं दुर्योधनेनोपन्यस्तम्। न चेदानीं तद्विपरीतप्रतीतौ कारणमस्ति। द्वितीयदिवसारम्भे च दुर्योधन एव वक्ष्यति—२'अपर्याप्तं तदस्माकं बलं पार्थाभिरक्षितम्। पर्याप्तं त्विदमेतेषां बलं पार्थिवसत्तमाः' इति। तत्र चास्माकमपर्याप्तमित्येवान्वयः; न पुनरस्माकं बलमिति। ततोऽत्रापि तथैव वचनव्यक्तिरुचिता। तस्मात् पाठभेदेन व्यवहितान्वयेन वाक्यभेदेन पदार्थभेदेन वा योजना स्यात्। तत्र भीमभीष्मशब्दयोर्विपर्यासात्पाठभेदः। तथा च भीमाभिरक्षितं तद्बलमस्माकमपर्याप्तमित्यन्वये सामानाधिकरण्यम्, तदिति विप्रकृष्टनिर्देशस्वारस्यम्, दुर्योधनाभिप्रायाविरोधश्च, सिध्यति। व्यवहितान्वयेऽप्ययमेवार्थः। द्विधा च व्यवहितान्वयोऽत्र शक्यः। भीमाभिरक्षितभीष्माभि३रक्षितयोर्विपर्यासादेकः। अपर्याप्तं तत्, पर्याप्तं त्विदम्, इत्यनयोर्विपर्यासाद्द्वितीयः। अर्थौचित्याय तु व्यवधानमात्रं सह्यते। ४वाक्यभेदेऽप्येवं योजना—अपर्याप्तं तदित्येका प्रतिज्ञा; पर्याप्तं त्विदमिति द्वितीया। अत्र को हेतुरिति शङ्काया हेतुपरं वाक्यद्वयम्; अस्माकं बलं भीष्माभिरक्षितम्, एतेषां बलं भीमाभिरक्षितमिति। अस्मद्बलस्य प्रबलाधिष्ठितत्वात् परबलस्य च दुर्बलाधिष्ठितत्वादित्यर्थः। पदार्थभेदे त्वेवं ५योजना—पर्याप्तं पर्यापनं समापनम्; पर्याप्तमिति कर्तरि क्तः, नाशनसमर्थमित्यर्थः; अपर्याप्तं नाशनासमर्थमित्यर्थः। भीष्माभिरक्षितमस्माकं बलं तत् अपर्याप्तं नाशयितुं न शक्नोति। तत् इति अत्र पाण्डवबलं कर्मतया निर्दिश्यते; इदम् इति च स्वबलं परबलपर्यापनकर्तृतया। निष्ठायोगाच्च न कर्मणि षष्ठीप्राप्तिः। यद्वा अपर्याप्तमपरिमितमित्यर्थः; पर्याप्तं परिमितमित्यर्थः; स्वबलस्यैकादशाक्षौहिणीयुक्तत्वात्,परबलस्य सप्ताक्षौहिणीयुक्तत्वाच्च। सर्वथा तावत् स्वबलदौर्बल्ये परबलप्राबल्ये च युद्धारम्भे दुर्योधनः प्रसज्येदिति—सोऽयं पश्चात्तापात्पादप्रसारपुरःसरप्रवेशः। तथाहि—इह तावद्भीष्माभिरक्षितमित्येतत्प्रतिशिरस्कया भीमाभिरक्षितमिति केनाभिप्रायेण निर्दिश्यते? न तावद्भीष्मवद्भीमस्यापि सेनापतित्वेन; धृष्टद्युम्नस्य तत्पतित्वेनोक्तत्वात्। नापि भीष्मसमपौरुषत्वेन; अत्यन्तविषमतया प्रसिद्धेः। यथोक्तं भीष्मेणैव—६'शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान्। यद्येषां न भवेद्गोप्ता विष्णुः कारणपूरुषः' इति। नापि प्रतिपक्षाधीश्वरत्वेन; धर्मसूनोस्तथात्वात्। नापि परबलभटप्रधानत्वेन; ७अर्जुनस्यैव तथा प्रसिद्धेः। अतो भीमस्य समस्तधार्तराष्ट्रवधदीक्षितत्वात्तदुचितगात्रबलसाहायादियुक्तत्वाच्च तस्य विशेषतो निर्देशः। एवं सति तत्प्रतिशिरस्त्वेन भीष्मस्य निर्देशोऽपि समस्तपाण्डुतनयसंरक्षणप्रवणत्वेन प्रतिपक्षत्वात्। अतः ८शत्रुभयमहायानिशङ्के पदद्वयमुचितं इत्युक्तं भवति। ९यत्तूक्तं पूर्वत्र परबलस्वबलयोः सामर्थ्यासामर्थ्यहेतुः कश्चिन्नोक्त इति—तदप्यसमीक्षितवचनम्। उपक्रमे हि प्रथममेव स्वबलाच्चतुरक्षौहिणीन्यूनापि १०'महती चमूम्' इति प्रतिचमूर्वर्णिता। अनन्तरं ११'धीमता' इत्यन्तेन प्रतिसेनापतिर्वर्णितः।तदनन्तरं च१२'अत्र शूरा महेष्वासाः'इत्यारभ्य१३'सर्व एव महारथाः' इत्यन्तेन दृष्टान्तीकृतभीमार्जुनाभ्यां १४महासत्त्वविशालितमहत्त्वाः पुरुषा निरतिशयपौरुषतया वर्णिताः; स्वपक्षे तु न चमूर्वर्णिता; नापि सेनापतिः। स्वबलप्रधानपरिसंख्याने च सप्त पुरुषा उपात्ताः।

प्र-पा॥१.भारते उद्योगपर्वणि ५५-१.न भेतव्यो महाराज॥ धृतराष्ट्रं प्रति दुर्योधनस्य वाक्यमिदम्। न भेतव्यं महाराज न शोच्या भवता वयम्। समर्थाः स्म पराञ्जेतुं बलिनः समरे विभो॥ इति॥ २ भा.उ.५१-६. अपर्याप्तमिति। भीष्मादीन्प्रति दुर्योधनवाक्यमिदम्॥ ३. रक्षितशब्दयोर्वि. ङ.च.पा. ४.वाक्यभेदे त्वेवं.पा.

५. योजना—पर्याप्तं समा. क ङ पा. ६ भारते. ७. अर्जुनस्यार्जुनस्यैव वा तथा. घ. ङ. पा. ८. शत्रुबल.पा. ९. यदुक्तं. पा. १०-११. गी. १-३. १२. गी. १-४. १३. गी. १-३. १४. महेष्वासेति. पा.

ता॥ व्यतिरिक्तास्तत्कीर्तिगणत्वेन १'अन्ये च बहवः शूराः' इत्युक्ता । २'मदर्थे त्यक्तजीविता' इति चोक्तम्, न तु मदर्थे जिगीषव इति । साभिमानवचनमतेनापि प्रतिपादित इति चेत् सत्यम् । तथापि वचनव्यक्तिप्रकार एवैवं । अभिमानद्योतनायापि हि त्यक्तजीवितत्ववचने प्रतिभटानां दर्पापहार बुद्ध्यैव भवति । अनन्तरं च ३'तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः' इति दुर्योधनस्य जनयितव्य हर्षत्वेन पूर्वं विषाद ४स्वरसतया प्रतीयते । एतदभिप्रायेणोक्तम् **अन्तर्विषण्णोऽभवत्** इति । परस्माच्च ५'स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्' इति धार्तराष्ट्र ६हृदयसंक्षोभ एवोच्यते । अत उपक्रमे प्रतिचमूसेनापतिमप्रभटवर्णनात्, उपसंहारेऽपि शङ्खशब्दमात्रेण हृदयसंक्षोभवचनात्, मध्ये जनयितव्यहर्षत्वेन ७विषादोत्पत्तितदपनयनसूचनात्, एतच्छ्लोकस्वारस्याच्च, उक्तार्थ एव तात्पर्यम् । अतस्तच्छब्दस्य तस्मादिति हेत्वर्थत्वमुपपन्नम् । अत एव विप्रकृष्टनिर्देशदोषश्च परिहृतः । न च परत्वमिदानीं दुर्योधनस्य परोक्षम्, ८'दृष्ट्वा तु पाण्डवानीकम्' ९'पश्यैताम्' १०'एतेषाम्' इत्यादिप्रत्यक्षनिर्देशात् । यत्तु भीष्मद्रोणादिरक्षितस्य स्वबलस्य दौर्बल्यप्रतीतिर्न युक्तेति—तदप्यसत्, सोपाधिकस्यापि भीष्मद्रोणादिरक्षणस्य पातोपाधिना दुर्योधनेन शङ्कितत्वोपपत्तेः । यत्तु 'न भेतव्यम्' इत्यादौ बहुशः स्वबलसामर्थ्यमुपन्यस्तम्, इदानीं च तद्विपरीतप्रतीतौ हेतुर्नास्तीति तदपि न । यथार्जुनो जिघांसया शरचापोद्यमनपर्यन्तं प्रवृत्तोऽपि हन्तव्यबन्धुसमुदायनिधिमदर्शनेनोत्पन्नैः स्नेहकारुण्यधर्माधर्मभयैराकुलीकृतः पुनर्भगवता पर्यवस्थाप्यते, तथात्रापि दृढघटितव्यूहबहुमहाभटनिबिडप्रतिभटबलसाक्षात्कारादुत्पन्नभयविषादो दुर्योधनो भीष्मेण पर्यवस्थाप्यत इति किमनुपपन्नम् ? प्रत्यक्षितं च दुर्योधनेन गोग्रहणस्वग्रहणादिवृत्तान्तेषु मत्स्य स्वबलभटेभ्यः परेषां सामर्थ्यम् । न चेदानीं तन्न स्मरति, वदति हि स्वयमेव ११'अजरादीनि नामानि अर्जुनबलत्वेन' इति । यत्तु द्वितीयदिवसारम्भोक्तवचनव्यक्तिवदत्रापि वचनव्यक्तिः कार्येति—तदपि मन्दम् । न ह्यवयवसादृश्यात् सर्वथासादृश्येन भवितव्यमिति नियमः । प्रथमद्वितीयदिवसयोरभिप्रायभेदोऽनुपपन्न इति चेत्, न युद्धसिद्धेश्चञ्चलत्वात्तदनुसंधानेन नियमवादभिप्रायवत्त्वे । किं चाचार्यभीष्माभ्यां सह व्यूहान्तरमागत्य यथाभागमवस्थापनेनासरक्षणादिहितनिरूपणे प्रवृत्तत्वादेवमभिप्राय उपपन्नः । तदेतद्दर्शितम् **आचार्याय निवेदयन्नन्तर्विषण्णोऽभवत्** इति । द्वितीयदिवसे तु स्वसहायभूतेभ्यो मत्स्य पार्थिवेभ्यः स्वधैर्यप्रकाशने बलसान्त्वनादौ च प्रवृत्तत्वात् तथा व्यवहार इति न कश्चिद्दोषः । तदेतदविरूप्यमभिप्रेत्य 'दृष्ट्वा तु' इति तुशब्दः प्रयुक्तः । इदं च प्रारम्भे दैवोपहतस्य दुर्योधनस्यानर्हितागतविषादमूलं स्वबलस्यापर्याप्तत्ववचनमागामिनमपायं सूचयति । अतः सज्जनपठितपाठस्वरससिद्धार्थस्य निर्दोषत्वात्, पाठभेदादिपरा परिक्षीणाः, पाठभेदव्यवहितान्वयवाक्यभेदाप्रसिद्धार्थस्वरसादीनामेव प्रत्यूहकत्वात् । वाक्यभेदयोजनायां तु प्रतिज्ञाद्वये हेतुद्वयस्य यथाक्रमं तावदन्वयो न घटते । यो हि प्रबलो दुर्बलो वा यद्बलं रक्षति, स तस्य पर्याप्तापर्याप्तौ वा हेतुः स्यात् न तु तत्प्रतिबलस्य । पश्चत्तस्थानिर्देश इति चेत्, तथाप्यस्वारस्यम् । प्रातिलोम्येन हेत्वोरन्वय इति चेत्, तर्हि व्यवहितान्वयोऽप्यायातः । हेतुद्वयं समुच्चित्य प्रत्येकं प्रतिज्ञायां योज्यत इति चेत्, तथापि व्यवहितान्वयास्वारस्ययोर्न परिहारः, समुच्चायकशब्दाभावश्चाधिको दोषः । एवं दूषणान्तराण्यपि भाव्यानि । अतो यथाभाष्यमेवार्थ इति ॥

**प्र पा॥** १ २ गा १९   ३ गी १ १२   ८ गी १ २   ९ गी १ ३
४ स्वरमत पा   ५ गी १ १९   १० गी १ १०   ११ भारत
६ हृदयमभद पा   ७ विषादापत्ति पा

ज्ञा॥ने च वेदैकदेशार्थमपि ज्ञातुमशक्ता, तत्कथं सर्ववेदाद्युक्तानुक्तार्थज्ञतोऽस्य प्रणयनम्? मैवम्, ब्रह्मादीना

तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।

रा ॥ तस्य विषादमालक्ष्य भीष्मस्तस्य हर्षं जनयितुं सिंहनादं शङ्खध्मानं च कृत्वा, शङ्खभेरीनिनादैश्च विजयाभिशंसिनं घोषं चाकारयत् ॥

ततस्तं घोषमाकर्ण्य सर्वेश्वरेश्वरः पार्थसारथी रथीन्द्र पाण्डुतनयश्चैलोक्यविजयोपकरणभूते महति स्यन्दने स्थितौ त्रैलोक्यं कम्पयन्तौ श्रीमत्पाञ्चजन्यदेवदत्तौ दिव्यौ शङ्खौ प्रदध्मतुः ॥

ता ॥ 'तस्य संजनयन्' इत्यादेः 'तुमुलोऽभवत्' इत्यन्तस्यार्थमाह—तस्येति । जनयन्निति शतुः १'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थत्वसूचनाय जनयितुम् इत्युक्तम्। 'सिंहनादं विनद्य' इत्येतत्, 'ओदनपाकं पचति' इतिवदिति सूचयितुं कृत्वा इति पदम्। २'कृभ्वस्तयः क्रियासामान्यवचना' इत्येतद्व्यञ्जनायोदाहरणतया शङ्खध्मानं च कृत्वा इत्युक्तम् । ३'ततः शङ्खाः' इत्यत्र ततःशब्देन विजिगीषासूचनाय भीष्मेण सेनापतिना कारितत्वं ज्ञापयितुमित्यभिप्रायेणोक्तम् अकारयत् इति । शङ्खभेरी इति पणवाद्युपलक्षणम् । ततः श्लोकेऽपि कतिपयवाद्यविशेषनिर्देश उपलक्षणार्थ इति सूचितम् । सिंहनादशङ्खध्मानाभ्यां शङ्खभेर्यादिनादसमुच्चयार्थो द्वितीयश्चकारः । कृत्वेत्यनेन अकारयदित्यस्य समुच्चयार्थस्तृतीयः ॥

'ततः श्वेतैः' इत्यादिकं 'धनञ्जयः' इत्यन्तं व्याचष्टे—ततस्तमिति । तत इति व्याख्येयपदम्; तं घोषमाकर्ण्य इति तद्विवक्षितकथनम् । सर्वेश्वरेश्वरः पार्थसारथिरिति—सर्वोत्कृष्टेभ्य उत्कृष्टः परमपुरुषो निकृष्टमानुषमानादपि निकृष्टतामाश्रितवात्सल्येन नीत इति भावः । पाण्डवविजयसूचनाय सञ्जयेनोपात्तो माधवशब्दोऽत्र श्रियःपतित्ववाची सर्वेश्वरेश्वरत्वपर एव । ४'स्यन्दने स्थितौ' इत्यविशेषेण स्थितिव्यवच्छेदाय सारथित्वरथित्वविभागः । ५'श्वेतैः' इत्यादिना प्रतिपादितमहत्त्वव्यक्त्यर्थमुक्तं त्रैलोक्येति । नात्र परिमाणादिमहत्त्वमात्रं विवक्षितमिति भावः । त्रैलोक्यं कम्पयन्ताविति—तयोः स्यन्दने स्थितिमात्रमपि त्रैलोक्यकम्पनहेतुरिति भावः । यद्वा ६'दिव्यौ शङ्खौ प्रदध्मतुः'

प्र-पा ॥ १ अष्टाध्यायी. ३.२. १२६. लक्षणेति॥ क्रियायाः परिचायके हेतौ चार्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्तः । शयाना भुञ्जते यवनाः । अर्जयन्वसति । हरिं पश्यन्मुच्यते । हेतुः फलं कारणं च ॥
२. तदर्थं कृभ्वस्तय०. पा.
३. गी. १-१३. ४-५-६. गी. १-१४.

ज्ञा ॥ मप्यत्राधिकारित्वात् । यथोक्तं 'वेदोत्तमं तच्च विधातृशंकरप्रधानकैस्तन्मुखतःसुरैःश्रुतम्' इति। कथमेतदुभयमित्यत आह सर्वेति॥ रूपशब्दोऽभिधेयार्थः, 'स्वं रूपं शब्दस्य' इत्यत्र रूपशब्देन प्रसक्तस्य बाह्यार्थस्य व्यावृत्तये स्वमित्युक्तत्वात्।स च व्याघातपरिहारार्थः।सामान्येन द्व्यर्थं भारतम्, तत्रैकोऽर्थः सर्वप्राणिनामवगाह्यः; अपरः सर्वप्राणिनां नावगाह्यः; किंतु केषांचिदेवेति न कश्चिद्दोष इति । अनवगाह्यरूपताया हेतुमाह परोक्षेति॥ परोक्षोऽत्यन्तगूढः । ननु धर्माद्यनेकविषयत्वेऽस्य कथमेकवाक्यतेत्यत आह केवलेति ॥ केवलमेव भगवत्स्वरूपं परं मुख्यप्रतिपाद्यं यस्याः सा तथोक्ता । धर्मादिकं तु तादर्थ्येना-

पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक् ॥ १८
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलोऽप्यनुनादयन् ॥ १९

रा॥ ततो युधिष्ठिरो वृकोदरादयश्च स्वकीयान् शङ्खान् पृथक् पृथक् प्रदध्मुः ॥ स घोषो दुर्योधनप्रमुखानां सर्वेषामेव भवत्पुत्राणां हृदयानि विभेद । 'अद्यैवनष्टं कुरूणां बलम्' इति धार्तराष्ट्रा मेनिरे । एवं तद्विजयाभिकाङ्क्षिणे धृतराष्ट्राय सञ्जयोऽकथयत् ॥

ता॥इत्याद्युक्तप्रकारध्मानमूलशङ्खघोषातिशयेन, १'नभश्च पृथिवीं चैव' इति वक्ष्यमाणेन च, फलितमिदम्। दिव्यशोक्तिदर्शितशङ्खातिशयवैशद्याय पाञ्चजन्यदेवदत्तमात्रोक्तिः । एवं भीमनकुलादिशङ्खचतुष्टयविशेषे नामनिर्देशोऽपि । पृथक् पृथक् प्रदध्मुरिति—यथैकैकस्याकृष्टनिनादेन धार्तराष्ट्रहृदयभेदाय स्यात्, तथा प्रदध्मुरिति भावः यद्वा यथास्व प्रदेशध्यानत्वाय क्रमात् प्रदध्मुरिति । 'स घोषः' इति श्लोके नभश्च पृथिवीं चानुनादयन्नपि धार्तराष्ट्राणामेव हृदयानि विभेदेत्यन्वयः, अन्येषां तु हर्षहेतुरिति भावः । सर्वेषामेव भवत्पुत्राणाम् इत्यनेन तेषु दृढचित्तः कश्चिदपि नास्तीति द्योतनाय धार्तराष्ट्रशब्दतद्धतरहु वचनयोरर्थ उक्तः । 'व्यदारयत्' इत्यस्य वक्ष्यमाणाभिप्रायद्योतकं प्रतिपदं विभेद इति । घोषस्य शस्त्रादिवत् हृदयविदारणत्वं कथमित्यत्राह—अद्यैवेति स्वबलस्य विजयित्वमध्यवस्यता तन्नाशबुद्धिरेव हि हृदयभेद इति भावः । धार्तराष्ट्रविजयबुभुत्सया पृच्छते धृतराष्ट्राय प्रागुक्तप्रकारेण तदपजयसूचनमेव सञ्जयोऽकथयदित्याह—एवमिति ॥

प्र पा ॥ १ प १ १९ | २ हर्षहेतुरभूदिति क ग न पा.

आ॥तच्चोक्तम् 'लोकेशा ब्रह्मरुद्राद्या संसारे क्लेशिनं जनम् । वेदार्थक्षमधीकारवर्जितं च स्त्रियादिकम् ॥ १ ॥ अवेक्ष्य प्रार्थयामासुर्देवेशं पुरुषोत्तमम् । ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च॥२॥अन्यावतारूपैश्च वेदानुक्तार्थभूषितम्। केवलेनात्मबोधेन दृष्टं वेदार्थसंयुतम् ॥ ३ ॥ वेदादपि परं चक्रे पञ्चमं वेदमुत्तमम् । भारतं पञ्चरात्रं च मूल

ज॥मुख्यप्रतिपाद्यमिति भावः । भगवत्प्रतिपादनं च न संकीर्णतया, अपि तु निष्कृष्टतयेति ज्ञापनाय स्वरूपेत्युक्तम् ॥

कुत एतत्प्रतिपत्तव्यमित्यत आह तच्चोक्तमिति॥यदेतत्सर्वधर्मेत्यादिनोक्तम्,तल्लोकेशा इत्याद्यागमचतुष्टयेनोक्तं च, न केवलमस्माभिरुच्यते । 'उपगस्य वन्यमनुष्य बहुलम्' इत्यतोऽधीकारेतिदीर्घः । स्त्रियादिकमिति छान्दस इयङ् ॥ १ ॥ व्यासो भूत्वा च व्यासो भूत्वैव विलम्बमकृत्वा अभूत्वा मूलरूपेण चेति वा । तेन व्यासरूपेण ॥ २ ॥ अन्यावतारूपैश्च ॥ ३ ॥ परमतिशयेनोत्तमम् । कोसौ

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ २०
हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अर्जुन उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२

रा ॥ अथ युयुत्सूनवस्थितान्धार्तराष्ट्रान्दृष्ट्वा लङ्कादहनवानरध्वजः पाण्डुतनयो ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधिं स्वसङ्कल्पकृतजगदुदयविभवलयलीलं हृषीकेशं परावर-

---

ता॥'अथ व्यवस्थितान्' इत्यादेः 'कुरून्' इत्यन्तस्यार्थमाह—अथेत्यादिना इति चावोचदित्यन्तेन । तत्र वाक्यत्रये प्रथमेन वाक्येन 'प्रियचिकीर्षवः' इत्यन्तस्यार्थ उच्यते । १'व्यवस्थितान्' इत्यत्र विशब्दसूचितविशेषव्यक्तये युयुत्सून् इत्युक्तम्; २'योद्धुकामानवस्थितान्' इति ह्यनन्तरमप्युच्यते । 'कपिध्वजः' इत्यत्र कपित्वमात्रप्रतिपन्नलाघवं निवारयितुं सौगन्धिकयात्रायां हनुमद्दत्तं वरम्, ३स्वरूपसंदर्शनमात्रेण रक्षसामिव परेषां संक्षोभं च, स्मारयितुं लङ्कादहनवानरध्वजः इत्युक्तम्। अप्रच्युतस्वभावत्वप्रतिपादकाच्युतपदाभिप्रेतव्यञ्जनाय ज्ञानेत्यादिकम्। हृषीकेशशब्दव्याख्या परावरेत्यादि। यद्वा सृष्ट्यादिकं वीर्यादिकं तदुपलक्षितं ज्ञानादिकमपि हृषीकेशशब्दार्थ एव । यथोक्तमहिर्बुध्न्यसंहितायाम्—४'क्रीडया हृष्यति व्यक्तमीशः सन् सृष्टिरूपया । हृषीकेशत्व५मीशत्व देवत्वं चास्य तत्स्मृतम् ॥ अधिकारितया जुष्टो हृषीको वीर्यरूपया । ईशः स्वातन्त्र्ययोगेन नित्यं सृष्ट्यादिकर्मणि ॥ ऐश्वर्यवीर्यरूपत्वं हृषीकेशत्वमुच्यते ' इति । आश्रितान् न च्यावयति, ६अतश्च च्युतोऽस्य नास्तीत्यच्युतशब्दस्य का-

---

प्र. पा॥ १. गी. १-२९. २. गी १-२२ ३. ध्वजसंदर्शन.पा. ४.अहिर्बुध्न्यसंहितायाम्. अ.५३-४४-४५-५६.श्लो. ५. ईशस्य देवत्वं च. क. पा. ६. अतश्चाच्यु. पा.

---

शा॥बुद्ध्याऽनुष्ठीयमानस्सत्त्वशुद्धये भवति फलाभिसन्धिवर्जितः । शुद्धसत्त्वस्य च ज्ञान-

---

आ॥रामायणं तथा॥४॥ पुराणं भागवतं चेति संभिन्नः शास्त्रपुंगवः॥'इतिनारायणाष्टाक्षरकल्पे॥'ब्रह्मापि तन्न जानाति ईषत्सर्वोऽपि जानाति।बह्वर्थमृषयस्तत्तु भारतं प्रवदन्ति हि॥' इत्युपनारदीये ॥

जा॥पञ्चमो वेद इत्यत आह भारतमिति ॥ पञ्चमवेदाख्यः शास्त्रपुंगव इति संभिन्नः प्रभिन्नः । अथ चेतिशास्त्रपुंगवः स च संभिन्नः एकार्थतया संगत इत्यनेकेष्वपि ग्रन्थेष्वेकवचनमिति योज्यम् । अत्र पञ्चरात्रं नारायणावतारेण कृतम्, मूलरामायणं हयग्रीवावतारेण कृतम्, आदिभागवतं मूलरूपेण ॥४॥ ब्रह्मापि बृहस्पतिरपि कृत्स्नमिति शेषः॥ सर्वोऽपि जनो जानाति जानाति । बह्वर्थमितिप्रवदन्ति । भारतं चापीति पूर्वोक्तेन समुच्चयः ॥ ५ ॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३

रा॥ निखिलजनान्तर्बाह्यकरणानां सर्वप्रकारनियमनेऽवस्थितमाश्रितवात्सल्यविवशतया स्वसारथ्येऽवस्थितं *युयुत्सुर्यथावदवेक्षितुं तदीक्षणक्षमे स्थाने रथं स्थापयेत्यचोदयत् ॥

ता॥ विनिरुक्तिं दर्शयति—आश्रितवात्सल्येत्यादिना । स्वसारथ्येऽवस्थितमिति—हृषीकेशतया सर्वेषां करणानां सर्वप्रकारनियमने १स्थितस्य रथयुग्यमात्रनियमनं कियदिति भावः । 'निरीक्षे' इत्यत्रोपसर्गार्थं यथावत् इति दर्शितं । यावच्छब्दोऽत्र साकल्यवाची, निरीक्षणकालावधिवाची वा, २'यावत्पुरानिपातयोर्लट्' इति निरीक्षणस्य भविष्यत्त्वद्योतको वा । यैः सह मया योद्धव्यं तान्निरीक्षे इत्यत्र, मया सह यैर्योद्धव्यं ताननेन इति नोक्तम्, अतः ३'योत्स्यमानान्' इति श्लोकस्योत्थानम् । ४'धार्तराष्ट्रस्य दुर्बुद्धेः' इति दुर्योधनादिदोषप्रख्यापनतात्पर्याच्च ५न पौनरुक्त्यम् । यद्वा ६'सेनयोरुभयोर्मध्ये' इति पूर्वोक्तत्वात्, सेनयोरुभयोरपि स्थितानपश्यदिति वक्ष्यमाणत्वाच्च, स्वसेनास्थितस्वसहायविषयः पूर्वश्लोकः, तत्र 'कैर्मया सह स्थित्वा परैर्योद्धव्यमित्यर्थः । ८उत्तरस्तु श्लोकः प्रतिसैन्यस्थितधार्तराष्ट्रसहायविषय इति व्यक्त एव। प्रागेव तेषां विदितत्वेऽपि इदानीं तत्संरम्भादिविशेषदर्शनेन तत्तदुचितसाम्परायिकव्यापारगौरवार्थं यथावद्दर्शनमिहार्जुनेनाकाङ्क्षितम् । 'सेनयोरुभयोर्मध्ये' इत्यस्याभिप्रेतकथनं तदीक्षणक्षमे स्थाने इति । अचोदयत् इत्यनेन 'स्थापय' इत्यत्र प्रत्ययस्य नियोगार्थत्वं दर्शितम् । सर्वप्रशासिता नियोज्योऽभवदित्याश्चर्यमिति भावः ॥

प्र पा॥ *युयुत्सून् पा १ अवस्थितस्य पा २ अष्टाध्याय्याम् ३ अ ३ पा ४ सू यावपुरेति ॥ यावत्पुरेतिनिपातयोर्योगे भविष्यत्यर्थे धातोर्लट् स्यात्। यथा यावद्भुङ्क्ते, पुरा भुङ्क्ते। निपातौ तावती निश्चयं द्योतयतः । निपातशक्तिरियं क्रमशः। इह माभूदित्येतदर्थम् । यावद्दास्यते, तावद्भोक्ष्यते । करणाभूतया पुरा दास्यति ॥ ३ ४ गी १ २३ ५ अपौनरुक्त्यम् क ग घ ङ च पा ६ गी १ २१ ७ यावस्थित पा ८ उत्तरश्लोकस्तु पा

दी॥ निष्ठायोग्यताप्रसिद्धिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निदिध्यासहेतुत्वमपि प्रतिपद्यते। तथा च

आ॥ 'ब्रह्माद्यैः प्रार्थितो विष्णुर्भारतं स चकार ह । यस्मिन् दशार्थाः सर्वत्र न ज्ञेयाः सर्वजन्तुभिः ॥' इति नारदीये । 'भारतं चापि कृतवान् पञ्चमं वेदमुत्तमम् । दशावरार्थं सर्वत्र केवलं विष्णुबोधकम् ॥ परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं च यत्' इति स्कान्दे । 'यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान्द्विज । न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं *प्रचालिष्यति ॥ मन्वादि केचिद्ब्रुवते ह्यास्तीकादि तथापरे । तथोपरिचराद्यन्ये भारतं परिचक्षते ॥

ज ॥ दश अवरा येषु ते तथा, ते अर्था येष्विति विग्रहः, याजकादेराकृतिगणत्वाद्विष्णुबोधकमिति समासः । करणार्थघञन्तेन वा समासः, पश्चादस्यार्थे कः । उत्तममित्युक्तस्यैव विवरणं वेदादप्युत्तममिति। एतेषु वाक्येषु यथासंभवं पूजार्थोऽर्थोऽवगन्तव्यः ।'यदि विद्यात्'इत्यादिभारतवाक्यपर्यालोचनया चोक्तं तदवसीयते इति सम्बन्धः । चत्वारश्च ते वेदाश्चेति विशेषणसमासः एवायं न द्विगुः । अङ्गानि च उपनिषदश्चाङ्गोपनिषदमिति समाहारद्वन्द्वः । तेन 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति समासान्तोऽकारः, ततो बहुव्रीहिः । प्रचलिष्यति प्रचालयिष्यतीति ॥

पा॥ * 'प्रतरिष्यति' इति पा

सञ्जय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४
भीष्मद्रोणप्रमुखतस्सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५

रा ॥ स च तेन चोदितस्तत्क्षणादेव भीष्मद्रोणादीनां सर्वेषामेव महीक्षितां पश्यतां यथाचोदितमकरोत् । ईदृशी भवदीयानां विजयस्थितिरिति चावोचत् ॥

ता ॥ 'एवमुक्तः' इत्यादेः 'महीक्षिताम्' इत्यन्तस्यार्थमाह—स चेति । अर्जुनवचनरथस्थापनयोर्व्यवधायकाभावफलितमुक्तं तत्क्षणादेव इति । 'भीष्मद्रोणप्रमुखतः' इत्यत्र प्रमुखशब्दः आदिशब्दसमानार्थः; १तद्गतस्तसिप्रत्ययश्च सार्वविभक्तिकत्वात् षष्ठीबहुवचनार्थ इत्यभिप्रायेणोक्तं भीष्मद्रोणादीनाम् इति। तथा चकारोऽवधारणार्थ इति दर्शयितुं सर्वेषामेवेत्युक्तम्। अनादरे षष्ठीति व्यञ्जनाय पश्यताम् इति पदाध्याहारः । यद्वा प्रमुखतः अग्रत इत्यर्थः । तदेव 'महीक्षिताम्' इत्यत्रापि बुद्ध्या निष्कृष्य २योजनीयम्। तदा चकारः समुच्चयार्थः । भाष्ये त्वेवकारोऽपि तदर्थ एव; पश्यतामिति फलितार्थोक्तिः । 'उवाच पार्थ' इत्यस्य ३तात्पर्यमाह—ईदृशीति । 'एतान्समवेतान्' इति जेतव्यसमुदायप्रदर्शनेन ४विजयस्थितिरभिप्रेतेति भावः। यद्वा धार्तराष्ट्रकर्मकविजयस्थितिरित्यर्थः। धृतराष्ट्रं प्रति सञ्जयवाक्याभिप्रायेण भवदीयानाम् इत्युक्तम्।अथवा ५धार्तराष्ट्रकर्तृकविजयस्थितिरित्थमित्युपालम्भगर्भमवोचदित्यर्थः। अयमेवार्थ उचितः, अर्जुनं प्रति कृष्णेन भवतामित्येतावन्मात्रस्य वक्तव्यत्वात्; धृतराष्ट्रं प्रति तु'भवत्पुत्राणाम्' इति पूर्वोक्तवत् 'भवदीयान्विलोक्य' इति वक्ष्यमाणवच्चात्रापि भवदीयनिर्देशोपपत्तेः । 'किमकुर्वत' इति गूढाभिसन्धेः पृच्छतो धृतराष्ट्रस्य गूढाभिसन्धिः सञ्जयो धार्तराष्ट्रहृदयविदारणादिकमेवमकथयत्६ ॥

प्र-पा ॥ १. तद्गतसन्प्रत्ययश्च, क. ख. ग. घ.ङ. च.-पा. ४. जयस्थिति.. क. ग. ङ. च.-पा
२. योज्यम्, पा. ३. तात्पर्यार्थमाह पा. | ५. विजयस्थितिरीदृशीत्युपा.पा. ६.मेवाकथयत्.पा.

शं॥वक्ष्यति—'ब्रह्मण्याधाय कर्माणि' 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' इति ॥

आ॥भारतं सर्ववेदाश्च तुलामारोपिताः पुरा। देवैर्ब्रह्मादिभिः सर्वैः ऋषिभिश्च समन्वितैः॥ व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् । महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ॥ निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते । यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥ *'विराटोद्योगसारवान्' इत्यादितद्वाक्यपर्यालोचनया ऋषिसंप्रदायात्,"को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्"इत्यादिपुराणग्रन्थान्तरगतवाक्यान्यथानुपपत्त्या नारदाध्ययना-*

ज ॥ भारवत्त्वादित्यनेन मत्वर्थे तप्रत्यय इत्युक्तं भवति ॥ भारतप्रामाण्यमङ्गीकृत्यैवेतरदनङ्गीकुर्वाणं प्रतीदमुक्तम् । युक्त्यनुसंधानेन विनाभिप्रेतार्थोऽत्र न प्रतीयते; अतः पर्यालोचनयेत्युक्तम् । अनुसंधानप्रकारं च स्वेनैव दर्शयिष्यति । ऋषीणां वैशम्पायनादीनां संप्रदायात् शिष्येभ्यः प्रदानाच्चैतदवगम्यते। न हि प्रामाण्यादिरहितमृष्यादयः शिष्येभ्य श्रेयसे व्याचख्युरिति युज्यते।'को ह्यन्यः' इत्यादिपुराणलक्षणग्रन्थान्तरगतवाक्यार्थान्यथानुपपत्त्या च तदवगम्यते। ग्रन्थान्तरेति विशेषणस्य प्रयोजनं स्वयमेव वक्ष्यति । वाक्यस्योक्तार्थे सामर्थ्याभावात् अन्यथानुपपत्त्येत्युक्तम्; तच्च प्रदर्शयिष्यते ।

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ २६
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान ॥ २७
कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।

अर्जुन उवाच—

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३०
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः स्यालाः सम्बन्धिनस्तथा ॥ ३४

रा ॥ स तु पार्थो महामना परमकारुणिको

ता॥अथाध्यायशेषस्य सङ्कलितार्थमाह—स त्विति । तुशब्देन पूर्वोक्तप्रकाराद्वैधनात् वक्ष्यमाण प्रकारविशिष्टस्य पार्थस्य विशेष 'स कौन्तेय इत्यनेनाभिप्रेत द्योतयति । बन्धुव्यपदेशमानयोग्यानां वधानिच्छया विजयादिकं त्रैलोक्यराज्यानाधकमपि तृणाय मन्यत इति महामना इत्युक्तम् । १'न काङ्क्षे विजयम्' इत्यादिकं हि वदति। शत्रूणामप्यमौ दु स न सहत इति,परमकारुणिकत्वोक्ति , २'कृपया परयाविष्ट ' इति ३ह्युक्तम् । ४' पितॄनथ पितामहान् ', ५' आचार्या पितर पुत्रा ', इत्याद्युक्तस्नेह

प्र पा॥१ गी १ ३२ २ गी १ २८ । ५ गी १ ३४ 'आचार्या पितर 'इत्या इति
३ इत्यप्युक्तम् पा ४ गी १ २६ क ख ग घ ङ च पा

आ॥दिलिङ्गैश्चावसीयते ॥

ज॥नारदस्याध्ययनव्याख्यानादिलिङ्गैश्चोक्तार्थोऽवसीयते । ऋषिसम्प्रदायादित्यनेनैव गतमेतदिति चेत् न, ऋषीणा गृहस्थत्वेन परार्थोऽन्यविषयोऽपि व्यवहार कथञ्चित्संभाव्येताऽपि । नारदस्य तु परमहंसस्य

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्सबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४०

। ॥ दीर्घबन्धुः परमधार्मिकस्सभ्रातृको भवद्भिरतिघोरैर्मारणैर्जतुगृहदाहादिभिरसकृ-

ता॥विषयप्राचुर्यं दीर्घबन्धुशब्देनोक्तम्।यद्वा १बन्धुना महापकारे कृतेऽपि स्वयं न शिथिलबन्धो भवतीति भावः । २'सर्वान्बन्धून्', ३'स्वजनं हि', इत्यादिकमिह भाव्यम् । आततायिपक्षस्थानामप्याचार्यादीना-महन्तव्यत्वानुसन्धानात् , कुलक्षयादिजनिताधर्मपारम्पर्यदर्शनाच्च, ४परमधार्मिक इत्युक्तिः;आततायि-वधानुशासनमाचार्यादिव्यतिरिक्तविषयमित्यर्जुनस्य भावः । सभ्रातृक इति – नायमेक एवैवंविधः, किन्तु सर्वेऽपि पाण्डवा इति भावः । एतेन 'अस्मान्', 'नः', 'वयम्', 'अस्माभिः', इत्यादिभिरुक्तं संगृहीतम् । यद्वा न केवलं स्वापकारमात्रानादरादेष बन्धुवधादिकमुपेक्षते ; अपि त्वासन्नतरा-चार्यादिस्थानीयबहुमतिस्नेहदयादिविषयधर्मराजद्रोहाद्यपकारेऽपीति भावः । आचार्यादिवधदोषो भ्रातृणामपि मा भूदित्यर्जुनाभिप्रायः । हन्तव्यत्वसूचनाय 'घ्नतोऽपि' इत्युक्तम् । तद्विवृणोति—भव-द्भिरित्यादिना । जतुगृहदाहादिभिरित्यादिना आततायिशब्दोऽपि व्याख्यातः ; ५'अग्निदो गरद-

प्र-पा ॥ १. बन्धूना. पा. २. गी. १-२७. ३. गी. १-३७. | ४. धार्मिकत्वोक्ति क. ग. घ. रू. च-पा. ५.

आ ॥ कथमन्यथा भारतनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः ॥ प्रसिद्धश्च सोऽर्थः

ज॥स्वार्थोऽपि व्यापारोऽन्यविषयो न भवतीतिज्ञापनार्थत्वात्;अत एव संप्रदायादित्यध्ययनेति चोक्तम्। तद्वाक्यपर्यालोचनयेत्युक्तम् , कीदृशी सा पर्यालोचनेत्यतो लेशेन दर्शयति—कथमिति ॥ महत्त्वा-दित्तिवाक्ये भारतशब्दं निरुच्य तज्ज्ञानात्सर्वपापक्षयोऽभिधीयते ; न तु भारतस्योत्तमत्वं साक्षात् । तथाऽपि पर्यालोचनया गम्यत एव । यथा हि नारायणादिभगवन्नामनिरुक्तिज्ञानाद्भवत्पापक्षयोऽ-भिधेयस्य सर्वोत्तमत्व एव, तथायमपि । अन्यथा भारतस्य सर्वशास्त्रोत्तमत्वाभावे कथं तच्छब्दनिरुक्ति-ज्ञानमात्रेण सर्वपापक्षयः स्यात् । शब्दान्तरनिरुक्तिज्ञानेन तदभावादिति। स्यादेतदनुमानम्, यदि हेतू-कृतोऽर्थः प्रमितः स्यात्; न चैवम् , अयथार्थप्रशंसाया अपि दर्शनेन वचनस्यान्यथासिद्धेरित्यत आह—प्रसिद्धश्चेति॥ धियान्तावत्प्रामाण्यं स्वतः, बाधकादप्रामाण्यम् ;न चात्र तदस्ति । अर्थवादानाञ्चाबाधिते

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४१

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६

रा ॥ दृश्चितोऽपि परमपुरुषसहायेनात्मना हनिष्यमाणान् भवदीयान् विलोक्य बन्धुस्नेहेन *परया कृपया †धर्माधर्मभयेन चातिमात्रसन्नसर्वगात्रः

ना॥श्चैव शस्त्रपाणिर्धनापह ।क्षेत्रदारहरश्चैव षडेते आततायिन ॥'१'आततायिनमायान्तं हन्यादेवाविचार यन्। नाततायिवधे दोषो हन्तुर्भवति कश्चन' इति हि स्मरन्ति। आदिशब्देनासकृच्छब्देन चाततायित्वं तत्र प्रत्येकं बहुश कृता, न चेदानीमप्युपरतमिति दर्शितम् । अनुपरतिश्च २' मनोऽपि ' इति वर्तमान३निर्देशेन सूचिता । भवद्भिरित्यनेन धृतराष्ट्रमपि ४' मुञ्चन्तमनुमन्यामि दुर्योधनममर्षणम् ' इति पुनःस्नेहवशादनुमन्तारं तत्तुल्य५व्यपदिशति। एव च दुर्योधनादीनां भवतामप्यतिलोभोपहतचेतस्त्वादिना महात्मना इत्युक्तविपरीतत्वमुक्तं भवति । शकुनिकर्णादिसहायाना धार्तराष्ट्रादीनां हनिष्यमाणानामपि हत . त्वनिश्चयेन बोधनोत्सत्यर्थमुक्तं परमपुरुषेति । परमपुरुष सहायो यस्येति ६विग्रह परमपुरुषस्य सहायो निमित्तमात्रमिति वा । वक्ष्यति हि ७' मयैवैते निहता पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति । अर्जुनश्च पूर्वं महानलमहस्रेभ्योऽपि निरायुधस्य परमपुरुषस्य संनिधिमात्रमेव विजयहेतुतया निश्चित्य तमेव वव्रे । स्नेहाद्यस्थानत्वसूचनाय भवदीयान्विलोक्येत्युक्तम् । बन्धुस्नेहेनेत्यादि – नह्यसौ दुर्योधनवत् बन्धुद्वेषनृशंसत्वप्रतिभटभयादिना विषण्ण , नापि परेषा गुणानिवर्तते, न च परमपुरुषसचिवस्य स्वस्य दौर्बल्यादिति भाव । ' सीदन्ति ' इत्यादे 'मन ' इत्यन्तस्यार्थ अतिमात्रेत्यादिना संगृहीत ।

प्र पा॥ * परमयेति पा † धर्मभयेनेति पा
१ मनुस्मृतौ ८ अ ३५१ श्लो आततायि नमिति ॥ गुरु वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आत, प्रकाशं वाप्रकाशं वा मन्युस्तं मन्युमृच्छति । इति च पूर्वोत्तरश्लोक । गुरुबालवृद्धबहुश्रुतब्राह्मणानामन्यतमं वधोद्यतमागच्छ न्तं निवा- रणादिभिरुपायैः पलायनादिभिरपि स्वनिस्तरणाशक्तौ निर्विचारं हन्यात् । प्रकाश जनसमक्षम् अप्रकाश रह सि वा आततायिवध वधोद्यतस्य मरणं हन्तु न कश्चिदपि अधर्मदण्ड प्रायश्चित्तादयो दोषो भवति । यस्मात् हन्तृगतो मन्यु क्रोधाभिमानिनी देवता हन्यमानगतं क्रोधं निवर्तयति ॥ २ गा १ ३५ ३ निर्देशसूचिता पा ४ महाभारते आदिपर्वणि १ अ १६६ श्लो दुर्योधनमचेतनमिति च पाठ । सञ्जय प्रति धृतराष्ट्रस्य वाक्यमिदम्॥५ अपदिशति ख घ ङ च पा ६ समास क ख ग घ ङ पा ७ गी ११ ३३

शं॥ इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं, परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्माभि-

आ॥ कथं चान्यस्य कर्तुं न शक्यते। ग्रन्थान्तरगतत्वाच्च नाविद्यमानस्तुतिः। नच कर्तुरेव इतरत्रापि साम्यात् ॥

ज॥स्वार्थे प्रामाण्यमस्त्येव।अतो हेतूक्तो योऽर्थो भारतशब्दनिरुक्तिज्ञानेन सर्वपापक्षयः स प्रसिद्धः प्रमित एवेति। सर्वपापक्षये तदैव मुक्तिः स्यादिति चेत्, तर्हि सर्वशब्दार्थ एव संकोच्यतां न तु सर्वो वाक्यार्थः॥

एवमन्यान्यपि भारतवाक्यानि पर्यालोचनीयानि। तथा हि—'यदि विद्यात्'इति वाक्ये यद्यपि भारतं नोक्तम्,तथाप्युत्तरत्रेतिहासशब्देन गृहीतत्वात्पुराणपदं तदुपलक्षणमिति ज्ञायते। न ह्यनुक्तस्योपपादनं युक्तम्। ततश्च भारतस्य वेदार्थज्ञानोपायतानेन सिध्यति। अचेतनत्वपर्यालोचनया बिभेतीत्यं तद्बिभेतीव स्वमर्थमन्तर्धापयतीति ज्ञेयम्। यद्यपि मन्वादीत्येतदापाततो न प्रकृत कमप्यर्थं प्रत्यापादयति। तथापि भगवत्पादैरन्यत्रोदाहृतस्य एतद्व्याख्यानरूपवाक्यस्यानुसन्धाने भारतस्य भगवत्परत्वादि गमयति॥

तुलारोपणे भारतस्य च प्रतिनिधिद्वारेणोपपादनीयम्,'यदि ह्'इत्यस्य स्तुतिपरत्वोपपत्तये तदेवान्यत्रेति व्याख्याने सर्ववेदाद्यर्थोपबृंहितत्वादिकं सिध्यति।'विराट्'इत्येतत्पूर्वोत्तरवाक्यानुसन्धानेन भारतस्य कल्पतरुतां प्रतिपादयन्भारतस्य सर्वपुरुषार्थहेतुतां गमयतीति'को ह्यन्यः'इति पुराणवाक्यस्यान्यथानुपपत्त्येत्युक्तम्, कीदृशी सान्यथानुपपत्तिरित्यत आह—कथमिति॥अन्येनेति च वर्तते।अन्यस्येति व्यत्ययेन तृतीयार्थे षष्ठी। यद्वा कर्तुमिति कृद्योगे कर्तरि;'न लोकाव्यय'इति प्रतिषेधश्च'नञा निर्दिष्टमनित्यम्'इत्यनित्यः॥

अत एव तोसुन्कसुनोर्योगे षष्ठी दृश्यते। 'सूर्यस्योदेतोः,क्रूरस्य विसृपः'इति।'को ह्यन्यः'इति वाक्ये तावद्भारतस्य नारायणादन्येन कर्तुमशक्यत्वमुच्यते। तत्कथमन्यथा केवलेश्वरज्ञानदृष्टार्थयुक्तत्वाभावेन युज्यते, तथाविधानामन्यैः कर्तुं शक्यत्वस्य दर्शनादिति। नन्वन्यैः कर्तुमशक्यत्वमिति हेतुरसिद्धः, 'को ह्यन्यः' इतिवाक्यस्याविद्यमानार्थस्तुतिपरत्वोपपत्तेरित्यत आह ग्रन्थान्तरेति॥

अविद्यमानेत्यतः परमर्थशब्दोऽध्याहार्यः। इदं वाक्यमिति शेषः। यद्वा स्तुतिर्गुणोत्कर्षः। अत्रोच्यत इति शेषः।अत्र नार्थशब्दाध्याहारः।अनेन प्रागुक्तस्य ग्रन्थान्तरेति विशेषणस्य प्रयोजनमुक्तम्। इयं च संभावनायुक्तिः।निश्चययुक्तिस्तु चशब्दसूचिता बाधकरहितत्वादिः। ननु भवेत् ,यद्यत्र भारतस्यान्येन कर्तुमशक्यत्वलक्षणा स्तुतिरुच्यते; नत्वेवं ' कृष्णद्वैपायनं व्यासं विद्धि नारायणं परम् ' इति भारतकर्तुर्व्यासस्य नारायणत्वलक्षणायाः स्तुतेरुपक्रमात् , उत्तरत्र तस्यैवार्थस्योपपादनादित्यत आह—नचेति॥ कर्तुरेवात्र स्तुतिरुच्यत इति न वाच्यं, किंतु भारतस्यापि; कथमिति चेत्, अत्र ह्यनुमानेन व्यासस्य नारायणत्वं साध्यते। 'कृष्णद्वैपायनम्' इति पूर्वार्धः प्रतिज्ञारूपः। 'को ह्यन्यः' इतिद्वितीयार्धो व्यतिरेकव्याप्तेः प्रतिपादकः॥

अनुक्तो हेतुर्व्याप्तिवचनसामर्थ्यादूह्यः,तत्र न तावद्ग्रन्थकृत्त्वं हेतुः।कुत इत्यत आह—इतरत्रापीति॥ग्रन्थकृत्त्वस्य नारायणवदितरत्रापि साम्यादनैकान्त्यप्रसङ्गात्,नापि भारतकृत्त्वम्, कुत इत्यत आह इतरत्रापीति॥ग्रन्थविशेषकर्तृत्वेन नारायणत्वसाधनस्य इतरत्र कालिदासादावपि साम्यादतिप्रसङ्गात्। तस्मान्नारायणादन्येन कर्तुमशक्यस्य कार्यस्य कर्तृत्वमत्र हेतुः। न चासावसिद्धः, भारतस्य तथात्वादित्यूह्यम्। व्याप्तिवाक्यं च तदभिप्रायं मन्तव्यम्।तथा च कथमत्र भारतस्य स्तुतिर्नावगम्यते, श्रुत्यानवगमेऽप्यर्थादवगमादिति॥

अस्त्वेवंविधं भारतम्, व्याचिख्यासितायास्तु गीतायाः किमायातमित्यत आह——

ता॥ तदुपकारम्—एषामाततायित्वेऽपि, इदानीं हन्तुमुद्यतत्वेऽपि, १युद्धान्निवृत्तेरधर्माकीर्त्यादिहेतुत्वेऽपि, युद्धस्य त्रैलोक्यराज्याद्युपायत्वेऽपि, किं बहुना २सर्वेश्वरेश्वरेण मम हिततमोपदेशिना भवतोक्तत्वेऽपीति भावः। बन्धुविनाशस्य सिद्धत्वाध्यवसायः शोकहेतुः, विषादमात्रपरो वात्र शोकशब्दः, स च शोकः

प्र पा॥ १. युद्धानुवृत्तधर्मकीर्त्यादिहेतुत्वेऽपि. | २. सर्वेश्वरेण

शं॥ धेयभूतं विशेषतोऽभिव्यञ्जयद्विशिष्टप्रयोजनसम्बन्धाभिधेयवद्गीताशास्त्रम्। यतस्तदर्थविज्ञाने समस्तपुरुषार्थसिद्धिः, अतस्तद्विवरणे यत्नः क्रियते मया॥

इति श्रीपरमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्भगवद्गीताभाष्ये प्रथमोऽध्यायः

---

आ॥ तत्र च वासुदेवार्जुनसंवादरूपां सर्वभारतार्थसंग्रहां भारतपारिजातमधुभूतां गीतामुपनिबबन्ध। तथोक्तम्—'भारतं सर्वशास्त्रेषु भारते गीतिका वरा। विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्द्वयम्॥' इति महाकौर्म्ये। 'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' इत्यादि च॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये प्रथमोऽध्यायः

---

ज॥ तत्र चेति॥ तत्रैवंविधप्रामाण्याद्युपेते भारते गीतामुपनिबबन्ध व्यासः, किमिय गीतायाः प्रामाण्यादेः सम्भावना, उत निश्चययुक्तिः, न द्वितीय. तथात्वे कलिङ्गोपदेशादेरपि तत्प्रसङ्गात्। अनुवादोऽमाविति चेत् अयमपि तथैव। अत्रे निश्चायकं वाच्यमित्यत उक्त—वासुदेवेति॥ संवाद रूपयतीति संवादरूपा। तथापि भारतैकदेशान्तरपरिहारेणास्या एव व्याख्याने को हेतुरित्यत उक्त—सर्वेति॥ सर्वभारतार्थस्य संग्रहो यस्यामिति गमकत्वात् व्यधिकरणो बहुव्रीहि., एतद्व्याख्याने सर्वमपि भारत व्याख्यातप्राय भवतीति भाव.। नैतावता भारतसमा गीता, किंतु ततोऽधिका चेत्याशयवानाह—भारतेति॥ कुत एतदित्यत आह—तथोक्तमिति॥

सर्वशास्त्रेषु वरम्। सदेवमाप्तमूलत्वादिना प्रामाण्याद्धर्मादिप्रतिपादनेन सविषयत्वान्मोक्षार्थत्वेन सप्रयोजनत्वात्साधिकारित्वाद्दुर्गमार्थत्वाच्च व्याख्येया गीतेति स्थितम्। तत्र ज्ञानमेव केवल मोक्षसाधनम्, धर्मस्तु ज्ञानात्प्रागनुष्ठितोऽन्तःकरणशुद्ध्यादिद्वारा ज्ञान जनयन्मोक्षसाधनम्, ज्ञानोत्तरस्तु मुक्तावानन्दोत्कर्षहेतुरित्येव विषयप्रयोजनयोः सम्बन्धोऽभिमत। केचित्तु ज्ञानोत्तरकाल धर्मानुष्ठानमेव नास्तीति ब्रुवते। अन्ये तु ज्ञानकर्मसमुच्चयसाध्यत्वान्मोक्षस्य तत्प्रतिपादनाय गीतारम्भो न धर्मादिप्रतिपादनार्थम्, तदर्थाना मन्वादिधर्मशास्त्राणा सनत्सुजातादियोगशास्त्राणा च प्रतिकाल विद्यमानत्वादित्याचक्षते॥ तदुभय निराकर्तुमाह—सहीति॥ गीतोक्तो धर्मो ब्रह्मण. स्वरूपज्ञाने सुपर्याप्तो ज्ञानात्प्रागनुष्ठितो ब्रह्मणः पदवेदने जाते अनुष्ठितः सुपर्याप्तः सुपर्याप्तमुक्तिहेतुरित्यनुगीतोपक्रमे भगवतैवोक्तम्। उदाहरिष्यन्ते चात्र स्पष्टार्थानि वाक्यानि। नच गीताया तथाविधमेकमपि वाक्य दृश्यते। तथाच वक्ष्यते, मन्वादिशास्त्राणा विद्यमानत्वेन धर्मादेरप्रतिपाद्यत्वे समुच्चयोऽपि न प्रतिपाद्यः, श्रुत्यादिप्रतिपाद्यत्वाभ्युपगमात्। तत्र च न स्फुट प्रतिपादनमिति चेन्न, समम्। यथोक्त वेदार्थज्ञानाच्चेति। तस्माद्यत्किंचिदेतदित्युक्तमेव विषयादिकमिति॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकाया जयतीर्थमुनिविरचिताया प्रमेयदीपिकाया प्रथमोऽध्याय.

---

सञ्जय उवाच—

एवमुक्त्वार्जुनस्संख्ये रथोपस्थ उपाविशत्।
विसृज्य सशरं चापं शोकसंविग्नमानसः॥ ४७

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम
प्रथमोऽध्यायः॥

---

रा॥ सर्वथाहं न योत्स्यामीत्युक्त्वा बन्धुविश्लेषजनितशोकसंविग्नमानसस्सशरं चापं विसृज्य रथोपस्थ उपाविशत्॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये
प्रथमोऽध्यायः॥

---

ता॥ 'एतान्न हन्तुमिच्छामि', 'यदि मामप्रतीकारम्', इत्यादेरभिप्रेतमाह—**सर्वथाहमिति**। सर्वथा १सशरचापपरित्यागे हेतुरिति व्युत्क्रमपाठेन दर्शितम्। 'संविग्नमानसः' अन्वर्थचलितयुद्धाध्यवसाय इत्यर्थः। २'ओ विजी भयचलनयोः' इति धातुः। एवं चलितयुद्धाध्यवसायत्वात् समराध्वरस्रुक्स्रुवा-दिस्थानीयं सशरं चापं विसृज्य प्रायोपवेशादिपर इव ३रथे रथिस्थानाद्विनिवृत्य रथोत्सङ्गे उपाविशदिति भावः॥

'सखीन्' वयस्यान्॥ २६॥

'सुहृदः' वयोविशेषानपेक्षया हितैषिणः। 'सेनयोरुभयोरपि'—एकैकस्यां सेनायामेते सर्वे प्रायशो विद्यन्त इति भावः। 'समीक्ष्य' शास्त्रलोकयात्रायुक्तमवलोक्येत्यर्थः। 'सर्वान्बन्धून्'—न ह्यत्रानागतः कश्चिद्बन्धुरवशिष्यत इति भावः॥ २७॥

'अधर्मोऽभिभवति' इति मानसदोषोक्तिः॥ ४०॥

'प्रदुष्यन्ति' इति कायिकोक्तिः॥ ४१॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां
प्रथमोऽध्यायः॥

---

प्र·पा॥ १. शरचाप. क. ग. म.-पा ३. रथोपस्थे, क. ख. ग. घ. ङ. म.-पा.
२. तौदादिक आत्मनेपदी, रौधादिकः परस्मैपदी वा॥

श्रीः

श्रियै नमः

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसङ्ग्रहः.

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः ।

---

## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा.

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

---

मानत्वं भगवन्मतस्य महतः पुंसस्तथानिर्णय-
स्त्रिस्सिद्ध्य आत्मसंविदगिलाधीशानतत्त्वाश्रयाः ।
गीतार्थस्य च सङ्ग्रहः स्तुतियुग श्रीश्रीशयोरित्यमू-
न्यद्ग्रन्थाननुसन्दधे यतिपतिस्तं यामुनेयं नुमः ॥ १ ॥
श्रीमद्वेङ्कटनाथेन यथाभाष्यं विधीयते ।
भगवद्यामुनेयोक्तगीतासङ्ग्रहरक्षणम् ॥ २ ॥

---

१'तत्र जिज्ञासमानानां हेतुभिस्सर्वतोमुखैः ।
तत्त्वमेको महायोगी हरिर्नारायणः परः ॥'
२'आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥'

इत्यादिभिस्तत्त्वहितरूपं समस्ताध्यात्मशास्त्रार्थसारं महर्षयस्सञ्जगृहुः । तदेतदुभयं सर्वोपनिषत्सारसङ्कलनात्मिकाया भगवद्गीताया प्रतिपाद्यतया प्रदर्शयन् तत्राप्युपनिषदां तत्त्वप्राधान्यस्य शारीरके सूचितत्वादिहापि तत्प्रधानतया व्यपदिशति॥स्वे धर्माः स्वधर्माः स्ववर्णाश्रमनियतशास्त्रार्थाः,३'स्वेस्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः' इति हि गीयते। स्वस्य धर्म इति समासेऽप्ययमेवार्थः। ज्ञानमत्र परद्योपतैकरसयथावस्थितात्मविषयम् । वैराग्यं परमात्मव्यतिरिक्तेषु सर्वेषु विरक्तिः, ४'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इति मुमुक्षोः स्वभावप्रतिपादनात्। तथा च पातञ्जलयोगानुशासनसूत्रम्—५'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' इति । कर्मयोगपरिकरभूतस्यापि वैराग्यस्य पृथगुपादानमपवर्गस्य तदन्वयव्यतिरेकानुविधायित्वेन तत्प्राधान्यज्ञापनार्थं मन्दभूतरागनिवृत्त्या तन्मूलक्रोधादिसमस्तदोषनिवृत्तिज्ञापनार्थञ्च । तत्र स्वधर्मज्ञानयोः प्रथमं कर्मयोगज्ञानयोगरूपेणावस्थितयोरात्मसाक्षा-

---

१ भारते शान्तिपर्वणि-मोक्षधर्मे. ३४७ अ ८३-श्लो

२.नारसिंहपुराणे. १८-अ.३४-श्लो. ३.गी.१८-४५.

४. नारदपरिव्राजकोपनिषदि. ३. उपदेशे.

५. पातञ्जलयोगानुशासनसू. १.पा. १५-सू.

त्कारद्वारा भक्तियोगाधिकारनिर्वर्तकत्वेन नत्साधकत्वम्। तदभिप्रायेणोक्तमात्मसिद्धौ—१'उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्यः' इति। उत्पन्नभक्तियोगानामपि विशदतमप्रत्यक्षसमानाकारस्य तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपस्य आप्रयाणादनुवर्तनीयस्य अहरहरभ्यासाधेयातिशयस्य भक्तियोगस्य सत्त्वविवृद्धिसाध्यतया तद्विरोधिरजस्तमोमूलभूतपापनिबर्हणद्वारेण सत्त्वोपचयहेतुतयोपकारकत्वादात्मयाथात्म्यज्ञानपूर्वकैः परित्यक्तफलसङ्गकर्तृत्वादिभिः परमपुरुषाराधनैकवेषैर्नित्यनैमित्तिककर्मभिर्भक्तेरुपचीयमानत्ववेषेण साध्यत्वम्। तदेतत्सर्वमभिसंधायोक्तं भगवता पराशरेण—

२"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया॥" इति॥

महनीयविषये प्रीतिर्भक्तिः। ३'४प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति वचनमपि पूज्यविषयविशेषनियत योज्यम्। सैव वेदनोपासनध्यानादिशब्दैरध्यात्मशास्त्रेषु मोक्षोपायविधिवाक्यैस्सामान्यतो विशेषतश्च प्रतिपाद्यते, गुरुलघुविकल्पानुपपत्तेस्सामान्यशब्दानां समानप्रकरणोक्तविशेषविश्रमेऽत्र सम्भवति द्वारिद्वारादिकल्पनायोगात्, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात् ५'निदिध्यासितव्यः' इत्यस्य स्थाने विज्ञानशब्दश्रवणाच्च, परमपुरुषवरणीयताहेतुभूतगुणविशेषवत्त्वैव लभ्यत्वश्रुतेश्च, तद्वरणस्यास्मिन् शास्त्रे भक्त्यधीनत्वोक्तेश्च। एवं सति वेदनेतरमोक्षोपायनिषेधकश्रुतीनां ६'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप' इत्यादिस्मृतीनां चाविरोधः। तदेतदुक्तं भक्त्येकगोचरः इति; भक्तेरेव गोचरो नान्यस्येत्यर्थः।एतेन कर्मसमुच्चयवाक्यार्थज्ञानादिपक्षाः प्रतिक्षिप्ताः। ७गोचरत्वमिह फलत्वेन ग्राह्यम्,८'भक्त्यैकलभ्ये पुरुषे पुराणे'इत्यादिभिरैकरस्यात्, भक्तियोगलभ्य इति स्वोक्तसंवादाच्च। उपायतया फलतया चैकस्यैवावलम्बनादैश्वर्याद्यर्थभक्तिव्यवच्छेदार्थं यात्रैकशब्दः। अत्र ऐश्वर्याद्यर्वाचीनपुरुषार्थग्रहणं भूमविद्यायामिव निरतिशयपुरुषार्थप्रतिपादनार्थम्। तदभिप्रायेण च भाष्यं—९'परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास' इति। यद्वा निरतिशयैश्वर्ययुक्ततया भक्त्यर्हत्वमिह तद्गोचरत्वम्। ऐकान्तिकत्वादिव्यञ्जनायत्वेकशब्दः। १०'परावरं भूतानाम्' इत्याद्युक्तपरावरतत्त्वनिश्चयेन अन्यभक्त्युन्मूलनादव्यभिचारेण अनन्यविषयत्वमैकान्तिकत्वम्। सातिशयनिरतिशयपुरुषार्थविवेकेन तदेकभोग्यतया उत्तरावधिराहित्यमात्यन्तिकत्वम्। कारणवाक्यस्थानां सद्ब्रह्मादिसामान्यशब्दानां समानप्रकरणमहोपनिषदादिपठितावाधितासमस्तब्रह्मत्वन्तरनारायणादिविशेषशब्दार्थविश्रमं व्यञ्जयितु—'नारायणः परं ब्रह्म' इति विशेषतस्सामान्यतश्च व्यपदेशद्वयम्। अनेनाविभक्तिकेऽपि नारायणानुवाकवाक्ये पूर्वापरवाक्यच्छायानुसाराच्छाखान्तरसविसर्गनीयपाठनाच्च व्यस्तत्वं व्यञ्जितम्। तेन च सर्वपरविद्योपास्यविशेषनिर्धारणार्थतया वेद्यपरतत्त्वप्रतिपादनपरनारायणानुवाकसिद्ध एवास्य शास्त्रस्य विषयः। तद्विभूतित्वेन ११'विश्वमेवेदं पुरुषः' इतिवत्सामानाधिकरण्यतया तत्राम्नातानां ब्रह्मशिवेन्द्रादीनां नारशब्दार्थानामिहापि १२'ब्रह्माणमीशम्' इत्यादिभिस्तद्विभूत्येकदेशाश्रयत्वं प्रतिपाद्यत इति ख्यापितम्। उक्तञ्च स्तोत्रे—१३'स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः। ब्रह्मा शिवश्शत-

१. आत्मसिद्धौ.
२. वि. पु ६-अं, ६-अ, १२-श्लो.
३ लैङ्गपुराणे. उत्त. ९. १९.
४. स्नेहपूर्वमिति-पा. ५ बृ.४.४.५; ६.अ.५.आ.६.
६. गी. ११. अ. ५४-श्लो. ७. गोचरत्वमिह फलत्वेनेति - भक्त्यैव फलत्वेनेत्यर्थः, तृतीयार्थोऽभेदः.
८. गारुडपुराणे पूर्वखण्डे २१९-अ. ३४-श्लो.
९. गीताभाष्ये. अ-१. उपोद्घाते.
१०.
११. तै-ना. ११-२.
१२. गा. ११-१५.
१३. स्तोत्ररत्ने, ११-श्लो.

**नारायणः परं ब्रह्म गीताशास्त्रे समीरितः ॥ १ ॥**
**ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते ।**
**आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते ॥ २ ॥**

---

भगः परमस्वराडित्येनेऽपि यस्य महिमार्णवविप्रुषस्ते ' इति । संवित्सिद्धौ च अद्वितीयश्रुतिव्याख्याने च दर्शितम् – १' यथा चोलनृपस्सम्राडद्वितीयोऽस्ति भूतले । इति तत्तुल्यनृपतिनिवारणपरं वचः ॥ न तु तत्पुत्रतद्भृत्यकलत्रादिनिवारकम् । तथा सुरासुरनरब्रह्माण्डशतकोटयः । क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः । ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः । विष्णोर्विभूतिमहिमसमुद्रद्रप्सविप्रुषः' इति । पुरुषनिर्णयेच एतत्प्रपञ्चो ग्राह्यः । तदेतद्व्यपदेशद्वय 'श्रियःपतिः'इत्यादिना प्रारम्भभाष्येण व्याकृतम्। अत एव हि तत्रापि—'परं ब्रह्म पुरुषोत्तमो नारायणः' इत्यन्तेन समभिव्याहृतम् ।' प्रपञ्चितमेतदस्माभिस्तात्पर्यचन्द्रिकायामिति नात्र विस्तृणीमः । निर्विशेषणस्यैव ब्रह्मशब्दस्य काष्ठाप्राप्तबृहत्त्वबृंहणत्वयोगिनि परमात्मन्येव योगरूढत्वेऽपि तस्मादन्यत्र जीवादौ तद्गुणलेशयोगादौपचारिकप्रयोगस्येसद्व्यवच्छेदाय 'परम्' इति विशेषितम्। एवमेव ह्यन्यत्रापि विशेष्यते। व्योमातीतवादिमतनिरासार्थं वा परत्वोक्तिः।गीतेव तत्त्वहितयोर्यथावच्छासनात् शास्त्रम् ।उपनिषत्समाधिना सिद्धव्यवहारनिरूढेः स्त्रीलिङ्गनिर्देशः । एतेन शास्त्रान्तरादस्य शास्त्रस्याधिक्यं व्यञ्जितम् । स्मर्यते च महाभारते महर्षिणोक्तम्—२'अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्' इति। उक्तं चाभियुक्तैः—३'यस्मिन् प्रसादसुमुखे कवयोऽपि ये ते शास्त्राण्यशासुरिह तन्महिमाश्रयाणि । कृष्णेन तेन यदिह स्वयमेव गीतं शास्त्रस्य तस्य सदृशं किमिवास्ति शास्त्रम् ' इति । पञ्चमवेदे चास्यांशस्य प्राधान्यमुद्घुष्याहुः ४' भारते भगवद्गीता धर्मशास्त्रेषु मानवम् । वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम् ' इति । **समीरितः**, सम्यगीरितः, अज्ञानसंशयविपर्ययप्रतिक्षेपेण परमप्राप्यत्वप्रापकत्वसर्वकारणत्वसर्वरक्षकत्वसर्वसंहर्तृत्वसर्वाधिकत्वसर्वाधारत्वसर्वनियन्तृत्वसर्वशेषित्वसर्ववेदवेद्यत्वसर्वहेयरहितत्वसर्वपापमोचकत्वसर्वसमाश्रयणीयत्वादिभिः स्वभावैस्समस्तवस्त्वन्तरविलक्षणतया पुरुषोत्तमत्वेन प्रतिपादित इत्यर्थः । समन्वयसूत्रवत्सातिशयपुरुषार्थत्वविवक्षया वा समित्युपसर्गः । एवमनेन श्लोकेन शास्त्रार्थः सङ्गृहीतः ॥ १ ॥

अथ त्रिभिः श्लोकैस्त्रयाणां षट्कानामर्थं सङ्गृह्णाति ॥ ज्ञानात्मिका निष्ठा ज्ञानयोगः, कर्मात्मिका निष्ठा कर्मयोगः । नितिष्ठत्यस्मिन्नर्थे अधिकर्तव्येऽधिकारीति निष्ठा, नियता स्थितिरेव वा निष्ठा, यावत्फलं स्थिरपरिगृहीतमुपायानुष्ठानमित्यर्थः । अनयोः स्वरूपं व्यञ्जयिष्यति ५' कर्मयोगस्तपस्तीर्थ ' इत्यादिना । योगलक्ष्ये योगस्साध्यतयालक्ष्यमुद्देश्य ययोस्ते योगलक्ष्ये अत्र कर्मनिष्ठया ज्ञाननिष्ठामारुह्य तया योगप्राप्तिरिति द्वैतीयः क्रमः । तार्तीयस्तु ज्ञाननिष्ठाव्यवधानमन्तरेण कर्मनिष्ठयैव याथायोगारम्भं दृढपरिगृहीतया अन्तर्गतात्मज्ञानया शिष्टतया व्यपदेश्यानां लोकानुविधेयानुष्ठानानामितरेषामपि निष्प्रमादसुकरोपायसक्तानां योगप्राप्तिरिति । योगोऽत्रासनादिविशेषपरिकरवान् साक्षात्कारार्थम् आत्मावलोकनाख्यनामा चित्तसमाधानविशेषरूपो व्यापारः, तत्साध्यसाक्षात्कार एव वा । तेन स्मृतिसंततिविशेषरूपात्स्वकारणभूतज्ञानयोगात्स्वकार्यभूतादात्मानुभवाच्च भेदः । **सुसंस्कृते** परमात्माधीनत्वतत्प्रीत्यर्थत्वफलान्तरसङ्गराहित्यादिबुद्धिविशेषैः परिकर्मिते, इत्यर्थः । **आत्मानुभूतिसिद्ध्यर्थे** ६' सुखमात्यन्तिकं यत्तत् ' इत्याद्युक्तप्रकारेण वैषयिकानन्दविलक्षणस्येतरसमस्तवैतृष्ण्यावहसुखस्वभाव-

---

१. संवित्सिद्धौ. * १२-पु. १६-प.
२. महाभारते. आदिपर्वणि. अ-१. श्लो-२७९
३.
४.
५. गीतार्थसं २२-श्लो. ६ गी.६-अ.२१-श्लो



# द्वितीयोऽध्यायः.

सञ्जय उवाच—

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २
*क्लैब्यं मास्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३

रा॥ एवमुपविष्टे पार्थे †कुतोऽयमस्थाने समुपस्थित शोक इत्याक्षिप्य तमिम विषमस्थ

ता॥अथ शोकापनोदनविषयो द्वितीयोऽध्याय आरभ्यते । सञ्जयवाक्याविच्छेदेऽपि 'सञ्जय उवाच ' इति निर्देशोऽध्यायान्तरारम्भरूपतयान्योक्तिशङ्कापरिहाराय । 'तं तथा इत्यादिश्लोकत्रयं व्याख्याति —एवमिति । १'विषीदन्तम्' इत्यनेन तस्य पूर्वाध्यायोक्तानुवादत्वं सूचयितुम् एवमुपविष्टे पार्थे इत्युक्तम् । 'तथा ' इति अस्थाने इत्यर्थः । २कृपा च आन्तरो विषाद । तत अश्रुपूर्णाकुलेक्षण बाह्यशोकेनाप्याविष्टमित्यर्थः । विषीदन्तं पूर्वाध्यायोक्तरीत्या विषादं प्राप्योपविष्टम् । मधुसूदनशब्देन शोकमूलरजस्तमोनिबर्हणत्वं सूचितम् । अस्थाने इति विषमशब्दार्थः । कश्मलमिह मूर्छाऽस्य शोक , ३'शोकसंविग्नमानस ' इति प्रकृतत्वात् । प्रख्यातवंशवीर्यश्रुतादिसूचका 'अर्जुन ' 'कौन्तेय ' 'त्वा' 'त्वयि ' 'परन्तप ' इति शब्दा ४आक्षेपकारणगर्भा इत्यभिप्रायेण आक्षिप्य इत्युक्तम् । कुत शब्दश्च हेत्वाभासस्य हेतुतां प्रश्नयन् धिक्कारगर्भः । परान् तापयतीति परन्तप । क्लैब्यमिह कातर्यम् , तत् हृदयदौर्बल्यशब्देन विवृतम् । पूर्वश्लोकस्थविशेषणानां ५मपि कातर्यत्याज्यताहेतुत्वादर्थतस्तान्यपि संगमयति—तमिम विषमस्थमित्यादिना । अतत्त्वेभ्य आरात् दूरात् याता शुद्धिया ६ते आर्या विद्वांस , तदन्ये तु अनार्या । 'अस्वर्ग्यम् ' इत्यत्राविशेषात् स्वर्गशब्द परलोकमात्रोपलक्षक , नञश्च विरोधिपरतया स्वर्ग्यशब्दनिर्दिष्टस्वर्गहेतुविरोधित्वेऽर्थतस्तत्फलविरोधात् परलोकविरोधिनमित्युक्तम् । क्षुद्रशब्दस्यात्र सङ्कोचकाभावेनापेक्षिकक्षुद्रविषयत्वायोगान्महत्तरस्यार्जुनस्य

प्र पा॥*मा क्लैब्यं गच्छ कौन्तेय पा †कुतोऽसमये पा आत्मपापपादवक्त्राकुगभा क ग ग च पा
पा १ विषीदन्तमित्यस्य पा २. कृपाया अनन्तरो ५ मप्यत्र कातर्यं पा ६. ते ह्या क
विशा क ग ङ च छ पा ३. गी १ ४७ ४ आक्षेपगर्भा ग ग घ ङ ञ पा

रा ॥ शोकमविद्वत्सेवितं परलोकविरोधिनमकीर्तिकरमतिक्षुद्रं हृदयदौर्बल्यकृतं परित्यज्य युद्धायोत्तिष्ठेति श्रीभगवानुवाच ॥

अर्जुन उवाच—

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४
गुरूनहत्वा हि महानुभावान् *श्रेयश्चर्तुं भैक्षमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५

रा॥पुनरपि पार्थः स्नेहकारुण्यधर्माधर्मभयाकुलो भगवदुक्तं हिततममजानन्निदमुवाच—भीष्मद्रोणादिकान् गुरून्बहुमन्तव्यान्कथमहं हनिष्यामि ! कथन्तरां

ता॥ तथाविधायस्यापर्यालोचनाद्य काष्ठाप्राप्तं क्षुद्रत्वं विवक्षितमिति दर्शयितुम् अतिक्षुद्रम् इत्युक्तम्, कार्ये कारणोपचार इति वा, कारणत्यागस्य कार्यत्यागार्थतया पूर्वोत्तरश्लोकफलितार्थविवक्षया वा हृदयदौर्बल्यकृतम् इत्युक्तम्; [१]अदृढहृदयत्वकृतमित्यर्थः। 'परन्तप' इत्यनेन ज्ञापितं प्राकरणिकमर्थमध्याहृत्योक्तं युद्धायोत्तिष्ठेति ॥ १ ॥ २ ॥ ३ ॥

अथ भगवदुक्तयुद्धारम्भस्य परम्परया परमनिःश्रेयसहेतुत्वरूपहिततमत्वाज्ञानात् तत्प्रतिक्षेपरूपस्यार्जुनवाक्यस्योत्थानम् । तथाविधाज्ञानस्य चास्थानस्नेहाद्याकुलतामूलत्वं यदनुत्तरमवतारयति—पुनरपीति । उक्तार्थविषयतया पुनरपीदमुवाचेत्युक्तम् । 'कथम्' इत्यादिश्लोके चकारस्यानुक्तसमुच्चयार्थत्वप्रदर्शनाय आदिशब्दः; उपात्तस्यानुपात्तोपलक्षणतया वा । पूजार्हशब्दविवक्षितबहुमन्तव्यत्वहेतुतयोत्तरश्लोकस्थमनाकृष्योक्तं[२]गुरूनिति । बहुमन्तव्यानिति—'महानुभावान्' इत्युत्तरश्लोकस्यानु[३]संधानाद्वा; [४]ते स्वत एव बहुमन्तव्याः, पितामहत्वधनुर्वेदाचार्यत्वादिभिरत्यन्तबहुमन्तव्या[५]इति भावः । पुष्पादिभिः पूजार्हाणां पूजानिवृत्तिरेव साहसम्; हननं त्वतिसाहसम् । गुरुभक्त्या च तद्विरोधिभिः सह योद्धव्यम्, न पुनर्गुरुभिरिति—'कथं गुरूनिषुभिः प्रतियोत्स्यामि' इत्यस्य भावः । अहंशब्देन प्रख्यातवंशत्वादिकमभिप्रेतम् । 'इषुभिः प्रतियोत्स्यामि' इत्यस्य हननपर्यन्तप्रतियुद्धाभिप्रायत्वमुत्तरश्लोकेन विवृतमिति हनिष्यामीत्युक्तम् । मधुसूदनारिसूदनशब्दाभ्यां 'नहि त्वमपि सान्दीपिन्यादिसूदनः' इति सूचितम् । [६]'चर्तुम्' इत्यत्र भावमात्रार्थस्तुमुन्, न तु क्रियार्थोपपदकः । यद्यपि या काचिज्जीविकाश्रयणीया; तथापि गुरुवधलब्धभोगेभ्य इह लोके परधर्मरूपभैक्षाचरणमपि श्रेयः प्रशस्यतरम्; महाप्रभावगुरुवधसाध्यपारलौकिकदुःखस्यातिमहत्त्वादिति भावः । प्रकृतविरुद्धार्थत्वभ्रमव्युदासाय पूर्वश्लोकस्थकथंशब्दानुषङ्गादतिनृशंसत्वसामर्थ्यात् तुशब्दद्योतितवैषम्याच्च कथन्तराम् इत्युक्तम् । [७]'गर्हायां लडपिजात्वोः', [८]'विभाषा कथमि लिङ् च' इति गर्हार्थं इह लिङ्प्रत्ययः;

प्र-पा ॥ * श्रेयो भोक्तुं पा.

१. अदृढहृ. पा. २. गुरूनिति। महानुभा. पा.

३. नधानाद्; स्वत एव. क. ख. ग. घ. ङ. च. छ. पा.

४. तएव. घ. पा. ५. इति वा भावः. क. ग. घ. पा.

६. भोक्तुम्. पा.

७. अष्टाध्याय्याम्. अ. ३. पा. ३. सू. १४२. गर्हायामिति ॥ अपि, जातु इत्याभ्यां योगे लट् स्यात् कालत्रये गर्हायाम्। लुङादीन् परत्वादयं बाधते । अपि जाया त्यजसि । जातु गणिकामाधत्से । गर्हितमेतत् ॥

८. अष्टाध्याय्याम्. अ. ३. पा. ३. सू. १४३. विभाषेति ॥ गर्हायामित्येव । कालत्रये लिङ् । चाल्लट्। कथं धर्मं त्यजेः, त्यजसि वा । पक्षे कालत्रये लकाराः॥

रा॥भोगेष्वतिमात्रप्रसक्तान् तान् हत्वा तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरेणोपसिच्य तेष्वासनेषूपविश्य भुञ्जीय ॥ ४ ॥ ५ ॥

---

ता॥'अर्थकामान्' इत्यत्र द्वन्द्वादिभ्रान्तिनिवर्तनाय१समासतदर्थद्वयार्थौ भोगेष्वतिमात्रप्रसक्तान् इत्युक्तः, अर्थेषु कामो येषामिति विग्रहः;२'अव्यञ्जो हि ३व्यधिकरणो बहुव्रीहिः४र्जन्माद्युत्तरपदः'। ५अर्थ्यन्त इत्यर्थाः भोगाः, कामश्चातिमात्रसङ्गो वक्ष्यते। ६यद्वा अर्थं कामयन्त इत्यर्थकामाः। ७ते निष्कामाश्चेत्, तद्भोगहरणमपि सहेत; ८इद तु क्षुधितानामोदनहरणवदिति भाव.। ९हननादप्यतिनृशंसत्वसूचनाय भोगरुधिरादिशब्दैरर्थसिद्धः तुशब्देन च १०द्योतितो विशेषः तैरित्यादिना उक्तः। ११'इहैव' इत्यनेन विवक्षितो नृशंसत्वातिशयः तेषु इत्यादिना दर्शितः। १२गुरुवधसाध्यभोगा रुधिरप्रदिग्धगुरुस्मृतिहेतुत्वात् स्वयमपि तथाविधा इव दुर्भोजा भवन्तीत्यैहलौकिकसुखमपि नास्तीति रुधिरप्रदिग्धशब्दाभिप्राय इत्याह—तद्रुधिरेणोपसिच्येति। १३उपसेचनं हि स्वयमद्यमानं सदन्यस्यादनहेतुः; १४इह तदुभयमपि विपरीतमिति भावः ॥ ४ ॥ ५ ॥

---

प्र पा॥१ समासतदंशद्वयार्थौ समासतद्घटकपूर्वोत्तरपदद्वयार्थौ

२.

३ व्यधिकरणोऽपि बहु ख ग घ ङ छ. पा

४. जन्माद्युत्तरपदइति 'कुम्भजन्मा, द्विजन्मा' इत्यादौ 'कुम्भे जन्म यस्य, द्वाभ्यां जन्म यस्य' इति व्यधिकरणबहुव्रीहेरनुमतत्वादिति भाव

५.भोगेष्वतिमात्रसक्तानितिभाष्यार्थविवरणवाक्यानुगुण्येन अर्थशब्दस्य भोगपरत्वमुक्तम् 'अर्थ्यन्त'इत्यादिना अतिमात्रप्रसक्तेर्निर्मूलत्वमाशङ्क्य कामशब्दस्य तदर्थत्वमाह - 'कामश्चातिमात्रसङ्ग' इति

६ प्रत्यर्थिसम्बन्धिराज्यभोगहरणं दुस्सहमिति भावं हृदि निधाय तदुपपादकत्वेन 'अर्थकामान्' इत्युक्तमित्यभिप्रेत्य 'अर्थं कामयन्त' इति व्युत्पत्त्यन्तरमुक्तम् 'अर्थकामा' इत्यस्य

७ 'अर्थकामान्' इति विशेषणेन तस्य दुस्सहत्वं कथमवगम्यत इत्याशङ्कायामाह - 'ते निष्कामाश्चेत्' इति

८. इद तु - तद्भोगहरणं तु क्षुधितानामोदनहरणवत्' इति दृष्टान्तेन दुस्सहत्वं व्यज्यते

९. हननादप्यतिनृशंसत्वसूचनाय - प्रत्यर्थिकर्तृकस्वगर्भकहननादपि तत्कर्मकस्वकर्तृकभयस्य तदीयभोगहरणपर्यन्तस्य अतिनृशंसस्य अपारत्वसूचनायेत्यर्थं.

१० द्योतितो विशेष - स्वकर्मकतत्कर्तृकहननस्यैव गरीयस्त्वरूपो विशेष इत्यर्थः तैरित्यादिना - 'गरीय' इत्यन्तेन 'तैः' इत्यादिभाष्यवाक्येनेत्यर्थः.

११. 'तेष्वासनेषूपविश्य' इत्यस्य उन्मूलत्वशङ्कां परिहरति - 'इहैवेत्यनेन विवक्षितो नृशंसत्वातिशय' इति तथा च 'इहैव भुञ्जीय' इति मूलवाक्यादेव उक्तार्थलाभाददोष इति भाव

१२ भोगानां रुधिरप्रदिग्धत्वं कथमित्याशङ्क्य भोगाना स्वहेतुभूतगुरुवधकालिकतदीयरुधिरप्रदिग्धदेहस्मारकत्वात् रुधिरप्रदिग्धतुल्यत्वेन तथात्वमुक्तमित्याह 'गुरुवधसाध्य' इत्यादिना.

१३ भाष्ये तद्रुधिरेणोपसिच्येत्युपसेचनस्य प्रतिपादनात् तल्लक्षणमाह-उपसेचन इति

१४ इह तदुभयमपि विपरीत तदुभयमपि नास्तीत्यर्थं, स्वयमद्यमानत्वमपि नास्ति, अन्यस्यादनसाधनत्वमपि नास्तीत्यर्थं, रुधिरप्रदिग्धत्वेन दुर्भोजत्वादिति भाव.

---

शं॥अत्र च 'दृष्ट्वा तु पाण्डवानीकम्' इत्यारभ्य यावत् 'न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह' इत्येतदन्तः, प्राणिनां शोकमोहादिसंसारबीजदोषोद्भवकारणप्रदर्शनार्थ-

न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६
कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥ ७

रा ॥ एवं *युद्धमारभ्य निवृत्तव्यापारान् भवतो धार्तराष्ट्राः प्रसह्य हन्युरिति चेत् —अस्तु । तद्वधलब्धविजयादधर्म्यादस्माकं धर्माधर्मावजानद्भिस्तैर्हननमेव गरीय इति मे प्रतिभातीत्युक्त्वा, यन्मह्यं श्रेय इति निश्चितं †तत् शरणागताय तव शिष्याय मे ब्रूहीत्यतिमात्रकृपणो भगवत्पादावुपससाद ॥ ६ ॥ ७ ॥

न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८

ता॥ 'न चैतद्विद्मः' इत्यादेश्चकारद्योतितशङ्कापूर्वकं तात्पर्यार्थमाह—एवमिति । बन्धुविनाशभीतेन त्वया धर्मसुतभीमनकुलाद्यासन्नतरबन्धुविनाश एव कारितः स्यादिति भवत इत्यनेन सूचितम् । 'विद्मः' इत्यादिबहुवचनानु[1]सारेणाह—अस्माकमिति । अस्माकमित्यनेन हन्तव्यतया निर्दिष्टभीष्मद्रोणाद्यपेक्षया सर्वेषां शिष्यत्वादिकर्माभिप्रेतम् । पूर्वोत्तरार्धाभ्यां विमर्शस्वाभिमतपक्षौ व्यञ्जितौ । [2]'यद्वा' इति 'यदि वा' इति च तुल्यार्थम् । येषां वधेन जीवनमस्माकमनिष्टम्, त एवास्मान् जिघांसन्तः स्वहननानुरूपत्वेनावस्थिता इति, 'यानेव' इत्यादेरन्वयार्थः । 'न जिजीविषामः' इत्यनेन सूचितम्[3]अनिर्णयपर्यवसिताम् अत एव प्रश्नहेतुभूतां प्रतिभामाह—इति मे प्रतिभातीति। 'यच्छ्रेयः' इत्यादेरन्वयफलितार्थमुपदेशयोग्यत्वायोक्तां शिष्यगुणसंपत्तिं च स्फुटयति—यन्मह्यमित्यादिना । निश्चेतव्याकारनिष्कर्षणाय इतिकरणम् । शासनीयो हि शिष्यः ; अतः 'शिष्यस्तेऽहं शाधि माम्' इति वदति । स्वभावोऽत्र धैर्यम् ; कर्तव्यविशेषाज्ञानात् शोकापनोदनोपायराहित्यादिना वा अतिमात्रकार्पण्यम् । त्याज्यस्यापरित्यागोऽत्र कार्पण्यमित्येके; दयाजनकदीनवृत्तिनिरतत्वमित्यपरे । भगवत्पादावुपससादेति शिष्यत्वप्रपत्त्याद्युक्तिफलमेव ॥ ६ ॥ ७ ॥

[4]'एवमुक्त्वा' इति श्लोके हृषीकेशपदेन सदर्थश्रवणायार्जुनहृषीकप्रेरकत्वम्, [5]'यच्छोकमुच्छोषणमिन्द्रियाणाम्' इत्याद्युक्तेन्द्रियक्षोभशान्तिकरत्वं च, व्यञ्जितम् । हृष्यन्ति हर्षयन्तीति वा

प्र-पा ॥ * युद्धायारभ्य निवृत्तव्यापारं भवन्तं धार्त.
† तत्त्वच्छरणागताय. पा.
१. मारिणा अस्माकमित्यनेन. क. ख. ग. घ. ङ. च छ. पा.
२. 'यद्वा, यदिवा' इति च तुल्यार्थं - यदिवेति येद्वेत्यर्थकमित्यर्थः.
३. 'इति मे प्रतिभातीत्युक्त्वा यन्मह्यं श्रेय इति निश्चितं तद्ब्रूहीति प्रश्नासंगतिं हृदि निधाय-अनिर्णयपर्यवसितामिति. निश्चयापर्यवसितामित्यर्थः.
४. गी. २-९. ५. गी. २-८.

शं॥त्वेन व्याख्येयो ग्रन्थः॥तथाहि—अर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसम्बन्धिबान्धवेषु 'अहमेतेषां' 'ममैते' इत्येवं प्रत्ययनिमित्तस्नेह[1]विच्छेदादिनिमित्तावात्मनश्शोकमोहौ [2]प्रदर्शितौ 'कथं भीष्ममहं संख्ये' इत्यादिना। शोकमोहाभ्यां ह्यभिभूतविवेक[3]ज्ञानः स्वत एव क्षत्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम । परधर्मं च भिक्षाजीवनादि कर्तुं प्रववृते।

पा ॥ १. विच्छेदनि. पा. २. प्रदर्शितौ. पा. ३. विज्ञानः. पा.

सञ्जय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।

न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९

रा॥ [*]एवमस्थानसमुपस्थितस्नेहकारुण्याभ्याम् अप्रकृतिं गतं क्षत्रियाणां युद्धं परमधर्ममप्यधर्मं मन्वानं धर्मबुभुत्सया च शरणागतं पार्थमुद्दिश्यात्मयाथात्म्यज्ञानेन युद्धस्य फलाभिसन्धिरहितस्यात्मप्राप्त्युपायताज्ञानेन च विना अस्य मोहो न शाम्यतीति मत्वा,

ता॥हृषीकाणि इन्द्रियाणि। 'एवमुक्त्वा' स्वावस्थामावेद्येत्यर्थः। [१]'निद्रालस्ये गुडाका स्यात्' इति गुडाका निद्रा ; तस्या ईशो गुडाकेशः , प्रबुद्धस्वभाव इत्यर्थः; पिण्डितकेश इति वा। गोविन्दशब्देन शोकापनोदनयोग्यवाक्शालित्वम् , गोशब्दनिर्दिष्टाया [२]भुवो भारावतरणार्थ[३]प्रवृत्तत्वं च अभिप्रेतम् ॥

एवमनेनोपोद्घातेनोचितावसरे वक्ष्यमाणशास्त्रावतरणसङ्गतिं वदन् अर्थादुपोद्घातमप्यनेन श्लोकेन च व्याकरोति—एवमिति । अस्थानशब्दस्य [४]'विषमे समुपस्थितम्' इत्येतद्विषयत्वं व्यञ्जयन् , तस्य स्नेहकारुण्याभ्यामेवान्वयाय तयोः पृथङ्निर्देशं कृतवान्।अप्रकृतिं गतम् इति आकुल[५]शब्दार्थ उक्तः। तेन स्वभावतो धीरत्वं सूच्यते ; [६]'उपहतस्वभावः' [७]इति हि स्वेनैवोक्तम्। एतेन कार्पण्यदोषोपहतस्वभावत्वं धर्मसम्मूढचेतस्त्वे हेतुतयोक्तमित्यपि दर्शितम्। [८]'धर्मसम्मूढचेता.' इत्येतद्विवरणरूपस्य [९]'धर्माधर्मधिया' इत्यस्य अर्थः क्षत्रियाणामित्यादिनोक्तः। [१०]धर्मे अधर्मधी. धर्माधर्मधीः, शुक्तिरजतधीरितिवत् ; [११]तत्र यथार्थख्यातिपक्षे भेदाग्रहो विवक्षितः। तामसी चेयं धीः; [१२]'अधर्मं धर्ममिति या मन्यते'[१३]इत्यादि हि वक्ष्यते। अनास्थानस्नेहकारुण्याभ्यां जाता धर्माधर्मधीरिति विग्रहो द्रष्टव्यः । स्नेहकारुण्यधर्माधर्मभयाकुल इत्यादिप्राचीनभाष्यानुसारेण 'धर्माधर्मभयाकुलम्' इति पाठे तु त्रयाणां द्वन्द्वः। [१४]'पृच्छामि त्वा' इत्यादिसमभिव्याहृतप्रपन्नशब्दार्थः धर्मबुभुत्सया च शरणागतमित्युक्तः । एवं योग्योद्देशेन प्रवृत्तिर्युज्यत इत्याह—पार्थमुद्दिश्येति । व्याजलाभमात्रेण शास्त्रावतरणं कृतमिति भावः। [१५]'आकुलं पार्थमुद्दिश्य' इत्यस्य तात्पर्यम् आत्मेत्यादिना मत्वेत्यन्तेनोक्तम्। आत्मनो याथात्म्यं नित्यत्वभगवदधीनत्वादिकम् , [१६]'नहि प्रपश्यामि' इत्यादिकं वदतोऽस्यायमेव शोकनिरसनोपाय इति भावः ।

प्र पा॥ *एवमस्थाने समुपस्थितस्नेह पा

१

२ भुवो। लाभाय भारा क ख ग घ ङ. पा

३. प्रवृत्तत्व वा. क. ख. ग घ ङ पा

४. गी २-२.

५. शब्दार्थे। तेन स्व ग घ ङ. पा. ६ गी २-७

७ इति स्वेनै क घ ङ. पा ८. गी २-७.

९ गीतार्थस. ५

१० धर्मेऽप्यधर्मबुद्धि धर्मा क ख ग घ ङ.च छ पा

११ अत्र यथा. ङ.छ पा १२. गी. १८-३२.

१३ इत्यादिना वक्ष्य. क ख ग घ ङ.च.छ.पा

१४. गी २ ७ १५.गीतार्थस ५ १६.गी २-८.

श ॥ तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव [१]स्वधर्मपरित्यागः प्रतिषिद्धसेवा च स्यात्। स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसंधिपूर्विकैव साहंकारा भवति । तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखप्राप्तिलक्षणस्संसारोऽनुपरतो भवतीत्यतस्संसारबीजभूतौ शोकमोहौ । तयोश्च सर्वकर्मसन्न्यासपूर्वकादात्मज्ञानान्नान्यतो निवृत्तिरिति तदुपदिदिक्षुस्सर्वलोकानुग्रहार्थमर्जुनं निमित्तीकृत्याऽऽह भगवान्वासुदेवः 'अशोच्यान्' इत्यादि ॥

पा ॥ १. स्वधर्म. पा.

रा॥भगवता परमपुरुषेण अध्यात्मशास्त्रावतरणं कृतम्। तदुक्तम्—*"अस्थानस्नेहकारुण्यधर्माधर्मधियाकुलम्। पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्" इति ॥ ८ ॥ ९ ॥

तमुवाच हृषीकेशः प्रहसन्निव भारत।
सेनयोरुभयोर्मध्ये †सीदमानमिदं वचः ॥ १०

रा॥ ‡एवं देहात्मनोर्याथात्म्याज्ञाननिमित्तशोकाविष्टं देहातिरिक्तात्मज्ञाननिमित्तं च धर्मं भाषमाणं परस्परविरुद्धगुणान्वितम् उभयोः सेनयोर्युद्धायोद्युक्तयोर्मध्ये अकस्मान्निरुद्योगं

ता॥कृतम् इत्यस्य केनेत्याकाङ्क्षायां प्रबन्धकर्तृभूतव्यासादिशङ्काव्यावर्तनायोक्तं भगवता परमपुरुषेणेति। अनेन पदद्वयेन शास्त्रप्रामाण्याद्युपयुक्तमुभयलिङ्गत्वादिकमभिप्रेतम्। अन्यपरशास्त्रान्तरव्युदासाय अध्यात्मेति विशेषितम्। अस्यार्थस्य सांप्रदायिक१त्वायाह—तदुक्तमिति। प्रत्यध्यायं सङ्ग्रहश्लोकैरर्थभेदेऽभिधीयमानेऽपि इतःपूर्वस्य द्वितीयाध्यायैकदेशस्यापि शास्त्रोपोद्घातत्वम्, अतःपरस्य शास्त्रावतरणरूपत्वं च विवेक्तुम् 'अस्थान' इत्यादिना संग्रहश्लोके२नानिर्दिष्टप्रथमाध्यायेनैतावत्सगृहीतम्। महर्षिस्तु शोकतदपनोदनरूपकथावान्तरसङ्गत्या ३'तं तथा' इत्यादिकं४द्वितीयेऽध्याये न्यवीविशत्; इदमपि सूचितम्५'तन्मोहशान्तये' इति द्वितीयाध्यायफलं संग्रहद्भिः। ततश्चास्थानस्नेहाद्याकुलत्वं प्रथमाध्यायार्थः; सविशेषः स एवात्र सगत्यर्थमनूदित इत्यपि दर्शितं भवति। नन्वेवंविधमुद्दिश्य कथमष्टकर्मयोगज्ञानयोगभक्तियोगादिविषयं शास्त्रमुपदिश्यते; ६'नापृष्टः कस्यचिद्ब्रूयात्' इति हि स्मरन्ति। विशेषतश्चायं गुह्यगुह्यतरगुह्यतमप्रकारोऽर्थः सहसोपदेष्टुमयुक्तः। ७'तस्माद्युध्यस्व भारत', ८'युध्य च' इत्यादिषु च प्राकरणिकयुद्धप्रोत्साहनपरत्वमेव प्रतीयते। अतो नास्य शास्त्रस्याध्यात्मपरत्वमिति। अत्रोच्यते—९'यच्छ्रेयः स्यात्' इति प्रश्नवाक्ये१०'यच्छ्रेयः' इत्यनिर्धारितविशेषं दृश्यते। न चार्जुनस्य युद्धमेव श्रेयस्त्वेन जिज्ञास्यमित्यस्ति नियमः,परमास्तिकस्य तस्य भगवति संनिहिते प्रस्तुतमुखेन परमनिःश्रेयसपर्यन्तजिज्ञासोपपत्तेः। अस्तु वा तस्य११युद्धमात्रविषया जिज्ञासा;तथापि परमकारुणिकेन भगवता 'यच्छ्रेयः' इति सामान्यवचनमालम्ब्य परमहितोपदेश उपपन्नः। 'युध्यस्व' इत्यादिकमपि परमनिःश्रेयसोपायतयेति तत्रतत्र व्यक्तम्। तस्माद्युक्तमिदम् अध्यात्मशास्त्रावतरण मिति ॥८ ॥ ९ ॥

परिहासयोग्यत्वाय 'तम्' इति परामृष्टमाह—एवमित्यादिना। 'उभयोः' इत्यनेन सूचितमुक्तं युद्धायोद्युक्तयोरिति। एतेनोपदेशावसर१२लाभो व्यञ्जितः। 'सीदमानम्' इत्यनेन निरुद्योगत्वं फलितम्। युद्धानिवृत्त्यनर्हावस्थाज्ञापकेन 'मध्ये' इत्यनेनाभिप्रेतमाह—अकस्मादिति। अधर्मादेः पराजयादेर्वा युद्धानिवृत्तेः सम्यग्घेतुरत्र नास्ति; अहेतुकोपक्रान्तत्यागे तु परिहास्यत्वमिति भावः।

प्र-पा॥ * गी. सं. ६-श्लो. † विषीदन्तम्. पा.
‡ तम् एवं देहा. पा.
१. त्वमाह. छ. पा. २. न निर्दिष्ट. पा.
३. गी. २-१.
४. द्वितीयाध्याये. क ख.ग.घ.ङ.च.छ.पा.
५. गीतार्थसंग्रहे. ६-श्लो.
६. नापृष्टः कस्यचिद्ब्रूयान्नचान्यायेन पृच्छतः।जानन्नपि हि मेधावी जडवल्लोक आचरेत्॥मनुस्मृतौ.२-अ. ११०-श्लो. ७. गी. २-१८. ८. गी. ८-७.
९. गी. २-७. १०. श्रुतिरनिर्धारितविशेषा दृश्यते. क. ख. ग. घ. ङ. च. छ. पा.
११. युद्धविषया जिज्ञा. ख. ग. घ च. छ. पा.
१२. लाभोऽपि व्यञ्जितः. क. ख ग.घ.च छ. पा.

शं॥अत्र केचिदाहुः—सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात् कैवल्यं न प्राप्यत एव। किं तर्हि? अग्निहोत्रादिश्रौत१स्मार्तकर्मसहितात् ज्ञानात् कैवल्यप्राप्तिरिति

पा॥ १. स्मार्तसहिता. पा.

रा॥पार्थमालोक्य परमपुरुषः प्रहसन्निवेदमुवाच—परिहासवाक्य यदन्विव आत्मपरमात्मयाथात्म्यतत्प्राप्त्युपायभूतकर्मयोगज्ञानयोगभक्तियोगगोचर *'न त्वेवाह जातु नासम्' इत्यारभ्य †'अह त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुच•' इत्येतदन्तं वचनमुवाचेत्यर्थ ॥

ता॥अत्र हृषीकेशत्वोक्तिफलितं वक्ष्यमाणशास्त्रप्रामाण्योपयुक्तं वक्तु पुरुषस्य सर्ववैलक्षण्यं परमपुरुष इति दर्शितम्। यद्यप्यसौ हृषीकेशत्वात्पार्थस्य हृषीकादिकं सर्वं सङ्कल्पमात्रेण नियम्य भूभारावतारणाय प्रेरयितुं शक्त , तथापि जगदुपकृतिमर्त्यतया पार्थतदितरात्मसाधारणपुरुषार्थोपायशास्त्रोपदेशद्वारा प्रवर्तयतीति भाव । यद्वा धीरमर्जुन हृषीकेशतया स्वयं प्रशोभ्य प्रहसन्निव जगदुपकाराय शास्त्रमुवाचेति संबन्धविशेषात् समनन्तरवाक्यपर्यालोचनया च परिहासार्थत्वौचित्यात् प्रहासस्य पार्थकर्मकत्वमुक्तम्। यद्वा प्रपन्नस्य दोषनिरीक्षणेन परिहासासंभवं, शिष्य प्रत्यध्यात्मोपदेशे प्रहासमात्र[1]स्यात्यन्तानुपयोग च, अभिप्रेत्य पार्थशब्द । अत प्रहसन्निव इत्यनेन फलित सरसतर मुग्धत्वं निखिलनिगमान्तगह्वरनिलीनस्य महतोऽर्थजातस्यानायासभाषणम्, इदंशब्दस्य वक्ष्यमाणसमस्तभगवद्वाक्यविषयत्वम्, इङ्गितेनापि विवक्षितसूचनं च दर्शयति—परिहासेत्यादिना। 'अशोच्यान्' इति श्लोकस्यापि उपदेशार्थानुधानापादनार्थपरिहासच्छायतया शास्त्रावतरणमात्रत्वेन साक्षाच्छास्त्रत्वाभावात्—न त्वेवाहम् इत्यारभ्य इत्युक्तम्। यद्वा न 'अशोच्यान्' इति श्लोक प्रहसन्निवेत्यस्य विषय 'न त्वेवाहम्' [2]इत्यादिकमिदंशब्दार्थ । अत्र 'मा शुच' इत्येतदन्त भक्तियोगगोचरमित निर्देश , सर्वसाधकस्यापि चरमश्लोकोक्तप्रपदनस्य [3]प्रकृतान्वयेन भक्तिविरोधिनिवर्तकतयैवोदाहरिष्यमाणत्वात् ॥ १० ॥

प्र पा॥ *गी २•५२ †गी १८ ६६
[1] पार्थस्य स्वतोऽभिज्ञत्वादुपदिश्यमानार्थस्य बुद्धारोहाय दृष्टान्तापन्यासानावश्यकत्वम् 'अनुपयोग च' इत्यनेन सूचितम् प्रपन्न दोषनिरीक्षणेन परिहासस्योक्तत्वेऽपि पार्थस्य परिहासयोग्यत्वाभाव अनर्हत्वमवगम्यत्वात्परिहासा युज्यन इत्यर्थ
[2] इत्यादिकमित्यद क ख ग घ ङ छ पा
[3] प्रकृतान्वयेन प्रकृतभक्तियोग उपयोगितया वचन

शा॥सर्वासु गीतासु निश्चितोऽर्थ•—इति। ज्ञापक चाहुरस्यार्थस्य—'अथ चेत्त्वमिम धर्म्यं सङ्ग्राम न करिष्यसि'।[1]'कर्मण्येवाधिकारस्ते' 'कुरु कर्मैव तस्मात्त्वम्'—इत्यादि। हिंसादियुक्तत्वाद्वैदिक कर्म [2]अधर्मायेतीयमाशङ्का न कार्या। कथम्? क्षात्र कर्म युद्धलक्षण गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्त क्रूरमपि [3]स्वधर्मइति कृत्वा नाधर्माय, तदकरणे च—'ततस्त्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसादिलक्षणानां च कर्मणा प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्त भवतीति ॥

तदसत्, ज्ञानकर्मनिष्ठयो विभागवचनाद्बुद्धिद्वयाश्रययो। 'अशोच्यान्' इत्यादिना भगवता यावत् 'स्वधर्ममपि चावेक्ष्य' इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपण कृतम्, तत्साङ्ख्यम्। तद्विषया बुद्धिः, आत्मनो जन्मादिविक्रियाभावादकर्तात्मेतिप्रकरणार्थनिरूपणात् या जायते, सा साङ्ख्यबुद्धि। सा येषां ज्ञानिनामुचिता भवति, ते[4]साङ्ख्यास्स्यु•। एतस्या बुद्धेर्जन्मन• प्राक् आत्मनो देहादि[5]व्यतिरिक्तस्य कर्तृत्वभोक्तृत्वापेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठानलक्षणो योग। तद्विषया बुद्धिर्योगबुद्धि। सा येषां कर्मिणामुपचिता भवति ते योगिन•। तथा च भगवता[6]विभक्ते द्वे बुद्धी निर्दिष्टे—'एषा तेऽभि

पा॥ [1] ततस्त्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ इत्यधिकं क्वचित्पुस्तक दृश्यते [2] अधर्मा पा
[3] स्वकर्मेति पा [4] साङ्ख्या पा [5] व्यतिरिक्तस्यकर्तृत्व पा• [6] विविक्ते पा

ऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु' इति। तयोश्च साङ्ख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां साङ्ख्यानां विभक्तां वक्ष्यति—'पुरा वेदात्मना मया प्रोक्ता' इति। तथा च योगबुद्ध्याश्रयां कर्मयोगेन [1]निष्ठां योगिनां विभक्तां वक्ष्यति—'कर्मयोगेन योगिनाम्' इति। एवं साङ्ख्यबुद्धिं योगबुद्धिं चाऽऽश्रित्य द्वे निष्ठे विभक्ते [2]भगवतोक्ते,ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वानेकत्वैकत्वबुद्ध्याश्रययोर्युगपदेकपुरुषाश्रयत्वासम्भवं पश्यता। यथैतद्विभागवचनम् तथैव दर्शितं शातपथीये ब्राह्मणे—[3]'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति सर्वकर्मसंन्यासं विधाय तच्छेषेण 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' इति। तत्र च प्राग्दारपरिग्रहात् 'पुरुषः''आत्मा' प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनं—'पुत्रं' द्विप्रकारं च 'वित्तं' 'मानुषं' 'दैवं' च; तत्र मानुषं कर्मरूपं पितृलोकप्राप्तिसाधनं विद्याश्च दैवं वित्तं देवलोकप्राप्तिसाधनं—'सोऽकामयत'इत्यविद्याकामवत एव कर्माणि दर्शितानि। तेभ्यो व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम्। तदेतद्विभागवचनमनुपपन्नं स्यात्, यदि श्रौतकर्मज्ञानयोस्समुच्चयोऽभिप्रेतः स्याद्भगवतः।

नचार्जुनस्य प्रश्न उपपन्नो भवति, 'ज्यायसी चेत्कर्मणस्ते' इत्यादिः। एकपुरुषानुष्ठेयत्वासम्भवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिः' इति॥

किञ्च—यदि बुद्धिकर्मणोस्सर्वेषां समुच्चय उक्तः स्यात्, अर्जुनस्यापि स उक्त एवेति, 'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' इति कथमन्यतरविषय एव प्रश्नः स्यात्? नहि पित्तप्रशमनार्थिनो वैद्येन मधुरं शीतलं च भोक्तव्यमित्युपदिष्टे तयोरन्यतरपित्तप्रशमनकारणं ब्रूहीतिप्रश्नस्संभवति॥

अथ अर्जुनस्य भगवदुक्तार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत, तथाऽपि भगवता प्रश्नानुरूपं प्रतिवचनं देयम्, 'मया बुद्धिकर्मणोस्समुच्चय उक्तः, किमर्थमित्थं त्वं भ्रान्तोऽसि' इति। न तु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव 'द्वे निष्ठे मया प्रोक्ते' इति वक्तुं युक्तम्॥

नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चयेऽभिप्रेते विभागवचनादि सर्वमुपपन्नम्। किञ्च—क्षत्रियस्य युद्धं स्मार्तं स्वधर्म इति जानतः 'तत्किं कर्मणि घोरे मां नियोजयसि' इत्युपालम्भोऽनुपपन्नः। तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणा आत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः॥

यस्य त्वज्ञानाद्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेनदानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयम्'एकमेवेदं सर्वं ब्रह्माकर्तृ च'इति तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं [4]यत्न पूर्वं यथा प्रवृत्तः, तथैव प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते,न तत्कर्म,येन बुद्धेस्समुच्चयस्स्यात्;यथा भगवतो वासुदेवस्य क्षत्रधर्मचेष्टितं न ज्ञानेन समुच्चीयते, नापि पुरुषार्थसिद्धये; तद्वत्फलाभिसंध्यहङ्काराभावस्य [5]तुल्यत्वात्।

पा॥ १. निष्ठा विभ, पा. २. भगवतैवो. पा. ३. एतमेव लोकमिच्छन्तः प्रव्राजिनः प्रव्रजन्ति. पा. एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्तीति क्वचित्. ४. यत्नपूर्वं पा. ५. तुल्यत्वाद्विदुषः पा.

श्रीभगवानुवाच—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११

रा॥ अशोच्यान्प्रति अनुशोचसि । *'पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः' इत्यादिकान् देहात्मस्वभावप्रज्ञानिमित्तवादांश्च भाषसे । देहात्मस्वभावज्ञानवतां नात्र किञ्चि-

ता॥'अशोच्यानन्वशोचः' इत्युक्ते केचिदशोच्याः शोचन्ति, तदनन्तरमयमपि शोचतीति भ्रान्तिः स्यात्; तन्निवृत्त्यर्थमुक्तम् अशोच्यान्प्रति इति । 'अन्वशोचः' इति लङ्प्रयोगोऽनुपपन्नः, शोकस्याद्यतनत्वात्, 'भाषसे' इति वर्तमानार्थव्यपदेशवैरूप्याच्च, इत्यत्राह—अनुशोचसि इति । अद्यतन एव चिरानुवृत्तत्वविवक्षया सोपसर्गलङ्प्रयोगः; यद्वा वर्तमानार्थ एव १'सुतिङुपग्रह' इत्यादिना लकारव्यत्ययः । 'प्रज्ञावादांश्च भाषसे' इत्यत्र २'वर्तमानसामीप्ये वर्तमानवद्वा' ३इत्यनुशासनाद्भूते लट् । तेन ४'तूष्णीं बभूव ह' इत्यनेन न विरोधः । अत्र प्रकृष्टज्ञानवाचिना प्रज्ञाशब्देन देहात्मनोः स्वभावज्ञानमुच्यते । प्रज्ञया कृता व्यवहाराः प्रज्ञावादा इति समासार्थव्यञ्जनाय निमित्तशब्दः । देहात्मभेदज्ञाने सति हि पितृणां तदर्थपिण्डोदकक्रियायास्तल्लोपनिमित्तप्रत्यवायादेश्च निश्वासपूर्वको व्यवहार इत्येतत्सूचनाय 'पतन्ति' इत्याद्युपात्तम् । फलितमाह—देहात्मेति । 'गतासून्' इत्यादेर्निर्वक्षितं विशेष्यं

प्र-पा ॥ *गी. १-४२. १.

२. अष्टाध्याय्याम् ३-३ १३१. वर्तमानेति॥समीपमेव सामीप्यम्। स्वार्थे ष्यञ्। 'वर्तमाने लट्' इत्यारभ्य 'उणादयो बहुलम्' इति यावत् येनोपाधिना प्रत्यया उक्ता, ते तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि, अयमागच्छामि, अयमागमम् । कदा गमिष्यसि, एष गच्छामि, गमिष्यामि वा॥

३ इत्यनुशासनात्स 'तूष्णीं बभूव' इत्यनेन भूतत्व विरोध क. ख. ग. घ. ङ. च. छ पा

४ गी २ ९

शां॥तत्त्ववित् न 'अहङ्करोमि' इति मन्यते, न च तत्फलमभिसंधत्ते । यथा च स्वर्गादिकामार्थिनोऽग्निहोत्रादिकामसाधनानुष्ठानायाहिताग्नेः काम्यएवाग्निहोत्रादौ प्रवृत्तस्य सामिकृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति, तथा च दर्शयति भगवान्—'कुर्वन्नपि न लिप्यते' 'न करोति न लिप्यते' इति तत्रतत्र ॥

यच्च—'पूर्वैः पूर्वतरं कृत' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति, तत्तु प्रविभज्य विज्ञेयम्। तत्कथं? यदि तावत्पूर्वे जनकादयस्तत्त्वविदोऽपि प्रवृत्तकर्माणस्स्युः, ते लोकसंग्रहार्थं 'गुणा गुणेषु वर्तन्ते' इति ज्ञानेन संसिद्धिमास्थिताः, कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिताः, न कर्मसंन्यासं कृतवन्त इत्यर्थः। अथ न ते तत्त्व-

आ ॥ तत्र

ज॥इदानीं गीताव्याख्यानावसरे प्राप्ते'धर्मक्षेत्रे' इत्यारभ्य'अशोच्यानन्वशोचस्त्वम्'इत्यतः प्राक्तनस्य ग्रन्थस्यातिरोहितार्थत्वात्तात्पर्यमाह—तत्रेति॥ तत्र गीतिकाया कैश्चन श्लोकैरिदमुच्यत इति शेषः । नन्वत्र धर्मो नापि तत्त्वं प्रतिपाद्यते, तत्कुतोऽस्य गीतायामनुप्रवेशः ; नैवम्, भगवतोऽर्जुनबोधने प्रसक्तिं दर्शयतोऽस्य ग्रन्थस्य तादर्थ्यात्तत्र प्रवेशोपपत्तेः। बान्धवादिविषयो मोहो 'ममैते, अहमेतेषाम्, एते च मन्निमित्तं नङ्क्ष्यन्ति, कथमेतैर्विनाऽहं भवेयम्, पापं च मे भविष्यति, जयश्च संदिग्धः' । इत्यादिरूपो मिथ्याप्रत्ययो बान्धवादिमोहः, तेषु स्नेहो वा । सनालमिव तेन संवृतं तत एव विपी-

रा॥च्छोकनिमित्तमस्ति।गतासून् देहान् अगतासून् आत्मनश्च प्रति तत्स्वभावयाथात्म्यविदो न शोचन्ति।अतस्त्वयि विप्रतिषिद्धमिदमुप*लभ्यते;यदेतान् हनिष्यामीत्यनुशोचनम्,यच्च देहातिरिक्तात्मज्ञानकृतं धर्माधर्मभाषणम्।अतो देहस्वभावं च न जानासि, तदतिरिक्त-

ता॥निर्दिशन्,पण्डितशब्दं प्रकृतोपयोगितया व्याकुर्वन्नन्वयमाह—गतासूनिति। यद्यपि गतासूनगतासूनितिशब्दौ निष्प्राणसप्राणवाचकौ ; तथापि तस्यार्थस्य प्रकृताप्रसक्तेः—१'अविश्रान्तमनालम्बमपाथेयमदेशिकम्। तमःकान्तारमध्वान कथमेको गमिष्यसि',२' बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः। शोच्यान्यहोऽतिमोहेन व्याप्तानीति ३मनीषिणा,—इत्यादिषु पण्डितानामेव सप्राणनिष्प्राणविषयशोकदर्शनात्, 'अशोच्यानन्वशोचः' इत्यस्य वक्ष्यमाणे विस्तरे च,४'अव्यक्तोऽयम्' इत्यादिना५'अथ चैनम्' इत्यादिना च, नित्यस्यात्मनः अनित्यस्य शरीरस्य च अशोचनीयत्वेन वक्ष्यमाणत्वादत्रापि तद्विषयतैव युक्तेत्यभिप्रायः। देहास्तावन्न शोचनीयाः नश्वरत्वात्, आत्मानोऽपि तथा अनश्वरत्वात्, इत्यूहापोहक्षमबुद्धिरूपा पण्डा येषां तेऽत्र पण्डिताः। प्रज्ञावादविप्रतिषिद्धशोकेनोन्नीतांस्तदज्ञानविषयानाह—अतो देहेत्यादिना। शोकस्तु सिद्धः; प्रज्ञा तु वादमात्रस्थेति भावः। को देहस्वभावः, कथमात्मा

प्र.पा॥ *लक्ष्यते. १. २. ४-५. गी. २-२५, २६.
३ मनीषिणाम्. पा.

शा॥विदः,ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इतिव्याख्येयम्। एतमेवार्थं वक्ष्यति भगवान्—'सत्त्वशुद्धये कर्म कुर्वन्ति' इति। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्युक्त्वा सिद्धिं प्राप्तस्य पुनर्ज्ञाननिष्ठां वक्ष्यति—'सिद्धिं प्राप्तो यथा ब्रह्म' इत्यादिना॥

तस्माद्गीताशास्त्रे केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिः, न कर्मसमुच्चितादिति निश्चितोऽर्थः। यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्रतत्र दर्शयिष्यामः॥

तत्रैवं धर्मसम्मूढचेतसो महति शोकसागरे निमग्नस्यार्जुनस्यान्यत्रात्मज्ञानादुद्धरणमपश्यन् भगवान् वासुदेवस्ततोऽर्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह—'अशोच्यान्' इत्यादि॥ न शोच्या अशोच्याः भीष्मद्रोणादयः, सद्वृत्तत्वात्, परमार्थस्वरूपेण च नित्यत्वात्।तानशोच्यानन्वशोचः अनुशोचितवानसि 'ते म्रियन्ते मन्निमित्तम्,अहन्तैर्विनाभूतः किं करिष्यामि राज्यसुखादिना' इति। त्वं प्रज्ञावादान् प्रज्ञावतां

आ॥ सेनयोर्मध्ये बान्धवादिमोहजालसंवृतं विषीदन्तमर्जुनं भगवानुवाच॥ प्रज्ञावादान्

ज्ञा॥दन्तम्। विषादो नाम मोहनिमित्ताच्छोकाद्यन्मनोदौर्बल्यम्। यस्मिन्सति सर्वव्यापारोपरमो भवति। नन्विदानीमेव कुतोऽर्जुनस्य मोहसमुत्पत्तिः।न ह्येते बान्धवादय इति प्राङ्नाज्ञासीत्। येन युद्धाय महान्तमुद्योगमकार्षीदित्यत आह—सेनयोरिति॥ महापकारस्मरणेनानुवर्तमानोऽपि कोपो मृदुमनसां बान्धवादिष्वन्तकाले निवर्तते, स्नेहश्चोत्पद्यते,ततो मोह इति प्रसिद्धमेवेति भावः। अर्जुनस्य ज्ञानित्वान्मोहजालसंवृतत्वमीषदेवेति मन्तव्यम्। प्रज्ञावादानित्येतत्प्रज्ञावतां बुद्धिमतां वादान् वचनानीति कश्चिद्व्याख्यातवान् ;तदसत् ,न हि 'दृष्ट्वेमं स्वजनम्'इत्याद्यर्जुनवाक्येषु कश्चिद्बुद्धिमद्वादो दृश्यते। न हि बुद्धिमन्तो नारायणाद्विरुद्धानुबन्धिनमिममधर्मं वदन्ति। न च धर्माधर्मविषयत्वमात्रेण बुद्धिमद्वादो भवति, बौद्धादेरपि तत्त्वप्रसङ्गादित्याशयेनान्यथा व्याचष्टे—प्रज्ञावादान् इति। स्वस्या एव मनीषाया

रा॥मात्मानं च नित्यम् ;तत्प्राप्त्युपायभूतं युद्धादिकं धर्मं च । इदं च युद्धं फलाभिसन्धिरहितमात्मयाथात्म्यावाप्त्युपायभूतम्।आत्मा हि न जन्माधीनसद्भावो न मरणाधीनविनाशश्च,तस्य जन्ममरणयोरभावात् ।अतः स न शोकस्थानम्। देहस्त्वचेतनः परिणामस्वभावः;तस्योत्पत्तिविनाशयोगः स्वाभाविक इति सोऽपि न शोकस्थानमित्यभिप्रायः॥११॥

ता॥देहातिरिक्तो नित्यश्च, कथ च अनयोरशोच्यत्वम् , कथं वा घोरं युद्धादिकमात्मप्राप्त्युपायभूतम् , इत्याशङ्क्य तदज्ञानविषयतयोक्तं त्रयं [1]बुद्धिस्थक्रमेण विवृणोति—इदं चेत्यादिना । इदमेव युद्धं बुद्धिविशेषसंस्कृतत्वादात्मयाथात्म्यप्रापकमित्यर्थः । उपायभूतमित्यत्र च्विप्रत्ययाप्रयोगादयमेवास्य स्वभावः; फलान्तराभिसंधिना तु स प्रतिबध्यत इति भावः । आत्मा हीति हिशब्देन [2]'न जायते' इत्यादिश्रुतिप्रसिद्धिं द्योतयति । आत्मनो देहसंयोगवियोगलक्षणजन्ममरणसद्भावेऽपि [3]नोत्पत्तिविनाशरूपे जन्ममरणे इत्यभिप्रायेणाह—तस्येति। देहस्त्विति तुशब्द आत्मापेक्षया वैलक्षण्यं प्रत्यक्षादिसिद्धं द्योतयति । [4]देहत्वेनोपचयात्मकत्वादचेतनत्वाच्च घटादिवत्परिणामस्वभाव इत्यर्थः ॥ ११ ॥

प्र-पा॥ १. बुद्धिक्रमेण. ख. घ. पा ॥

२. कठोपनिषदि. द्वितीयवल्ल्याम्. १८ †प्रथमं तावत्प्रत्यगात्मस्वरूपमाह नजायतेम्रियतेवेत्यादिना ॥ न जायते म्रियते वा विपश्चित् विपश्चिन्मेधावी अयमिदानीमपि जननमरणशून्य इत्यर्थः । नायं कुतश्चित् उत्पादनशून्य । न बभूव कश्चित् पूर्वमपि मनुष्यादिरूपेण जननशून्य । नजायत इत्यत्र हेतुमाह अजइति । नम्रियत इत्यत्र हेतुमाह नित्य इति । न कुतश्चिदित्यत्र हेतुमाह शाश्वत इति । पूर्वं न बभूवेत्यत्र हेतुमाह पुराण इति । ननु कथमस्य नित्यत्वम् , शरीरान्तर्वर्तिनः शरीरविनाशानुविनाशित्वावश्यम्भावादित्यत आह नहन्यते हन्यमाने शरीर इति ॥

३. न शून्यपत्ति. क. ग ग ङ च. पा देहस्त्विति घ ङ. पा ॥

४ देहत्वेनोपचयात्मकत्वात्-'दिह उपचये' इति उपचयार्थकधातुनिष्पन्नदेहशब्दवाच्यत्वेन उपचयस्वभावत्वात् 'अचेतन' इति हेतुगर्भं विशेषणमित्यभिप्रेत्य 'अचेतनत्वाच्च घटादिवत्परिणामस्वभाव' इति ॥

शा॥बुद्धिमतां वादांश्च वचनानि च भाषसे। तदेतन्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः।यस्माद्गतासून् गतप्राणान्मृतान् अगतासूनगतप्राणान् जीवतश्च नानुशोचन्ति पण्डिता आत्मज्ञाः । *ते हि पण्डिताः, 'पाण्डित्यं निर्विद्य' इति श्रुतेः । परमार्थतस्तु तान्नित्यानशोच्याननुशोचसि, अतो मूढोऽसीत्यभिप्रायः ॥ ११ ॥

आ ॥ स्वमनीषोत्थवचनानि । कथमशोच्याः—गतासून् ॥

ज॥ उत्थितानि,न तु शास्त्राचार्योपदेशप्राप्तानि। कथमेतल्लभ्यते, उच्यते—प्रज्ञायाः वादाः प्रज्ञावादाः । कार्यकारणभावे षष्ठी। न हि स वादोऽस्ति, यः प्रज्ञापूर्वो न भवतीति । सामर्थ्यात्स्वेति लभ्यते । सावधारण चैतत् अब्भक्ष इति यथा, अन्यथा पुनर्वैयर्थ्यादिति । कथमशोच्या इत्यत आहेति शेषः । गतासूनित्यतः परम् इतिशब्दः ॥

आसन्नविनाशाः कथमशोच्या इत्यर्थः।ननु प्रागशोच्यत्वानुवादेनान्वशोच इत्येवोक्तम् ,न त्वशोच्यत्वम्; तत्कथमेवमाक्षेपः । नैवम् ; न हि यथाश्रुतैवाऽत्र वाक्यवृत्तिः, असिद्धस्यानुवादः, सिद्धस्य बोधनमित्यापत्तेः । किन्तु यानन्वशोचस्त्वं तेऽशोच्यास्तस्मात्तान् प्रति न शोकः कार्यः । यांश्च भाषसे ते प्रज्ञावादाः अतो न भाषणीया इति । तथाचाशोच्याः कुतोऽवगन्तव्या इति प्रश्नो वा आक्षेपो वा युज्यत एव ॥ ११ ॥

पा ॥ * पण्डा आत्मविषया बुद्धिर्येषां ते हि. पा.

रा-अ ॥ प्रथमं तावदात्मनां स्वभावं शृणु—

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥** १२

रा ॥ अहं सर्वेश्वरस्तावत्, अतो वर्तमानात्पूर्वस्मिन् अनादौ काले,*न नासम्—अपि त्वासम्। त्वन्मुखाश्चैते ईशितव्याः क्षेत्रज्ञाः न नासन्—अपि त्वासन्। अहं च यूयं च सर्वे वयम्, अतः परम् अस्मादनन्तरे काले, न चैव न भविष्यामः—

ता॥एवमुपायोपेयनिवर्त्यस्वभावानभिज्ञं प्रति त्रितयोपदेशाय मुमुक्षोत्पादिता । अथ पारलौकिकफलोपायानुष्ठानाधिकारित्वाय देहातिरिक्तत्वेनावश्यं ज्ञातव्यं पुरुषार्थतयोपेयमात्मानं तत्प्राप्तीच्छामुखेन तदुपायेच्छाजननाय प्रथममेवोपदिशतीत्यभिप्रायेणाह—**प्रथममिति।** शृण्वित्यनेन १प्रकृतश्लोकस्य प्रतिवादिवाक्यवदुपालम्भमात्रार्थताव्युदासाय २अवधानापादनार्थत्वं व्यञ्जितम् । जीवेश्वररूपेप्यात्मनु नित्यत्वे झीयसंप्रतिपत्तियोग्यांश प्रथममाहेत्यभिप्रायेणाह—**अहमिति** । ईश्वरस्याहंपदः सर्वनियन्तृत्वगर्भं इति तद्व्यपदेशफलितमाह—**सर्वेश्वर इति** । तावदिति संप्रतिपत्तिसूचनम् । 'अतः परम्' इत्यत्र अतःशब्दार्थम्, तस्य पूर्ववाक्येऽपि यथार्हमनुषङ्गम्, जातुशब्दाभिप्रेतं च, आह—**अत इत्यादिना** । ३अनभिमतपक्षनिषेधाय व्यतिरेकरूपेऽपि वाक्ये तुशब्दद्योतितमन्वयमाह—**अपि त्वासमिति** । 'न त्वं नेमे' इति भेदनिर्देशेऽपि ४क्षेत्रज्ञत्वाकारेण समुदायीकुर्वन्, ईश्वरापेक्षया युष्मदिदंशब्दार्थतया फलितमीशितव्यत्वाकारं च साधारणं दर्शयन्, संनिहितनिदर्शनपरतया एकदेशोक्तेस्तात्पर्यतो ब्रह्मादिसकलक्षेत्रज्ञविषयत्वं चाह—**त्वन्मुखा इति** । तुशब्दानुषङ्गं ५क्रियापदे विभक्तिविपरिणामं च दर्शयति—**अपि त्वासन्निति** । 'न त्वं नेमे जनाधिपाः' इत्यत्र न त्वेवेत्येतदनुषज्य, न त्वं नासीः, नेमे जनाधिपा नासन् इत्यन्वयः । 'सर्वे वयम्' इत्यस्य पूर्वोक्तजीवेश्वरसमुदाये संप्रतिपत्तव्यांश विविनक्ति—**अहं चेति** । ६'त्यदादीनां मिथोयोगे यः परः स शिष्यते' इति युष्मदस्मदोरेकशेषः ।

**प्र-पा॥** *'न नासम्' इत्यनेन भूतकालीनसत्त्वाभावाभावस्य तादृशसत्तारूपस्य नञ्द्वयेनात्मनि प्रतिपादनेऽपि भूतसकलकालीनसत्ताया आत्मनोऽनवगमात् नित्यत्वसिद्धिरित्यनन्तरवाक्यस्थस्य 'अतः' इत्यस्य पूर्ववाक्येऽप्यनुषङ्गं 'पूर्वस्मिन्, अनादौ, काले' इति पदत्रयाध्याहारं च अभिप्रेत्य भाष्ये 'अतः पूर्वस्मिन्ननादौ काले' इत्युक्तम्, तथा च उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयमहिम्ना भूतसत्ताया आत्मनो वर्तमानकालप्राक्कालव्यापकत्वभावेनोद्देश्यसिद्धिः. 'अनादौ' इति पदाध्याहारोऽपि उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयं द्योतयतीति तत्सार्थकम्, अन्यथा काले अनादित्वविशेषणं व्यर्थमेव स्यात्, जातुशब्दोऽपि तमेवान्वयं द्योतयतीति तस्यापि सार्थक्यम्, स्पष्टमिदं चन्द्रिकायां 'जातुशब्दाभिप्रेतम्' इत्यत्र ॥

१. प्रथमशं. पा ॥

२. अवधानापादनक्षमत्व. क. ग. ङ. पा ॥

* ३. अनभिमतपक्षनिषेधाय- आत्मनोऽसद्विलक्षणत्वमिदं वाक्यं बोधयतीति पक्षव्युदासायेत्यर्थः॥

४. क्षेत्रज्ञाकारेण. ग. ग. घ. ङ. च. पा॥

५. क्रियापदविभक्ति. घ. ङ. च. छ. पा॥

६. 'त्यदादीनि सर्वैः' इति सू. वार्तिकम् ॥

शं॥कुतस्ते अशोच्याः?यतो नित्याः, कथं?—न त्वेव जातु कदाचित् अहं नासम्, किं त्वासमेव।अतीतेषु देहोत्पत्तिविनाशेषु नित्य एवाहमासामित्यभिप्रायः।तथा न त्वं नासीः,

आ ॥ किमिति ।

ज॥ किमिति कस्मात्कारणात्पण्डिता अप्यगतासूनिव गतासूनासन्नविनाशाननुशोचन्तीति शेषः ।

रा॥अपि तु भविष्याम एव । यथाह सर्वेश्वरः परमात्मा नित्य इति नात्र संशयः, तथैव भवन्तः क्षेत्रज्ञा आत्मानोऽपि नित्या एवेति मन्तव्याः । एवं भगवतः सर्वेश्वरात् आत्मनां परस्परं च भेदः पारमार्थिक इति भगवतैवोक्तमिति प्रतीयते,

ता॥एवमुत्तरत्र'भवन्त 'इत्यत्रापि मन्तव्यम्।कालानन्त्यात् पर्वतादीनामिवातिस्थिराणामपि कदाचित् ना
श स्यादित्युक्ते रा निवारयति—अपि तु भविष्याम एवेति। अप्रस्तुतस्वनिदर्शनस्य दृष्टान्तार्थताम्,तत्र अहमिति निर्देशाभिप्रेतमनश्वरत्व१सर्वात्मत्वरूपनित्यत्वोपपत्तिम्,दार्ष्टान्तिके च २नित्यत्वसम्भावनामाह —यथेति। सर्वेश्वर कालत्रयवर्तिन सर्वस्याधिपति कथं न कालत्रयवर्ती, कथं च ३सर्वथा नियन्ता केनचित्कदाचिन्निरुद्धयेतेति भाव । परमात्मा —४'देशकालस्वरूपानवच्छिन्नव्याप्ति 'इति परमात्मपदनिरुक्ति । तथा च व्याप्तत्वात् व्याप्यैरस्य न नाश , सर्वात्मत्वेन सर्वकालवर्तित्वं च सिद्धमिति भाव । ननु य प्रत्यक्षयोग्ये देहातिरिक्ते जीवेऽपि संशेते, स कथं ततो व्यतिरिक्तेऽत्यन्तागोचरे परमात्मनि नि संशय स्यात् ? उच्यते—न ह्यसावपुंन, ५'पुरुषं शाश्वतं दिव्यम् ' इत्यादेः स्वयं वक्ता, नारदासितदेवलव्यासादिपरमर्षिशतवचनविदितपर६ब्रह्मभूतपरमपुरुषस्वभाव ,प्रत्यक्षीकृतपुरन्दरलोक७सकलास्त्रमन्त्रप्रभावादि , निरतिशयगुरुदेवताभक्ति , अस्खलितसकलवर्णाश्रमाचार , धर्मलोपभयविह्वल ,देहातिरिक्तमात्मानमीश्वरं ८चात्यन्ताय नास्तीति भ्राम्यति संशेते वा । तत्प्रकारविशेषानभिज्ञतयैव हि तस्य शोकादि । ततोऽयमीश्वरं तन्नित्यतां च सर्वेश्वरत्वादिसिद्धां सामान्यतो मन्यते, लोकदृष्ट्या जन्मविनाशादिदर्शनात्, ९'न प्रेत्य संज्ञास्ति ' इत्यादिश्रुत्यर्थापातप्रतीत्या च, जीवप्रकारविशेषान्तरं तु न जानातीति न कश्चिद्दोष ।क्षेत्रज्ञा आत्मान इति—यथा जीवात् परमात्मनो वैलक्षण्येन जीवस्वभावास्मिन्न भवति, तथा क्षेत्राद्विलक्षणत्वेन वक्ष्यमाणेन क्षेत्रगतमनित्यत्वादिकं न तन्नियन्तरि जीवे शङ्कनीयमिति भाव ॥

अथ कुमतिसौचिकविनिर्मितानामामूलचूडमघटित१०निघटितवस्त्रपटच्चरकल्पकन्थासगन्धानां प्रबन्धानां दोषान् स्थालीपुलाकन्यायेन निदर्शयन् ,प्रथमं शास्त्रोपक्रमविरोधं शास्त्रप्रवृत्त्यनुपपत्तिं च वदति —एवमित्यादिना,एवं तत्त्वोपदेश११प्रवृत्तशास्त्रारम्भोक्तिप्रकारेणेत्यर्थ । भगवत सर्वेश्वरादिति। उभयलिङ्गात् सर्वनियन्तु अहमिति निर्देशादित्यर्थ । यदीश्वराज्जीवाना भेद पारमार्थिको न स्यात्, उभयलिङ्गत्वादु नित्यत्वादिस्वभावसङ्कर स्यात्, यदि चात्मना मिथोभेद सत्यो न स्यात्, तद्बुभुक्षुशिष्याचार्यादिव्यवस्थानुपपत्ति स्यादिति भाव । भगवतैव—न तु रथ्यापुरुषकल्पेन केनचित् । यद्वा १२'त्वमेव त्वा वेत्थ, योऽसि सोऽसि',१३'सो अङ्ग वेद यदि वा न वेद', इत्युक्तेन भगवता स्वेनैव

प्र पा॥१ सर्वा मक व पा॥ २ सम्भावनामाह पा॥ ३ सर्वेषा न निय पा।† ४देशकालानवच्छिन्ना व्याप्तिर्यस्मिन् वर्तते हि ॥ ५ गी १० १२॥६ ब्रह्मरूपपरम पा॥ ७ सकलशास्त्र पा॥ ८ नात्यन्तानित्यतया पा॥ ९ बृहदारण्यकोपनिषदि ४ अ ४ ब्रा १२ वा †न प्रेत्यति ॥ प्रेत्य चरमदेहवियोग प्राप्य, मोक्षदशाया स्वाभाविकापरिच्छिन्नज्ञानैकाकारभावेन न संज्ञास्ति, सभिन्यकाकार, शाखातोर्गानमर्थ , ततश्च भूतसंघातेनैकीभूयज्ञान संज्ञाशब्दार्थ ॥ १० सघटित पा॥ ११ प्रवर्तित पा॥ १२ यजुषि काठके १ प्रश्न ६ पा॥ १३ ऋग्वेद ८ अष्ट ७ अ ११ मण्ड ११. अनु ७ वा यजुषि २ अष्ट ८ प्र ९ अनु ७५ पा॥

श ॥ भित्यासीरेव । तथा नेमे जनाधिपा नासन्, नित्यासन्नेव । तथा—न चैव न

आ ॥ न त्वेवाहम् ॥

जा॥अत्र नित्यत्वादिरुत्तरं 'कुतो नित्यत्वमित्यत आह'इति वाक्यं चाध्याहार्यम्, क्रत्वाहमित्यत परम्

रा॥अज्ञानमोहितं प्रति तन्निवृत्तये पारमार्थिकनित्यत्वोपदेशसमये अहं त्वम् इमे सर्वे वय-
मिति व्यपदेशात् । औपाधिकात्मभेदवादे हि आत्मभेदस्यातात्त्विकत्वेन तत्त्वोपदेशसमये
भेदनिर्देशो न संगच्छते । भगवदुक्तात्मभेदः स्वाभाविक इति श्रुतिरप्याह—*'नित्यो
नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इति ।

ता॥ स्वस्य स्वशरीरभूतजीवानां च तत्त्वमुक्तमिति प्रतीयत इत्यभिप्रायः। अज्ञानमोहितमिति —न हि
स्वयं यम्भ्रम्यमाणस्यास्तेनापि भ्रान्तिरेवोत्पादनीयेति भावः। १बुद्धाद्यवतारेणासुरादिभ्य इवायमुपदेशः किं
न स्यादित्यत्रोक्त—तन्निवृत्तय इति। मोहनिवृत्त्यर्थां गीतोपनिषदिति भवद्भिरपि स्वीकृत्य व्याख्यानादि
च कृतमिति भावः । २देहभेदाभिप्रायेण बहुवचनम् ,नात्मभेदाभिप्रायेणेति शंकरोक्तं दूषयति— पार-
मार्थिकेति । न ह्यसौ 'न त्वेवाहम्' इत्यादिग्रन्थो ३भ्रान्तिनिवृत्त्यर्थो मन्त्रपाठः, येन भेदनिर्देशस्या-
न्यपरता मन्येमहि, किं त्वसौ तत्त्वार्थोपदेशरूप इति भावः । अहम् इति प्रत्यक्त्वेन, त्वम् इति
स्वाभिमुखचेतनान्तरत्वेन, इमे इति स्वपराङ्मुखानेकचेतनत्वेन, सर्वे इति ४एकोपाधिमगृहीता-
नेकव्यक्तित्वेन, वयम् इति स्वेन सहात्मतयैकवर्गीकृतानन्तव्यक्तित्वेन इति भावः । इति
व्यपदेशादिति—न ह्यत्र नाहमिति ५किं चिदस्ति न च त्वमिति नाप्यन्य इति प्रत्यादेशः कृत
इति भावः । भास्करमते भेदस्य सत्योपाधिप्रयुक्तत्वात् भेदनिर्देश उपपद्यत इति शङ्कायां तत्रापि
सामान्यत उक्तं दूषणमपरिहार्यमित्याह —औपाधिकेति । हिशब्द उपाधिभेदोपहितस्य परोक्तघटाका-
शाद्युदाहरणेष्वपि भेदाशातात्त्विकत्वाभ्युपगमपरः । उपाधिसत्यत्वेऽपि यथैकस्यैव मुखचन्द्रादेर्मणिकृपा-
णसरित्समुद्रादिभिः सत्यैरप्युपाधिभिर्भेदोऽपारमार्थिकः,यथा चैकस्यैवाकाशादेर्घटमणिकादिसत्योपाधि-
भिरपि सयोगभेदातिरिक्तो नोपाध्यधीनो भेदः,एवमन्तःकरणादिभिः सत्यैरप्युपाधिभिर्निरवयत्वेन छेद-
नभेदनाद्ययोग्यस्य सर्वत्र परिपूर्णस्य ब्रह्मणो भेदोऽपारमार्थिक इत्यभ्युपगन्तव्यम् । ततश्च तत्त्वोपदेश-
समये तद्विपरीतोपदेशो हितोपदेशिनो न घटत इति भावः । द्वयोरपि पक्षयोः श्रुतिविरोधोऽपि दूष-
णम् , स्वपक्षे च श्रुत्यैकार्थ्यात्र बुद्धागमादिवन्मोहनार्थत्वशङ्केत्यभिप्रायेणाह—भगवदिति । यद्वा भा
स्करपक्षदूषणायैव श्रुतिरुपात्ता; ततश्च कैमुत्येन शंकरपक्षोऽपि दूषितः। अपिशब्दः प्रमाणद्वयसमुच्चये ।
भगवदुक्तात्मभेद इत्यनेन श्रौतवदेव प्रमाणान्तरनैरपेक्ष्यं सूच्यते । श्रुतिरपि नित्या तदाज्ञारूपतयैव हि
प्रमाणम् । ६'नित्यो नित्यानाम्' इत्यत्र ७'पवित्राणां पवित्रम्'८इत्यादिवद्योजनया ९जीवानित्यत्वपर्यव-
सितमर्थान्तरभ्रमं निरस्यन्, नित्यत्वबहुत्वचेतनत्वसामानाधिकरण्येन निरुपाधिकमेवात्मना बहुत्वं
चेतनत्वं चेति प्रदर्शयन् , तत एवात्मानित्यत्ववादिनां सौगतादीनाम् अविद्यादिमूलभेदवादिनां शंक-
रादीनाम् आगमापायिचैतन्यवादिनां वैशेषिकादीनां चिच्छक्तिमात्रनित्यत्ववादिनामन्येषामपि निरसम-
भिप्रयन्, प्रथमान्तपदचतुष्टयसामानाधिकरण्यबलादीश्वरैक्यं तदैक्यस्य हिरण्यगर्भरुद्रेन्द्रादियत्कालादि-

प्र-पा॥ *१. बुद्धाद्यवतारेण - बुद्धादिवदवतारेण॥
२. देहभेदानुवृत्त्या. पा॥ *३. भ्रान्तिनिवृत्त्यर्थो
मन्त्रपाठः - अदृष्टद्वारा तन्निवृत्त्यर्थो मन्त्रपाठ इत्यर्थः॥
*४.एकोपाधिः-सर्व-वरूपो धर्मः॥ ५.कश्चि.पा॥
*६. श्वेताश्वतरोपनिषदि. ६. १३. कठ. २. ५.
१३. गोपालतापनी पूर्व. १॥ ७. महाभारते. अनु-
शासनपर्वणि सहस्रनामाध्याये. १०-श्लो ॥
८. इत्यादिवद्योजनाया. क. ग. ङ. च. पा॥
*९.'पवित्राणां पवित्रम्'इत्यत्र तद्धेतुभूतं पवित्र-
मित्यर्थः. तद्वदात्मना हेतुत्वं चेत्प्रतीयते,तदा आत्मना-
मनित्यत्वं स्यादित्यर्थः. ॥

ज॥ इतिशब्दश्च । अर्जुनं निमित्तीकृत्य प्रायलोकोपकारार्थं हि भगवतोपदेशः क्रियते।तत्र ये भगवतः

य ॥ *नित्याना बहूना चेतनाना य एको नित्यश्चेतन*, स कामान् विदधातीत्यर्थ । अज्ञानकृतभेददृष्टिवादे तु परमपुरुषस्य परमार्थदृष्टेर्निर्विशेषकूटस्थनित्यचैतन्यात्मयाथात्म्यसाक्षात्कारान्निवृत्ताज्ञानतत्कार्यतया अज्ञानकृतभेददर्शन तन्मूलोपदेशादिव्यवहाराश्च न सगच्छन्ते । अथ परमपुरुषस्याधिगताद्वैतज्ञानस्य बाधितानुवृत्तिरूपमिद भेदज्ञान दग्धपटादिवन्न बन्धकमित्युच्यते—नैतदुपपद्यते मरीचिकाजलज्ञानादिक हि बाधितमनुवर्तमान न जलाहरणादिप्रवृत्तिहेतु । एवमत्राप्यद्वैतज्ञानेन बाधित भेदज्ञानमनुवर्तमानमपि मिथ्यार्थविषयत्वनिश्चयान्नोपदेशादिप्रवृत्तिहेतुर्भवति ।

ता॥भेदाभेदत्वेन प्रवाहेश्वरपक्षमति वेपि श्रुत्यन्तरादिप्रसिद्धानन्तचैतन्य[1]प्रसवादिक सूचयन्, [2]'यदा मैव' इत्यादियदनुवादलिङ्गसद्भावेऽप्यप्राप्तत्वान्न विधिनिर्विघ्न च व्यञ्जयन्, सर्वदा सत्र सर्वेषा चेतनानामेक एवेश्वरस्तत्तत्कर्मसमाराधितस्तत्तदनुरूपाण्यपेक्षितानि करोतीति श्रुत्यर्थमाह—**नित्यानामिति** । पुन सिद्धान्तगोचरेण शकरमतस्योपदेशानुपपत्तिरूप शास्त्रारम्भमूल[3]घातमाह—**अज्ञानेति** । किमय भगवान् स्वेन ज्ञातमर्थमुपदिशति, अज्ञात वा? ज्ञातमपि साक्षात्कृतम्, श्रुतमात्र वा? उभयथापि तदज्ञान निवृत्तम्, अनिवृत्त वा? तन्निवृत्तावपि तत्कार्यभेदभ्रमो निवर्तते, न वा? इति विकल्पमभिप्रेत्य साक्षात्कारादज्ञानतत्कार्यनिवृत्तिपक्षे दूषणमाह **परमपुरुषस्येति** । क्लेशस्य हि अपरमार्थदृष्टि स्यादिति भाव । **निर्विशेषेत्यादि**—निर्विशेषत्व सजातीयविजातीयस्वगतभेदराहित्यम्, कूटस्थत्व मायानिष्ठत्वम्, साधारण्यम्, निर्विकारत्व वा— स्वयमविक्रियमाणस्यापि कूटस्य यथा स्वममर्गिणामय प्रभृतीना विकारहेतुत्व तद्वत्, तत एव नित्यत्व कालानवच्छिन्नत्वम्। **याथात्म्यम्** उक्तप्रकारम्, अयथासाक्षात्कारोऽस्मदादीनामपि परैरभ्युपगत इति तद्व्युदासाय **याथात्म्यसाक्षात्कारेति** । अज्ञानम् अविद्या तत्कार्या भेदभ्रम आदिशब्देनानुष्ठापनादि गृह्यते । उपदेशादिव्यवहारा हि उपदेश्यार्थतद्वाक्याधिकारादिभ्य आर्यप्रयाजभेदादिनानाविधभेददर्शनमूल । भेददर्शन चाज्ञानेनैव कृतमिति त्वन्मतम् । ततश्चाज्ञानतत्कार्यनिवृत्तौ कथ तत्कार्यपरम्परानुवृत्तिरिति व्याघातापसिद्धान्तशास्त्रानारम्भापदेशाभावनिष्फलपरिश्रमत्वश्रुतिविरोधादिदोषशतमुन्मिषदिति भाव ॥

अद्वैतज्ञानादज्ञाननिवृत्तावपि [5]वासनादिवशाद्भेदभ्रमस्यानुवृत्ति तस्य चाबन्धकत्वमाशङ्कते—*अथेति* । *दग्धपटादिवदिति*—यथा दग्धपटाद पटादिप्रतिभासविषयत्वेऽपि न पटादिकार्यकरत्वम्, तद्वदत्र भेदभ्रमस्यानुवृत्तस्यापि न ससार[6]हेतुत्वमिति भाव । **नैतदुपपद्यत इति**—दृष्टान्तमात्रमुक्त नतूपपत्ति, प्रत्युतानुपपत्तिश्च विद्यत इति भाव । अनुपपत्ति सोदाहरणमाह—**मरीचिकेति** । एवमत्र प्रसङ्ग —विप्रतिपन्न भेदज्ञानमद्वैतज्ञानबाधिततया मिथ्यार्थमिति निश्चित चेत्, न स्वविषयानुरूपप्रवृत्तिहेतु स्यात्, यथा बाधितानुवृत्त मरीचिकाजलज्ञानम्—इति । एव च बाधितानुवृत्तभेद

प्र पा॥ [1] प्रसरादिक ग क ख ग घ ङ च छ पा॥　[4] नुष्ठानादि पा॥　[5] वासनावशात् घ
[2] यजुषि ३ अष्ट ९ प्रश्न १७ अनु॥　ख ग घ ङ ज पा॥　[6] हेतुत्वमित्यर्थ क ख
[3] घातकमा क ख ग घ ङ च छ पा॥　ग घ ङ पा॥

आ ॥ ईश्वरनित्यत्वस्याप्रस्तुतत्वाद्दृष्टान्तत्वेनाह—

ज॥कृष्णस्येश्वरत्व नित्यत्व च न जानन्ति, तान् प्रति यथाश्रुतैव योजना दृष्टान्तस्तूत्तरत्र भविष्यति । ये तु तज्ज्ञात्वा जीवनित्यत्वमेव न जानन्ति, तान्प्रत्ययथा याज्यमित्याह—**ईश्वरेति** ॥ अप्रस्तुतत्वादना

रा॥ न चेश्वरस्य पूर्वमज्ञस्य शास्त्राधिगततत्त्वज्ञानतया बाधितानुवृत्तिः शक्यते वक्तुम्; *'यः सर्वज्ञः सर्ववित्', † 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', ‡ 'वेदाहं समतीतानि वर्तमानानि चार्जुन। भविष्याणि च भूतानि मां तु वेद न कश्चन', इति श्रुतिस्मृतिविरोधात्। किंच परमपुरुषश्चेदानीन्तनगुरुपरम्परा च, अद्वितीयात्मस्वरूपनिश्चये सति अनुवर्तमानेऽपि भेदज्ञाने, स्वनिश्चयानुरूपमद्वितीयात्मज्ञानं कस्मा उपदिशतीति वक्तव्यम्।

---

ता॥ज्ञानं दग्धपटादिवत् न स्वकार्यकरमिति बाधितानुवृत्तिफलाभावात् स्वेष्टव्याघात इति भावः। श्रुतमालम्बेऽपि निर्विशेषविषयसाक्षात्कारश्रवणयोर्विषयानतिरेकेणाज्ञाननिवृत्तिरनुपपन्नेति [1]कृत्वा सर्वेश्वरे बाधितानुवृत्तिस्वरूपं दूषयति—न चेति। ईश्वरत्वादेव पूर्वमज्ञ इति वक्तुं न शक्यते, अनीश्वरत्वप्रसङ्गात्। ईश्वरोऽपि चेत् पूर्वमज्ञः, तस्य शास्त्राधिगमोऽपि न सम्भवति, तदधिकज्ञानवतोऽन्यस्य शास्त्रोपदेष्टुरभावात्। भावे वा [2]स एवेश्वरोऽनीश्वरो वा सन् [3]कुत रिसद्धज्ञान इत्यनवस्थादिदोषात्। न च प्रवाहेश्वरपारम्पर्यमस्ति, तस्य दूषितत्वात्। न चेश्वरः स्वकृतेन शास्त्रेण तत्त्वमवगच्छति, वेदानित्यत्वान्योन्याश्रयादिप्रसङ्गात्। न चानादीनेव वेदान् स्मृत्वा तैरर्थमधिजगाम; स्मृत्यादिहेतोः पूर्वोपलम्भस्याप्युपदेष्ट्रभावादिदुःस्थत्वात् इत्यादिदोषानभिप्रेत्योक्तं पूर्वमज्ञस्येत्यादि। ईश्वरस्य पूर्वमज्ञत्वे शास्त्रार्थनिज्ञानत्वे तदुपदेष्ट्रन्तरसद्भावे भ्रान्त्यनुवृत्तौ च श्रुतिस्मृतिविरोधमाह—यः सर्वज्ञ इति। [4]स्वरूपतः प्रकारतश्च सर्वं [5]जानाति वेत्तीति विवक्षया सर्वज्ञसर्वविच्छब्दयोरपुनरुक्तिः; सर्वं विन्दति प्राप्नोतीति वा सर्ववित्॥

एवमुपदेशस्य हेत्वनुपपत्तिरुक्ता। [6]अथोपदेष्टृतापि नोपपद्यत इत्याह—किं चेति। इदानीन्तनेति। न केवलमीश्वरकृतः प्रथम एवोपदेशोऽनुपपन्नः, अपि [7]त्वद्यतनोऽपीति, मठपतिपरम्परायाः शिष्यास्कुक्षिम्भरेः शिष्याद्यभावात्प्रायोपवेशनं प्रसज्यत इति भावः। अज्ञातोपदेशपक्षानुपपत्तिमभिप्रेत्याह—[8]स्वनिश्चयेति। न ह्येतेऽनुपलब्धार्थाः, नापि सन्दिग्धार्थाः, नापि विप्रलम्भकाः, न च परोक्तानुवादिनः, नापि बालोन्मत्तादिवद्यथोपनत जल्पाकाः, इति भावः। कस्मा इति। स्वस्मै परस्मै वा? पूर्वत्र भिन्नतया निश्चिताय, अन्यथा वा? भिन्नतयेत्यत्रापि सत्यतया निर्णीताय, असत्यतया वा? परस्मा [9]इत्यत्रापि तात्त्विकाय, अतात्त्विकाय वा? अतात्त्विकत्वेऽपि तथा प्रतीताय, अन्यथा वा? इति विकल्प्य प्रश्ने तदुत्तरं वक्तव्यमित्यर्थः। [10]तत्र स्वस्यैव भिन्नस्य [11]सत्यत्वनिश्चयेऽपसिद्धान्ताशत्वादिदोषप्रसङ्गः। असत्यत्वनिश्चये वन्ध्यातनयादिभ्य इवानुपदेशः। अभिन्नतया निश्चिताय स्वस्मै चेत्,

---

प्र-पा॥* [illegible]. उप. १. २. ९; २. २. ७॥
† श्वे. उ. ६. ७॥ ‡ गी. ७-२६॥
१. कृत्वाथ सर्वे. क. ख. ग. घ. च. छ. पा॥
२. स एवेश्वरः सन् पा॥
३. कुतश्चित् सिद्ध. पा॥ ४. स्वरूपतश्च प्रका. पा॥
५. जानातीति विवक्षया. क. ख. ग. घ. ङ. च. छ. पा॥
६. अथ वोतापि. पा॥ ७. त्वद्यतनकुमनिमठ. पा॥
८. स्वनिश्चयानुरूपमिति. क. ख. ग. ङ. छ. पा॥
९. इत्यपि. ग. घ. ङ. च. छ. पा॥
१०. अत्र. पा॥ ११. सम्यक्त्व. पा॥

---

ज॥शङ्कितत्वाद्दृष्टान्तत्वेनाह। जीवनित्यतायां साध्यायामीश्वरमितिशेषः। अत एव कृष्णेत्यनुक्त्वा ईश्वरेत्युक्तम्; नन्वीश्वरनित्यत्वं कुतः सिद्धम्; पूर्वार्द्धे वाक्यत्रयसद्भावात्, कथं वियोजनासम्भवेऽपि

रा॥प्रतिबिम्बवत्प्रतीयमानेभ्योऽर्जुनादिभ्य इति चेत्—नैतदुपपद्यते;न ह्यनुन्मत्तः कोऽपि मणिकृपाणदर्पणादिषु प्रतीयमानेषु स्वात्मप्रतिबिम्बेषु, तेषां स्वात्मनोऽनन्यत्वं जानन्, तेभ्यः *किमप्युपदिशति । बाधितानुवृत्तिरपि नैवं शक्यते वक्तुम्; बाधकेनाद्वितीयात्मज्ञानेनात्मव्यतिरिक्तभेदज्ञानकारणस्यानादेर्विनष्टत्वात् । द्विचन्द्रज्ञानादौ तु चन्द्रैकत्वज्ञानेन पारमार्थिकतिमिरादिदोषस्य द्विचन्द्रज्ञानहेतोरविनष्टत्वात् बाधितानुवृत्तिर्युक्ता; अनुवर्तमानमपि प्रबलप्रमाणबाधितत्वेनाकिंचित्करम् ।

ता॥ १अर्जुनादिप्रतिभासमात्रेण सर्वोपदेशः स्यात्;न २च तत्रोपदेशस्य किंचित्प्रयोजनमस्ति। परस्मै तात्त्विकार्थेति तु शरीरभेदेऽपि भवानभ्युपगच्छति । अतात्त्विकस्तवैव प्रतीताय परस्मै चेत्, पूर्वदेवानिर्वचनीयत्वेनासत्त्वेन वा निश्चितेभ्यः प्रतिबिम्बवन्मात्रमनुनादिभ्योऽप्युपदेशप्रसङ्गः । अतात्त्विकस्यैव परस्य तात्त्विकत्वबोधे तु तत्त्वबोधितत्वमेव न स्यादिति न तत्त्वोपदेशित्वसिद्धिरिति निश्चितं, परमार्थेन एकस्येऽपि भ्रान्त्या भिन्नतया प्रतीयमानेभ्यो बाधकज्ञानबलेनाभिन्नतया निश्चितेभ्यश्चेति च भाष्यते—प्रतिबिम्बवदिति । दूषयति—नेति । अनुपपत्तिं विवृणोति—न हीति।अनुन्मत्त इति—ईश्वरादेरुन्माद एव भवता स्वीकृतः स्यादिति भावः । कोऽपीति—किमुतेश्वर इति भावः । अनन्यत्वं जानन्निति —३अनन्यत्वमजानन्तो बालादयः काममुपदिशेयुः;अतोपदेशुरन्यत्वाध्यवसाये भ्रान्तत्वादिप्रसङ्ग इति भावः। ४किमपीति—लौकिकमलौकिकं वा दृष्टार्थमदृष्टार्थं वा, किं पुनर्मोक्षार्थमित्यर्थः । बाधितानुवृत्तिस्वरूपमभ्युपगम्य पूर्वं दूषणान्तरमुक्तम्;इदानीं ५तन्मते तदेव न सिध्यतीत्याह—बाधितेति । उपपादयति—बाधकेनेति । न हि कारणाभावे कार्यं घटेत, न च दोषनिवृत्तौ भ्रान्तिनिवृत्तिर्न स्यादिति वक्तुं युक्तम् । अनादेरिति—स्वरूपतः प्रवाहतो वा अनादेस्त्वानिवर्त्यतयैतावन्तं कालमनुवृत्तस्य भेदज्ञानकारणभूतस्य दोषस्य यदि अद्वैतज्ञानेनापि नाशो न स्यात्,नित्यसंसारित्वप्रसङ्गः स्यादिति भावः । अत्राज्ञानादेरिति क्वचित्पाठः, तत्रादिशब्देन भेदभ्रमस्तद्विषयश्च गृह्यते । परैरुदाहृते दृष्टान्ते बाधितानुवृत्तेरुपपत्तिमाह—द्विचन्द्रेति । पारमार्थिकेति—न हि पारमार्थिकं बाध्येत, तथा सति ६बाधानाभविरुद्धप्रसङ्गादिति भाव.। द्विचन्द्रज्ञानहेतोरिति—न हि बाधकज्ञानेन पूर्वज्ञानस्य कारणं बाध्यते, इन्द्रियादेरपि बाधप्रसङ्गात् । अतो विषय एवारोपितस्तदधिष्ठानविपर्येण विरुद्धाकारग्राहिणा ज्ञानेन बाध्यः । न चात्र तिमिरादिद्विचन्द्रज्ञानस्य चन्द्रैकत्वज्ञानस्य वा विषयः । भवतस्तु समस्तभेदभ्रमोपादानस्याज्ञानस्यानादेः साक्षिचैतन्यविषयत्वात्, बाधकज्ञानस्य चाद्वितीयात्मव्यतिरिक्त७समस्तभावगोचरत्वात्, ८कारणस्याप्यनादेर्बाधएवेति भावः । युक्तेति—सामग्र्यनुवृत्तौ कार्यानुवृत्तिरुपपन्नेति भावः । यदि भ्रान्तिरनुवृत्ता कथं तर्हि तत्कार्यविस्मयभयादिनिवृत्तिरित्यत्राह—अनुवर्तमानमपीति। प्रबलशब्देन परपक्षे भेदभ्रमतद्बाधकयोरविशेषः सूचितः। द्वयो-

प्र-पा॥*कमप्ययंमु पा.कथमप्ययंमु पा. †स्वाज्ञानादेविनष्टत्वात्.पा. १. अर्जुनादिप्रमाण. प॥
२. चात्रो. क घ च छ पा॥
३. अन्यत्व जानन्तो. ख. ग.घ.च.छ.प॥
४. कमपीति न ग. घ ङ छ. पा॥
५ तन्मते. क ग घ ङ. पा॥
६.बाधबाधविरुद्धप्रसङ्गात् - बाधाया बाधस्य पारमार्थिकस्य, बाधविरुद्धप्रसङ्गात् - बाधरूपदोषप्रसङ्गादित्यर्थः॥ ७ समस्ताभावगोचरत्वात्. पा॥
८. कारणस्याप्यज्ञानादे . ङ. छ. प॥

आ॥नत्वेवेति॥ यथाहं नित्यः सर्ववेदान्तेषु प्रसिद्धः,एवं त्वमेते जनाधिपाश्च नित्याः ॥१२॥

ज॥ उत्तरार्धस्यैकवाक्यत्वात्कथं योजनेत्यत आह—यथेति ॥ वेदान्ता उपनिषदः । सिद्धसार्थस्य

रा॥ इह तु भेदज्ञानस्य सविषयस्य सकारणस्यापारमार्थिकत्वेन वस्तुयाथात्म्यज्ञानविनष्टत्वान्न कथंचिदपि बाधितानुवृत्तिः संभवति। अतः सर्वेश्वरस्येदानीन्तनगुरुपरम्परायाश्च तत्त्वज्ञानमस्ति चेत्, भेददर्शनतत्कार्योपदेशाद्यसंभवः। *नास्ति चेत्, अज्ञानस्य तद्धेतोः स्थितत्वेनाज्ञत्वादेव सुतरामुपदेशो [redacted] संभवति। किंच गुरोरद्वितीयात्मविज्ञानादेव ब्रह्माज्ञानस्य सकार्यस्य विनष्टत्वात् शिष्यं प्रत्युपदेशो निष्प्रयोजनः। गुरुस्तज्ज्ञानं च कल्पितमिति चेत्,

ता॥रपि हि अज्ञानकारणत्वं तैराश्रितम्,अन्यथा सत्यद्वयप्रसङ्गात्। तथाच गतिं किं कस्य बाधकं बाध्यं वा? न च दोषमूलत्वं बाधकज्ञानस्याज्ञातमिति वाच्यम्,प्रथममेव श्रवणवेलायां ब्रह्मव्यतिरिक्तसमस्तमिथ्यात्वप्रत्ययात्। १न चाज्ञातमिति तावता तत्त्वसिद्धिः;मत्यरजतबाधकेन शुक्तिकाज्ञानेनाज्ञातदोषेणापि तत्त्वतो रजतस्वरूपबाधाभावात्। दोषमूलत्वाविशेषेऽपि२पूर्वत्वपरत्वाभ्यां बाध्यबाधकव्यवस्थेतिचेत्— न; दोषमूलत्वे ज्ञाते सति परत्वस्याकिञ्चित्करत्वात्,३भ्रान्ततयावगतेनोक्तसर्वबाधकवाक्यवत्। अन्यथा ४शून्यमेव तत्त्वमिति माध्यमिकवाक्येन दोषमूलतया ज्ञातेनापि परत्वमात्रेण सविन्मात्रस्यापि बाधः स्यात्। अथ कारणस्यापि बाध्यतया विषयस्यापारमार्थिकत्वलक्षणं दृष्टान्ताद्वैषम्यं विवृण्वन् बाधितानुवृत्त्यसम्भवं निगमयति—इहत्विति। न कथञ्चिदपि—अनाद्यज्ञानेन वा भेदज्ञानवासनादिभिर्वेत्यर्थः।५ज्ञाते वा अज्ञाते वेति विकल्पाभिप्रायेणोपक्रान्तामुपदेश६कारणाद्यनुपपत्तिं विकल्पस्फोरणेनोपसंहरति—अत इति। सुतरामिति—७जानतस्तु बाधितानुवृत्तौ दृष्टान्तमात्रमपि तावदस्ति; ८अजानत उपदेशो सोऽपि नास्तीति भावः॥

उपदेशस्य कारणाद्यनुपपत्तिरुक्ता; अथानर्थक्यमाह—किंचेति। ९प्रतिबिम्बवत्प्रतीयमानेभ्य इत्यादिना पूर्वमेव जीवाज्ञानपक्षस्यापि दूषितत्वाद्ब्रह्माज्ञानपक्षे अधिकदूषणमिदमुच्यते। ते खलु—एकमेव ब्रह्माविद्याशबलमेक एव जीवः; स्वप्नदृश इवैकस्यैव तस्य भ्रमात् स्वप्नदृष्टपुरुषादय इवान्ये जीवादयः प्रतिभान्ति; तस्यैकस्यैवानिश्चित१०देशविशेषस्थितेरनिर्णीतकालेन भविष्यता तत्त्वज्ञानजागरेण स मन्नः प्रपञ्चोऽपि स्वप्नप्रपञ्चवद्बाध्यते—इति वर्णयन्ति। तत्रायमुपदेष्टा वासुदेवादिर्गुरुः स एव, तद्दृष्टो वा? शिष्योऽप्यर्जुनादिः स एव, तद्दृष्टो वा? इति विकल्पमभिप्रेत्य, गुरुः स एवेति पक्षे, दूषणमाह—गुरोरिति। सकार्यस्येति—शिष्याचार्यत्वादेरपीति भावः; तेनोपदेष्टृभावः प्रष्टृभाव उपदेशपरिकरभावश्चोक्तो भवति। गुरोस्तद्दृष्टत्वपक्षमनुवदति—गुरुरिति। न हि स्वप्नदृशा कल्पितपुरुषविज्ञानेन स्वप्नो बाध्येत; तद्वदत्रापि गुरोर्ज्ञानेन प्रपञ्चबाधाभावात्तद्बाधायोपदेशः सप्रयोजन इति भावः।

प्र-पा॥ *भेददर्शनमस्तिचेत्. पा॥

*१.अज्ञातमिति तावता तत्त्वसिद्धिः दोषमूलत्वमज्ञातमिति दोषमूलत्वाभावसिद्धिरित्यत्र न ह्यन्धः स्थाणुं न पश्यतीति स्थाणुत्वमपगच्छेदिति भावः॥

२. पूर्वपरत्वादिभ्याम्. ख. ग. ङ. च. छ. पा॥

*३.भ्रान्तवाक्यत्वेन अयं भ्रान्त इति निश्चितेन पुरुषेण॥

४.शून्यत्वमेव.पा॥ ५.ज्ञानमज्ञानं वेति. ग.घ.ङ.छ.पा॥

६.कारणाद्यनु. पा॥ ७.ज्ञानवतस्तु. ग. घ. ङ. पा॥

८. अज्ञस्योप. क. ग. घ. ङ. च. छ. पा॥

९. तत्रप्रति. क. ख. ग. ङ. च. छ. पा॥

१०. देहवि. ग. घ. ङ. छ. पा॥

दे॥भविष्यामः किन्तु भविष्याम एव,सर्वे वयमतोऽस्माद्देहविनाशात्परम् उत्तरकालेऽपि।

ज॥ साध्यत्वेन निर्देशो दोषायेति सामर्थ्याद्यर्थेऽशब्दाध्याहारेण वाक्यभेदेन च योज्यमिति भाव.। ननु वेदान्तैरीश्वरनित्यत्वं जानन्तस्तत्रैवोक्तं जीवनित्यत्वं कथं न जानन्ति। उच्यते—'नित्योनित्यानाम्'

रा ॥ शिष्यतज्ज्ञानयोरपि कल्पितत्वात्तदप्यनिवर्तकम् । कल्पितत्वेऽपि पूर्वविरोधित्वेन निवर्तकमिति चेत्, तदाचार्यज्ञानेऽपि समानमिति तदेव निवर्तकं भवतीत्युपदेशानर्थक्यमेव, इति *कृतमसमीचीनवादनिरस्तैः ॥ १२ ॥

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।

तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३

रा ॥ †एकस्मिन् देहे वर्तमानस्य देहिनः

ता॥दूषयति—शिष्येति। अयं भावः—न तावदर्जुनादिः स एव जीव इति तृतीयकल्पे प्रमाणमुपलभामहे ; न च 'अयं मम शिष्यो जीवो मुक्तो भविष्यति अहं त्वनेन स्वप्नदृष्टेन कल्पितः' इत्याचार्योऽपि मन्यते, तथा सति १स्वकल्पकारिणे मदपकारिणे तस्मै नोपदिशेत्, स्वस्य हि २स्वप्नस्वभावान्नियमेनैव निवृत्तः स्यादिति न मोक्षोपायमाचरेत्, शिष्योऽपि यदि स्वप्नदृष्टवद्गुरुं मन्येत, ततो न शृणुयात् । गुरुतज्ज्ञानविशेषयोः स्वभ्रान्तिकल्पिततया स्वयमेव तज्ज्ञानविपर्यविशेषं जानन्, ततः किमर्थं शृणोति ? स्वकल्पितोपदेष्टृजनितोपदेशभ्रमात् स्वभ्रान्तिनिवृत्तिरिति च हास्यम्, तमन्तरेणापि स्वप्रत्यक्षभ्रमादपि तन्निवृत्त्युपपत्तेः ; न च ज्ञातार्थेऽप्यर्जुनेऽद्य यावत् भ्रमनिवृत्तिर्दृश्यते । अतः शिष्योऽप्याचार्यवत्स्वप्नप्रपञ्चस्वप्नदृशान्येनैव दृष्ट ३इति चतुर्थः कल्पः परिशिष्यते । ततश्च गुरुवामदेवादिज्ञानवदर्जुनादिज्ञानमपि ४नाज्ञाननिवर्तकमिति निष्फलः शिष्याचार्याणां कृष्णार्जुनादीनां निखिलपरित्यागेनापवर्गार्थं ५प्रयास इति शास्त्रारम्भोऽनुपपन्नः।अथ परिहारमप्यानुपूर्व्यमपच्छेदनयमाशङ्क्य परिहरति—कल्पितत्वेऽपीत्यादिना । एवमुपदेशानुपपत्तौ तस्य सर्वद्रष्टुरेकस्यापि जीवस्य कदाचिदपि मोक्षायोगात् शास्त्रप्रयोजनमपि नास्तीति ततोऽपि शास्त्रारम्भानुपपत्तिरिति फलितम् । एवं शास्त्रोपदेशस्य तदुपदेष्टृत्वाच्छ्रोतृत्वप्रयोजनस्य चानुपपत्तौ सामान्यतः सर्वस्मिन्नपि परमते दूषिते किमवान्तरदूषणैरित्यन्यपरतयोपसंहरति—इति कृतमिति। कृतम् अलमित्यर्थः, असमीचीनवादैरित्यनेन भास्करादिमतेऽप्येवंविधदूषणशतं शारीरकभाष्याद्युक्तं स्मारितम् ॥ १२ ॥

आत्मनामशोचनीयत्वाय नित्यत्वमुक्तम् । तत्रात्मनित्यत्वे जन्ममरणादिप्रतीतिव्यवहारौ कथमिति शङ्कां दृष्टान्तेन परिहरति—देहिन इति । 'अस्मिन्' इति निर्देशाभिप्रेतमाह—एकस्मिन्निति । देहस्यावस्थानवस्थानयनिदर्शनादपि देहिन्येव तन्निदर्शनमुचितमित्यभिप्रायेणाह—देहे वर्तमानस्येति ।

प्र-पा॥* इत्यसमीचीनवादैः पा॥ †एतस्मिन् पा॥ २ स्वप्नभावान्नियमेन ङ न छ. पा॥ ३ इति १ ममापकारि क ख ग घ ङ च पा॥ परिशि पा॥ ४ नाज्ञानादिनि पा॥ ५ प्रकाश. पा॥

श ॥ त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थः । देहभेदानुवृत्त्या बहुवचनम्, नात्मभेदाभिप्रायेण ॥ १२ ॥

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह—देहिन इति ॥ देहोऽस्यास्तीति

ज ॥ इति निर्धारणसामर्थ्याज्जीवानां नित्यत्वमीश्वरस्य परमनित्यत्वमवगम्य मन्दाः प्रतिपद्यन्ते । नित्यत्वं हि विनाशाभावः । नचाभावस्तारतम्यवान् । अत ईश्वर एव नित्यः, जीवेषु तूपचार इति तान्प्रत्यनुमानेन जीवनित्यत्वम् ईश्वरदृष्टान्तेन साध्यते।तत्र 'न त्वेवाहं जातु नासम्' इति दृष्टान्तेनानादित्वसाधनमनुवदति । 'नत्वम्' इत्यादिना तस्य पक्षधर्मतामाह । 'नचैव' इत्यादिना दृष्टान्त पक्षे च साध्याभिधानमिति । अत्र भगवता जीवानां परस्परमीश्वराच्च भेदे प्रतिपादितेऽपि बहुवचनं शरीरापेक्षया, न स्वात्मापेक्षयेति वदतो भविष्यत्युत्तरम् ॥ १२ ॥

रा ॥ *कौमारावस्थां विहाय यौवनाद्यवस्थाप्राप्तौ आत्मनः स्थिरत्वबुद्ध्या यथात्मा नष्ट इति न शोचति, देहाद्देहान्तरप्राप्तावपि तथैव स्थिर आत्मेति बुद्धिमान्न शोचति। अत आत्मनां नित्यत्वादात्मानो न शोकस्थानम् । एतावदत्र कर्तव्यम्—आत्मनां नित्यानामेवानादिकर्मवश्यतया

---

ता॥'कौमारं यौवनं जरा'इति क्रमनिर्देशसूचितार्थस्वभावफलितमुक्तं विहायेति। कौमारयौवनत्याग१योरपि २शोकविशेषनिमित्तत्वात्तद्व्यवच्छेदार्थं यथाशब्दतात्पर्यव्यक्त्यर्थं चोक्तम् आत्मन इत्यादि । बाल्याद्यवस्थानिवृत्तावप्यात्मनः स्थिरत्वबुद्धिर्हि तद्विनाशनिमित्तशोकाभावहेतुः ; सोऽत्रापि समान इत्यर्थः । 'देहान्तरप्राप्तिः' इत्यन्तरशब्दसूचितं पूर्वदेहत्यागाख्यं शोक३प्रसञ्जकं दर्शयति --देहादिति । धीरशब्दस्य ४प्रकरणविशेषितोऽर्थः, स्थिर आत्मेति बुद्धिमानिति । 'अशोच्यान्'इत्यादिना प्रागुक्तेन सङ्गमयति —अत इति । एवं श्लोकद्वयेन क्रमात् प्राप्यं निवर्त्यं च व्याख्यातम्। अथात्र द्वन्द्वत्यागकविषयोत्तरश्लोकद्वयफलितं सङ्कलय्य सङ्गतमाह —एतावदिति । बन्धनिवृत्तय इत्यन्तः ५'अमृतत्वाय' इत्यस्यार्थः । शुद्धस्वभावानां संसारानुपपत्तिपरिहारायोक्तम् —अनादीति। कर्मवश्यतया,न त्वनिर्वचनीयाज्ञानादिवश्यतयेति भावः । स्वतोऽत्यन्तसमानानामात्मनां देहभोगादिवैषम्यसिद्ध्यर्थमुक्तम्—

---

प्र-पा॥ * कौमाराव पा॥ १ विशेष. पा॥ * २.शोकविशेषनिमित्तत्वात् - स्वात्मानुभवभ्रंशनिबन्धनशोकविशेषस्य स्त्रीविषयानुभवभ्रंशनिबन्धनशोकविशेषस्य च निमित्तत्वादित्यर्थः.॥ ३. प्रसञ्जन. पा॥ *४. प्रकरणविशेषितः - प्रकरणबलेन विनश्चितविशेषविशेषितोऽर्थः. स्थिरआत्मेत्याकारकस्वरूपविशेषणविशेषितो धारूपोऽर्थ इति यावत् ॥ ५. गी. २-१५॥

---

शं॥देही,तस्य देहिनो देहवत आत्मनः, अस्मिन् वर्तमाने देहे, यथा येन प्रकारेण, कौमारं कुमारभावो बाल्यावस्था, यौवनं. यूनो भावो मध्यमावस्था, जरा वयोहानिर्जीर्णावस्था,

---

आ ॥ देहिनो भावे एतद्घटते,तदेवासिद्धमिति चेन्न—देहिनोऽस्मिन् ॥ यथा कौमारादि-

---

ज ॥ ननु त्वात्र किं परिदृश्यमानदेहपक्षीकारेणानुमीयते, किं वा तदतिरिक्तदेहिपक्षीकारेण । नाद्यः, देहोत्पत्तिनाशयोः प्रत्यक्षसिद्धत्वेन हेतोः स्वरूपासिद्धत्वात्कालात्ययापदिष्टत्वाच्चेति स्फुटत्वान्नोक्तम् । द्वितीये दोषमाह—देहिन इति ॥ देहिनो देहवतो देहातिरिक्तस्यात्मनः भावे सद्भावे एतन्नित्यत्वानुमानं सम्भवति, देहपक्षोक्तदोषाभावात्; किं तु देहातिरिक्तात्मसत्त्वमेवासिद्धम् , प्रमाणाभावात् । ततश्चाश्रयासिद्धिरिति । अस्तु वा देहातिरिक्तात्मसत्त्वं, तथापि नानुमानं सम्भवतीत्याह—देहिन इति । देहिन इत्येकवचनं तन्त्रम् । पूर्वोत्तरदेहेष्वेक एवात्मेत्यस्यार्थस्य भावे एतदनुमानं सम्भवति, स्वरूपासिद्ध्याद्यभावात् । किंनाम तत्,पूर्वोत्तरदेहेष्वात्मैक्यमेवासिद्धं प्रमाणाभावात् । तथा च देहोत्पत्तावुत्पन्नमतस्तद्विनाशे च विनाशात् कथमनादित्वेन नित्यत्वं साध्यत इति । उभयस्यापि परिहारदर्शनादेव योग्यम् । अर्थद्वयानुगुण्यायैव बहुवचने प्रकृतेऽप्येकवचनम्, तथा भाव इति पुल्लिङ्गे प्रकृतेऽपि तदेवेति सामान्यग्रहणाय नपुंसकनिर्देशः । न इत्यादेर्नि शेषः। देहिनोऽस्मिन्नित्यतः परमितिशब्दश्च। आक्षेपद्वयपरिहाराय पादत्रयं व्याख्याति —यथेति । अत्र देहीति तदीक्षिता सिद्ध इति देहातिरिक्तात्मसाधनम् , तदिति कौमारादिपरामर्शः । याजकादित्वात्समासः । द्वितीयान्तस्य तृजन्तेन वा समासः । अस्ति तावत्कौमारादिविषयमीक्षणम् । नचेक्षणमीक्षितारं विना संभवति । स च वक्ष्यमाणात्परिशेषप्रमाणाद्देही देहातिरिक्तः सिद्ध इति; अत्र कौमारादिग्रहणमतन्त्रम् , जन्ममात्रेण ज्ञातुः सिद्धेः। देहशब्दश्चेन्द्रियादिसहितशरीरश्रुतिः । श्लोके च 'कौमारं यौवनं जरा' इति विषयेण विषयीक्षणमुपलक्ष्यते ।

रा ॥ तत्तत्कर्मोचितदेहसंसृष्टानां तैरेव देहैर्बन्धनिवृत्तये

ता॥तत्तत्कर्मेति। देहैर्बन्धनिवृत्तय इति। देहैर्यो बन्धस्तस्य निवृत्तय इत्यर्थः ।१यद्वा देहैः कर्म कुर्वता

प्र पा ॥ १ तैरेव प०।

शा॥इत्येतास्तिस्रोऽवस्था अन्योन्यविलक्षणाः । तासां प्रथमावस्थानाशे न नाशः । द्वितीया

आ॥शरीरभेदेऽपि देही तदीक्षिता सिद्धः, एवं देहान्तरप्राप्तावपि, ईक्षितृत्वात् । न हि जडस्य शरीरस्य कौमाराद्यनुभवः संभवति, मृतस्यादर्शनात् । मृतस्य वाय्वाद्यपगमादनुभवाभावः । अहं मनुष्य इत्याद्यनुभवाच्चैतत्सिद्धमिति चेन्न, सत्येवाविशेषे देहे सुषुप्त्यादौ ज्ञानादिविशेषादर्शनात् । समश्चाभिमानो मनसि काष्ठादिवच्च,

ज॥तद्देहिनो देहातिरिक्तस्येत्युक्तं भवति। यथेत्यादि समस्तं वाक्यं श्लोके च पादत्रयं देहभेदेऽप्यात्मैकत्वे साधनम् । कौमारादिमच्छरीरभेद इत्यर्थः । देही एक एवेत्यर्थः । तदीक्षितेति ॥ योऽहं कुमारशरीरवानभूवं स इदानीं युवशरीरवानस्मि इत्यादि प्रत्यभिज्ञातेत्यर्थः । देहान्तरप्राप्तावपीति अनेकदेहप्राप्तावपीत्यर्थः । एक एव देही सिद्ध इति वर्तते । ईक्षितृत्वादिति । सद्यःप्रजातस्य शिशोः आहाराद्यभिलाषेण पूर्वदेहानुसन्धानसिद्धेरित्याशयः । एवमात्मनो देहातिरिक्तत्वं देहभेदेऽप्येकत्वं च प्रसाध्य 'धीरस्तत्र न मुह्यति' इत्युच्यते । तस्य वैयर्थ्यमित्याशङ्क्य येऽस्मिन्विषयेऽन्येऽपि मोहाः, ते धीरेण स्वयं निराकार्या इत्येवमर्थत्वान्न वैयर्थ्यमित्याशयवान् तत्प्रदर्शनार्थमुत्तरं प्रकरणमारभते । तत्रे रणेन कथं देहातिरिक्तात्मसिद्धिः । ईक्षिता किं तेन सिध्यति । स च शरीरप्राणजाठरानलेन्द्रियमनोविषयत्वनियामीक्षणदर्शनात्तेषामन्यतमः किं न स्यादित्यत्र शरीरस्य तावदीक्षणं निषेधति नहीति । अत्रापि कौमारादीन्यतन्त्रम्। शरीरस्यानुभवो न संभवतीति प्रतिज्ञा। जडस्य शरीरस्येति हेतुद्वयम्। मृतस्यादर्शनादिति दृष्टान्तोक्तिः । जडत्वं च भौतिकत्वं विवक्षितमिति न साध्याविशिष्टता। अप्रयोजकत्वाभिप्रायेण शङ्कते—मृतस्येति ॥ जीवच्छरीरमृतशरीरयोर्भौतिकत्वे शरीरत्वे च समानेऽपि मा भून्मृतशरीरस्येक्षणम्, प्राणादिवायूनां जाठरानलस्येन्द्रियाणां चापगमात् । जीवतस्तु प्राणादिसंनिधानाद्भविष्यति। को विरोधः, मा हि भूदेकधर्मापन्नानामन्तरकारणवैचित्र्याद्वैचित्र्याभावः ।न केवलमिदमाशङ्कते। किन्तु अहं मनुष्य इत्याद्यनुभवादेतद्देहस्येक्षितृत्वं सिद्धं प्रमितं चेत्यर्थः । दूषयति—नेति । न प्राणादिसंनिधानं शरीरस्येक्षितृत्वे प्रयोजकं वाच्यम्, सुप्तिमूर्च्छयोः शरीरे प्राणाद्यपगमलक्षणरहितेऽप्यस्येव ज्ञानादीनां धर्माणामदर्शनात् । ज्ञानग्रहणमुपलक्षणम् । सुखदुःखेच्छाद्वेषप्रयत्नैरप्यात्मा साध्य इति सूचयितुमादिपदम् । मृतादौ ज्ञानाद्यभावश्च तत्कार्यादर्शनात्सिद्ध इति दर्शयितुं ज्ञानादिविशेषेत्युक्तम्। ज्ञानादीनां विशेषः कार्यमिति । एतेन सङ्घातचैतन्यपक्षः प्राणादिचैतन्यपक्षश्च पराकृतो वेदितव्यः । मनस ईक्षितृत्वमतिदेशेन निराचष्टे—समश्चेति । मनोविषय ईक्षितृत्वाभिमानश्च, पूर्ववत्समः, सुप्त्यादौ सत्यपि मनसि ज्ञानादर्शनात् । एवं तर्ह्यात्मापि ज्ञाता न स्यादिति चेन्न, तदा तस्य मनसा संनिकर्षाभावात्। मनसोऽपि तथास्त्विति चेत् सिद्धस्तर्ह्यात्मा । मनसो ज्ञातृत्वे दोषान्तरमाह—काष्ठादिवच्चेति ॥ मनो न ज्ञातृ ज्ञानकरणत्वात् । यद्यस्याः क्रियायाः करणं न तत्तत्र कर्तृ, यथा पाके काष्ठानि । छिदायां कुठारो वा । न चासिद्धो हेतुः, मनसा जानामीत्यनुभवात् । एतेनात्ममनिरूपणं मनोज्ञाति ति निरस्तम् । नन्वन्यज्ञानं मनोनिष्ठमिति सिद्धान्तः । तत्कथमेतत् । नैवम्, मनोनिष्ठस्यापि ज्ञानस्य न मनः कर्तृ, किंत्वात्मैव, यथा स्थालीनिष्ठक्लेदलक्षणस्य पाकस्य न तण्डुलाः कर्तारः, किंतु देवदत्त इति । एतेनेन्द्रियचैतन्यपक्षोऽपि निरस्तः । चक्षुषा पश्यामीत्यादौ तेषामपि करणत्वप्रतीतेरिति, अतीतादिज्ञान

ता॥मित्यन्वयः। तदा तु बन्धका एव देहा मोक्षसाधनौपयिकास्सम्भवन्तीति १अवधारणाभिप्रायः।

प्र-पा॥ *१. अवधारणाभिप्राय.- तैरेवेति भाष्यस्यावधारणाभिप्राय इत्यर्थः॥

शं॥ यस्योपजने नोपजननम् आत्मनः। किं तर्हि? अविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्ति-

आ॥श्रुतेश्च,प्रामाण्यं च प्रत्यक्षादिवत्। न च बौद्धादिवत्, अपौरुषेयत्वात्। न ह्यपौरुषेये पौरुषेयाज्ञानादयः कल्पयितुं शक्याः। विना च कस्यचिद्वाक्यस्यापौरुषेयत्वं न सर्वसमयाभिमतधर्मादिसिद्धिः। यश्च तौ नाङ्गीकुरुते,नासौ समयी,अप्रयोजकत्वात्। मास्तु धर्मो निरूप्यत्वादिति चेन्न, सर्वाभिमतस्य प्रमाणं विना निषेद्धुमशक्यत्वात्। न च

ज्ञा॥दर्शनाद्विपयन्नैतन्यपक्षः स्फुटदूषणइति न निराकृतः।एवं परिशेषप्रमाणेन देहातिरिक्तात्मा सिद्धः।तस्य स्वभावादेवाहाराद्यभिलाषोपपत्तेः प्रत्यभिज्ञानमसिद्धमिति वदन्तं प्रति आत्मनित्यत्वे प्रमाणान्तरं चाह— श्रुतेश्चेति। 'अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्य अमुष्मिन् स्वर्गे लोके' इत्यादिश्रुतेश्च देहातिरिक्तो नित्य आत्मा सिद्धः। अत एव स्वभाववादानवकाश इति। ननु बौद्धचार्वाकादीन् प्रति देहातिरिक्तनित्यात्मसाधनमिदम्। न च ते श्रुतेः प्रामाण्यमङ्गीकुर्वते। तत्कथं श्रुत्युदाहरणमित्यत आह—प्रामाण्यं चेति। बौद्धेन तावत्प्रत्यक्षानुमानयोः,चार्वाकेण च प्रत्यक्षस्य प्रामाण्यमङ्गीकृतम्। तद्वत् इति वक्तव्यम्। बोधकत्वेनेति चेत्तर्हि तद्वच्छ्रुतेरप्यङ्गीक्रियताम्।ननु वाक्यत्वे समेऽपि केषां चिद्बौद्धादिवाक्यानामप्रामाण्यदर्शनाच्छ्रुतेरपि तदाशङ्क्येत इत्यत आह—नचेति।बुद्धस्येदं बौद्धम्। चार्वाको बौद्धमुदाहृतः।बौद्धस्त्वन्यदिति द्रष्टव्यम्। अप्रामाण्यं श्रुतेः शङ्कनीयमिति शेषः।तथा सति इन्द्रियलिङ्गयोरपि क्वचिदप्रामाण्यदर्शनात् संप्रतिपन्नयोरपि प्रत्यक्षानुमानयोस्तच्छङ्काप्रसङ्गादिति भावः।प्रसक्तापि शङ्का तत्र निर्दोषत्वेनापनीयत इति चेत्सम प्रकृतेऽपीत्याह—अपौरुषेयत्वादिति।अपौरुषेयत्वेऽपि दोषित्वं किन्न स्यादित्यत आह—न हीति।सामान्योक्तित्वादपौरुषेये नपुंसकत्वोक्तिः।अन्यथा श्रुतेः प्रकृतत्वात्स्त्रीलिङ्गं स्यात्।शब्दे ह्यबोधकत्वादयो दोषाः ते च वक्तृपुरुषाश्रिताज्ञानादिमूलाः। यस्य तु वक्ता पुरुष एव नास्ति, तत्र कथं वक्तृपुरुषाश्रिताज्ञानादयो दोषमूलत्वेन कल्पयितुं शक्याः, व्याहतेरिति। अत्राज्ञानादीनां पौरुषेयत्वोक्तिरुपचारात्, पुरुषशब्दात्तत्कृतवाक्यादिष्वेव ढञःस्मरणात्। ननु श्रुतेरपौरुषेयत्वमेव नास्ति वाक्यत्वात्, लौकिकवाक्यवदितिचेत् किमेव वदतः किमपि वाक्यमपौरुषेयं नास्तीति मतम्, उत किंचिदस्तीति; आद्ये दोषमाह—विनेति। कस्यचिद्वाक्यस्यापौरुषेयत्वाभावे धर्माधर्मयोरनिश्चयः प्रसज्येत, निश्चायकप्रमाणाभावात्। न च तथास्त्विति वक्तुं शक्यम्, तत्सद्भावस्य सर्वैः समयिभिर्निश्चितत्वादिति। ननु प्रत्यक्षैकप्रमाणवादी यश्चार्वाको धर्माधर्मौ नाङ्गीकुरुते तस्य नेदमनिष्टम्, किमप्यपौरुषेयं वाक्यम् अनङ्गीकृत्य वेदापौरुषेयत्वं प्रत्याचक्षाणान्सर्वान्प्रति चायं प्रसङ्ग इत्यतस्तेनापि धर्मादिकमङ्गीकार्यते प्रसङ्गं धास्याम इत्यावेनाह—यश्चेति। तौ धर्माधर्मौ, इति प्रसज्येतेति शेषः। धर्माद्यनङ्गीकारे श्रुतस्याशास्त्रस्याशास्त्रित्वप्रसङ्गो येनासौ शास्त्री न स्यादित्यत आह—अप्रयोजकत्वादिति। प्रयुज्यते प्रवर्त्यते प्रणेता प्रणयने श्रोता च श्रवणे शास्त्रे याभ्यां ते प्रयोजके विषयप्रयोजने। अविद्यमाने प्रयोजके यस्य शास्त्रस्य तत्तथा। अनन्यलभ्यं कमपि पुरुषार्थमधिकृत्य तत्साधनं तथाविधमर्थं प्रतिपादयन्वाक्यसमूहो हि शास्त्रम्, अन्यथाऽतिप्रसङ्गात्। न चातीन्द्रियस्याभावेऽन्यत्तथानुभूतं शक्यनिरूपणम्। अतः शास्त्रत्वसिद्धये नियमादित्वेन धर्मादिकं किमप्यङ्गीकार्यमिति भावः। शङ्कते मास्त्विति॥मायत्नमाङ्। अस्तित्वलक्षणं वा। धर्मइत्युपलक्षणम्, अनिरूप्यत्वात्, तत्प्रमाणाभावेन प्रतिपादयितुमशक्यत्वात्। इदमुक्तं भवति—विषयप्रयोजने हि ते भवतः, ये प्रमाणेन प्रतिपादयितुं शक्येते, शास्त्रस्य

रा॥शास्त्रीय स्ववर्णोचित युद्धादिकमनभिसहितफलं कर्म कुर्वताम्*वर्जनीयतया इन्द्रिये

ता॥शास्त्रीयमिति। अन्यथेश्वरशासनातिलङ्घनाद्दण्डएव स्यादिति भाव । स्ववर्णोचितमिति। न तु त्वया युद्धादिकं परित्यज्य भैक्ष चर्तुं श्रेय इति भाव । १अमृतत्वहेतुतयोक्तम्—अनभिसहितेति।

पा॥*वर्जनीया इन्द्रि. पा॥ | १ अत्र तत्त्व पा॥

शां॥रात्मनो दृष्टा। तथा तद्वदेव,देहादन्यो देहो देहान्तरम्,तस्य प्राप्तिर्देहान्तरप्राप्ति ,अवि

आ॥सिद्धिरप्रमाणकस्येति चेत् न,सर्वाभिमतेरेव प्रमाणत्वात्, अन्यथा सर्ववाचनिकव्यव हारासिद्धेश्च।न च मया श्रुतमिति तव ज्ञातु शक्यम्,अन्यथा वा प्रत्युत्तर स्यात्,भ्रान्तिर्वा

ज॥श्रोतृभिरनादरणात्। न च धर्मादिक प्रमाणेन प्रतिपादयितु शक्य,प्रत्यक्षागोचरत्वात् ,अनुमानादेश्च प्रामाण्याभावात् । अतो न शास्त्रस्य विषयत्वादिना धर्मादिकमङ्गीकर्तुमुचितम् । न चैतावता निर्विषय त्वापत्ति । यतो धर्माद्यभावो विषयो भविष्यति । प्रयोजन च श्रोतृणा धर्माद्यनुष्ठानप्रसक्तक्लेश निवृत्ति ,धर्मादिसद्भावभ्रमोपरुद्धविषयसुखावाप्तिश्च। प्रणेतुश्च लोकोपकार , उपकर्तार च प्रत्युपकुर्वन्ति लोका इति। निराकरोति—नेति। एवं वदता धर्माद्यभावोऽपि न शास्त्रविषयत्वेन शक्यते वक्तुम्, सर्वाभिमतस्य धर्मादे प्रमाण विना वाङ्मात्रेण निषेद्धु नास्तीति प्रतिपादयितुमशक्यत्वात्।घटाद्यभाव इव प्रत्यक्षेणैव धर्माद्यभावो निश्चेष्यत इति चेत्,स्यादेवम्,यत्र न कस्यचिद्विप्रतिपत्ति , यत्र त्वस्तित्वाभिमा न ,तत्र पिशाचादाविव प्रत्यक्षानुपलम्भ सन्देहहेतुरेव भवति —इति। तदिदमुक्त सर्वाभिमतस्येति॥ पुन शङ्कते—न चेति ॥ मा भूद्धर्माद्यभावस्य विषयत्व तत्साधकप्रमाणाभावात् । तथापि धर्मादे र्विषयत्वादिकं न घटते, अप्रामाणिकस्य प्रमित्यनुपपत्त्या साधयितुमशक्यत्वादिति। निराकरोति—नेति॥ अस्ति तावद्धर्मादिविषये सकलमाबालगोपालमस्तित्वाभिमान । अभिमानो ज्ञानमेव,न च तस्य बाधक किञ्चित् ,धर्माद्यभावप्रतिपादकप्रमाणाभावस्योक्तत्वात्। अत सर्वाभिमतेरेव धर्मादौ प्रमाणत्वात् तत्कर णस्य च प्रमाणत्वात्, धर्मादे प्रामाणिकत्वसिद्धौ किमनया व्यर्थचिन्तया।न च तत्र प्रमाणविशेषोऽशक्य निरूपण ,आगमस्य तत्सहकारिणोऽनुमानस्य च सत्त्वात् । अत एव नास्थपरम्परयापि आगमादे प्रामा ण्य नास्तीति उक्तमित्यत आह—अन्यथेति। यदागमस्यानुमानस्य च न प्रामाण्य तदा सर्वस्य वाचा निर्विर्त्यस्य व्यवहारस्यासिद्धि स्यात्। परप्रत्ययनार्थो हि वाग्व्यवहार । स यदि न पर प्रत्याययेत्,व्यथा न क्रियेतैवेति । च शब्द प्रमाणसामान्यसिद्ध्या तद्विशेषसिद्धे समुच्चये॥

भवत्वागमाप्रामाण्ये वाचनिकव्यवहारासिद्धि ।अनुमानाप्रामाण्ये तु कथमित्यत आह—न चेति॥ त्वदीय वाक्य मया श्रूयते इति ज्ञात्वा मा प्रति त्वया वाग्व्यवहार क्रियते,अन्यथा वा। द्वितीये निष्फलो न कर्तव्य स्यात्। नाद्य , परचित्तवृत्तीना परस्याप्रत्यक्षत्वेन मया श्रुतमिति तव ज्ञातुमशक्यत्वात्। मदीय प्रत्युत्तरमेव तज्ज्ञानोपाय इत्येव वक्तव्यमिति भाव । अस्त्वेवमित्यत आह—अन्यथावेति॥ वा शब्दोऽ वधारणे। प्रत्युत्तर हि लिङ्गतया ज्ञापकम् । न च तत्र मतेऽनुमान प्रमाणम् । अत प्रत्युत्तरमन्यथैवाज्ञा पकमेव स्यादिति। ननु लिङ्गशब्दयो प्रामाण्यमेव नाङ्गीक्रियते । ज्ञापकत्वमात्रमङ्गीक्रियत एव। अत कथ वाचनिकव्यवहारासिद्धिरित्यत आह—भ्रान्तिर्वेति॥ ज्ञापकत्वमङ्गीकृत्य प्रामाण्यानङ्गीकारे शब्दलिङ्गाभ्या जायमान प्रत्ययस्तव मते भ्रान्तिर्वा स्यात्सशयो वा,गत्यन्तराभावात्।न च परस्य भ्रान्त्याद्यर्थे वचनप्रयोग । नापि प्रत्युत्तरेण भ्रान्त सन्दिग्धो वाक्य प्रयुङ्क्ते इति युक्तम्। अतो वाचनिकव्यवहारसिद्ध्यर्थमागमानु मानप्रामाण्यमङ्गीकार्यमिति । एव चार्वाकशास्त्रस्य विषय निराकृत्य प्रयोजनमपि निराकुर्वन् श्रोतृप्रयो

रा ॥ रिन्द्रियार्थस्पर्शाश्शीतोष्णादिप्रयुक्तसुखदुःखदा भवन्ति, ते तु यावच्छास्त्रीयकर्मसमाप्ति क्षन्तव्या इति ॥ १३ ॥

ता॥प्रतिकूलस्वभावस्य कथं कर्तव्यत्वमिति शङ्कानिवर्तक१तुशब्दद्योतितमवर्जनीयत्वं तितिक्षितव्यत्वे हेतुः, २इत्येतावदत्र कर्तव्यमित्यन्वयः ॥ १३ ॥

प्र-पा॥ *१.तुशब्दद्योतित 'स्पर्शास्तु'इत्यत्र तु शब्दद्योतितमित्यर्थः ॥ *२. इत्येतावदत्र कर्तव्यमिति-क्षन्तव्या इत्येतावदत्र कर्तव्यमित्यर्थः ॥

शं॥क्रियस्यैवात्मन इत्यर्थः। धीरो धीमान्, तत्र एवं सति,न मुह्यति न मोहमापद्यते॥१३

आ॥ तच स्यात् । सर्वदुःखकारणत्वं वा स्यात् । एको वाऽन्यथा स्यात्।रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशङ्का स्यात् । न चादोषत्वं स्ववाक्येनैव सिध्यति । न च येनकेनचिदपौरुषेयमित्युक्तमुक्तवाक्यसमम्, अनादिकालपरिग्रहसिद्धत्वात् । अतः प्रामाण्यं श्रुतेः । अतः कुतर्कैर्धीरस्तत्र न मुह्यति । अथवा जीवनाशं देहनाशं वा अपेक्ष्य शोकः । न जीवनाशं नित्यत्वादित्याह—नत्वे वेति ॥ नापि देहनाशमित्याह—देहिन इति ॥ यथा

ज॥न तावन्निराचष्टे—सर्वेति ॥ यथा शास्त्रस्य सर्वेषां श्रोतॄणां सुखकारणत्वम् ,तथा धर्माद्यभावज्ञाने सर्वमर्यादातिक्रमे परस्परहिंसादिना सर्वदुःखकारणत्वं च स्यात्। तथा च सम्व्ययफलं निष्प्रयोजनमेवेति। इदानीं शास्त्रप्रणेतृप्रयोजनं निराकरोति—एकोवेति॥ धर्मादिज्ञानशून्याः पशुप्राया नोपकारिणमुपकुर्वन्ति । अपितु सर्वेऽप्यपकर्तुमलम् । तदभावेऽप्येको वाऽन्यथाऽपकारकः स्यादिति भावः । तदेव धर्माद्यनङ्गीकारे शास्त्रस्य विषयाद्यभावेनाशास्त्रत्वप्रसङ्गात्सर्वैर्धर्मादिकमङ्गीकार्यमिति । ननु स्वीकृत धर्मादिक, पौरुषेयवाक्यान्निश्चय इत्यत आह—रचितत्वे चेति ॥ ततश्च न धर्मादिनिश्चय इति भावः । निर्दोषत्वेन प्रमितोऽसाविति चेत्, तस्य निर्दोषत्वं किं तद्वाक्यात्सिद्धम्, प्रमाणान्तरेण वा । न द्वितीयः, तदभावात् । आद्यं दूषयति—न चेति ॥ अतिप्रसङ्गादिति भावः । न च प्रत्यक्षादिना धर्मादिसिद्धिः। अतः सर्वैः किमप्यपौरुषेय वाक्यमङ्गीकार्यम्। अङ्गीकृत च बौद्धादिभिः स्वसमयापौरुषेयत्वम् , शौद्धोदनिप्रभृतयः सम्प्रदायप्रवर्तका इत्युक्तत्वात् । ततः किमिति चेद्वाक्यत्वहेतोस्तत्रानैकान्त्यमिति । अस्त्वेवमनुमानस्यान्यतरानैकान्त्याच्छ्रुतेरपौरुषेयत्वे बाधकाभावः । तत्साधकं तु किमिति चेत्कर्तुरप्रसिद्धिरपौरुषेयत्वप्रसिद्धिश्चेति ब्रूमः । एवं तर्हि गूढकर्तृकस्य कृतापौरुषेयत्वप्रसिद्धिकस्याप्यपौरुषेयत्वप्रसङ्ग इत्यत आह—न चेति ॥ केनचित्कृतमिति शेषः । उक्तवाक्यसम वेदवदपौरुषेयमित्यर्थः । अनादिकाले यः परिग्रहः प्राक्तनमेवैतदिति ज्ञानं तेन विषयीकृतत्वाच्छ्रुतेः, इतरस्य तदभावादपौरुषेयत्वप्रसिद्धिरेव तत्र भग्नेति भावः । अपौरुषेयत्वसिद्धौ सिद्धमर्थमुपसंहरति—अत इति ॥ एवं चतुर्थपादोपयुक्त प्रमेयमुक्त्वा तमिदानीं निवेशयति—अत इति ॥ यत एवं नैरात्म्यवादिभिरुत्प्रेक्षिताः कुतर्काः ; अतस्तैः कुतर्कैर्धीरो धीमांस्तत्र देहातिरिक्तनित्यात्मसद्भावविषये न मोहमापद्यते । 'नरके नियतं वासः' इत्याद्यर्जुनवचनेन तस्य नित्यात्मप्रतिपत्तिसिद्धेः प्रथमपुरुषप्रयोगः । अनेकार्थी गतिरिति दर्शयितुं श्लोकद्वयं प्रकारान्तरेण व्याचष्टे—अथवेति ॥ न जीवनाशमपेक्ष्य शोकः कार्य इति शेषः, नित्यत्वाज्जीवस्य । अनेन योजनापूर्वं नदेवेति शापयति । नापीत्यत्रापि पूर्ववच्छेषः । अत्र पूर्वयोजना न सङ्गच्छते । अतोऽन्यथा पादत्रयं व्याख्याति—यथेति ॥ जरादिप्राप्तौ देहान्तरप्राप्ताविति

रा॰अ ॥ इममर्थमनन्तर*मेवाह—

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४

रा॥ शब्दस्पर्शरूपरसगन्धास्साश्रयास्तन्मात्राकार्यत्वान्मात्रा इत्युच्यन्ते । श्रोत्रादिभि-

ता॥ आत्मनित्यत्व१प्रकरणपर्यवसाने वक्तव्योऽप्ययमर्थस्तात्पर्यातिशयात्मध्येऽप्युच्यत इत्याह—इमम-र्थमनन्तरमिति । आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि मात्रा इति शङ्कराद्युक्ताप्रसिद्धयोज-नाव्युदासाय मात्राशब्दार्थमाह—शब्देति । साश्रया इति । गुण२विशिष्टद्रव्यस्य हि तन्मात्राकार्य-त्वमिति भावः । तन्मात्राकार्यत्वादिति । तन्मात्राणां मात्राशब्दवाच्यत्वे तावन्नास्ति विवादः । 'श-ब्दमात्रा, स्पर्शमात्रा' इत्यादिप्रयोगाश्च सन्ति । ततश्च तत्कार्यद्रव्यस्यापि तदेकद्रव्यत्वात्तच्छब्दगोचर-त्वमुपपन्नमिति भावः । ३कर्मव्युत्पत्तेरपि भावव्युत्पत्तेः प्रसिद्धिप्रकर्षं विषयसम्बन्धस्यैव च साक्षा-त्सुखादिहेतुत्वं मत्वा स्पर्शस्य प्रतिसम्बन्ध्यन्तरं निर्दिशन् समासार्थमप्याह—श्रोत्रादिभि-

प्र पा ॥ * माह पा॥ — ध्यन तद्दर्शित भाव ॥ २. विशिष्टद्रव्य. पा॥

*१ प्रकरणपर्यवसाने-प्रकरणावसाने मध्यसाध्वन प्राग् । बोध्यत इत्यर्थः . यथावा सर्पमनष्टभ्य तिष्ठन्त बाल प्रति मपोऽस्य जहीति वक्तु ये आगते पित्रादिभि जहिजहि सर्प इति सपत्यागनारपर्यातिशयेन प्रथममेव जहात्यु | *३ अथवेत्यादिना शङ्करभाष्ये स्पृश्यन्त इति स्पर्शा विषया शब्दादय इति कर्मणि व्युत्पत्त्या स्पर्श-शब्देन विषयाकेत्यर्थव उदाहृत कर्मव्युत्पत्तेरपास्यादि॥

श ॥ यद्यप्यात्मविनाशनिमित्तो मोहो न सम्भवति नित्य आत्मेति विजानतः, तथापि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते,सुखवियोगनिमित्तो मोहः,दुःख-संयोगादिनिमित्तश्च शोक इत्येतदर्जुनस्य वचनमाशङ्क्य भगवानाह मात्रास्पर्शा इति ॥

आ॥ कौमारादिदेहहानेन जरादिप्राप्तावशोकः, एवं जीर्णादिदेहहानेन देहान्तरप्राप्तावपि ॥
तथापि तद्दर्शनाभावादिना शोकहनि चेत्तत्राह—मात्रास्पर्शा इति॥मीयन्तइति मात्रा

ज॥निमित्तसप्तम्यौ। ततश्चायमर्थः—कौमाराद्यवस्थाविशिष्टदेहहाने तावन्नास्ति शोकइति प्रसिद्धम्।तत्क-स्य हेतोरिति वाच्यम् , जरादिविशिष्टदेहान्तरलाभात् । समानलाभेन हानिर्हि समाधीयत इति चेत् , तर्हि मरणेऽपि शोको न कार्यः, देहान्तरस्य लाभादेव । यदा तु जीर्णलाभेन समीचीनहानेः प्रति-विधानम्,तदा तु सुतरां समीचीनलाभेन जीर्णहाने —इति । तत्रावस्थामात्रहानेः,अत्र त्ववस्थावतो-पीत्येतदनुपयुक्तं वैषम्यम् । निष्कप्रदानेन पटग्रहणदर्शनादिति भावेनोक्तं—धीर इति ॥ १३ ॥

प्रकारान्तरेण शोकं शङ्कते—तथापीति॥ यद्यपि बान्धवादीनां हानिर्भविष्यतीति धिया न शोको युक्तः, उक्तविधयात्महानेरभावात्, देहहानावपि प्रतिनिधिलाभात् । तथापि तन्मरणे ममैव सुखहानि-र्दुःखावाप्तिश्च भविष्यतीति धिया मे शोकः समुत्पत्तिः।कथम्? तद्दर्शनाभावादिना॥ तदिति बान्ध-वादिपरामर्शः । आदिपदेन विकृततद्दर्शनं च गृह्यते । प्रेमास्पदानां हि दर्शनस्पर्शनालापादिकं सुखहे-तुः । तेषु मृतेषु तद्दर्शनाद्यभावात्सुखहानिः । तथा तेषां छेदभेदादिदर्शनेन दुःखावाप्तिश्चेति । एत-न्निषेधपूर्वं श्लोकमवतारयति—नेति॥ 'मीयन्ते विषया यैरिति मात्राइन्द्रियाणि' इति व्याख्यानमसत्, पुराणादौ मात्राशब्दस्य विषये रूढत्वादित्याशयवान् व्याचष्टे—मीयन्ते इति ॥ ननु गन्धरसरूपस्पर्श-शब्दा विषयाः । अतो भिन्नपदत्वे द्वन्द्वे वा स्पर्शानां विषयान्तर्गतानां पुनरुक्तिर्व्यर्थेत्यत आह—

रा॥स्तेषां स्पर्शादशीतोष्णमृदुपरुषादिरूपसुखदुःखदा भवन्ति।शीतोष्णशब्दः प्रदर्शनार्थः।

ता॥स्तेषां स्पर्शा इति । शीतोष्णशब्दयोरुपलक्षणत्वं समासार्थश्चाह—शीतोष्णमृदुपरुषादिरूपेति । एवं १हेतुफलभावं विहाय शीतोष्णदाःसुखदुःखदाश्चेति योजनायां २पृथग्व्यपदेशवैयर्थ्यमिति भावः । संग्रामे शीतोष्णयोरप्रसक्तत्वात्किमर्थमिदमुच्यत इत्यत्राह—शीतोष्णशब्दः प्रदर्शनार्थ

प्र पा॥ १. भेदेन फलभावम्. पा॥ २. पृथग्व्यपदेशवैयर्थ्यं—'शीतोष्णदाः' इत्येव 'सुखदुःखदाः' इत्येव वा अलम्, उभयोः पृथग्व्यपदेशो व्यर्थ इति भावः॥

शं॥मात्रा आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि । मात्राणां१स्पर्शा मात्रास्पर्शाः

आ॥विषयाः।तेषां स्पर्शाः संबन्धाः,तएव शीतोष्णसुखदुःखदाः।देहे शीतोष्णादिसंबन्धाद्धि शीतोष्णाद्यनुभव आत्मनः।ततश्च सुखदुःखे। न ह्यात्मनः स्वतो दुःखादिः संभवति; कुतः? आगमापायित्वात् । यद्यात्मनः स्वतः स्युःसुप्तावपि स्युः। अतो यतो

ज॥तेषामिति,विषयाणाम्। तथाप्यनुपपत्तिः, विषयाणां स्पर्शाभावादित्यत आह—सम्बन्धा इति॥ एवं तर्हि किं षष्ठीसमासपरिग्रहणेन भिन्नपदत्वादावपि दोषाभावादित्यतो वाक्यं योजयति—तएवेति ॥ तुशब्दार्थः एवेति ॥ न हि विषयाणां सम्बन्धानां च पृथगेतत्कार्यं सम्भवतीति भावः । ननु शीतोष्णशब्दौ विषयविशेषवचनौ । तत्कथं विषयसंबन्धा विषयविशेष इत्युः;कथं च साक्षात्सुखदुःखे,कश्च प्रतिसंबन्धी,कस्मै ददतीत्यत आह —देहे इति॥ देहशब्देनात्रेन्द्रियाणि लक्ष्यन्ते। अनेन शीतोष्णशब्दौ सकलविषयोपलक्षकौ । विषयोक्त्या च तत्साक्षात्कारो लक्ष्यते इति लक्षितलक्षणेयम्। अनुभवद्वारैव सुखदुःखदानम्। प्रतिसंबन्धी देहः । दानं च आत्मन इत्युक्तं भवति । एतेन लौकिकी प्रतीतिरर्जुनेन शङ्कितानूद्यते । तत्तद्विषयाणां तैस्तैरिन्द्रियैर्ये ये सन्निकर्षास्तैस्तैस्तत्तद्विषयसाक्षात्काराः भवन्ति । तत्रेष्टविषयसाक्षात्कारात्सुखं भवति, अनिष्टविषयसाक्षात्कारात् दुःखं भवतीति । भवेदेवं, ततः किं प्रकृतशङ्काया इत्यतस्तुशब्दात्परया काका सिद्धमर्थमाह—नहीति ॥ स्वत इति, विषयेन्द्रियसन्निकर्षमात्रेण । दुःखादिरिति विषयसाक्षात्कारः सुखदुःखे च । अनेन मात्रास्पर्शा एव केवलाः किं शीतोष्णसुखदुःखदाः । नहि, किंनाम अभिमानसहिता इत्युक्तं भवति । अभिमानो नामात्र विषयेषु शोभनत्वाध्यासनिमित्तस्नेहः। अरित्वादिभ्रमनिमित्तो द्वेषश्च शरीरेन्द्रियान्तःकरणेषु ममतातिशयहेतुकोऽविवेक इत्यादि । विषयेन्द्रियसन्निकर्षा एव ज्ञानस्य सुखदुःखयोश्च कारणं कुतो न स्युः,येनाभिमानोऽधिकः कारणसामग्र्यां निवेश्यत इति शङ्कापूर्वकमुत्तरपादं व्याचष्टे—कुत इति ॥ ननु कथमिदं लभ्यते, यत इत्यध्याहारादिति ब्रूमः; प्रयोजनान्तराभावाद्धेत्वर्थगर्भत्वेन वा, 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायात् ।शीतोष्णसुखदुःखदत्वविशिष्टानां मात्रास्पर्शानामिदं विशेषणं भवच्छीतोष्णसुखदुःखदत्वमुपसङ्क्रामति । मात्रास्पर्शानां शीतोष्णसुखदुःखदत्वं यतस्त्वागमापायित्वादित्यर्थः। अनेन कथमुक्तशङ्कापरिहार इत्यतोऽतिप्रसङ्गमुखेन व्याचष्टे—यदीति॥ मात्रास्पर्शा यदि स्वतः स्वयमेवाभिमानमनपेक्ष्यात्मनः शीतोष्णसुखदुःखदाः स्युः,तर्हि सुप्तावपि स्युः ॥ न हि कारणसामग्री कार्यं व्यभिचरतीत्यर्थः । न च वाच्यं, सुप्तौ विषयेन्द्रियसंबन्धा एव न सन्तीति; स्पर्शत्वगिन्द्रियसम्बन्धस्यावर्जनीयत्वात् । अत एव शीतोष्णग्रहणं कृतम् । एतेनेन्द्रियमनःसन्निकर्षाभावोऽपि प्रत्युक्तः । नचात्मनः सन्निकर्षाभावः, मनसः कदाप्यात्मवियोगाभावस्य वक्ष्यमाणत्वात् । अतिप्रसङ्गस्य विपर्यये पर्यवसाने वदन्साध्यादर्यं दर्शयति— अत इति ॥ अतो मात्रास्पर्शा नात्मनः स्वतः स्वयमेव केवलाः

पा॥ १. स्पर्शाश्शब्दादिभिस्सं. पा.

या॥क्षन्तुं योग्याः;*अनित्याश्च ते बन्ध†हेतुभूतकर्मनाशे सत्यागमापायित्वेनापि निवर्तन्त इत्यर्थः॥ १४॥

रा-अ॥ तत्क्षमा किमर्थेत्यत आह—

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥** १५

ता॥ पौनरुक्त्यायाह—बन्धेति।अनित्यशब्दोऽत्र प्रवाहनित्यतानिषेधकः।नित्याइतिपदच्छेदेन नित्यानुबन्धितया तितिक्षितव्यत्वद्योतन तु मन्दम्। मुक्तौ तदभावाच्च प्रवाहतोऽपि नित्यत्वं नास्तीति भावः॥१४॥

तत्क्षमा किमर्थेति, किं दृष्टार्थत्वात्, उताऽदृष्टार्थत्वात्, उत स्वरसवाहित्वेनावर्जनीयत्वात्; न प्रथमः, दुःखरूपतयोपलम्भात्। न द्वितीयः, गुरुवधकुलक्षयादिरूपाधर्मबहुलत्वात्। न तृतीयः, युद्धान्निवृत्त्यैव शस्त्रपाताद्यभावादिति भावः। तितिक्षार्हत्वद्योतनाय 'धीरम्' इतिपदम्। सुखदुःख-

प्र पा॥ * अनित्याश्चैते. पा॥ † हेतुकर्म. पा॥

श॥नियत*रूपम्।सुखदुःखे पुनर्नियतरूपतां न व्यभिचरतः। अतस्ताभ्यां पृथक् शीतोष्णयोर्ग्रहणम्। †यस्मात्ते मात्रास्पर्शादयः आगमापायिनः आगमापायशीलाः, तस्मादनित्याः। अतस्तान् शीतोष्णादींस्तितिक्षस्व प्रसहस्व, तेषु हर्षं विषादं च मा कार्षीरित्यर्थः॥ १४॥

शीतोष्णादीन् ‡प्रसहतस्तव किं स्यादिति शृणु—यं हीति॥ यं हि पुरुषं समे

आ॥नित्यत्वमस्ति, सुषुप्तिप्रलयादावभावादित्याह—अनित्याइति॥ अत आत्मनो देहाद्यात्मभ्रम एव दुःखकारणम्। अतस्तद्विमुक्तस्य बन्धुमरणादौ दुःखं न भवति। अतोऽभिमानं परित्यज्य तान् शीतोष्णादींस्तितिक्षस्व॥ १४॥

अतः प्रयोजनमाह—यं हीति।यमेते मात्रास्पर्शा न व्यथयन्ति। पुरिशयमेव सन्तं

ज॥उक्तमर्थं पिण्डीकृत्योपसंहरति—अत इति॥उक्तप्रकारेण देहादावात्मनो ममैतदित्यादिभ्रम एव भ्रमसहिता एव मात्रास्पर्शा इत्यर्थः। ततः किमित्यतश्चतुर्थपदं व्याख्यातुमुपोद्घातमाह—अत इति॥ तद्विमुक्तस्य भ्रमविमुक्तस्य बन्धुमरणादिदुःखं यस्मात् शक्तिं न हि सामग्रीकार्यमेकदेशेन भवतीति भावः।ततः किमित्यतश्चतुर्थपादं व्याख्याति—अत इति॥तितिक्षस्व विफलीकुर्विति भावः। ननु तानिति मात्रास्पर्शाना परामर्शो युक्तः। तत्कथं शीतोष्णादीनित्युक्तम्। मैवम्, शीतोष्णहेतूनां मात्रास्पर्शानामेव तच्छब्देनोपलक्षणात्॥१४॥

अतः मात्रास्पर्शानां विफलीकरणतः भवत्प्रयोजनमाह—अत इति। दुःखाभावस्य युद्धाकरणेनैव सम्भवात्किं तत्कृत्वा प्रसक्तदुःखाभावायाभिमानत्यागेनेत्येतदाशङ्कापरिहारायेति शेषः। पूर्वश्लोके तितिक्षस्वेति पदं सहस्वेति कैश्चिद्व्याख्यातम्। तदसत्, तदनुवादे विफलीकरणस्यैव प्रतीतेरिति भावेनाद्यपादं व्याख्याति—यमिति॥ न व्यथयन्ति न चालयन्ति न शीतोष्णसुखदुःखलक्षणवैषम्यवन्तं कुर्वन्तीत्यर्थः। स्त्रीणामप्येवंविधानां मैत्रेयीप्रमुखानाममृतत्वश्रवणात्पुरुषमिति विशेषणमयुक्तमित्यतोऽन्यथा व्याचष्टे पुरीति॥शरीरसम्बन्धिनमेव सन्तं शरीरदर्शनवन्तमित्यर्थः॥एतदपि किमर्थं विशेषणमित्यत

पा॥ *स्वरू. पा. †यद्येते सुखदुःखदा. तर्हि एषामनपायादनुपरतएव संसारस्स्यादिति चेन्मैवम्। इतीदं वाक्य कचित्पुस्तके दृश्यते॥ ‡सहतः कि. पा.

रा॥ यं पुरुषं धैर्ययुक्तमवर्जनीयदुःखं सुखवन्मन्यमानममृतत्वसाधनतया स्ववर्णोचितं *युद्धादिकर्मानभिसंहितफलं कुर्वाणं तदन्तर्गताश्शस्त्रपातादिमृदुक्रूरस्पर्शा न व्यथयन्ति; स एवामृतत्वं साधयति। न त्वादृशो दुःखासहिष्णुरित्यर्थः। आत्मनां नित्यत्वादेतावदत्र कर्तव्यमित्यर्थः ॥ १५ ॥

---

ता॥ वैषम्याशल्यभ्रमं तयोस्समपरिमाणत्वादिभ्रमं च १व्युदस्यन् निर्मथेति शङ्कां च प्रतिवदति—अवर्जदुःखं सुखवन्मन्यमानमिति। यथा ह्यारोग्यकाम औषधादिक्लेशं सुखसाधनत्वात्सुखवन्मत्वा प्रवर्तते, यथा चार्थार्थी समुद्रतरणादिक्लेशम्, तथा तापत्रयनिवृत्तिं निरतिशयानन्दं च लिप्सुः तदुपायनान्तरीयकदुःखं सुखवदेव मन्येतेति भावः। तस्करादिष्वपि सम्भावितस्य द्वन्द्वतितिक्षामात्रस्य २मोक्षे हेतुत्वव्युदासायोक्तम्—अमृतत्वसाधनतयेत्यादि। 'एते' इत्यस्य तात्पर्यमवर्जनीयत्वं च दर्शयितुमुक्तं—तदन्तर्गता इति। व्यथयन्ति, ३अप्राप्ततत्त्वधिया परितापेन चालयन्तीत्यर्थः, न तु पीडयन्तीति; मृदुक्रूरस्पर्शा इति ४मृदुस्पर्शस्याप्युपादानात्। यत्तच्छब्दरूपपरोक्षनिर्देशेन 'पुरुषर्षभ' इति विपरीतकाष्ठा च फलितमाह—स एवेति। त्वादृशः अस्थानस्नेहाद्याकुलः। अनन्तरश्लोकार्थप्रसङ्गायात्मनाशप्रतीकारनैरपेक्ष्याय च निगमयति—आत्मनां नित्यत्वादिति। एतावदिति, तितिक्षामात्रं न तु शोकादि। अत्रेति, आगमापायिना तत्त्वज्ञानेन निवर्तिष्यमाणसन्तानानाममृतत्वलक्षणपरमपुरुषार्थोपायानुष्ठानेऽवर्जनीयसन्निधीनां शस्त्रपातादिदुःखानामागतावित्यर्थः। कर्तव्यमिति अकरणे त्वपवर्गरूपफलाभावः, स्वधर्मपरित्यागेन प्रत्यवायः, धैर्याद्यभावनिमित्ताकीर्त्यादिप्रसङ्गश्च स्यादिति भावः ॥ १५ ॥

---

प्र पा॥ * युद्धादिकं कर्म पा॥ १ निरस्यन् पा॥ मायात्वयत्वधिया. पा॥ * ४ न॥ पीडयन्तीत्यत्र
२ मोक्षहेतु मोक्षणे हेतु पा॥ ३ अप्राप्तधिया, इत्यु—मृदुस्पर्शस्याप्युपादानादिति॥

---

शं॥ दुःखसुखे यस्य स समदुःखसुखः सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनादेते यथोक्ताश्शीतोष्णादयः, स नित्यात्मस्वरूपदर्शननिष्ठो द्वन्द्वसहिष्णुरमृतत्वायामृतभावाय मोक्षायेत्यर्थः, कल्पते समर्थो भवति ॥ १५ ॥

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तम्, यस्मात्—नासत इति॥ असतः अविद्यमानस्य शीतोष्णादेस्सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता॥

---

आ॥ शरीरसंबन्धाभावे सर्वेषां व्यथाभावात्पुरुषमिति विशेषणम्। कथं न व्यथयन्ति, समदुःखसुखत्वात्, तत्कथं धैर्येण ॥ १५ ॥

---

ज॥ आह—शरीरेति॥ सुप्त्यादौ सर्वेषां प्राकृतानामप्यभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरित्याशङ्कानिवृत्त्यर्थमित्यर्थः। ननु यस्य देहादावभिमानो नास्ति, तस्य दुःखं सुखं च नास्तीत्युक्तम्, तस्य कथं 'समदुःखसुखं धीरम्' इति विशेषणद्वयम्। अस्य पूर्वकक्ष्यागतत्वादित्याशङ्क्य तदुपायप्रदर्शनार्थं पूर्वावस्थानुवादोऽयमिति क्रमेण पृच्छापूर्वकमाशयमाह—कथमिति॥ येनाभिमानत्यागेन मात्रास्पर्शा न व्यथयन्ति, स कथं केनोपायेन भवतीत्यर्थः। दुःखं यथानुपादेयमपुरुषार्थत्वात्, तथा वैषयिकं सुखमप्यमृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः। एवं भावे च कथं सुखहेतुषु शोभनाध्यासलक्षणस्तद्विरोधिषु द्वेषलक्षणोऽभिमानः स्यादिति भावः। तत् समदुःखसुखत्वमेव, कथं केनोपायेन भवतीत्यर्थः। धैर्येणेति। सुखेदुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तम्भकेन प्रयत्नेनेत्यर्थः ॥ १५ ॥

रा-आ॥यत्त्वात्मनो नित्यत्वं देहानां स्वाभाविकं नाशित्वं च *शोकानिमित्तमुक्तं† 'गतासू-
नगतासूंश्च नानुशोचन्ति पण्डिताः' इति ; तदुपपादयितुमारभते—

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥** १६

रा॥असतो देहस्य सद्भावो न विद्यते । सतश्चात्मनो नासद्भावः । उभयोर्देहात्मनो-
रुपलभ्यमानयोर्यथोपलब्धि तत्त्वदर्शिभिरन्तो दृष्टः । निर्णयान्तत्वान्निरूपणस्य निर्णय
इहान्तशब्देनोच्यते । देहस्याचिद्वस्तुनोऽसत्त्वमेव स्वरूपम् ; आत्मनश्चेतनस्य सत्त्वमेव
स्वरूपमिति निर्णयो दृष्ट इत्यर्थः ।

ता॥ 'नासतः' इतिश्लोकं व्यवहितमप्युपात्तमनोपपन्नमतयावतारयति—यत्त्विति। स्वाभाविकं परि-
णामि[1]स्वभावस्यावश्यम्भावि, न तु हेत्वनपेक्षं शोकानिमित्तं शोकानिमित्तविरोधि, शोकाभावनिमित्तमि-
त्यर्थः। इतःपूर्वं स्वमात्रकथनमात्रत्वात्—उपपादयितुमित्युक्तम् । अस्यापि श्लोकस्योपपादनार्थप्रति-
ज्ञामात्ररूपत्वात् आरभत इत्युक्तम् । सदसद्भावाभावादिशब्दानां प्रकरणोचितमर्थविशेषं विवृण्वन्
व्याख्याति—असत इति । असतस्सतश्चेति व्याख्येयम् । तस्य प्रकरणादिविशेषितार्थप्रतिपादनम्—
देहस्यात्मन इति। अनयोरिति निर्देशफलितमुक्तम्—उपलभ्यमानयोरिति । तत्त्वदर्शनस्य तुशब्द-
द्योतितामुपलम्भाननिवृत्तिमभिप्रेत्याह—यथोपलब्धितत्त्व दर्शिभिरिति। एतेन तद्रूढ, तद्भावस्त-
त्त्वमिति शङ्करोक्तमपहसितम् । सच्छब्दनिर्दिष्टस्य नित्यस्य विनाशायोगादन्तशब्दस्य निर्णयार्थत्वम् ।
तत्र शब्दवृत्तिप्रकारम् इह देहात्मविवेकप्रकरणे तत्त्वदर्शिभिरित्यादिसन्निधौ च तस्यैवौचित्यं चाह—
निर्णयान्तत्वादिति । ननु देहस्य सद्भावो न विद्यत इत्ययुक्तं प्रत्यक्षादिविरोधात् ; आत्मनोऽसद्भावो
न विद्यत इति चायुक्तम्, [2]'असदेवेदमग्र आसीत्' इत्यादिसकलनिषेधदशायां तस्याप्यसच्छब्दवाच्य-
त्वात् । अवस्थाविशेषापेक्षयापि सत्त्वमसत्त्वं च देहात्मनोर्द्वयोरपि समानम्। अतो भाष्यान्तर [3]वत्सत्का-
र्यवादादिविषयतया अयं श्लोको व्याख्येय इत्यत्राह—देहस्येति । 'अचिद्वस्तुनः चेतनस्य' इति
पदाभ्यां सत्त्वासत्त्वयोः स्वभावत्वे हेतुः, चिदचिद्विषयतया सदसच्छब्दयोः प्रयोगश्च सूचितः । नन्वेव-

प्र-पा॥* अशोकनिमित्त. पा॥ † गी. २-११.
[1]. परिणामस्वभाव. पा ॥
[2] छान्दोग्योपनिषदि. प्र. ६ ख. २. श्लो.
१-†तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयमिति॥ इदं जगत् अग्रे सृष्टेः प्राक्, असदेवासीत्, न तु सदा-सीदित्यर्थः. । नामरूपविभागाभावलक्षणस्य असत्त्वस्य सिद्धान्तेऽपि सम्मतत्वादाह एकमेवाद्वितीयमिति। प्राग-भावमौनेरेकेण अवस्थाया वा अवस्थाश्रयस्य वा क-स्यापि सत्त्व नास्तीत्यर्थः । यद्वा, असदेवेत्यत्र 'अ'इत्ये-तत् सत्पदेनासमस्तं सत् 'सदेव सोम्येदमग्र आसीदे-कमेवाद्वितीयम्,' इति वाक्यार्थप्रतिक्षेपकम् ॥
[3]. वत्स. पा.

शं॥न हि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तुसत् भवति। विकारो हि सः
विकारश्च व्यभिचरति । यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुप-

आ॥नित्य आत्मेत्युक्तम्।किमात्मैव नित्य आहोस्विदन्यदपि, अन्यदपि।तत्किमिति आह— .

ज॥'न त्वेवाहम्'इत्यत्र भगवान्कृष्णोऽपि यं प्रति पक्षे निश्चितः, स आक्षेप्तु प्रसक्तिं दर्शयति—नित्य
इति॥ उक्तमनादित्वेन हेतुनाऽनुमितम्। ततः किमित्यत आह—किमिति॥ अनादिश्चेत्यपि ग्राह्यम् ।
आद्ये दृष्टान्ताभावेन व्याप्तिग्रहासम्भवः । द्वितीयस्त्वप्रामाणिकत्वादप्रयोज्यम् इति पूर्वपक्ष्यभिप्रायः।
विदिताभिप्रायः सिद्धान्ती किमुभयत्रान्वये समनति, व्यतिरेकेणेति मन्यमानो द्वितीयपक्षमुपादत्ते—

रा॥ विनाशस्वभावो ह्यसत्त्वम्। अविनाशस्वभावश्च सत्त्वम्। यथोक्तं भगवता पराशरेण— *'तस्माद्य विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम्' †'सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्' ‡'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम्' §'यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै। परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्' इति। अत्रापि—

ता॥ यदि देहात्मनोरसदसत्त्वोक्त्या न परिहृतमित्यत आह—विनाशेति। हिशब्देन प्रयोगप्रसिद्धिर्द्योतिता। तामेव दर्शयति—यथोक्तमिति। १दशश्लोक्या—सत्त्वासत्त्वभिन्नाभिन्नत्वासत्त्वशब्दाना शारीरस्य मध्ये पुराणोपक्रमोपसंहारादिना तत्प्रकरणोपक्रमोपसंहारादिना मध्ये ३'मही घटत्वम्' इत्यादिना च सविकारत्वेनैवावस्तुत्वोपपादनात् श्रुतिस्मृत्यन्तरप्रत्यभिज्ञानुरोधाच्च निर्विकारसविकारतया नित्यानित्यचेतनाचेतनविषयत्व स्थापितम्। व्यवहारार्हत्वानर्हत्वादिविषयौ सदसच्छब्दौ तयो परमार्थापरमार्थविषयत्वमसत्यशब्दाभ्या कथमवगम्यमिति शङ्कायां नाशानाशयोरेव परमार्थापरमार्थादिशब्दप्रयोगहेतुत्वे महर्षिवचनमुपादत्ते— अनाशीति। विनाशोपलक्षितपरिणामवद्द्रव्यादिभि पूर्वावस्थाप्रहाणेन अवस्थान्तरयोगादेव अवस्तुशब्दवाच्यत्व, तदभावाच्च वस्तुशब्दवाच्यत्वमित्यस्मिन्नर्थे स्पष्टोक्ति दर्शयति—यत्त्विति। अत्रोत्तरश्लोकद्वयैकार्थ्याच्चायमेवार्थ इत्याह— अत्रापीति। एतेन

प्र पा॥ * वि पु २-१२-४३ † वि पु २ १२ ४५ ‡ वि पु २ १४-२४. § वि पु २ १३-१००.

†१ दशश्लोक्यामिति 'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च। नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य॥ ३८॥ ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः। ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥ ३९॥ यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्। तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥ ४०॥ वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम्। यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम्॥ ४१॥ मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः। जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु॥ ४२॥ तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम्। विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम्॥ ४३॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्। एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति॥ ४४॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते॥ ४५॥ यज्ञः पशुर्वह्निरशेषऋत्विक्सोमः सुराः स्वर्गमयश्च कामः। इत्यादिकर्माश्रितमार्गदृष्टं भूरादिभोगाश्च फलानि तेषाम्॥ ४६॥ यच्चैतद्भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि तत्र कर्मवश्यः। ज्ञात्वैवं ध्रुवमचलं सदैकरूपं तत्कुर्याद्विशति हि येन वासुदेवम्॥ ४७॥' इत्येषा दशश्लोकी (वि. पु २. अ १२ अध्या)

२ ता॥ पा॥

३ वि पु २ १२.४२. †अयं दशश्लोक्यामन्तर्भूतः अन्यथा सप्तश्लोकाहरन्मिथ्यात्वमाह महीति॥ मही पिण्डादिद्वारा घटत्वं प्राप्ता लक्ष्यते। घटत्वादनन्तरं च कपालिका लक्ष्यते। कपालिका सती चूर्णं रजश्च दृश्यते। ततश्चाणुरतिसूक्ष्मा लक्ष्यते। स्वकर्मणा प्रतिबन्धेन स्तिमिता मन्दीभूत आत्मनिश्चया येषां तैः परिणामपरम्परायां किं वस्तु लक्ष्यते। न किंचित् पूर्वरूपप्रच्युतरित्यर्थः। तथा च श्रुतिः 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति॥

रा॥ लब्धेरसत्, तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसन्। जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः कार्यस्य घटादेः मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम्॥

तदसत्त्वे सर्वाभावप्रसङ्ग इति चेन्न, सर्वत्र बुद्धिद्वयोपलब्धेः, सद्बुद्धिरसद्बुद्धिरिति। यद्वि-

रा॥*'अन्तवन्त इमे देहाः' †'अविनाशि तु तद्विद्धि' इति ‡ह्युच्यते। तदेव सत्त्वासत्त्वव्यपदेशहेतुरिति गम्यते। §अत्र तु सत्कार्यवादस्यासंगतत्वान्न तत्परोऽयं श्लोकः। देहात्मस्वभावाज्ञानमोहितस्य तन्मोहशान्तये ह्युभयोर्नाशित्वानाशित्वरूपस्वभावविवेक एव वक्त-

ता॥क्वचिच्चेतनविषयासच्छब्दोऽपि देवादिनामरूपप्रहाणावस्थाविशेषापेक्षयेत्युक्तं भवति। स्वरूपतस्तु निर्विकारत्वात्सच्छब्दवाच्यत्वमेव;श्लोकयोः व्युत्क्रमेणो १पपादनं 'नासतः' इतिक्रमापेक्षया। ततः किमित्यत्राह—तदेवेति। प्रतिज्ञातस्यार्थस्य हेतुर्ह्यनन्तरं वाच्यः।तद्धेतुत्वं चात्र स्वरसतो २ऽवगम्यमानं परित्यज्यार्थान्तर ३परतः व्याख्यातु न युक्तमिति भावः।कुदृष्टिकल्पितव्याख्यां दूषयति—अत्रेति। न ह्यत्र वैशेषिकादिनिरासः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनं सांख्यसिद्धान्तोपन्यासादिर्वा प्रक्रियते।न च सत्कार्यवादेन देहात्मविवेकोपपादनं शोकशान्तिर्वा सिद्ध्येत्। सर्वस्य नित्यत्वाचेतनानामपि ४नित्यत्ववर्णनमसिद्धस्यात्यन्तासिद्धेन साधनमिति भावः। उक्तार्थपरत्वे महाप्रकरणसङ्गतिमाह— देहेति। यदज्ञानान्मोहः, तस्यैव हि ज्ञापनं तन्निवृत्तये स्यादिति भावः।अत्र 'तन्मोहशान्तये' इति द्वितीयाध्यायार्थ५संग्रहश्लोकस्सूचितः। सत्कार्यवादे पूर्वोत्तरविरोधमभिप्रयन् स्वोक्तस्यावान्तरप्रकरणसङ्गतिमप्याह—

प्र·पा॥ * गी. २. १८ † गी २. १७. ‡इत्युच्यते पा॥ §अत्रसत्कार्य. पा॥

१. पादानम्. पा॥ २ गम्यमानम्॥ ३. परत्वेन. पा॥ ४. नित्यत्वेनवर्ण. पा॥

५. 'नित्यात्मासङ्गकर्मेहागोचरा सांख्ययोगधीः। द्वितीये स्थितधीलक्ष्या प्रोक्ता तन्मोहशान्तये॥ ६॥

यां॥ यया बुद्धिर्न व्यभिचरति तत्सत्, यद्विषया व्यभिचरति तदसत् इति सदसद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे न नीलोत्पलवत्, सन् घटः, सन् पटः,सन् हस्तीति। एवं सर्वत्र तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति। तथाच दर्शितम्। न तु सद्बुद्धिः। तस्मात् घटादिबुद्धिविषयोऽसन् व्यभिचारात्, न तु सद्बुद्धिविषयः, अव्यभिचारात्॥

घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेन्न; पटादावपि सद्बुद्धिदर्शनात् विशेषणविषयैव सा सद्बुद्धिः॥

सद्बुद्धिवत्। घटबुद्धिरपि घटान्तरे दृश्यत इति चेन्न; पटादावदर्शनात्॥

सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेन्न; विशेष्याभावात्। सद्बुद्धिर्विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किंविषया स्यात्? न तु पुनस्सद्बुद्धेः विषयाभावात्॥

आ॥ नासत इति॥ असतः कारणस्य सतो ब्रह्मणश्चाभावो न विद्यते—'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' इति वचनाच्छ्रीविष्णुपुराणे। पृथग्विद्यतइत्यादरार्थः।

ज॥अन्यदपीति॥ उक्ताभिप्रायेण पृच्छति—तदिति। इतिशङ्कायामिति शेषः। दुर्गमार्थत्वात्पूर्वार्धं व्याचष्टे—असतइति। कारणस्य प्रकृतेः, अभावः प्रागभावः प्रध्वंसश्च। कुत एतदित्यतो भाष्यकारमावल्प्रमाणमाह—प्रकृतिरिति पुरुषः। परमात्मा ब्रह्मशब्दोक्तः। अनादित्वेऽप्येनमागमो ज्ञेयः। ननु असतः सतश्चाभावो न विद्यतइत्येकेनैव वाक्येन द्वयोरभावप्रतिषेधे कर्तुं शक्ये किमेवं पृथक्प्रतिषेधेनेत्यतआह—पृथगिति। विद्यत इति वाक्यद्वयग्रहणम्,असतो भावो न विद्यते, सतश्चाभावो न विद्यत इति द्वयोः पृथगभावप्रतिषेध आदरार्थ इति योज्यम्। आदरश्चानुमानव्याप्तिसद्भावे। अत एवानेक-

रा॥व्यः। स एव "*गतासूनगतासून्' इति च प्रस्तुतः। स एव च 'अविनाशि तु तद्विद्धि' ता॥स एवेति वाक्यद्वयेन । अनन्तरमिति । नहि मात्रयाप्यन्यथ्यवधानमस्तीति भावः । प्रस्तुत उपपाद्यत इतिशब्दाभ्यामपौनरुक्त्यं दर्शितम् । उपसंहरति—अत इति । यथोक्तैवावधारणेनान्येषामपि व्याख्यातॄणाममत्प्रतिभासा निवर्त्यन्ते । यत्तूक्तं यज्ञस्वामिना—'असच्छब्देनाशुभं रजस्तमस्तत्कार्यं दुःखादिकं गृह्यते । सच्छब्देन तु सत्त्वतत्कार्यसुखादिकम् । भावाभावशब्दाभ्यां चाभ्युदयानभ्युदयपर्यायौ भूत्यभूती। उभयोरपि दृष्टोऽन्त इति च राशिद्वयस्य नश्वरत्वमुच्यते। ततश्च पूर्वोक्तद्वन्द्वतितिक्षाहेतुभूतदुःखात्मकस्यानश्वरत्वयोरेव प्रपञ्चनं कृतं भवति' इति । तदयुक्तं, रजस्तमःप्रभृतीनामसदादिशब्दैरुपादाने *१प्रकरणाद्ययोगात् एतदभिप्रायेण च स एव प्रस्तुत इत्युक्तम्। ननु 'मात्रास्पर्शास्तु' इति श्लोके मात्राशब्देन सत्त्वादिगुणा उच्यन्ते। तथा च२कपिलासुरीयके—'गुणाः गुणमात्राः, गुणलक्षण३गुणा अनयनं सत्त्व रजस्तम इति४गुणा इत्युच्यन्ते । ५सत्त्वादिगुणाना गुणाश्च तेषां मात्रा अपदिश्यन्ते। तत्र तत्त्वदर्शनताभयनाशस्वभावताप्रसन्नेन्द्रियतासुखस्वप्रशोधनतेति सत्त्वमात्रा इत्यादौ उपकरणेषु च मात्राशब्दः प्रयुज्यते। 'लघुमात्रः परिव्रजेत्' इत्यादिषु मात्राशब्देन शब्दादिविषयग्रहणे तु शीतोष्णशब्दपौनरुक्त्यं च स्यात् इति । तदप्यसत्—मात्राशब्दस्य सत्त्वादिषु मुख्य६प्रयोगाभावादन्यत्रापि प्रसिद्ध्यभावादनाप्रसिद्धार्थस्वीकारहेत्वभावाच्च । शीतोष्णशब्दपौनरुक्त्यं तु७सामान्यविशेष*८परत्वात्, *९प्रदर्शनार्थत्वाच्च परिहृतम् । अस्तु तर्हि प्रस्तुतयोस्सुखदुःखयोरेव सदसच्छब्दाभ्यां ग्रहणम्। मैवं;

प्र-पा॥*'गतासूनगतासूंश्च नानुशोचन्ति इति' प्रस्तुत पा॥

*१. प्रकरणाद्ययोगात्— 'गतासूनगतासूंश्च,' इत्यादिना इह आत्मस्वरूपनिरूपणस्यैव प्रकृतत्वात् तयोरेव सदसच्छब्दाभ्यां प्रतिपादनस्य प्रकरणानुगुण्यादित्यर्थः ॥ २. कापिलासुरीये —'के गुणा पा॥

३. गुणावयव पा॥ ४ त्रिगुणा. पा॥

५. सत्त्वादीना गुणाश्च. पा॥

६. प्रयोगाभावात्प्रसिद्ध्यभावाधाना प॥

७. रूपत्वात् पा॥

*८. सामान्यविशेषपरत्वात्—मात्राशब्दस्य सामान्यपरत्वात्, शीतोष्णेत्यस्य विशेषपरत्वाच्चेत्यर्थः नहि सामान्यविशेषपरशब्दप्रयोगस्थले पौनरुक्त्यमस्ति, 'परिमलद्रव्यमानय, पुष्पमानय' इत्यादौ ॥

*९ प्रदर्शनार्थत्वादिति—'सुखदुःखदा' इत्युक्तम् मात्रास्पर्शस्य सुखदुःखप्रदत्वं विशेषेण प्रदर्शयितुं शीतोष्णविशेषनिर्देश इति भावः. तथा च प्रयोजनभेदान्न पौनरुक्त्यम् यथा वा 'अन्नमानय भोक्तुम्, अन्नमानय दातुम्' इति च प्रयोगे न पौनरुक्त्यम्, तद्वदित्यर्थः ॥

शां॥एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेन्न; इदमुदकमिति मरीच्यादौ अन्यतराभावेऽपि सामानाधिकरण्यदर्शनात् ॥

तस्माद्देहादेर्द्वन्द्वस्य च सकारणस्यासतो न विद्यते भाव इति । तथा सतश्चात्मनः अभावः अविद्यमानता न विद्यते, सर्वत्राव्यभिचारादित्यवोचाम । एवमात्मानात्मनोस्सदसतोरुभयोरपि दृष्टः उपलब्धोऽन्तो निर्णयः,सत् सदेव,असदसदेवेति,अनयोर्यथोक्तयो.

आ॥असतः कारणत्वंच—'सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः' इति भागवते ।

ज॥दृष्टान्तप्रदर्शनम् । ननु सतो ब्रह्मण इत्यस्तु, असतः कारणस्येति तु कथमिति। अत आह—असत इति । असच्छब्दार्थस्य कारणत्वं च भागवते प्रसिद्धमित्यर्थः । असतोऽसच्छब्दस्य कारणत्वे कारणार्थत्वमिति वा । सदसद्रूपया कार्यकारणरूपया। असत इति श्रुतेरनेकार्थत्वादत्रोदाहरणम् । कारणस्याव्यक्तेश्च असच्छब्दार्थत्वम् । गत्यर्थस्य सदेः कर्मणि क्विबन्तस्य हि सदिति रूपम् , 'असदव्यक्तरूप-

रा॥' अन्तवन्त इमे देहाः ' इत्यनन्तरमुपपाद्यते । अतो यथोक्त एवार्थः ॥ १६ ॥

रा-अ॥ आत्मनस्त्वविनाशित्वं कथमवगम्यत इत्यत्राह—

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥** १७

ता॥ तयोरेवाभ्युदयानभ्युदय[१]रूपत्वविवक्षायां तद्धेतुतया व्यतिरेकनिर्देशायोगात्।सुखदुःखयोर्दुःखसुखकारणत्व[२]निर्देशश्च लोकवेदविरुद्धः।सुखादिनैश्वर्यनिवृत्त्यादिकथनं च प्रस्तुतानुपयुक्तम्।एवं योजनान्तरेष्वपि दूषणमूह्यम् । अतो महाप्रकरणपूर्वापरादिसङ्गतेर्यथोक्त एवार्थः ॥ १६ ॥

अथ प्राप्यविशेषणतया तदनुप्रवेशात्पुरुषार्थभूतस्य सहैव शोकनिवृत्तिहेतोरात्मनित्यत्वस्य ' नासतः' इति श्लोके चरमप्रतिज्ञातस्यापि बुद्धिस्थक्रमेण प्रथममुपपादनं क्रियत इत्यभिप्रायेणाह—आत्मनस्त्विति।तु शब्देन जननमरणादेस्सर्वशोकसाक्षिकत्वात् ,[३]'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति' इति देहसमानयोगक्षेमत्वश्रवणाच्च कथमात्मनो देहाद्विशेष इत्यभिप्रेतम्।एवमपि विशेषोऽस्तीति

प्र-पा ॥ १ रूपविपा ॥ २. निषेधश्च पा ॥ स्यादविनाशवान् भवति विनाशस्तु आत्य'न्तिकनाशनम्-
३.बृह.उप.४ ४.१२. †एतेभ्य इति ॥ भूतेषु उत्पद्य कोच, 'अनुविनश्यति' इत्यस्य 'न पश्यतीत्यर्थः मानेषु स्वयमुत्पद्यमानः आव., तेषु नश्यत्सु अनु प-' इति (४ ४ १६.) भाष्यकारैरुक्तम् उपनिषत्सु स्यात् स्वयं नश्यतीत्यर्थं देहोत्पत्ति.विन.शानुविधायु-। विरामप्रादुर्भावः ॥

शां॥स्तत्त्वदर्शिभिः। तदिति सर्वनाम; सर्वं च ब्रह्म; तस्य नाम तदिति। तद्भावस्तत्त्वं ब्रह्मणो याथात्म्यम् । तत् द्रष्टुं शीलं येषां ते तत्त्वदर्शिनः, तैस्तत्त्वदर्शिभिः । त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि तितिक्षस्वेत्यभिप्रायः ॥ १६ ॥

आ॥'असतः सदजायत 'इति च, अव्यक्तेऽस्य। संप्रदायतश्चैतत्सिद्धमित्याह—उभयोरपीति। अन्तो निर्णयः ॥ १६॥

**किं बहुना यद्देशतोऽनन्तं तन्नित्यमेव,**

ज॥न्यात्मा रण चापि मन्दितम्'इति वचनात्।अत्रार्थे भगवता प्रमाणमुच्यते—**उभयोरपीति**॥तदसत् , अन्यदर्शनस्यान्यान्यसम्प्रदायकत्वात् ,इत्याशङ्क्य दर्शनमूलकः सम्प्रदायः उपदेशपरम्परारूपो लक्षणयास्य प्रमाणत्वेनोच्यत इत्याह—**सम्प्रदायतश्चेति** ॥ चशब्दो भाष्यकारोदितप्रमाणसमुच्चये । आगमो ग्रन्थनिबद्ध वाक्यम्, सम्प्रदायस्तु उपदेशपरम्परामात्रमिति भेदः । एतत्प्रकृतिपुरुषयोरनादिनित्यत्वम् । केचिदयिशब्दस्य भिन्नक्रमत्वमङ्गीकृत्य तेन सूचितं प्रमाणं प्रागुदाहृतमिति वर्णयन्ति । नन्वन्तो विनाशादिः परिच्छेदो वाऽत्र तत्त्वदर्शिभिर्दृष्ट इत्युच्यते । तत्कथं न विरोध इत्यत आह—**अन्त इति** ॥ निर्णयोऽनादिनित्यत्वावधारणम् । अपव्याख्यानं त्वन्यत्र निराकृतम् ॥ १६ ॥

'अविनाशि तु'इति श्लोके सर्वगतस्य नित्यत्वमुच्यते,तदप्रकृतानुपयुक्तमित्याशङ्क्य पूर्वार्धं तावत्प्रकृतोपयोगं सूचयन्व्याचष्टे—**किं बहुनेति** ॥ व्याख्यानानुशासनार्थत्वात्सम्प्रदायस्य च मूलानिश्चयात्प्रकृतिब्रह्मणोश्च स्वरूपस्यैवासिद्धेः जीवादन्यस्यानादिनित्यस्याभावात्पुनरन्यस्य व्याप्त्यसिद्धिरित्याशङ्क्य किं बहुना प्रकृत्यादिस्वरूपसाधनेन किञ्चिदमिदं निगमिति बहुना प्रत्येकमुक्तेन **यद्देशतोऽनन्तं तन्नित्यमेवेत्ये**वं भङ्ग्यादिकमपर्दार्नं वेदादिकं जीवादन्यदप्यस्ति। तद्व्याप्तिग्रहणस्थलं भविष्यतीत्याह भगवानित्यर्थः । यद्शब्देन वर्णा गृह्यन्ते । आदिपदेनाकाशादयः। एतेषां च प्रत्यभिज्ञानादिना नित्यत्वसिद्धिः । ननु कालावयवाः क्षणादयः सर्वगता अपि न नित्याः । सत्यम् । नह्यत्र व्याप्तिरुच्यते ।

शा॥तदात्मतत्त्वमविनाशीति विद्धि, येनात्मतत्त्वेन चेतनेन तद्व्यतिरिक्तमिदमचेतनतत्त्वं सर्वं ततं व्याप्तम्। व्यापकत्वेन निरतिशयसूक्ष्मत्वादात्मनो विनाशानर्हस्य तद्व्यतिरिक्तो न कश्चित्पदार्थो विनाशं कर्तुमर्हति, तद्व्याप्यतया तस्मात्स्थूलत्वात्। नाशकं हि शस्त्रजलाग्निवाय्वादिकं नाश्यं व्याप्य शिथिलीकरोति। मुद्गरादयोऽपि हि वेग-

ना॥श्लोकस्य १तुशब्दार्थः। तच्छब्दार्थं २नपुंसकतात्पर्यं प्रतिज्ञा तत्राश्रयसाध्यधर्मयोर्भेदं च व्यनक्ति—तदात्मतत्त्वमिति। न विनष्टुं शीलमस्येत्यविनाशि। हेत्वंशप्रतिपादकं द्वितीयपादं व्याकुर्वन् सर्वशब्दस्य यावयान्वयाचित्यमान मद्वोत्तम इदन्त्वनिर्देशमात्रमस्यसूचितं यावता पाकल्य त-द्विपर्ययेणात्मनः फलितं चेतनत्वं तत एवाचेतने चेतनत्वात्मत्वेन व्याप्तिं च गमयति—येनेति। ३चेतनसमुदायेनाचेतनसमुदायमित्यैतल्लदारुकवादिवयाश व्याप्तइत्यर्थः। ४यद्वा सर्वचेतनानुप्रवेश-योग्यत्वमित्र विवक्षितमित्युभयथापि नात्माणुत्वविरोधः। अत्राय प्रयोगः—आत्मा स्वव्याप्यधी-नविनाशो न भवति, तद्व्यापकत्वेन ततस्सूक्ष्मत्वात्, यथाकाशः। व्यतिरेकेण वा—यो यदधी-नविनाशः,स तत्सूक्ष्मो न भवति,यथा वायुविनाश्यो दीपः - इति।इमं प्रयोगं व्यञ्जयन् प्रयोगान्तरप-तयोत्तरार्धं व्याचष्टे—व्यापकत्वेनेति। विनाशानर्हस्येत्ययशब्दार्थः।तस्य हेतुः निरतिशयसूक्ष्म-त्वादिति। इदं च निरतिशयसूक्ष्मत्वमनेननापेक्षया। 'कश्चित्' इत्यस्यार्थोऽपीति परस्य व्याख्या ५स्वदर्शनविरुद्धेत्यभिप्रायेणाह—तद्व्यतिरिक्तः कश्चित्पदार्थ इति।धर्मिनिर्देशोऽयम्।आत्मनो विनाशं कर्तुं नार्हतीति साध्यार्थः। तत्र हेतुमाह—तद्व्याप्यतया तस्मात्स्थूलत्वादिति। तस्मात्स्थूलत्वादि-त्येव हेतुः। तस्यासिद्धिपरिहारायोक्तं—तद्व्याप्यतयेति। व्याप्तिपूर्वं दृष्टान्तमाह—नाशकमिति। घटा-दिनाशकमुद्गरादावनैकान्त्यमाशङ्क्य परिहरति मुद्गरेति। अयमभिप्रायः न तावन्मुद्गरादेरयोग-

प्र पा॥ *१. तुशब्दार्थं इति 'अविनाशि तु' इत्यत्र तुशब्दश्रूयमाणस्तुशब्दस्तात्पर्यमित्यर्थः सूक्ष्मत्वादात्मना विनाशानर्हस्य तद्व्यतिरिक्तो न कश्चित् पदार्थो विनाशं कर्तुमर्हतीति भाष्यवाक्येन तत्तात्पर्यं सचितमित्यर्थः॥

*२. आत्मनोऽविनाशित्वम् 'अविनाशी स 'इति पुलिङ्गनिर्देशेन हि वक्तव्यम्,आत्मशब्दस्य पुलिङ्गत्वात्. तदिति नपुंसकनिर्देशस्य किं निबन्धनमित्याकाङ्क्षायाम्, आत्मतत्त्वमिति हि तच्छब्देन परामृश्यते, तत्त्वशब्दस्य नपुंसकत्वात्तच्छब्दस्य नपुंसकत्वमिति भाष्याशय इति मत्वा नपुंसकतात्पर्यमित्युक्तम्॥

*३. 'येन सर्वमिदं ततम्' इति जीवात्मनस्सर्वव्यापकत्वान्न्या विभुत्वापत्तिरित्याशङ्कय चेतनसमुदाये-नाचेतनसमुदाय इत्यनेन दारुवह्न्यादिवत्कथं व्याप्त इत्युक्तम्, तथा च सामान्याकारेणात्मनामचेतनेषु व्यापकत्वेऽपि ॥ प्रत्येकमात्मनः सर्वत्र व्याप्तिरिति न अणुत्वविरोध इति भाव॥

*४. 'ततम्' इत्यस्यानुप्रवेशयोग्यमित्यर्थविवक्षया नोक्तापत्तिरिति कल्पान्तरमाह - यद्वेति॥

*५. स्वदर्शनविरुद्धेति - ईश्वरस्यापरिच्छिन्नात्म-मर्वस्य सति सङ्कल्पे जीवनाशकत्वाभ्युपगमात् स्वसिद्धा-न्तविरुद्धत्वार्थ॥

शा॥ किंपुनस्तत् यत्सदेव *सर्वदा इति? उच्यते—अविनाशीति॥ अविनाशि न विनष्टुं शीलमस्येति। †तुशब्दोऽसतो विशेषणार्थः। तद्विद्धि विजानीहि। किं येन सर्वमिदं

आ॥वेदाद्यन्यदपीत्याह—अविनाशीति॥नापि शापादिना विनाश इत्याह—विनाशमिति॥

ज॥ किन्तु यदुक्तिपरिहारायोपलक्षणमात्रमिति। तुशब्दार्थः पथेति॥ तथाप्युत्तरार्धः पुनरुक्त इत्यत आह—नापीति॥ पूर्वं स्वाभाविको नाशो निषिद्धः अविनाशीति ताच्छील्यप्रत्ययात्। अत्र तु नैमित्तिकः, कश्चित्कर्तुं नार्हतीति वचनात्। प्रागनुक्तस्य वेदादेरव्ययत्वस्य कथमनुवाद इत्यत

पा॥ * सर्वदास्ति. पा.　　　　† तुशब्दस्सत . पा

रा ॥ यत्संयोगेन वायुमुत्पाद्य तद्द्वारेण नाशयन्ति । अत आत्मतत्त्वमविनाशि ॥ १७ ॥

रा-अ ॥ देहानां तु विनाशित्वमेव स्वभाव इत्याह—

**अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥** १८

रा ॥ *'दिह उपचये' इत्युपचयरूपा इमे देहा अन्तवन्तः विनाशस्वभावाः । उपचयात्मका

ता॥नात्र घटादिनाशकम्, मुद्गरोपरिस्थापितघटस्य नाशप्रसङ्गात् । नापि वेगमात्रम्, असंयोगेऽपि ध्वंसप्रसङ्गात् । नापि तदुभयमात्र, वेगवत्तृणसंयोगेऽपि प्रसङ्गात् । न च वेगवद्द्रव्यविशेषसंयोगो नाशकः, तस्यैव पृष्ठभागसंयोगे नाशादर्शनात् । अतो वेगवत्काठिन्यादिविशिष्टद्रव्यविशेषभागविशेषसंयोगविशेष एव नाशक इत्यविवादम् । तथा च वायुविशेषोत्पत्तिरपि प्रायशः प्रत्यक्षसिद्धत्वादविवादा । वायोश्च तत्तद्द्रव्यानुप्रवेशेन नाशकत्वं कठिनतरशब्दाभिघातसंक्षोभ्यमाणपदार्थेष्वभ्युपगतम् । एवं सति कृतकारणभावस्याविनि नियमानस्य वायुविशेषस्य नाशहेतुत्वमवश्याभ्युपगमनीयम् । स च वायुः १घटाद्यपेक्षया सूक्ष्मः । यत्र तु वेगाभावेऽप्याक्रमणादिमात्रेण नाशकत्वम्, तत्र मुद्गरावयव २नुन्नघटादिद्रव्यावयवविशेषा भागान्तरं स्वस्मात्स्थूलतरमनुप्रविश्य भिन्दन्ति, आक्रमणमूलान्तरवायुनिस्सरणवशाद्वा वायुपूरितभस्त्रिकाक्रमणादिष्विवेति । अत इति, उक्तहेतुद्वयेन शस्त्रादेरनाशकत्वात् ३आत्मनोऽपि सूक्ष्मतरस्य तन्नाशकस्यान्यस्यादर्शनादीश्वरस्यापि तन्नाशसङ्कल्पाभावादिति भावः ॥ १७ ॥

'नाशतः' इतिप्रतिज्ञाश्लोकोपपादकतयोत्तरश्लोकमवतारयति—देहानामिति । अवधारणेन स्वभावशब्देन च४भवद्वयपदेशैकान्त्यं सूचितम् । 'अन्तवन्तः' इतिसाध्यस्य हेत्वाकाङ्क्षां शमयन् धर्मिप्रतिपादकमेव देहशब्दं निर्वक्ति—दिह उपचय इति । उपचयरूपास्सावयवा इत्यर्थः । देहशब्दो रूढ्या धर्मिप्रतिपादकः; योगेन हेतुप्रतिपादनपर इति भावः । साध्यनिर्देशे ५प्रकृतिप्रत्यययोरर्थमाह—विनाशस्वभावा इति । ६नात्र निरूपणापेक्षया देशाद्यपेक्षया वा निर्णयपरिमाणादिरन्तो विवक्षितः । ७मतुप् च नित्ययोगादिविषय इत्यर्थः । व्याप्तिदृष्टान्तावाह—उपचयेति । श्रुतितदर्थापत्तिभ्यामपि शरीरस्य वि-

प्र-पा ॥ *अवादि, स्वरितेत्, अनिट्. १. घटापे पा. २. नुन्ना घटा पा. ३. आत्मनोऽपि पा.

*४ भवद्वयपदेशैकान्त्यम्—भवदिति निर्देशस्य नियमेन योगदशम् ॥

*५प्रकृतिप्रत्यययोः-अन्तशब्दमतुप्प्रत्यययोरित्यर्थः ॥

*६ निर्णयान्तत्वाविरूपणस्य निरूपणापेक्षयान्तो निगम 'विन्ध्यान्तो देश 'इत्यत्र विन्ध्यस्य देशसीमारूपत्वाद्देशापेक्षया परिमाणस्यान्तशब्देन प्रतीते तद्व्यावृत्त्यर्थमन्तशब्दस्याख्यानमित्यभिप्रेत्याह-नात्रनिरूपणापेक्षयेति ॥

*७ अन्तशब्दस्य विनाशार्थकत्वेऽप्यन्तवन्त इत्यस्य विनाशस्वभावा इत्यर्थकत्वे कथमित्याशङ्कायामाह—मतुप् च नित्ययोगादिविषय इत्यर्थ इति ॥

शं ॥ जगत्तत् व्याप्तं सदाख्येन ब्रह्मणा साकाशम् आकाशेनेव घटादयः । विनाशमदर्शनम् अभावम् । *अव्ययस्य नैतत्सदाख्यं ब्रह्म स्वेन रूपेण †व्येति, निरवयवत्वात्, देहादिवत् । नाप्यात्मीयेन आत्मीयाभावात्, यथा देवदत्तो धनहान्या व्येति । न त्वेवं ब्रह्म व्येति । अतः अव्य-

आ ॥ अव्ययं च तत् ॥ १७ ॥

ज्ञ ॥ आह—अव्ययमिति ॥ विधानभेदं वैमुख्येन शापादिना विनाशस्याभावं साधयितुमिति भावः ॥

पा ॥ * अव्ययस्य, न व्येति - उपचयापचयौ न यातीत्यव्ययम्, तस्याव्ययस्य, नैतत्सदा. पा.
† व्येति न व्यभिचरति । न स्वेन. पा.

शा॥हि घटादयोऽन्तवन्तो दृष्टाः । नित्यस्य शरीरिणः कर्मफलभोगार्थतया भूतसङ्घातरूपा देहाः *'पुण्यः पुण्येन' इत्यादिशास्त्रैरुक्ताः कर्मावसानविनाशिनः ।

ता॥नाशाभावमुपपादयतीत्याह—नित्यस्येति। १'नित्यस्य,शरीरिण.' इतिपदद्वयसूचितेन २कथं कैरुक्ता इत्याकाङ्क्षां शमयति—कर्मेत्यादिना।शरीरिण इतीनिप्रत्ययेन षष्ठ्या च प्रतीतस्य सम्बन्धस्य कर्मात्यो हेतु॰ प्रकृतोपयोगाद्दर्शितः। ईश्वरादिशरीराणामकर्माधीनत्वात्तद्व्यवच्छेदार्थम् 'इमे' इति निर्देशम् चितमुक्तम्—भूतसङ्घातरूपा इति । अनेकभूतसङ्घातात्मकत्वमपि अनित्यत्वे हेतुः । कर्मावसान विनाशिन इति शरीरशब्दनिर्वचनफलितम्।शिरणाद्धि शरीरम्।४कैश्चिच्छास्त्रैस्तावद्देहानामुत्पत्तिविनाशौ द्वावप्यभिधीयेते । यैश्च कर्माधीनोत्पत्तिमात्रमुक्तम्,तैरप्यर्थात्कर्मावसाने विनाशोऽप्युक्त एव स्यादिति भावः। एवं च'इमे देहाःशरीरिण 'इति पदत्रयेण सूचितं भूतसङ्घातरूपत्वसावयवत्वकर्मफलभोगार्थत्वरूपं

प्र पा ॥ *बृ उप ६. अध्या ४ ब्रा ५ वा ५-२-१३ च †पुण्य पुण्येनेति –'यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्य पुण्येन कर्मणा भवति पाप पापेन' इति यथाकारी यथाचारी—यथा कर्तु यथा आचरितु शीलमस्य सोऽय यथाकारी यथाचारी अग्निहोत्रादिकर्म तयोः यतापादि सन्ध्यावन्दनादिक वा चरणम् . तथाभवति—तत्फलयुक्तो भवतीत्यर्थ . तदेव प्रपञ्चयति — साधुकारी साधुर्भवति पापकारी पापो भवतीति । सत्कर्मकारी ब्राह्मणादिरमणीयशरीरयुक्तो भवति पापकारी च चण्डालादिकुत्सितशरीरयुक्तो भवतीत्यर्थ एते साधुकारित्वपापकारित्वे अपि प्राक्तनपुण्यपापप्रयुक्ते इत्याह—पुण्य पुण्येनेति ॥

*१. 'नित्यस्य शरीरिण 'इतिपदद्वयसूचितेन—आत्मनित्यत्वेन शरीरस्य कर्मफलभोगार्थत्वेन चान्वय ॥

२. पदद्वयसूचिते श्रुतिस्मर्यमाणेवेति। कथ कैरु पा

*३ आत्मनित्यात्व नित्यस्येत्यनेन उक्तमेवेति तेन तत्सूचितम्.शरीरिण इति इनिप्रत्ययस्य स्वावच्छिन्नभा गसाधनीभूतशरीरत्वरूपसम्बन्धबोधकत्वात् शरीरस्य कर्मफलभोगार्थत्वं तेन शब्देन सूचितम् . नित्यस्य शरीरस्य कथं कैरुक्ता इत्याकाङ्क्षानिवारकत्वं कथमित्युक्ते आत्मनो नित्यत्वात् 'पुण्य पुण्येन कर्मणा' इति शास्त्रे देहा उक्ता इति कथन युज्यते आत्मानित्यत्वे पुण्येन कर्मणा पुण्यो भवति पुण्यफलावच्छेदकशरीरवान् भवतीति न वक्तु शक्यते,पुण्यकर्मिण आत्मनो जन्मान्तरस्थितस्य नष्टत्वात्,तस्य पुण्यफलावच्छेदकजन्मान्तरीण शरीरवत्त्वासंभवादित्यात्मनो नित्यत्व 'पुण्य पुण्येन' इत्यादिशास्त्रैर्देहानामुक्तत्वे उपपादकमिति तेन 'कैरुक्ता' इत्याकाङ्क्षानिवृत्ति 'कथमुक्ता' इत्याकाङ्क्षाया कर्मफलभोगार्थतया उक्ता इत्येवपरिहार . शरीरिशब्दसूचितेन शरीरस्य कर्मफलभोगार्थत्वेन ज्ञानेनैव भवतीति शरीरिशब्दसूचित शरीरस्य कर्मफलभोगार्थत्व निरुक्ताकाङ्क्षा निवारणोपयिकमिति नानुपपत्ति ॥

*४ श्रुत्या श्रुत्यर्थोपरया च शरीराणामुत्पत्तिविनाशित्व प्राक् प्रतिपादितमुपपादयति—कैश्चिच्छास्त्रैरित्यादिना ॥

शा॥यस्मादस्य ब्रह्मणो विनाशं न कश्चित्कर्तुमर्हति,न कश्चिदात्मानं विनाशयितुं शक्नोति ईश्वरोऽपि। आत्मा हि ब्रह्म, स्वात्मनि च क्रिया*विरोधात्, यथा चक्षुर्गतरूपाश्चक्षुर्न पश्यति॥

आ॥भवतु देहस्यापि कस्यचिन्नित्यत्वमिति । नेत्याह—अन्तवन्तइति। अस्तु तर्हि दर्पण-

ज॥देहानामन्तवत्त्व प्रागुक्त किमर्थमुच्यत इत्यत आह—भयत्विति ॥ आत्मनित्यत्वानुमानस्य प्रतिपक्षे वक्तु स्वाभिप्रेतस्य हेतो. सिद्धान्तिनाप्यभ्युपगतत्वं दृढीकुर्वता पूर्वपक्षिणा देहस्यापि कस्यचिन्नित्यत्वं भवतु किमिति पृष्टे नेत्याहेत्यर्थ. । सिद्धार्थतापरिहाराय कस्यचिदित्युक्तम् । नन्वतिप्रसङ्गोऽयं कस्मान्न भवति—कस्य चिदिति विशेषणवैयर्थ्यप्रसङ्गात् । नित्यस्येत्यात्मनित्यत्व पुन. कस्मादुच्यत इत्यत आह अस्त्विति । एव देहानित्यत्व सिद्धान्तिनोऽपि सिद्ध कृत्वा तर्हि प्रतिबिम्बस्यात्मन उपाधे

पा ॥ * विरोधात् , चक्षुर्गत पा.

रा ॥ आत्मा त्वविनाशी, कुतः, अप्रमेयत्वात् । न ह्यात्मा प्रमेयतयोपलभ्यते, अपि तु प्रमातृतया। तथा च वक्ष्यते—*"एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः" इति। न त्वा-

ता॥शरीराणामन्तवत्त्वे हेतुत्रयमुक्तम्।अनाशिनोऽप्रमेयस्येति पदद्वयमात्मनित्यत्वाख्यसाध्यसम्भावनातद्धेतुपरतया व्याख्याति—आत्मा त्विति।१नित्यत्वस्य नाशानर्हत्वेन स्थिरीकरणात् 'नित्यस्य' 'अनाशिनः' इत्यनयोरपुनरुक्तिः;२स्थूलसूक्ष्मनाशविरहाभिप्रायाद्वा। असिद्धो हेतुः,आत्मनोऽप्यस्मत्सिद्धान्ते प्रमाविषयत्वादित्यत्राह—नह्यात्मेति । प्रमेयत्वपर्युदासः प्रमेयत्वैकस्वभावघटादिव्यावर्तनमुखेन प्रमातृत्वपर्यवसितः,नञोऽत्र तदन्यवाचित्वात् । एवमेव हि क्षेत्रक्षेत्रज्ञयोर्विवेको वक्ष्यत इत्याह—तथा चेति। एतेन ज्ञानाविषयत्वमात्र व्याकुर्वन्निरस्तः । प्रमेयत्वं चात्र भोग्यत्वपर्यवसितम् । तद्व्यतिरेकश्च पूर्वोक्तकर्मफलभोगार्थत्वरूपहेतुव्यतिरेक३रूपेण भोक्तृत्वपर्यवसितः । ततश्चाथ पूर्वोक्तहेत्वन्तरद्वयव्यतिरेकस्यापि प्रदर्शनार्थं इति मत्वा तयोरपि व्यतिरेकमाह—नचेत्यादिना।४सावयवत्वे योग्यानुपलब्धिमाह—सर्वत्रेति।५सर्वशब्दोऽत्र देहाद्याकार्त्स्न्यपरः । तेनाणोरप्यात्मनः 'पादे मे वेदना, शिरसि मे सुखम्' इत्यादिसुखदुःखनिमित्ततत्तदवयवावच्छिन्नव्यवहारदशायामपि निरवयवत्वोपलब्धिरुक्ता।६यद्वा देवादिरूपेण विचित्रप्रकारेष्वनन्तेषु देहेषु क्वचिदपि देहे देहिनस्सावयवत्वं नोपलभ्यमित्यर्थः । अहमित्येकवचनमेकस्मिन् देहेऽभिमन्तुरात्मन एकत्वं सूचयति । यद्यात्मा सावयवस्स्यात्, तदावय७वीति कदाचिदुपलभ्येत, प्रत्येकं तदवयवानामपि चैतन्यस्यावश्याभ्युपगमनीयत्वात् । सावयवत्वे ह्यवयवसङ्घातरूपोऽवयविरूपो वा स्यात्, उभयथाप्यवयवगतविशेषगुणमन्तरेण न तत्र विशेषगुणसिद्धिः। किण्वादिष्वपि हि प्रत्येकमभिद्वापि मदशक्तिः पाक८विशेषाद्रसविशेषादिवत्प्रत्येकं जायते । शक्तेश्चापर्यनुयोज्यत्वेऽपि विशेषगुणेष्वयं

प्र-पा ॥ * गी. १३-१.

*१. नित्यत्वस्य नाशानर्हत्वेन स्थिरीकरणादिति—तथाचानाशिन इति नित्यत्वे हेतुः, न त्वनाशित्वमेव नित्यत्वमिति शंके न पौनरुक्त्यमित्यर्थः ॥

*२. प्रकारान्तरेण पौनरुक्त्यपरिहारमाह—स्थूलसूक्ष्मनाशविरहाभिप्रायाद्वेति स्थूलनाशराहित्यस्य नित्यत्वरूपत्वे अविनाशित्वस्य सूक्ष्मनाशविरहार्थकत्वेन न पौनरुक्त्यम्. नित्यत्वस्य सूक्ष्मनाशविरहरूपत्वे तु अविनाशित्वस्य अन्यविधनाशविरहार्थकत्वेन न दोषइतिभावः ॥ ३. रूपे. पा.

*४. सावयवत्वे योग्यानुपलब्धिमाहेति—आत्मनस्सावयवत्वाङ्गीकारे योग्यानुपलब्धि बाधकमाहेत्यर्थः ॥

*५ सर्वशब्दोऽत्र देहाद्याकार्त्स्न्यपर इति—सर्वत्र देहे इति भाष्यस्थसर्वशब्दस्य सर्वदेहपरत्वे सर्वस्मिन् देहे अहमिदं जानामीतिप्रत्ययस्य कस्यापि पुरुषस्य असम्भवात् बाध इति तथा व्याख्यानम् ॥

*६. सर्वत्र देहे इत्यस्य सर्वस्मिन्देहे इत्यर्थकत्वमङ्गीकृत्यापि वाक्यार्थं योजयति—यद्वेति ॥

७. वोऽहमिति. पा. ८. वद्यादस. पा.

श ॥ किं पुनस्तदसत् यत्स्वात्मसत्तां व्यभिचरतीति ? उच्यते—अन्तवन्त इति ॥ अन्तो विनाशो येषां तेऽन्तवन्तः।यथा मृगतृष्णिकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते, स तस्यान्तः;तथा इमे देहास्स्वप्नमायादेहादिवच्चान्तवन्तः नित्यस्य शरीरिणः

आ ॥ नाशात्प्रतिबिम्बनाशवदात्मनाश इत्यत आह—नित्यस्य,'शरीरिण इति। ईश्वरव्यावृ-

ज॥देहस्य नाशान्नाशोऽस्तु दर्पणनाशान्मुखप्रतिबिम्बस्येवेति पूर्वपक्षिणा प्रतिपक्षेऽभिहिते तत्प्रतिषेधायेदमाहेत्यर्थः।अनेन *तथाप्यात्मा नित्यइति* वाक्यवृत्तिः सूचिता। अनुवादे प्रयोजनाभावात् ये देहा अनित्या न तेषामुपाधित्वम्,यस्योपाधित्वम्,नाशावनित्य इति भावः।तदिदमुक्तम्—इमे इति।व्यक्तीकरिष्यते चैतत् । ननु शरीरिणो देहा इति व्यर्थम्, अशरीरस्य देहाभावादित्यत आह शरीरिण इति ॥

शा॥नेकोपचयात्मक आत्मोपलभ्यते, सर्वत्र देहे 'अहमिदं जानामि'इति *देहस्य चान्यस्य च प्रमातृत्वैकरूपेणोपलब्धेः।

ता॥नियमो दुष्यत । [1]ज्ञानद्रव्यत्वं हेऽप्येवमेव,निष्प्रमसमुदाये मप्रमत्वायोगात्। एवं च सति समान एवैकस्मिन्[2]देहे मिथः कर्मानुरूपेष्यानिग्रहानुग्रहादयोऽप्युपलभ्येरन्।समुदायावयविनोश्चातिरीन्यायमत यत्त्यतिरिक्तयोरभावादवयवानामनुभवितृत्वं स्यात्।तथा सति पाण्याद्यवच्छिन्नात्मावयवानुभूतं तदन्योऽवयवो न प्रतिसन्दधीतेति'दक्षिणहस्तेन मयैव स्पृष्टं वामहस्तेन पुनः स्पृशामि'इत्यादिप्रतिसन्धानं न स्यात्। न चात्मावयवानामागन्तुकसञ्चारात्तदुपपत्तिः ,आत्मावयवानां पूर्णपुञ्जकल्पनाप्रसङ्गेन सङ्घातविशेषस्याप्यसिद्धिप्रसङ्गात्। न च वस्त्रादिषु मृगमदवासनेवान्यावयवानामपि, मात्रानुभूतस्य गर्भस्थेनापि स्मरणप्रसङ्गात्। न च भेदाभेदाभ्यामुपपत्तिः, तस्यैव व्याघातादिदुःस्थत्वस्य शारीरकभाष्यादिषु प्रपञ्चितत्वात्। तदत्रम् 'अहम्' इत्येकत्वेनोपलम्भो निरवयवत्वमन्तरेण नोपपद्यते। एतेनार्थादेरेन्द्रियप्राणानामप्यात्मत्वं निरस्तं वेदितव्यम्। तथाहि—न हि पाण्याद्यवयवोऽवयवी अस्ति,मस्तकीयोदयस्यापनात्।न च पाण्यादय एवात्मा न, प्रत्येकमहत्त्वाद्यभावात् अनियतनियमासम्भवाच्च। न चात्र परस्परोपकार्योपकारकभावाभिमानस्तुच्छ। अत एव च न तत्समुदायः। एवमिन्द्रियग्रामे प्राणाख्यवायावपि—इति।देहस्यचान्यस्य चेति।एतेनादितुल्ये 'ममेदम्'इति देहस्येदमः।'स्थूलोऽहम्' इत्यादिकं तु प्रबुद्धस्यारूपर्थसिद्धेरप्रबुद्धस्य तु भ्रान्त्येति न कश्चिद्दोष इति भावः। प्रमातृत्वेनेति। [3]विमर्शदशायां प्रमेयस्याप्यात्मनः प्रमातृत्वेनैव हि सर्वदा विषयग्रहणेऽन्यथा स्फुरणम्। 'जानामीदम्'इत्येवमादिरूपेण [4]अन्यदापि प्रमातृत्वं परामृष्टम्।

प्र पा॥*देहान्यस्य प्रमातृ पा देहस्यान्यस्य च पा
१ ज्ञानस्य द्रव्य पा २ देहिनि पा
*३ विमर्शदशायाम्—आत्मस्वरूपनिरूपणदशा याम्॥
*४ अन्यदापि—आत्मस्वरूपविमर्शदशायामपि प्रमातृत्वं परामृष्टम्—आ मनि प्रमातृत्व परामर्शविषयत्वमर्थं तदुपपादयति—आत्मग्रहणेऽपि 'मा जानामि' इति॥

शा॥शरीरवतोऽनाशिनोऽप्रमेयस्याऽत्मनः अन्तवन्त इत्युक्ता विवेकिभिरित्यर्थः।'नित्यस्याशिनः'इति न पुनरुक्तम्,नित्यत्वस्य द्विविधत्वाल्लोके, नाशस्य च। यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते। विद्यमानोऽपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते। तत्र 'अनाशिनो नित्यस्य' इति द्विविधेनापि *नाशेनासम्बन्धस्येत्यर्थः। अन्यथा

आ॥ त्वेयं। न च नैमित्तिकनाश इत्याह—अनाशिन इति॥ कुतः ?

ज॥नित्यस्य देहा अन्तवन्त इत्युच्यमाने ईश्वरदेहस्याप्यन्तवत्त्वं प्रसज्यते,तद्व्यावृत्त्यर्थं शरीरिण इति विशेषणम्, 'जन्तुजन्तुशरीरिणः' इत्यभिधानाच्छरीरिशब्दस्य जीवे प्रसिद्धेः। तथाप्यनाशिन इति पुनरुक्तिरिति। अत्र केचित्तत्परिहाराय विनाशिन इति पाठान्तरं कुर्वन्ति। तदसत्, अन्तवन्त इत्यनेन पुनरुक्तेस्तादवस्थ्यात्। क्वचित्समाधानेऽन्यत्रापि तत्समम्। किमन्यथापाठेनेत्याशयवानाह—नचेति॥ उपाधिनाशेन नाशाभावेऽपि उपाधिरिम्बसन्निधिनाशाद्विम्बितप्रतिबिम्बस्यात्मनो नाशो भविष्यति। नचासिद्धिः शङ्क्या। परिच्छिन्नस्यैव प्रतिबिम्बसम्भवेन सन्निधिनाशध्रौव्यादिति पुनः प्रतिपक्षिते तत्प्रतिषेधायेदमिति भावः। अप्रमेयस्येत्येतदसम्भवि विशेषणं व्यर्थं चेत्यतस्तन्निवर्त्यामाशङ्कां दर्शयित्वा व्याचष्टे—कुत इति॥ न हि प्रतिपक्षो वाङ्मात्रेण निषेद्धुं शक्यत इति भावः। अप्रमेयेत्यनेन प्रतिपक्षहेतोरसिद्धिमाचष्टे—नायमात्मा घटादेः कस्यचित्प्रतिबिम्बः, किंतीश्वरस्य। स

पा॥*नाशेनासम्बन्धस्येत्यर्थः पा

रा॥न च देहादेरिव प्रदेशभेदे प्रमातुराकारभेद उपलभ्यते । अत एकरूपत्वेन*अनुपचयात्मकत्वात् प्रमातृत्वाद्व्यापकत्वाच्च आत्मा नित्यः।देहस्तु उपचयात्मकत्वात् शरीरिणः कर्मफलभोगार्थत्वात् अनेकरूपत्वात् व्याप्यत्वाच्च विनाशी ।

ता॥आत्मग्रहणेऽपि 'मां जानामि' इति प्रमातृत्वमपि सुस्थितमेवेति भावः।एकरूपेणेति।सावयवत्वे कस्यचिदवयवस्य कदाचित्प्रमातृत्वेऽन्येषां चाप्रमातृत्वेन स्फुरणं स्यात् । न ह्यनेकेषां चेतनानामवयवानां प्रमाप्रसरयौगपद्यनियमोऽस्तीति भावः । अथ पूर्वोक्तमेव मुखभेदेन साधयन् विजातीयसङ्घातात्मकत्वे योग्यानुपलब्धिश्चाह—नचेति। पाञ्चभौतिकेषु देहादिषु तत्तद्भूतांशभूतत्वगसृङ्मांसादौ १तत्तद्भूतप्रयुक्ताकारभेद उपलभ्यते; नैव प्रमातरि। तथा च श्रूयते—२'कृत्स्नः प्रज्ञानघन एव' इत्यादि । यद्वा आकारभेद इति पाणिपादादिसन्निवेशभेदो विवक्षितः । तदेवमात्मनो नित्यत्वे देहस्य विनाशित्वे च प्रत्येकं हेतुचतुष्टयं श्लोकद्वयसिद्धं सुखग्रहणाय सङ्कलय्य दर्शयति –अत इति । एकरूपत्वेन अभूतसङ्घातात्मकत्वादित्यर्थः । अनुपचयात्मकत्वात् निरवयवत्वादित्यर्थः । नन्विदमखिलमपि हेतुजातमनुपपन्नम्; तथा हि—तत्रासङ्घातरूपत्वस्य निरवयवत्वस्य च रूपरसादिभिर्महदादिभिश्चानैकान्त्यम्; प्रमातृत्वञ्च यदि कर्मफलभोक्तृत्वं विवक्षितम्, तदानीम् ३असाधारणानैकान्त्यम्, सकलसपक्षविपक्षव्यावृत्तेः । तत्र चेश्वरादेरपि ४पक्षीकारे भागासिद्धिश्च । यदि प्रमाश्रयत्वमात्रं विवक्षितम्, तदा सर्वप्रमातृपक्षीकरणे पूर्ववदसाधारण्यम् । जीवमात्रपक्षीकारे त्वीश्वरनित्यत्वस्यापि दृढाभ्युपगमाभावात्तस्मिन् दृष्टान्ते सन्दिग्धसाध्यवैकल्यादिदोषः । व्यापकत्वं च यदि सर्वव्यापकत्वम्, तदा स्वरूपासिद्धिः, प्रत्येकं क्षेत्रज्ञानामणूना तदभावात्, ईश्वरापेक्षया व्याप्यत्वाच्च । यदि कतिपयव्यापकत्वम्, तदा शब्दाकाशादिभिरेवानैकान्त्यम् । शरीरानित्यत्वसाधकं सावयवत्वमीश्वरदिव्यविग्रहाभरणायुधादिविशेषैः,एवं कर्मफलभोगार्थत्वञ्च । यदि तद्धेतुत्वं, तदेश्वरजीवस्वरूपादिभिः पूर्ववदनैकान्त्यम् । यदि तदर्थमुत्पन्नत्वम्, तदा व्यर्थविशेषणत्वम्, उत्पन्नत्वमात्रेण व्याप्तिसिद्धेः । सङ्घातरूपत्वमपि सावयवत्ववदनैकान्तिकम् । व्याप्यत्वं च यदि सर्वापेक्षया तदा त्वसिद्धिदोषः । न हि शरीरादिकं पर्वतादिभिर्व्याप्यते । अप्र-

प्र·पा॥ *अनुपचयत्वात् पा १.म.सादिनत्त्व् उ अ पा॥ २ बृ·उप. ६.५.१३. 'इत्थं प्रज्ञानघन एवेति 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वाऽरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव । अस्यार्थः—अनन्तर -अन्तरङ्गव्यतिरिक्तः अबाह्यः बहिरङ्गव्यतिरिक्तः, एव ध्वनि- रेकनिःशेन निःशेषग्रहणं कृतम्. तदेवाह कृत्स्न इति—दार्ष्टान्तिकविषयो बाह्यशब्दो धर्मिपरः. अनन्तरशब्दो धर्मपरः. कृत्स्नशब्दः तयोरेकदेशव्यावृत्त्युदासार्थः, अत्र सर्वत्रैकरूपत्वमेव दृष्टान्तोपजीव्यम्, न त्वन्यत्. दृष्टान्तदार्ष्टान्तिकविषयवाक्यद्वयेऽपि'अनन्तरः अबाह्य' इत्युक्तम् . इति ॥ ३. असाधारणानैकान्तिकत्वम्, क.ख घ.ङ.ज.पा. ४. पक्षीकरणे. घ. ङ.ज.पा. ॥

द्यांपृथिव्यादिवदपि नित्यत्वं स्यादात्मनः;तन्माभूदिति नित्यस्यानाशिनः'"इत्याह। अप्रमेयस्य नप्रमेयस्य प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः ॥

आ॥अप्रमेयेश्वरसरूपत्वात् । नह्युपाधिबिम्बसन्निध्यनाशे प्रतिबिम्बनाशः, सति च

जा॥ चाप्रमेयः सर्वगत इति कथं तस्योपाधिसन्निधिनाशः—इति। ननु कथमिदं लभ्यते, अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति प्रसिद्धमेव । नच सर्वगतस्य प्रतिबिम्बासम्भवः, तदधीनसारूप्यस्य प्रतिबिम्बत्वात् । तदिदमुक्तं सरूपत्वादिति। ननु वक्तव्य सर्वमुक्त्वोपसंहारः क्रियते । तत्किमात्मनित्यत्वविषये सर्वशङ्कोद्धारो जातो येन 'तस्माद्युध्यस्व' इत्युपसंह्रियत इत्यतो जात इत्याह नहीति॥उपाधिबिम्बसन्निध्यनाशे प्रदर्शके आदर्शे उपाधौ बिम्बे चाविनष्टे सति प्रतिबिम्बनाशो न ह्यस्ति । उप-

पा ॥ * नेत्याह. पा.

त॥सिद्धत्य च हेतो कुत्र चिदपि तस्याभावात्। यदि कतिपयापेक्षया, तदेश्वरव्याप्यैर्नीलादिव्यमङ्गलविग्रहादिभिरनैकान्त्यम्। [1]यदि जीवव्याप्यत्वमिति विशेष्येत, तदा नित्यसूरिविग्रहविशेषादिभि प्रकृत्यादिभिश्च प्रागुक्तव्यभिचार । एतेन क्षेत्रज्ञव्याप्यत्वमित्यपि निरस्तम्। यदि पुनरव्यापकत्व विवक्षितम्, तदाणिमाद्यैश्वर्ययोगिप्रभृतिशरीरेषु स्वरूपासिद्धि, तच्छरीराणा शिलानुन्मज्जननिमज्जनादेरपि योग्यत्वात्—इति। [2]अत्रोच्यते—असङ्घातत्वनिरवयवत्वयोस्तावत् [3]अर्जुनादिबुद्ध्यारूढतया प्रस्तुतशस्त्राद्यधीननाशनिवृत्तेस्साध्यत्वात्र महदादिभिरनैकान्त्यम्। [4]द्रव्यत्वेन विशेषणाच्चाभयादिनाशरूपादिभिरनैकान्त्यम् । एव शस्त्रादिसिद्धनाशनिषेधे महदादिवत्तेषामपीश्वरसङ्कल्पादिना नाशश्शङ्क्येत, [5]तदपि श्रुत्यैव प्रतिषिध्यतेति भाव । [6]प्रमातृत्वस्य भोक्तृत्वपर्यवसाने कर्मफलभोगार्थत्वरूपप्रमेयत्वनिषेधमुखेनानुत्पत्तिपर्यवसितत्वादनुत्पन्नत्वस्य च नित्यत्वेन व्याप्तिसिद्धे [7]आत्मस्वरूपानुत्पत्तेश्च शास्त्रसिद्धत्वान्न कश्चिद्दोष । [8]प्रमाश्रयत्वमात्रस्य हेतुत्वे त्वीश्वरो दृष्टान्त । [9]तत्र साध्यसन्देहो 'न त्वेवाहम्' इत्यस्य व्याख्यानदशायां निराकृत । [10] व्यापकत्वस्य प्रयोगस्तु पूर्वमस्मद्व्याख्यातप्रकारेण शस्त्रादिविषय

प्र पा॥ १ व्याप्यत्व च यदि, पा

*२ असङ्घातत्वनिरवयवत्वादीनामात्मनित्यत्वसाधकहेतूनामुक्तदोषान् परिहरति—अत्रोच्यत इति ॥

*३ साध्यनित्यत्वस्य शस्त्राद्यधीननाशराहित्यरूपतया न महदादौ निरुक्तहेतूनामनैकान्त्यमित्यभिप्रत्य नित्यत्वस्य तादृशस्य विवक्षाया 'नैन छिन्दन्ति शस्त्राणि' इति शस्त्राधीननाशराहित्यस्य आत्मनि प्रस्तुतत्वेन तस्यैव श्रोतृबुद्धिस्थत्वमेव बीजमित्याह—अर्जुनादिबुद्ध्यारूढतया प्रस्तुतेति ॥

*४ निरवयवत्वहेतौ रूपादावनैकान्त्य परिहरति—द्रव्यत्वेनेति ॥

*५ नन्वसङ्घातरूपत्वाच्च महदादिवदात्मनो मास्तु शस्त्राद्यधीनो विनाश, महदादिवदीश्वरसङ्कल्पान्नाश किं न स्यादित्याशङ्क्य परिहरति—तदपि श्रुत्यैव प्रतिषिध्यतेति श्रुतिरत्र 'नित्यो नित्यानाम्' 'न जायते म्रियते वा' इत्यादिर्विवक्षिता ॥

*६ अथ प्रमातृत्वस्यात्मनित्यत्वसाधनतामुपपादयति—प्रमातृत्वस्य भोक्तृत्वपर्यवसान इति ॥ तावता किमायातमित्यत्राह— कर्मफलभोगार्थत्वरूपप्रमेयत्व निषेधमुखेनेति भाक्तृ स्वय कर्मफले भोगार्थत्वरूपप्रमेयत्वराहित्य नियतत्वात् भाक्तृ तेन तादृशप्रमेयत्वराहित्यमिद्धा तस्य चानुत्पन्नत्वव्याप्यतयानुत्पन्नत्वसिद्धावात्मनो नित्यत्वसिद्धिरिति परम्परया प्रमातृत्वस्य नित्यत्वसाधकत्वमिति भाव ॥

*७ निरुक्तस्य श्रुत्यानुगुण्यमाह—आत्मस्वरूपानुत्पत्तेश्शास्त्रसिद्धत्वादिति ॥

*८ प्रमातृत्वस्य प्रमाश्रयत्वमात्ररूपत्वेऽपि तस्य नित्यत्वसाधकत्वमीश्वरदृष्टान्तेनोपपादयति— प्रमाश्रयत्वमात्रस्य हेतुत्वे त्विति ॥

*९ नन्वीश्वरो न दृष्टान्त, निश्चितसाध्यत्वाभावादित्याशङ्क्य निराकरोति—तत्र साध्यसन्देह इत्यादिना॥

*१० अथ व्यापकत्वस्य नित्यत्वसाधकत्वमाह—व्यापकत्वस्य प्रयोगस्त्विति। व्यापकत्वस्य नित्यत्वसाधकहेतुविधया प्रयोगस्त्वित्यर्थ ॥ पूर्वमस्मद्व्याख्यातप्रकारेण शस्त्रादिविषयतया पठित य —प्राक् स्वोक्तव्याख्यानरीत्या शस्त्रादिजन्यनाशप्रतियोगित्वराहित्यरूपनित्यत्वसाध्यविषयतया योजयितव्य इत्यर्थ । अतो नोक्तानैकान्त्यमिति भाव ॥

शा॥नन्वागमेनाऽऽत्मा परिच्छिद्यते, प्रत्यक्षादिना च पूर्वम्। न, आत्मन स्वतस्सिद्धत्वात्। सिद्धे ह्यात्मनि प्रमातरि प्रमित्सो प्रमाणान्वेषणा भवति। *न हि पूर्वम् 'इत्थम्

आ॥ प्रदर्शके। स्वयमेवात्र प्रदर्शक, चित्त्वात्

जा॥ पादितश्चात्र नश्यत्स्वनाश इति भाव । ननु विनाशिना देहानामप्यनुपाधित्वात्कोऽत्रोपाधिरित्यत आह स्वयमिति॥उपाध्युपाधिमद्भावो विशेषणत्वेनेति भाव ।लोकेऽस्यमिद कथमसङ्कार्यमित्यत आह—चित्त्वादिति। जडेष्वयावद्वस्तुभावित्वात्तत्र भेदाभेदौ। चित्स्वरूपे तु यावद्वस्तुभावित्वादभेद एवेति

पा॥* न हि प्रमातुमिच्छन् 'पूर्वमित्थं नित्योऽविक्रियश्चास्माहम्' इत्य. पा

ता॥तया पठितव्य इति न तत्रापि दोषः।१शरीरानित्यत्वसाधनेषु च सावयवत्वभूतसङ्घातत्वयोः प्राकृतत्वे सतीति विशेषणान्न व्यभिचारः । एतदर्थं हि 'इमे देहाः' इत्युक्तम् । कर्मफलभोगार्थत्वमपि तदर्थमुत्पन्नत्वमेव, न च व्यर्थविशेषणम्, मुक्तात्मज्ञानविकासस्य व्यवच्छेद्यत्वात् । न हि सोऽनुत्पन्नः, प्रागभावात्। निवृत्ते २प्रतिबन्धके करणनिरपेक्षस्वरूपाधीनोत्पत्तिमात्रेण हि स्वाभाविकमुच्यते ;न त्वनुत्पन्नत्वेन ।३'दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा। . प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ' इत्यादिक त्ववबोधादिस्वरूपस्यानुत्पन्नतामाह, न तु तद्विकासस्य । अथवावस्थारूपत्वेन तस्योत्पन्नत्वं नाम पृथक्चिन्त्यताम् । तदवस्थावस्थितव्यवच्छेदाय विशेषणं स्यात् । अस्तु वा विशेषणनैरपेक्ष्यम् ; तथाप्युत्पन्नत्वमात्रेणानित्यत्वं तावत्सिद्धम् , अप्रतीतोत्पत्तिषु केषुचिच्छरीरेषु हेत्वसिद्धिशङ्कापरिहारः कर्ममूलत्वप्रदर्शनेन क्रियते । कर्मावसानविनाशितरस्य वा साध्यत्वात्तदौचित्याय चेद् विशेषणं सार्थम् । व्याप्यत्वं च शस्त्राद्यपेक्षया विवक्षितम् । साध्यं च तदधीनविनाशित्वमिति न कश्चिद्दोषः । ननु यो यद्व्याप्यः स तदधीनविनाश इति न व्याप्तिः, ईश्वरव्याप्यैः प्रकृतिपुरुषकालादिभिरनैकान्त्यादिति चेन्न ; ४योग्यत्वस्य साध्यत्वात्तत्रापि तत्सम्भवात्।ईश्वरः५नित्येच्छापरिग्रहादेव हि तन्नित्यत्वम्,अन्यथा यदीश्वरो जीवादिस्वरूपमपि संजिहीर्षेत्, कस्तस्य शासिता। तर्हि जीवाकाशादिव्याप्यैस्तदधीननाशरहितैः शरीरादिभिर्व्यभिचार इति चेन्न, तेषामपि तद्व्याप्यत्वयोग्यत्वात् । तद्वाशक्तेश्वरस्तु न तत्र जीवादीन्युपकरणीकरोतीति विशेषः । तत्रैव प्रयोगः—शरीरादि शस्त्राद्यधीनविनाशयोग्यम्, तद्व्याप्यत्वात् । यत् यद्व्याप्यं तत्तदधीनविनाशयोग्यम्—इति । यद्वा तिष्ठतु सामान्यव्याप्तिः, शस्त्रादिनाश्यत्वमेव साध्यम् , शस्त्रादिव्याप्यत्वादित्येव च हेतुः । यच्छस्त्रादिव्याप्यं तच्छस्त्रादिनाश्यम् , यथा कदलीकाण्डादीति । न चाकाशादि शस्त्रादिव्याप्यम्, सूक्ष्मत्वे सत्यनुप्रवेशस्य विवक्षितत्वात् ; सूक्ष्मत्वस्य चात्र यत्र यत्प्रतिहन्यते, तत्राप्रतिहतत्वं तत्तत्सूक्ष्मत्वमिति निष्कर्षात् । योगिप्रभृतिशरीराणां तु ६शस्त्रादिव्याप्यत्वमेव परिणामविशेषादेर्निवृत्तम् । अतस्तदधीननाशाभावः । शस्त्राद्यपेक्षया व्यापकत्वमेव तेषामिति तैर्न व्यभिचारः।

प्र०पा॥* १.शरीरानित्यत्वसाधकतयाभिमतहेतौ. सावयवत्वभूतसङ्घातत्वयो अनैकान्त्यं परिहरति—शरीरानित्यत्वसाधनेष्विति प्राकृतत्वे सतीति विशेषणात् व्यभिचार इति भाव ॥ २ प्रतिबन्धे,ग.ग.ङ.ज.पा॥ ३. विष्णुधर्मे. १०४ अ. †दोषप्रहाणादिति । 'महास्वरूपस्य यदा ह्यात्मनो नित्यमेव तत् । स्युत्थानकाले राजेन्द्र ध्यातो देवतिरोहितम् ॥ ५३ ॥ आदर्शस्य मलाभावात् वैमल्यं क्रियते यथा । ज्ञानाग्निदग्धदेहस्य सोऽऽकाशो ह्यात्मनस्तथा ॥ ५४ ॥ यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणात् . तथा ॥५५॥ यथोदपानकरणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः सम्भवः कुतः ॥ ५६ ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते... ते ॥ ५७ ॥ ज्ञानं वैराग्यमैश्वर्यं धर्मश्च मनुजेश्वर । आत्मनो ब्रह्मभूतस्य नित्यमेतच्चतुष्टयम्' ॥ ५८ ॥

*४. योग्यत्वस्य साध्यत्वादिति— 'यो यद्व्याप्यः, स तदधीनविनाशयोग्य.' इति साध्यतावच्छेदकशरीरे योग्यतायाः प्रवेशादिति भाव ॥

*५. नित्येच्छापरिग्रहादिति—नित्येच्छया नित्यत्वेन विषयीकरणादित्यर्थः ॥

*६. शस्त्रादिव्याप्यत्वमेवेति, निवृत्तमिति—आसीत्यर्थ .तत्र हेतुमाह—परिणामविशेषादेरिति—शस्त्रादिव्यापनायोग्यविलक्षणमणित्वेत्यविशेषादेरित्यर्थः ॥

शं ॥ अहम्' इत्यात्मानमप्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते । न ह्यात्मा नाम

आ॥ नित्यश्चोपाधिः कश्चिदस्ति। 'प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपया । चिद्रूपया

ज ॥ भाः । तस्यैवोपाधित्वे मुक्तात्मनिवृत्तिः स्यात् ,उपाधिनिवृत्तिलक्षणत्वान्मुक्तेरित्यत आह—नित्यइति॥ द्विविध उपाधिरात्मनः, नित्योऽनित्यश्च । तत्र नित्यस्यावस्थानम् अन्यस्य निवृत्तिर्मुक्तिरिति । कुत एतदित्यत आह—प्रतिपत्ताविति ॥ प्राप्तौ सत्यां कुर्वीतस्थितीति शेषः । ननूपाध्येति

रा॥तस्माद्देहस्य विनाशस्वभावत्वादात्मनो *नित्यस्वभावत्वाच्च उभावपि न शोकस्थानमिति शस्त्रपातादिपरुषस्पर्शानवर्जनीयान् स्वगतानन्यगतांश्च धैर्येण सोढ्वा अमृतत्वप्राप्तये अनभिसंहितफलं युद्धाख्यं कर्मारभस्व ॥ १८ ॥

ता॥ततोऽपि सूक्ष्मतरैरीश्वरसङ्कल्पस्वसङ्कल्पादिभिस्तु तन्नाश । एतेन शस्त्रास्त्रादिप्रतिबन्धकौषधाद्यनुगृहीतशरीरवृत्तान्तोऽपि व्याख्यात., औषधादिभिस्तत्र प्रवेशप्रतिबन्धात् । तस्मात्सिद्धमगतरपि हेतरोऽप्रदिग्विजयिन.—इति। ननु—किमर्थमिदं लोकसिद्ध शरीरानित्यत्व प्रसाध्यते। केषुचिच्छरीरेषु प्रत्यक्षत एव नाशो दृष्टः । अनिष्टेषु भीष्मादिशरीरेष्वपि तत्तुल्यतया नाशित्व निश्चितमेव । अन्यथा शत्रून् प्रति शस्त्रादिकमपि न प्रहीयेत। स्वयमपि शत्रुशस्त्रादिकं न निवारयेत् । अत शरीरानित्यत्वस्य सम्प्रतिपन्नत्वात्तस्सिद्धये च न्यायापेक्षणान्निरर्थकमिह सावयवत्वाद्यनुमानचतुष्टयम्—इति । अत्रोच्यते—प्रथम तावदात्मनित्यत्वानुमानाना यच्छस्त्राद्यधीनविनाशम् , तत् सावयवं यथा शरीरमिति व्यतिरेकव्याप्तिप्रदर्शनमेव प्रयोजनम् । तत एव देहात्मनोर्विरुद्धधर्मप्रपञ्चनेन भेदस्थापनं द्वितीयम् । शस्त्रादिनिवारणरसायनसेवादिभिर्नित्यत्वमपि किं सम्भवेदिति सन्देहापाकरण तृतीयम् । एव देहाना नाशतद्धेत्वोरवश्यम्भावित्व प्रतिपादनेन स्वदेहवैराग्यजनन चतुर्थम् । परदेहेषु च स्वस्यैकस्यैव नाशहेतुत्वभ्रमनिरसनेन वक्ष्यमाणप्रकारेण स्वतन्त्रकर्तृत्वाभिमानक्षालन पञ्चमम् । नाशहेतौ सत्यवश्यं नश्यतीति प्रतिपादनात्फलाभिसन्धिरहितकर्मानुष्ठानादिनात्यन्तनाशस्यापि सम्भावनाद्योतन षष्ठम् । नश्वरस्वभावत्वादशोचनीयत्व सप्तमम् । शीघ्रं मोक्षसाधने प्रवर्तितव्यमित्यष्टमम् । एव यथोचितमन्यदपि भाव्यम्—इति । 'तस्माद्युध्यस्व भारत' इत्यत्र तस्मादित्यस्य व्याख्यान—देहस्येत्यादि, नशोकस्थानमित्यन्तम् । 'मात्रास्पर्शास्तु' इत्यादिश्लोकद्वयप्रतिपादितेन द्वन्द्वतितिक्षारूपपरिकरेणामृतत्वरूपफलेन च पूरयन्नाह— शस्त्रेति । अत्र परगतान् प्रति शोचतः स्वगताभिधानं ममाच्छादनेन मानजननार्थम् । शास्त्रीयत्वादेव हि स्वगतमपि दु ख सह्यते । तथा यशःपशुदारानुप्रभृतिगतमपि सोढव्यमिति प्रदर्शनार्थं च युद्धस्यानीप्सितराज्यादिक्षुद्रभोगान्तरप्रधानकल्प युदासाय प्रकरणारम्भोक्तमेव फलमुचितमिति अमृतत्वप्राप्तये इत्युक्तम् । धात्वर्थस्य पराभिमत करणतयान्वयमपाकुर्वन् 'युध्यस्व' इत्यत्र प्रकृतिप्रत्ययार्थौ निविच्याह—युद्धाख्य कर्मारभस्वेति । अयमर्थः सेश्वरमीमांसाया प्रपञ्चितोऽस्माभि ॥ १८ ॥

प्र-पा॥ *नित्यत्वाच्च. पा॥ *१ च अवधारणार्थकोऽयम्, अव्ययानामनेकार्थत्वात् ॥

शं॥कस्यचिदप्रसिद्धो भवति । शास्त्र त्वन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रमाणत्वमात्मन॰ प्रतिपद्यते, न त्वज्ञातार्थज्ञापकत्वेन । तथा च श्रुतिः— 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर.' इति ॥

यस्मादेवं नित्योऽविक्रियश्चाऽत्मा तस्माद्युध्यस्व,युद्धादुपरमं मा कार्षीरित्यर्थः ॥

न ह्यत्र *युद्धकर्तव्यता विधीयते, युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धः तूष्णीमास्ते । अतः तस्य प्रतिबन्धापनयनमात्र भगवता क्रियते। तस्मात् 'युध्यस्व' इत्यनुवादमात्रम्, न विधिः ॥ १८॥

आ ॥ युतो जीवः केशवप्रतिबिम्बकः' इति भगवद्वचनात् ॥ १८॥

ज॥किप्रत्ययान्तस्य पुल्लिङ्गतानियमात्। तर्हि इषुधिर्दयोः कथम्, प्रयोगदर्शनादपवादः। यथाह—'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित 'इति । सम प्रकृतेऽपि । स्व आत्मा रूप यस्या॰ सा स्वरूपा। चिद्रूपत्वात् स्वरूपत्वम्, स्वरूपत्वान्नित्यत्वम् ॥ १८ ॥

पा॥ *युद्ध कर्तव्यतया पा

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९

शा॥एनम् - उक्तस्वभावमात्मानं प्रति, *हन्तारं हननहेतुं कर्मापि यो मन्यते;यश्चैनं केना-

ता॥अथ 'अविनाशि तु' इति श्लोकेनोक्तं 'नैनं छिन्दन्ति'इति प्रपञ्चयिष्यमाण शस्त्रादीनामात्मनश्च हन्तृत्वहन्तव्यत्वायोग्यत्व तद्विपर्ययदर्शिनिन्दया द्रढयति—यएनमिति । सामानाधिकरण्यभ्रमनिरासायोक्तं—प्रतीति । 'हन्तारम्' इत्यस्य तृजन्तत्वात् 'एनम्' इति द्वितीया, 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति कृद्योगषष्ठीनिषेधात् । हननहेतुमिति । प्रत्ययस्यात्र हेतुमात्रविवक्षेति भावः । 'न कश्चित्कर्तुमर्हति' इति पूर्वोक्तवस्तदार्थविवक्षया पुल्लिङ्गत्वोपपत्तिरिति ज्ञापनायोक्तम्—कर्मापीति । छेदनादिहेतु कश्चिदपीत्यर्थः । ननु 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।उभौ तौ न विजानीतो नायं हन्ति न हन्यते' इत्यस्य कठवल्लीवाक्यस्योपबृंहणरूपोऽयं श्लोकः । तस्य च वाक्यस्यात्मनो हन्तृत्वहन्तव्यत्वनिषेधार्थत्वं 'कर्ता शास्त्रार्थवत्वात्' इत्यधिकरणभाष्ये पूर्वपक्षिणोक्तम् । सिद्धान्ते च यदुक्त

प्र-शा॥*हननहेतु. पा॥

१. अष्टाध्याय्याम्. २,३, ६९ †'न लोकाव्ययनिष्ठाखलर्थतृनाम्' एषां प्रयोगे षष्ठी न स्यात् । लादेशाः—कुर्वन् ,कुर्वाणो वा सृष्टिं हरिः ।उ.—हरिं दिदृक्षुः,अलंकरिष्णुर्वा । उक—दैत्यान् घातुको हरिः । अव्यय—जगत्सृष्ट्वा, सुखं कर्तुम् । निष्ठा—विष्णुना हता दैत्याः , दैत्यान् हतवान्विष्णुः । खलर्था —ईषत्करः प्रपञ्चो हरिणा । तृन्निति प्रत्याहारः ,शतृशानचाविति तृशब्दादारभ्य नकारात् । शानन्—सोमं पवमानः , चानश्—आत्मानं मण्डयमानः , शतृ—वेदमधीयन् ; तृन्—कर्ता लोकान् ॥

२. कठोपनिषदि. १-अ २ - वल्ल्याम् . १९-वा. †'न हन्यते हन्यमाने शरीरे' इति यदुक्तं तदेवोपपादयति—हन्ता चेदिति ॥ हन्ता चेन्मन्यते हन्तुम्-अहमेनं वधिष्यामीति देहात्मदृष्ट्या मन्यते चेदित्यर्थः। हतश्चेन्मन्यते हतम् - छिन्नदेहात्मवः देहात्मदृष्ट्या आत्मानं हतोऽहमिति मन्यते चेदित्यर्थः।उभौ तौ न विजानीतः ,आत्मस्वरूपमिति शेषः। नायं हन्ति, आत्मानमिति शेषः । न हन्यते, आत्मस्वरूपमिति शेषः । ननु वेदान्तवेद्यपरिशुद्धात्मस्वरूपे कथं हननादिप्रसक्तिः-तत्पूर्वकनिषेधाविति वाच्यम्, तस्यैव क्षेत्रीभूततया तत्प्रसक्तत्वभावादिति द्रष्टव्यम् ॥

३. 'कर्ता शास्त्रार्थवत्वात्' ब्रह्मसूत्रम्. २,३. ३३ ज्ञाता सन्नयमात्मा कर्मसु कर्तैव 'यजेत' 'उपासीत' इत्यादिस्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामर्थवत्त्वावश्यम्भावात् । बोद्धुरेव हि शासनम् । नाचेतनस्य प्रधानस्येत्यर्थः ॥

शा॥शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्तकम्,*इत्येतस्य अर्थस्य साक्षिभूते ऋचौ आनिनाय भगवान् ॥

यत्तु मन्यसे 'युद्धे भीष्मादयो मया हन्यन्ते, अहमेव तेषां हन्ता' इति, एषा बुद्धिः मृषैव ते । कथम्—

आ॥व्यवहारस्तु भ्रान्त इत्याह—य एनमिति॥कुतः!उक्तहेतुभ्यो नायं हन्ति न हन्यते ।

ज॥य एनमिति पुनरात्मनित्यत्व किमित्युच्यत इति अतो नास्य नित्यत्वप्रतिपादने तात्पर्यम् । किंतु नित्यश्चेदात्मनो नित्यत्वम्,तर्हि का गतिर्हननव्यवहारस्येत्याशङ्क्य तस्य भ्रान्तत्वमनेनोच्यत इत्याह—व्यवहारस्त्विति॥व्यवहारोऽत्र ज्ञानम् । तथापि 'नायं हन्ति न हन्यते'इति पुनरुक्तिरेवेति चेन्न—ज्ञानानां प्रामाण्यस्य बाधकैरपोद्यत्वात्।कुतो बाधकादस्य भ्रान्तत्वमित्याशङ्क्य स्वपक्षसाधकानामेवोक्तहेतूनामेतद्बाधनेऽपि व्यापारप्रदर्शनार्थत्वादस्येत्याह—कुत इति ॥ नन्वत्र हननमेकमेव, तत्कथमुभावि-

पा॥ *इत्येतस्यार्थस्य साक्षिभूते पा.

रा॥पि हेतुना हतं मन्यते,*तावुभौ न विजानीतः,उक्तैर्हेतुभिरस्य नित्यत्वादेवायं हननहेतुर्न भवति,अत एव चायमात्मा न हन्यते। हन्तिधातुरप्यात्मकर्मकः शरीरवियोगकरणवाची।

ता॥'हन्ता चेन्मन्यते' इत्यादिना हननक्रियायाम् कर्तृत्वमात्मनः श्रूयत इत्येतमनूद्य, तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यतदपि परिहृतम्। कथमत्र हन्तारमित्यादिना स्वरससिद्धसामानाधिकरण्यादिभङ्गेन हननहेतुं कमपीत्यध्याहृत्य व्याख्यायते। उच्यते—न तावदत्र शारीरकभाष्यविरोधः,ऐकार्थ्यात्। अत्र हि यस्य कस्यापि हेतोरात्महननहेतुत्वं नास्तीत्युक्तम्। तथा सत्यात्मनोऽप्यात्महननहेतुत्वं नास्तीत्युक्तं भवति। एवं चात्र सामान्योक्तस्य विशेषविषयतामभ्युपेत्योक्तं शारीरके। न चात्र सामानाधिकरण्याभ्युपगमः, आत्मनो हन्तारमिति वैयधिकरण्येऽपि फलितोक्तेः। तत्र ह्यपेक्षितपदान्तरस्य योग्यविभक्त्यन्ततयाध्याहारः। अत्र तु सामानाधिकरण्यादपि क्रियाकर्मणोराकाङ्क्षादिमतोः परस्परान्वय एव स्वारसिकः। सामान्यविषयत्वे च प्रकरणौचित्यम्। आत्मनो हन्तृत्वनिषेधरूपविशेषोपसंहारस्तु 'वेदाविनाशिनम्' इति श्लोके भविष्यति। तस्मादयमिति शब्दस्य भिन्नार्थत्वादिकमपि न दोषायेति सिद्धम्। प्रतिज्ञान्तरभ्रमव्युदासायाह—उक्तैरिति। अस्य नित्यत्वादिति। तत्कार्यशक्तमपि न हि तदयोग्ये प्रवर्तत इति भावः। 'एनम्' इति पूर्ववाक्यादनुकृष्योक्तम्। अतएव चेति। अयोग्यतया हेत्वभावे तत्क्रियाविषयत्वरूपफलाभाव इति भावः।'अयं हननहेतुः,अयमात्मा'इत्युभयत्र अयंशब्दप्रयोगात्तन्त्रेणोच्चरितोऽयं शब्दो'हन्ति,हन्यते' इत्यनयोर्विभक्तिभेदात्कर्तृकर्मसमर्पक इति भावः।कथं तर्हि'मनुष्यं हन्ति'इत्यादिप्रयोगः। न ह्यसौ शरीरमात्रहननविषयः, मृतशरीरघातकेषु 'पितृहा मातृहा'इत्यादिप्रयोगोपचारोऽत्राभावात्। मनुष्यादिशब्दाश्चात्मपर्यवसिता इति नस्सिद्धान्तः। 'मा निषादेति'इत्यादिप्रयोगेषु व्यक्तमेव हन्तेरात्मकर्मकत्वम्। अतो हिंसायोग्यश्चेतन एव हन्तिधातोः कर्मभूतः। तथा सति 'नायं हन्ति न हन्यते' इत्युक्तमुभयमपि नोपपद्यते इत्याशङ्क्याह—हन्तिधातुरिति। आत्मकर्मक इत्यनेन शङ्का

प्र पा॥*उभौ तौ नहि पा॥ स्वजनकार्यशक्तमपि न लौकिकं नहि तेजनायाग्यबाध्या
*१ तत्कार्यशक्तमपि नहि तदयोग्ये प्रवर्तते दौ सच्चो प्रवर्तते इत्यर्थः॥

शां॥य एनम् इति॥य एनं प्रकृतं देहिनं वेत्ति विजानाति हन्तारं हननक्रियायाः कर्तारम्, यश्च एनम् अन्यो मन्यते हतं देहहननेन 'हतः अहम्' इति हननक्रियायाः कर्मभूतं, तौ उभौ न विजानीतः न ज्ञातवन्तौ अविवेकेन आत्मानम्। 'हन्ता अहम् हतः अस्मि

आ॥न हि प्रतिबिम्बस्य क्रिया। स हि बिम्बक्रिययैव क्रियावान्।

न॥ति,कथं च 'नायं हन्ति न हन्यते' इति। अथैकस्या अपि क्रियायाः कारकभेदादेवमुक्तिः। तर्हि करणाधिकरणोक्तिरपि प्रसज्यत इति। उच्यते – आत्मनो नित्यत्वमिवास्वातन्त्र्यमपि प्राक् प्रतिपादितम्। यथोक्तं तात्पर्यनिर्णये—तत्र हननव्यवहारवत्स्वातन्त्र्यव्यवहारस्यापि भ्रान्तत्वमनेनोच्यत इति उभा विन्यासुपपद्यते। अतएव भाष्यकारो व्यवहारस्तिवाति सामान्येनाह, न तु हननव्यवहार इति निष्कृष्य। ननु नित्यत्वे विभुनित्यत्वादय उक्ताः, अस्वातन्त्र्ये तु न कोऽपि, तत्कथमुक्तहेतुभ्य इत्युक्तमिति चेन्न प्रतिबिम्बत्वस्योक्तत्वात्। तस्य कथमस्वातन्त्र्ये हेतुत्वमित्यत आह—नहीति॥ क्रियेति वदता हन्तारं हतीति पदद्वयमुपलक्षणार्थमिति सूचितम्। ननु प्रतिबिम्बस्यापि लोके क्रिया दृश्यते। जीवस्य च क्रियाभावे 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिविरोध इत्यत आह—स हीति॥ बिम्बक्रियया बिम्बाधीनक्रियया। तथा च पूर्वं स्वातन्त्र्याभावापेक्षया क्रियाप्रतिषेध इति ज्ञातव्यम्। ननूपाधिक्रिययापि प्रतिबिम्बे क्रिया भवति। तत्कथमुच्यते—बिम्बक्रिययेवेति॥ नैवम्, स्वातन्त्र्यप्रतिषेधे तात्पर्यात्,

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९

शा॥एनम् - उक्तस्वभावमात्मानं प्रति, *हन्तारं हननहेतुं कर्मापि यो मन्यते;यश्चैनं मन्यते (continues)

ता॥अथ 'अविनाशि तु' इति श्लोकेनोक्तं 'नैनं छिन्दन्ति'इति प्रपञ्चयिष्यमाणं शस्त्रादीनामात्मनश्च हन्तृत्वहन्तव्यत्वायोग्यत्वं तद्विपर्ययवेदिनिन्दया द्रढयति—य एनमिति । सामानाधिकरण्यभ्रमनिरासा-योक्तं—प्रतीति । 'हन्तारम्' इत्यस्य तृजन्तत्वात् 'एनम्' इति द्वितीया, 'न लोकाव्ययनिष्ठाखल-र्थतृनाम्' इति कृद्योगषष्ठीनिषेधात् । हननहेतुमिति । प्रत्ययस्यात्र हेतुमात्रविवक्षेति भावः । 'न क-श्चित्कर्तुमर्हति' इति पूर्वोक्तवत्पदार्थविवक्षया पुल्लिङ्गत्वोपपत्तिरिति शङ्कनायोक्तम्—कर्मपीति । छेद-नादिहेतुषु कश्चिदपीत्यर्थः । ननु 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।उभौ तौ न विजानीतो नायं हन्ति न हन्यते' इत्यस्य कठवल्लीवाक्यस्योपबृंहणरूपोऽयं श्लोकः । तस्य च वाक्यस्यात्मनो हन्तृत्व-हन्तव्यत्वनिषेधार्थत्वं 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणभाष्ये पूर्वपक्षिणोक्तम् । सिद्धान्ते च यदुक्तं

प्र॰पा॥*हननहेतु. पा॥

१. अष्टाध्याय्याम् २,३, ६९ †'न लोकाव्य-यनिष्ठाखलर्थतृनाम्' एषां प्रयोगे षष्ठी न स्यात् । आदेशाः—कुर्वन् ,कुर्वाणो वा सृष्टिं हरिः ।उ —हरिं दिदृक्षुः,अलंकारिष्णुर्वा । उक—दैत्यान् घातुको हरिः । अव्यय—जगत्सृष्ट्वा, सुखं कर्तुम । निष्ठा—विष्णुना हता दैत्या , दैत्यान् हतवान्विष्णुः । खलर्था —ईष-त्करः प्रपञ्चो हरिणा । तृन्निति प्रत्याहारः,शतृशानचा-विति तृशब्दादानृतो नकारात् । शानन्—सोमं पव-मानः, चानश्—आत्मानं मण्डयमानः , शतृ—वेद-मधीयन् , तृन्—कर्ता लोकान् ॥

२. कठोपनिषदि. १-अ २ - वल्याम्. १९-वा. †'न हन्यते हन्यमाने शरीरे' इति यदुक्तं तदेवो-पपादयति—हन्ता चेदिति ॥ हन्ता चेन्मन्यते हन्तुम्-अहमेनं वधिष्यामीति देहात्मदृष्ट्या मन्यते चेदित्यर्थः। हतश्चेन्मन्यते हतम् - छिन्नदेहावयवः देहात्मदृष्ट्या आ-त्मानं हतोऽहमिति मन्यते चेदित्यर्थः ।उभौ तौ न वि-जानीतः,आत्मस्वरूपमिति शेषः। नायं हन्ति, आत्मा-नमिति शेषः । न हन्यते, आत्मस्वरूपमिति शेषः । ननु वेदान्तवेद्यपरिशुद्धात्मस्वरूपे कथं हननादिधर्मासक्ति-तत्पूर्वकनिषेधावपि न वाच्यम् , तस्यैव क्षेत्रीभूततया तत्प्रसक्तत्वसंभवादिति द्रष्टव्यम् ॥

३. 'कर्ता शास्त्रार्थवत्त्वात्' ब्रह्मसूत्रम्. २,३. ३३. ज्ञाता मन्तव्यमात्मा कर्मसु कर्ता च 'यजेत' 'उपासीत' इत्यादिस्वर्गापवर्गसाधनानुष्ठानविधानशास्त्रा-णामर्थवत्त्वावश्यम्भावात् । बोद्धुरेव हि शासनम् । ना-चेतनस्य प्रधानस्येत्यर्थः ॥

शं॥शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्तकम्,*इत्येतस्य अर्थस्य सा-क्षिभूते ऋचौ आनिनाय भगवान् ॥

यत्तु मन्यसे 'युद्धे भीष्मादयो मया हन्यन्ते, अहमेव तेषां हन्ता' इति, एषा बुद्धिः मृषैव ते । कथम्—

आ॥व्यवहारस्तु भ्रान्त इत्याह—य एनमिति॥कुतः!उक्तहेतुभ्यो नायं हन्ति न हन्यते ।

ज॥य एनमिति पुनरात्मनित्यत्व निमित्तमुच्यत इति अतो नास्य नित्यत्वप्रतिपादने तात्पर्यम् । किंतु निश्चितं चेदात्मनो नित्यत्वम्,तर्हि का गतिर्हननव्यवहारस्येत्याशङ्क्य तस्य भ्रान्तत्वमनेनोच्यत इत्याह —व्यवहारस्त्विति॥व्यवहारोऽत्र ज्ञानम् । तथापि 'नायं हन्ति न हन्यते'इति पुनरुक्तिरेवेति चेन्न— ज्ञानानां प्रामाण्यस्य बाधकाभावोपपत्तेः ।कुतो बाधकादस्य भ्रान्तत्वमित्याशङ्क्य स्वपक्षसाधकानामेवोक्त-हेतूनामेतद्बाधनेऽपि व्यापारप्रदर्शनार्थत्वादस्येत्याह—कुत इति ॥ नन्वत्र हननमेकमेव, तत्कथमुभावि-

पा॥ *इत्येतस्यार्थस्य साक्षिभूते. पा.

रा॥पि हेतुना हत मन्यते,*तावुभो न विजानीत ,उक्तैर्हेतुभिरस्य नित्यत्वादेवाय हननहेतुर्न भवति,अत एव चायमात्मा न हन्यते। हन्तिधातुरप्यात्मकर्मक शरीरवियोगकरणवाची।

ता॥'हन्ता चेन्मन्यते' इत्यादिना हननक्रियायामकर्तृत्वमात्मन श्रूयत इत्येतमनूद्य, तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यतइति परिहृतम् । कथमत्रैन हन्तारमित्यादिना स्वरससिद्धसामानाधिकरण्यादिभङ्गेन हननहेतु कमपीत्यध्याहृत्य व्याख्यायते । उच्यते—न तावदत्र शारीरकमाध्यविरोध ,ऐकार्थ्यात्।अत हि यस्य कस्यापि हेतोरात्महननहेतुत्व नास्तीत्युक्तम् । तथा सत्यात्मनोऽप्यात्महननहेतुत्व नास्तीत्युक्त भवति । एव चात्र सामान्योक्तस्य विशेषनिष्ठतामभ्युपेत्योक्त शारीरके । न चात्र सामानाधिकरण्याभ्युपगम , आत्मनो हन्तारमिति वैयधिकरण्येऽपि परिस्तोक्ते । तत्र ह्यपेक्षितपदान्तरस्य योग्यविभक्त्यन्ततयाध्याहार । अत्र तु सामानाधिकरण्यादपि क्रियाकर्मणोराकाङ्क्षादिमतो परस्परान्वय एव स्वारसिक । सामान्यविषयत्वे च प्रकरणौचित्यम् । आत्मनो हन्तृत्वनिषेधरूपविशेषोपसहारस्तु 'वेदाविनाशिनम्' इति श्लोके भविष्यति । तस्मादयमिति शब्दस्य भिन्नार्थत्वादिकमपि न दोषायेति सिद्धम् । प्रतिज्ञान्तरभ्रममुदासायाह—उक्तैरिति । अस्य नित्यत्वादिति । तत्कार्यशक्तमपि न हि तदयोग्ये प्रवर्तेत इति भाव । 'एनम्' इति पूर्ववाक्यादनुकृष्योक्तम् । अत एव चेति । अयोग्यतया हेत्वभावे तत्क्रियाविषयत्वरूपफलाभाव इति भाव ।'अय हननहेतु ,अयमात्मा' इत्युभयत्र अयशब्दप्रयोगात्तन्त्रेणोच्चरितोऽय शब्दो'हन्ति,हन्यते' इत्यनयोर्विभक्तिभेदात्कर्तृकर्मसमर्पक इति भाव ।कथ तर्हि 'मनुष्य हन्ति' इत्यादिप्रयोग । न ह्यसौ शरीरमात्रहननविषय , मृतशरीरघातकेषु 'पितृहा मातृहा' इत्यादिप्रयोगोपपत्तेश्चाभावात् । मनुष्यादिशब्दाश्चात्मपर्यवसिता इति तत्त्वसिद्धान्त । 'मा जिघासति' इत्यादिप्रयोगेषु व्यक्तमेव हन्तेरात्मकर्मकत्वम् । अतो हिंसायोग्यश्चेतन एव हन्तिधातो कर्मभूत । तथा सति 'नाय हन्ति न हन्यते' इत्युक्तमुभयमपि नोपपद्यते इत्याशङ्क्याह—हन्तिधातुरिति । आत्मकर्मकइत्यनेन शङ्का

प्र पा॥*उभौ तौ न वि पा॥ स्वनकार्यशक्तमपि जलादि नहि स्वेनायोग्यवाप्त्या

टि १ तत्कार्यशक्तमपि नहि तदयोग्ये प्रवर्तते- दौ स्वचने प्रवर्तेत इत्यर्थ ॥

शं॥य एनम् इति॥य एन प्रकृत देहिन वेत्ति विजानाति हन्तार हननक्रियाया कर्तारम्, यश्च एनम् अन्यो मन्यते हत देहहननेन 'हत अहम्' इति हननक्रियाया कर्मभूत, तौ उभौ न विजानीत न ज्ञातवन्तौ अविवेकेन आत्मानम् । 'हन्ता अहम् हत अस्मि

आ॥न हि प्रतिबिम्बस्य क्रिया । स हि बिम्बक्रिययैव क्रियावान् ।

ज॥ति,कथ च 'नाय हन्ति न हन्यते' इति । अथैकस्या अपि क्रियाया कारकभेदादेवमुक्ति । तर्हि करणाधिकरणोक्तिरपि प्रसज्यत इति । उच्यते—आत्मनो नित्यत्वमिवास्वातन्त्र्यमपि प्राक् प्रतिपादितम्। यथोक्त तात्पर्यनिर्णये—तत्र हननव्यवहारस्वातन्त्र्यव्यवहारस्यापि भ्रान्तत्वमनेनोच्यत इति उभाविल्यानुपपद्यते । अतएव भाष्यकारो व्यवहारस्त्विति सामान्येनाह, न तु हननव्यवहार इति निष्कृष्य । ननु नित्यत्वे विम्बनित्यत्वादय उक्ता , अस्वातन्त्र्ये तु न कोऽपि, तत्कथमुक्तहेतुभ्य इत्युक्तमिति चेन्न प्रतिबिम्बत्वस्योक्तत्वात् । तस्य कथमस्वातन्त्र्ये हेतुत्वमित्यत आह—नहीति ॥ क्रियेति वदता हन्तार हन्तीति पदद्वयमुपलक्षणार्थमिति सूचितम् । ननु प्रतिबिम्बस्यापि लोके क्रिया दृश्यते। जीवस्य च क्रियाभावे 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिविरोध इत्यत आह—स हीति ॥ बिम्बक्रियया बिम्बाधीनक्रियया । तथा च पूर्व स्वातन्त्र्याभावापेक्षया क्रियाप्रतिषेध इति ज्ञातव्यम् । ननूपाधिक्रिययापि प्रतिबिम्बे क्रिया भवति । तत्कथमुच्यते—बिम्बक्रिययैवेति ॥ नैवम्, स्वातन्त्र्यप्रतिषेधे तात्पर्यात् ,

रा॥*'न †हिंस्याद्भूतानि' ‡'ब्राह्मणो न हन्तव्यः' इत्यादीन्यपि शास्त्राणि §अविहितशरीरवियोगकरणविषयाणि ॥ १९ ॥

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २०

रा॥उक्तैरेव हेतुभिर्नित्यत्वेनापरिणामित्वादात्मनो जननमरणादयः सर्वे एवाचेतनदेहध-

ता॥सूचनम्; सत्यमात्मकर्मक एव स्वतो हन्तिधातुः, न तु तत्स्वरूपप्रच्युतिप्रतिपादकः; किन्तु मारणपरः। तथैव हि लोकवेदयोः प्रयोगः। मारणं च शरीरादिविश्लेषणात्मकम्। 'मृङ् प्राणत्यागे' इति चानुसंधेयम् इति भावः। एवं लोकप्रयोगो निर्व्यूढः। 'न हिंस्याद्भूतानि' इति शास्त्रप्रयोगस्य कोऽर्थः। स चास्तु यः कश्चित्, स तावत् सामान्यतो विशेषतश्च निषिद्धत्वादकर्तव्य इत्याशङ्क्याह—न हिंस्यादिति। पराभिमतप्रक्रिययोत्सर्गापवादन्यायाद्वा स्वमतेन विहितशरीरवियोगकरणस्य पशुशत्रुप्रभृतीनामपि हितत-मत्वेन हिंसात्वस्यैवाभावाद्वेति भावः ॥ १९ ॥

अथ 'विपश्चित्' इत्यधीतस्य अत्र 'कदाचित्' इत्येकपदमात्रविशेषितस्य 'न जायते' इति कठवल्लीश्लोकस्य पौनरुक्त्यप्रत्यक्षविरोधादिदोषमाशङ्क्याह—उक्तैरेवेति। एतेन प्रतिज्ञामात्रत्वशङ्का परास्ता। नित्यत्वेनापरिणामादिति—अविनाशत्वेन विकारमात्रस्यापि निरस्तत्वादित्यर्थः। तथाहि—विनाशो नाम पूर्वावस्थाप्रहाणरूपनामान्तरभजनार्हावस्थान्तरापत्तिः। यथा घटादिद्रव्यस्य कपालाद्यवस्था; तदवस्थौन्मुख्ये च तस्या अपक्षयः। सैव कपालाद्यवस्थस्य तस्यैव द्रव्यस्योत्पत्तिः। एवं परिणामवृद्ध्यादिकमुदाहरणीयम्। वक्ष्यति चेममर्थम्—'जातस्य हि ध्रुवो मृत्युः' इत्यत्र। अतो विनाशित्वनिराकरणेन जननादिकमप्यर्थतो निरस्तम्। सर्वे एवेत्यपौनरुक्त्यार्थमुक्तम्। एवकारोऽत्र अपिशब्दसमानार्थः। न केवलं हन्तव्यत्वमात्रमेव नास्ति; अपि तु जन्यत्वादिकमपीत्यपुनरुक्तिरिति भावः। देहधर्मा इति

प्र-पा॥* † हिंस्यात्सर्वा भूतानि. पा॥
‡
* §अविहितशरीरवियोगकरणविषयाणि—यागीयपशुवधस्य यद्वा युद्धे शत्रुवधस्य च क्षत्रियस्य विहितत्वात्र तत्पर इति भाव ॥ १. विश्लेषणमात्मन.. पा॥
२. नहिंस्यात्सर्वा भूतानि. ख. ग. ङ. पा॥
*३. सामान्यत.—'न हिंस्यात्सर्वा भूतानि' इति सामान्यवचनात्। विशेषत.—'ब्राह्मणो न हन्तव्य.' इति विशेषवचनात् ॥
*४. पराभिमतप्रक्रिययोत्सर्गापवादन्यायाद्वा-यज्ञियपशुवधादीना हिंसात्वमङ्गीकृत्य निषेधस्य विहितव्यतिरिक्तविषयतया उत्सर्गापवादन्यायेन परैरङ्गीकारात्तद्रीत्या न निषेध इति भाव ॥
*५. सिद्धान्ते यज्ञियपश्वादिवधस्य हिंसात्वमेव नेति, तस्य 'न हिंस्यात्' इति निषेधविषयत्वमेव नास्तीति उत्सर्गापवादन्यायाप्रवृत्त्या न तदुपजीवनावश्यकतेत्यभिप्रेत्य 'हिंसात्वस्यैवाभावाद्वा' इति ॥
६. कठ-उप. १-२-१८. व्याख्यानम् ४७. पु. १३. प॥ ७ तस्यापक्षय. ङ. छ. झ. पा.॥
८. गी. २-२७.

शा॥अहम्' इति देहहननेन आत्मानम् अहंप्रत्ययविषयं यो विजानीतः तौ आत्मस्वरूपानभिज्ञौ, इत्यर्थः। यस्मात् न अयम् आत्मा हन्ति न हननक्रियायाः कर्ता भवति, न च हन्यते न च कर्म भवतीत्यर्थः, अविक्रियत्वात् ॥ १९ ॥

आ॥ 'ध्यायतीव' इतिश्रुतेश्च ॥ १९ ॥

ज॥ जीवस्य पृथग्गुणाप्यभावाच्च। जीवस्येश्वराधीनक्रियत्वे श्रुतिं चाह—ध्यायतीवेति॥ ईश्वरो जीवं ध्यायतीत्यर्थः; इवशब्दोऽत्यार्थे ॥ १९ ॥

रा॥र्मा न सन्तीत्युच्यते।तत्र'नजायते म्रियते'इति वर्तमानतया सर्वेषु देहेषु सर्वैरनुभूयमाने जननमरणे कदाचिदप्यात्मानं न स्पृशतः।'नायं भूत्वा भविता वा न भूयः'अयं कल्पादौ भूत्वा भूयः कल्पान्ते *च न न भविता , केषुचित्प्रजापतिप्रभृतिदेहेष्वागमेनोपलभ्यमानं

ता॥'हन्यमाने शरीरे'इति सूचितम्।जननमरणादिव्यवहारविषय उक्त ,तत्र हेतु —अन्त्रेत्तेनेति।जननादयो देहधर्मा आत्मनो न सन्तीत्युच्यत इति आत्मनि देहधर्मान् प्रत्यक्षादिनाभिमन्यमानायार्जुनाय ' न जायते ' इत्युपनिषन्मन्त्रेणैव यथानिश्चितार्थो निरूप्याभिधीयते , न तु देहसंयोगवियोगलक्षण जनिमरणप्रतिक्षेप म्रियत इत्यर्थः, वाशब्दश्चार्थः । श्लोकस्थपदाना पौनरुक्त्यपरिहाराय वर्तमानादिनिर्देशसिद्धा व्यवस्था व्यञ्जयनाह—तत्रेति। ननु कदाचिदित्यनेन वर्तमानकालनिरूपाया नैयर्थ्यं,लकारेणैव गतार्थत्वात् । भूतभविष्यतोस्सङ्ग्रहे वर्तमाननिर्देशो न सङ्गच्छत इत्याशङ्क्योक्तम्—वर्तमानतयेत्यादि । तत्तत्कालीनैः पुरुषैरनुभूतेषु देहेषु 'जायते' 'म्रियते' इति वर्तमानतयैव हि जननमरणयोरनुभवः । अतस्तदपेक्षया वर्तमाननिर्देशोपपत्तिः । तेन कल्पान्तव्यतिरिक्तस्समस्त कालः कदाचिदिति सङ्गृहीत इति भावः । 'भूत्वा' इति पूर्वकालनिर्देशाभिप्रेतमाह—कल्पादाविति । तत्र भूयश्शब्दः कल्पान्तपरः । 'भूत्वा भविता' इत्यनयोः क्रिययोः प्रत्येक नञन्वयभ्रमव्युदासायोक्तम्—नन भवितेति । भूत्वा न भवितेति विशिष्ट नञन्तरेण प्रतिषिध्यते । ननु 'नाय भूत्वा' इत्यादिक किमर्थमुच्यते, 'नजायते' इत्यादिनैव सङ्ग्रहीतु शक्यत्वादित्याशङ्क्याह—केषुचिदिति । अय भाव —कालविशेषे देहविशेषेषु सृष्टिप्रलयनिर्देश श्रूयते । स च न देहसम्बन्धतद्वियोगमात्रम् , 'तोयेन जीवान्

प्र पा ॥ *न भविता न; न भवितेति न पा ॥ यत प्रसूतेति ॥ नगत्प्रसूतिगुता प्रकृतिरपि यत

१. जननमरणे क ङ पा ॥ तमोवस्थाद्ब्रह्मण प्रसूता उत्पन्ना । भूम्या तोयशब्दार

२. तैत्तिरीयोपनिषदि नारायणे १ ४ यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्याम् । यदो षधीभि पुरुषान् पशूश्च विवेश भूतानि चराचराणि

[illegible] कृतिर्भूतरमह अव्यादिनावान् सप्तान् । सृष्टा च पि ... विपुरुषपश्वादिचराचरप्राण्यात्मतया प्रविष्ट इत्यर्थ ॥

शा॥कथम् अविक्रियः आत्मेति ? द्वितीयो मन्त्र —न जायते-न उत्पद्यते, जनि*लक्षणा वस्तुविक्रिया न आत्मनो विद्यते इत्यर्थः । तथा न म्रियते वा । वाशब्दः चार्थे । न म्रियते च इति अन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते । कदाचिच्छब्दः सर्वविक्रिया प्रतिषेधैः संबध्यते—न कदाचित् जायते, न कदाचित् म्रियते, इत्येवम् । यस्मात् अयम् आत्मा भूत्वा भवनक्रियाम् अनुभूय पश्चात् अभविता अभावं गन्ता न भूयः पुनः, तस्मात् न म्रियते । यो हि भूत्वा न भवति स म्रियते इति उच्यते लोके । वाशब्दात् नशब्दाच्च अयम् आत्मा अभूत्वा वा भविता देहवत् न भूयः । तस्मात् न जायते । यो

आ॥ अत्र मन्त्रवर्णोऽप्यस्तीत्याह—न जायत इति । नचेश्वरज्ञानवद्भूत्वा भविता ।

जा॥तथापि ' न जायते ' इति पुनरुक्तमित्याशङ्क्य नेद भगवद्वाक्यम् , किं तूक्तार्थे समतिलेन मन्त्रवर्णोऽयमुदाहृत इत्याह— अत्रेति ॥ ननु जीव स्वरूपेण भूत्वा देहसम्बन्धेन भवितैव, तत्कथमुच्यते भूत्वा भविता नेतीत्यतोऽन्यथा व्याचष्टे—नचेति ॥ जीवो न जायते चेत्तर्हि यथेश्वरज्ञान वृद्धिह्रासादिवर्जितं भूत्वैव कयाचिदचिन्त्यया शक्त्या भूतमिति व्यवहारालम्बनम्, तथा जीवेऽपि किं जननव्यव

पा ॥ *लक्षणा तु पा

रा॥कल्पादौ जननं कल्पान्ते च मरणमात्मानं न स्पृशतीत्यर्थः। अतस्सर्वदेहगत आत्मा अजः, अत एव नित्यः, शाश्वतः, प्रकृतिवदविशदसततपरिणामैरपि नान्वीयते, पुराणः

ता॥त्यममजं भूयाम्'इति कण्ठोक्तेः,प्राक्सृष्टेरेकत्वावधारणादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेरेकस्यैव बहुभवनसङ्कल्पादेश्च—इति। जीवस्वरूपेत्पत्तिनाशावेवाभ्युपगन्तव्याविति जीवानामाप्रलयावस्थायित्व-व्यादशङ्कानिरासाय'नायं भूत्वा'इत्याद्युक्तम्। तत्र चैवमुत्तरम्—जीवानां निर्मृष्टिस्वदेहीकरणेन विशेषः। प्राक्सृष्टेरेकत्वावधारणं नामरूपविभागाभावात्; एकविज्ञानेन सर्वविज्ञानं च सूक्ष्मचिदचिद्वस्तुशरीरक-स्य ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरतया परिणामात्। अत एव बहुभवनसङ्कल्पाद्युपपत्तिश्च। अतः कल्पा-द्यन्तयोरपि ज्ञानसङ्कोचविकासकरदेहविश्लेषसंश्लेषमात्रमेव,न पुनः स्वरूपोत्पत्तिः—इति।'अजो नित्यः' इत्यनयोः पूर्वोक्तार्थस्य सङ्कलय्य निगमनरूपतया तत्तत्कालेषु जन्मादिनिषेधेन सर्वदेहगतात्माजत्वा-दिविवक्षया चापौनरुक्त्यमित्यभिप्रायेणाह—अतस्सर्वदेहगत इति। अत एव नित्य इति, उत्प-त्तिरहितत्वान्नाशित्वर्धहत इत्यर्थः। सृष्ट्यवस्थागतस्थूलपरिणामानामात्मनि निरस्तत्वात्प्रलयावस्थागत-सूक्ष्मपरिणामनिरसनपरश्शाश्वतशब्द इत्यभिप्रायेणाह—प्रकृतिवदिति। पुराणशब्दमपि 'अक्षरसा-म्यान्निर्ब्रूयात्' इत्युक्तन्यायेन निर्वक्ति—पुरापिनव इति। किमिदं पुरापि नवत्वम्, अनुत्पन्नस्य कदाचिदपि नवत्वायोगात्। उत्पन्नेऽपीदानीमपि नव इति वा परस्मादपि नव इति वा वक्तव्यम्,

प्र-पा॥१. विशिष्टेनाभ. ख ग ङ. पा॥ ३. दस्सर्वत्रेपि. ख. ग. ङ. पा॥
२ नाशरहित घ ङ. ज पा॥

शं॥हि अभूत्वा भविता स जायते इति उच्यते। नैवम् आत्मा। अतो न जायते। यस्मात् एवं तस्मात् अजः। यस्मात् न म्रियते तस्मात् नित्यश्च। यद्यपि आद्यन्तयोः विक्रि-ययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धाः भवन्ति, तथापि मध्यभाविनीनां विक्रियाणां *स्वशब्दैरेव प्रतिषेधः कर्तव्यः †इत्याह—शाश्वतः इति, अनुक्तानाम् अपि गमनादि-समस्तविक्रियाणां प्रतिषेधो यथा स्यात् इति। शाश्वत इति अपक्षयलक्षणा विक्रिया प्रतिषिध्यते। शश्वद्भवः शाश्वतः। न अपक्षीयते स्वरूपेण, निरवयवत्वात्। निर्गुण-त्वाच्च नापि गुणक्षयेण अपक्षयः। अपक्षयविपरीतापि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते

आ॥तद्धि 'तदैक्षत' 'देशतः कालतो योऽसावशस्मातः स्वतोऽन्यतः। अविलुप्तावबोधात्मा' इत्यादिश्रुतिस्मृतिसिद्धम्। कुतः? अनादिलक्षणेश्वरस्वरूपत्वात्। शाश्वतः सदैक-

ज॥हारस्त्वविभिस्तक इति पृच्छायां नेत्यनेनोच्यत इत्यर्थः। नन्वीश्वरज्ञानस्योक्तप्रकारं भूत्वा भवनं कुतः सिद्धम्, येन जीवस्य तथाभावासंभावनायोदाहियत इत्यत आह—तद्धीति॥ तदीश्वरज्ञानस्योक्तप्रका-रेण भूत्वा भवनं श्रुतिस्मृतिसिद्धं हीति सम्बन्धः। 'तदैक्षत' इति भवनमुच्यते, देवदत्तोऽपश्यदि-तिवत्। देशत इति शुद्धिलासादिराहित्यम्। नन्वीश्वरवदित्येव कस्मान्नोक्तम्। नैवं शङ्क्यम्, लोकद-र्शनस्याधिकस्य तत्रोत्पादात्। 'अजो नित्यः' इति पुनरुक्तमित्याशङ्क्य तन्निवर्त्यामाशङ्कामुक्त्वान्यथा व्याचष्टे—कुत इति॥'न जायते म्रियते'इत्येतत्कस्मात्कारणादित्यर्थः। अनादीत्यनेन'अजो नित्यः शा-श्वतः'इति व्याख्यातम्।शाश्वत इत्येतन्नित्य इत्यनेन गतार्थमित्यन्यथा व्याचष्टे—शाश्वत इति॥तथा च

पा॥ *तदर्थः स्वशब्दैरेव. पा. †इत्यनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यात् इत्याह—शाश्वत इत्यादिना। शाश्वत इति. पा.

रा॥पुरापि नवः, सर्वदा अपूर्ववदनुभाव्य इत्यर्थः । अतश्शरीरे हन्यमाने न हन्यतेऽयमात्मा ॥ २० ॥

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१

रा॥एवमविनाशित्वेनाजत्वेन व्ययानर्हत्वेन च नित्यमेनमात्मानं यः पुरुषो वेद, स

ता॥पुरा नवत्वस्यानिरूपणीयत्वादित्याशङ्क्याह—सर्वदेति।पुराशब्दस्य कालत्रयोपलक्षणतया वा कृत्स्नगताभिप्रायशापिशब्दसमुचितकालान्तरतात्पर्येण वा पुरातनोऽपि नव इति विरोधाभिप्रायेण वा निर्वाहः । नवशब्दोऽप्यत्र नवत्वसहिताश्चर्यत्वपरः । वक्ष्यति च 'आश्चर्यवत्' इत्यादीति भावः । यद्वा सावयवानामवयवाप्यायनादिना नवीकरणं स्यात्, अयं तु निरवयवत्वेनानवीकार्यतया पुरापि नव इत्युपपादितम् । इममर्थमर्जुनस्य शङ्क्यमानविषये निगमयतीत्यभिप्रायेणाह—अत इति ॥ २० ॥

'य एनम्' इत्युक्तविपर्ययपरे 'वेद' इत्यादिश्लोके 'नित्यम्' इति परमसाध्यानुवादः।'अविनाशिनम्' इत्यादिकं तु तद्धेतुरित्यभिप्रायेणाह—एवमिति । व्ययशब्देनात्र जन्मनाशव्यतिरिक्तविकाराः विवक्षिताः ; अपक्षय एव वा छेदनादियोग्यावयवशैथिल्यादिर्वा । कमितिनिर्धारणस्यानिर्धारितानेक

प्र-पा॥ १ गी॰ २-२९. २. इति उपपादितमर्थं. ङ ज. पा॥

शा॥—पुराणः इति । यो हि अवयवागमेन उपचीयते स वर्धते,अभिनव इति च उच्यते। अयं तु आत्मा निरवयवत्वात् पुरापि नव एवेति पुराणः; न वर्धते इत्यर्थः । तथा—न हन्यते न विपरिणम्यते हन्यमाने-विपरिणम्यमानेऽपि शरीरे । हन्तिः अत्र विपरिणामार्थे द्रष्टव्यः अपुनरुक्तताये । न विपरिणम्यते इत्यर्थः । अस्मिन् मन्त्रे षड् भावविकाराः लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहितः आत्मा इति वाक्यार्थः । यस्मादेवं तस्मात् 'उभौ तौ न विजानीतः' इति पूर्वेण मन्त्रेण अस्य सम्बन्धः ॥ २० ॥

'य एनं वेत्ति हन्तारम्' इत्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवति

आ॥रूपः । पुरं देहमणतीति पुराणः । तथापि न हन्यते हन्यमानेऽपि देहे ॥ २० ॥
अतो य एवं वेद स कथं घातयति हन्ति वा । अविनाशिनं नैमित्तिकविनाशरहितम् ।

ज॥'अजो नित्यः'इत्याभ्यां निमित्तोत्पत्तिनाशानिमित्तौ शाश्वत इत्यनेनोपाधिबिम्बसन्निधिजननाशानिमित्तौ जन्मनाशौ न स्त इत्युक्तं भवति । तथाप्यज इत्युक्तत्वात्पुराण इति पुनरुक्तिरिति चेत्, न, भूत्वा भविता वा नेत्युक्तम् । तदुक्तः; निर्निमित्तश्च तर्हि जननव्यवहार इत्याशङ्क्य देहान्तरप्राप्तिरस्यास्तीत्यनेनोच्यत इत्याह—पुरमिति ॥ एवमपि न हन्यत इति पुनरुक्तिरिति चेन्न, यदि पुराणस्तर्हि उपाधिभूतदेहनाशाद्दर्पणनाशात्प्रतिबिम्बनाशवदात्मनाशः स्यादित्याशङ्क्य पूर्वाभिप्रायेण परिहियत इति भावेनाह—तथापीति ॥ पुराणतेऽपि ॥ २० ॥

'वेदाविनाशिनम्'इति पुनरात्मनोऽविनाशित्वादिकं किमर्थमुच्यत इत्यतोऽस्य तात्पर्यमाह—अत इति॥ उक्तैः प्रमाणैरेनमविनाशित्वादिरूपं क कथं घातयति हन्ति वेत्येव भावं करोतीत्यर्थः॥जीवस्यानित्यादिकं मन्यमानो न जानातीत्युक्तम् । इदानीं तु ज्ञानी नैवं मन्यत इत्युच्यत इति। अविनाशिनं नित्यमिति पुनरुक्तिमाशङ्क्य द्वेधार्थभेदमाह—अविनाशिनमिति॥नैमित्तिको बिम्बनाशादिनिमित्तकः।

रा॥पुरुषो देवमनुष्यतिर्यक्स्थावरशरीरावस्थितेष्वात्मसु कमप्यात्मानं कथं घातयति;कं घा

ता॥व्यक्तिसापेक्षत्वादाह देवमनुष्येत्यादि।घातयतिहन्त्योः पौनरुक्त्यमाशङ्क्य बुद्धिस्थक्रमेणार्थमाह—कथंनाशयतीत्यादि । वेदितुर्विशेषेण हन्तृत्वादिनिषेधो न युज्यते । आत्मनो नित्यत्वे तद्वेदितुरपि

शा॥इति प्रतिज्ञाय 'न जायते' इत्यनेन अविक्रियत्वं हेतुम् उक्त्वा प्रतिज्ञातार्थम् उपसंहरति—वेदाविनाशिनम् इति । वेद विजानाति अविनाशिनम् अन्त्यभावविकाररहितं नित्यं विपरिणामरहितं यो वेद इति सम्बन्धः । एनं पूर्वेण मन्त्रेण उक्तलक्षणम् अजम् अव्ययम् उपक्षयापक्षयरहितं कथं केन प्रकारेण स विद्वान् पुरुषः अधिकृतः हन्ति हननक्रियां करोति । कथं वा घातयति हन्तारं प्रयोजयति । न कथं चित् कश्चित् हन्ति, न कथंचित् कञ्चित् घातयति इति उभयत्र आक्षेपः एव अर्थः, प्रश्नार्थासंभवात् । हेत्वर्थस्य च तुल्यत्वात् विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थः अभिप्रेतो भगवता । हन्तेस्तु आक्षेपः उदाहरणार्थत्वेन कथितः ॥

विदुषः कं कर्मासंभवहेतुविशेषं पश्यन् कर्माण्याक्षिपति भगवान् 'कथं स पुरुषः' इति । ननु *उक्तम् आत्मनः अविक्रियत्वं सर्वकर्मासंभवकारणविशेषः । सत्यम् उक्तम् । न तु सः कारणविशेषः, अन्यत्वात् विदुषः अविक्रियात् आत्मनः इति । न हि अविक्रियं स्थाणुं विदितवतः कर्म न सम्भवति इति चेत्—न, विदुषः आत्मत्वात् । न देहादिसङ्घातस्य विद्वत्ता । अतः पारिशेष्यात् असंहतः आत्मा विद्वान् अविक्रियः इति तस्य विदुषः कर्मासंभवात् आक्षेपो युक्तः 'कथं स पुरुषः' इति । यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्य अविक्रिय एव सन् बुद्धिवृत्त्यविवेकविज्ञानेन अविद्यया उपलब्धा आत्मा कल्प्यते, एवमेव आत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या अविद्यया असत्यरूपयैव परमार्थतः अविक्रिय एव आत्मा विद्वान् उच्यते । विदुषः कर्मासंभववचनात् यानि कर्माणि शास्त्रेण विधीयन्ते तानि अविदुषो विहितानि इति भगवतो निश्चयोऽवगम्यते ॥

ननु विद्यापि अविदुष एव विधीयते, विदितविद्यस्य पिष्टपेषणवत् विद्याविधानानर्थक्यात् । तत्र अविदुषः कर्माणि विधीयन्ते न विदुषः इति विशेषो न उपपद्यते इति चेत्—न, अनुष्ठेयस्य भावाभावविशेषोपपत्तेः । अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालम् अग्निहोत्रादिकर्म अनेकसाधनोपसंहारपूर्वकम् अनुष्ठेयम् 'कर्ता अहं, मम कर्तव्यम्' इत्येवंप्रकारविज्ञानवतः अविदुषः यथा अनुष्ठेयं भवति न तु तथा 'न जायते' इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किञ्चित् अनुष्ठेयं भवति, किन्तु 'नाहं कर्ता, नाहं भोक्ता' इत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानात् न अन्यत् उत्पद्यते इति एष विशेष उपपद्यते । यः पुनः 'कर्ता अहम्' इति वेत्ति आत्मानं, तस्य मम 'इदं कर्तव्यम्' इति अवश्यंभाविनी बुद्धिः स्यात् ; तदपेक्षया सः अधिक्रियते इति तं प्रति कर्माणि । स च अविद्वान्, 'उभौ तौ न विजानीतः' इति वचनात्, विशेषितस्य च विदुषः कर्माक्षेपवचनात् च 'कथं स पुरुषः' इति । तस्मात् †विदुषो मुमुक्षोश्च सर्वकर्मसंन्यास एव अधिकारः । अत एव भगवान् नारायणः साङ्ख्यान् विदुषः अविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति—'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्' इति ।

---

पा ॥ *उक्तमेव. पा. †विशेषितस्याविक्रियात्मदर्शिनो विदुषः. पा.

रा॥कथं हन्ति कथं नाशयति, कथं वा तत्प्रयोजको भवतीत्यर्थः। एतानात्मनो घातयामि हन्मीत्यनुशोचनमात्म*स्वरूपयाथात्म्याज्ञानमूलमेवेत्यभिप्रायः ॥ २१ ॥

ता॥नद्धननायोगादित्याशङ्कापरिहाराय फलितार्थं वदन् प्रकृतेन सङ्गमयति—एतानिति। नात्र श्लोके हन्तृत्वादिमात्रं निषिध्यते, किन्तु तत्प्रयुक्तं शोचनम्, तदुत्पादकप्रकारप्रतिषेधायैव ह्यत्र कथं शब्द इति भावः ॥ २१ ॥

प्र पा॥ *स्वरूपाज्ञान पा॥

शां॥ तथाच पुत्राय आह भगवान् व्यासः —'द्वाविमावथ पन्थानौ' इत्यादि। तथाच क्रियापथश्चैव पुरस्तात् पश्चात् संन्यासश्चेति। एतमेव विभागं पुनः पुनः दर्शयिष्यति भगवान् 'अतत्त्ववित् अहङ्कारविमूढात्मा कर्ताहमिति मन्यते' 'तत्त्ववित् तु न अहं करोमि' इति। तथा च 'सर्वकर्माणि मनसा संन्यस्यास्ते' इत्यादि ॥

तत्र केचित् पण्डितमन्या वदन्ति—'जन्मादिभावविक्रियारहितः अविक्रियः अकर्ता एकः अहम् आत्मा' इति न कस्यचित् ज्ञानम् उत्पद्यते, यस्मिन् सति सर्वकर्मसंन्यासः उपदिश्यते इति। तत् न, 'न जायते' इत्यादिशास्त्रोपदेशानर्थक्यप्रसङ्गात्। यथा च शास्त्रोपदेशसामर्थ्यात् धर्माधर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसंबन्धविज्ञानम् उत्पद्यते, तथा शास्त्रात् तस्य एव आत्मनः अविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मात् न उत्पद्यते इति प्रष्टव्याः ते। करणागोचरत्वात् इति चेत्—न, 'मनसैवानुद्रष्टव्यम्' इति श्रुतेः। शास्त्राचार्योपदेशजनितशमदमादिसंस्कृतं मनः आत्मदर्शने करणम्। तथाच तदधिगमाय अनुमाने आगमे च सति ज्ञानं न उत्पद्यते इति *साहसम् एतत् ॥

ज्ञानं च उत्पद्यमानं तद्विपरीतम् अज्ञानम् अवश्यं बाधते इति अभ्युपगन्तव्यम्। तत् च अज्ञानं दर्शितं 'हन्ता अहं, हतः अस्मि' इति 'उभौ तौ न विजानीतः' इति। अत्र च आत्मनः हननक्रियायाः कर्तृत्वं †कर्मत्वं च अज्ञानकृतं दर्शितम्। तत् च सर्वक्रियासु अपि समानम्। कर्तृत्वादेः अविक्रियत्वात् आत्मनः। विक्रियावान् हि कर्ता आत्मनः कर्मभूतम् अन्यं प्रयोजयति 'कुरु' इति। तदेतत् अविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान् वासुदेवः विदुषः कर्माधिकाराभावप्रदर्शनार्थं 'वेदाविनाशिनं कथं स पुरुषः' इत्यादिना। क पुनः विदुषः अधिकारः इति? एतत् उक्तं पूर्वमेव 'ज्ञानयोगेन सांख्यानाम्' इति। तथा च सर्वकर्मसंन्यासं वक्ष्यति 'सर्वकर्माणि मनसा' इत्यादिना। ननु मनसा इति वचनात् न वाचिकानां कायिकानां च संन्यासः इति चेत्, न, सर्वकर्माणि इति विशेषितत्वात्। मानसानाम् एव सर्वकर्मणाम् इति चेत्—न, मनोव्यापारपूर्वकत्वात् वाक्कायव्यापाराणां

आ॥ नित्यं स्वाभाविकनाशरहितम्। अथवा अविनाशिनं दोषयोगरहितम्। नित्यं सदाभाविनमिति सर्वत्र विवेकः, दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात् ॥ २१ ॥

उ॥ स्वाभाविकः कालकृतः। दोषयोगरहितमित्यनेन मात्रास्पर्शा इत्यत्र यदुक्तमभिमानिकमेवात्मनो दुःखादिकं न तु स्वगतमिति तस्यानुवादः क्रियते। एवं व्याख्यानप्रकारसन्यत्राप्यतिदिशति—इतीति। विवेकः शब्दार्थयोः। अविनाशिनं दोषयोगरहितमिति कुतो लभ्यमित्यत आह—दोषेति। अनेकार्थत्वाद्धातूनामिति भावः ॥ २१ ॥

पा॥ *साहसमात्रम् एतत् पा †कर्मत्वं हेतुकर्तृत्वं च पा

रा-अ॥ यद्यपि नित्यानामात्मनां शरीरविश्लेषमात्रं क्रियते; तथापि रमणीयभोग*साधनेषु शरीरेषु नश्यत्सु तद्वियोगरूपं शोकनिमित्तमस्त्येवेत्यत्राह—

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**

**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२**

रा॥ धर्मयुद्धे शरीरं त्यजतां त्यक्तशरीरादधिकतरकल्याणशरीरग्रहणं शास्त्रादवगम्यत इति जीर्णानि वासांसि विहाय नवानि कल्याणानि वासांसि गृह्णतामिव हर्षनिमित्तमेवात्रोपलभ्यते ॥ २२ ॥

रा-अ॥पुनरपि 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्' इति पूर्वोक्तमविनाशित्वं सुखग्रहणाय व्यञ्जयन् †द्रढयति—

ता॥शङ्कापूर्वक 'वासांसि' इति श्लोकमवतारयति—**यद्यपीति** । ननु सार्वभौमादिशरीरपरित्यागे तत्तत्कर्मानुरूपनारकतिर्यक्स्थावरादिशरीरपरिग्रहसम्भावनया प्रलयवदपरिगृहीतशरीरतयाऽवस्थितिसम्भावनया चास्त्येव शोकनिमित्तम् । न च नूतनत्वमात्रं सुखाय, चिरन्तननरपतिगृहपरित्यागेनापि नूतनकारागारप्रवेशादेः जीर्णांशुकप्रहाणेन नूतनगोणीग्रहणादेश्च दुःखरूपत्वात् । न च वयमिह मानुषादिशरीरविलयसमनन्तरमभिनववसनपरिधानवदनिमिषदेहादिग्रहमुपलभामहे इत्याशङ्कयाह—**धर्मयुद्ध इति**। अधिकतरेति कल्याणविशेषणम् । नवशब्दाभिप्रेतोक्तिः—**कल्याणानीति** । **हर्षनिमित्तमेवेति**—पुरा शोकाविषयमात्रे शोकः कृतः, इदानीं तु तद्विपरीतहर्षविषये क्रियत इति भावः ॥ २२ ॥

पूर्वोक्तेन पुनरुक्तिं दार्ढ्यसुखग्रहणरूपप्रयोजनभेदेन परिहरन्'नैनम्'इति श्लोकद्वयमवतारयति—**पुनरपीति** । 'नैनम्' इत्यादौ सार्धश्लोके वैशद्याय पृथगुक्तं करणासामर्थ्यं विषयायोग्यत्वं च पर-

प्र-पा ॥ *स्थानेषु पा। †द्रढयति श्लोकद्वयम्—पा

*१. प्रलयवदपरिगृहीतशरीरतया—प्रलय इव शरीरपरिग्रहरहिततया ॥

†२. 'नैनं छिन्दन्ति' इत्यादौ शस्त्रादीनां छेदनादिकरणासामर्थ्यम् 'अच्छेद्य' इत्यादौ विषयस्यात्मनः छेदनाद्ययोग्यत्वं पृथगुक्तम्, तथा भाष्ये कुतो न पृथगुक्त-

शा॥मनोव्यापाराभावे भावानुपपत्तेःशास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि कर्माणि वर्जयित्वा अन्यानि सर्वकर्माणि मनसा संन्यस्य आस्ते इति चेत्—न, 'नैव कुर्वन्न कारयन्' इति विशेषणात् । सर्वकर्मसंन्यासः अयं भगवता उक्तः मरिष्यतः न जीवतः इति चेत्—न, 'नवद्वारे पुरे *देहे आस्ते' इति विशेषणानुपपत्तेः । न हि सर्वकर्मसंन्यासेन मृतस्य तद्देहे आसनं संभवति । अकुर्वतः अकारयतश्च देहे संन्यस्य इति संबन्धः न देहे आस्ते इति चेत्—न, सर्वत्र आत्मनः अविक्रियत्वावधारणात्, †आसनक्रियायाः च अधिकरणापेक्षत्वात्, तदनपेक्षत्वात् च संन्यासस्य। संपूर्वस्तु न्यासशब्दः अत्र त्यागार्थः, न निक्षेपार्थः । तस्मात् गीताशास्त्रे आत्मज्ञानवतः संन्यास एव अधिकारः, न कर्मणि इति तत्रतत्र उपरिष्टात् आत्मज्ञानप्रकरणे दर्शयिष्यामः ॥ २१ ॥

आ॥देहात्मनोः [illegible]

जा॥देहानाम् [illegible]

'वासांसि'इति [illegible]

[illegible] ८५॥त॥आ॥गादेहानामनतिभिन्नत्वाच्च तेन देहात्मनोः विवेको विनाशित्वाविनाशित्वलक्षणः स्वयमनुभवारूढो भवतीति भावः । दृष्टान्तं पूर्वोक्ताद्विलक्षण-

पा॥ *देही. पा. †आसन. पा.

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यस्सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४

ता॥स्परप्रतियोगितया अन्येन इतरदन्तर्भवतीति भाष्ये पृथगनुपात्तम्।'अच्छेद्यः'इत्यादौ प्रत्ययोऽर्हार्थः।

प्र पा॥मित्याशङ्क्य शस्त्रादीनामात्मविषये छेदनाद्यश-क्तत्वे कथिते छेदनाद्ययोग्यत्वमात्मन अर्थादुक्तं भवतीति तथा नोक्तमिति परिहरति - परस्परप्रतियोगितयेति। परस्परप्रतियोगितया - परस्परप्रतिसम्बन्धितया अशक्त-त्वस्याशक्यतायाश्च परस्परनिरूपितत्वेनेत्यर्थ ॥

१. अन्यतरत्र स्र ण घ. उ पा ॥

२ अन्यत्र इतरदन्तर्भवतीति—अशक्तत्वे वि-षयस्याशक्यत्वमन्तर्भवतीत्यर्थः । आत्मनो नित्यत्वसा-धनप्रकारे तस्याव्यक्तत्वादिप्रतिपादनम् अव्यक्त इत्यादि-ना मूलोक्त निरर्थकमित्याशङ्क्य पूर्वोक्तात्मनाविनाशित्व साधकानुमाने धर्मिग्राहकप्रमाणविरोधशङ्कापरिहारपर-तया तत्सार्थक्यमित्यभिप्रेत्य तदानुगुण्येन अव्यक्तादि-शब्दाना भाष्य छेदनार्द्याद्यादिना व्याख्यान कृतमि-त्याह—पूर्वोक्तेति । तथाच अव्यक्तत्वप्रतियोगिव्यक्तत्व न सामान्यत प्रमाणगोचरत्व तदभावस्य अप्रसिद्धे , किन्तु सार्थवशात् अनित्यवस्तुगोचरप्रमाणसजातीयविषयप्र माणगोचरत्वम् , सजातीयत्व प्रत्यक्षत्वादिव्याप्यचक्षुरा-दिना,तथा चानित्यशरीरादिग्राहकचक्षुरादिग्राह्यत्वाभा ववत्त्वम् अव्यक्तत्वमिति फलितम् , तथा च चक्षुरादि-भिरव शरीरादिषु उत्पत्तिविनाशग्रहणात् तद्ग्राह्यस्या-त्मना न तद्ग्रहणमिति न धर्मिग्राहकमानविरोध इति भाव ॥

शा॥प्रकृत तु वक्ष्यामः । तत्र आत्मनः अविनाशित्वं प्रतिज्ञातम् । तत् किमिव इति ? उच्यते—वासांसि इति॥ वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नवानि अभिनवानि गृह्णाति उपादत्ते नरः पुरुषः अपराणि अन्यानि, तथा

आ॥स्वत. प्रायो निमित्तश्चाविनाशिनोऽपि केनचिन्निमित्तविशेषेण स्यात् कफच्छेद-वत्—इत्यतो विशेषनिमित्तानि निषेधति—नैनमिति ॥ २३ ॥

वर्तमाननिषेधात्स्यादुत्तरत्रेत्यत आह—अच्छेद्य इति ॥ वर्तमानादर्शनाद्युक्तमयोग्य

ज॥मिति शेषः । दृष्टान्तमित्युपलक्षण दार्ष्टान्तिकस्यापि कथितत्वात् ॥ २२ ॥

नैमित्तिकनाशस्य प्रागनिरस्तत्वात् किं 'नैनम्' इति श्लोकेनेत्यतस्तन्निरस्यशङ्काप्रदर्शनपूर्वक ता-त्पर्यमाह—स्वत इति॥स्वत. कालत. प्रायो बाहुल्येन शङ्क्यमाननिमित्तत्वात्प्रायर्थमेतदव्ययम् । केन चित् शस्त्रादिना स्याद्विनाश इति शेषः।असम्भावितशङ्कया न पर्यनुसानमित्यतो दृष्टान्तमाह – कफच्छे-दवदिति॥ यथा दक्षस्य प्रजापतेः शिरश्छेदो न स्वतो जातः, नापि वीरभद्रस्यायुधेन निमित्तेन, किन्तु यज्ञपशुभावनाख्येन निमित्तविशेषेण,तथेत्यर्थः। इत्यतः एव शङ्कितत्वात् । विशिष्यन्त इति विशेषाः, विशिष्टनिमित्तानि विनाशस्य ॥ २३ ॥

तर्ह्यच्छेद्योऽयमित्यादि पुनरुक्तमित्यत आह — वर्तमानेति ॥ लटः प्रयोगेन वर्त-मानस्यैव छेदादेर्निषेधादिदानीं दृश्यमानत्वेनात्मनः प्राग्विनाशाभावेऽप्युत्तरत्र शस्त्रादिना विनाशः स्यादिति शङ्काया छेदादियोग्यतैवात्मनो नास्तीति प्रतिपादनायेदमुदितम्।'अर्हे कृत्यतृचश्च'इति कृत्यस्या-र्हार्थत्वस्मरणादिति भावः।तर्हि तेनैवाल किमाद्येन श्लोकेनेत्यत आह—वर्तमानेति।'प्रवृत्ते शस्त्रसंपाते' इति वचनात्प्रसक्तौ सत्यामपि वर्तमानस्य छेदादेरदर्शनाच्छेदाद्ययोग्यत्वमात्मनो युक्तमिति दर्शयति प्रथमश्लोकेन । एवं तर्ह्युत्तराधर्यप्रसङ्ग इति चेन्न, उपोद्घाताभिप्रायेण भगवतोक्ते ऽभिप्रायमजानानस्य

रा॥ शस्त्राग्न्यम्बुवायवः छेदनदहनक्लेदनशोषणान्यात्मानं प्रति कर्तुं न शक्नुवन्ति सर्वगतत्वादात्मनस्सर्वतत्त्वव्यापनस्वभावतया

ता॥ तेन 'नैनं छिन्दन्ति' इत्यादिष्वपि तदर्हत्वं शस्त्रादेः प्रतिषिध्यत इति दर्शयति—न शक्नुवन्तीति। सर्वगतपदं पूर्वोक्तहेत्वनुवादतया व्याचष्टे—सर्वगतत्वादात्मन इति। अणोरात्मनः कथं सर्वगतत्वमित्याशङ्क्याह—सर्वतत्त्वेति। नात्र बहुश्रुत्यादिविरुद्धं जीवविभुत्वं सर्वगतशब्देनोच्यते; किन्त्वनु-

प्र-पा॥ †१. अत्रायम्भावः—श्रुतिस्मृत्यादिषु सर्वगतत्वादिव्यपदेशास्तु समुदायापेक्षया धर्मभूतज्ञानद्वारा सूक्ष्मानुप्रवेशक्षमतया वा तत्रतत्र यथोचितं निर्वाह्याः, 'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः। नित्यो व्यापी' इत्यात्मसिद्धिवचने व्यापिपदम् 'अतिसूक्ष्मतया सर्वचेतनानां प्रवेशस्वभावः' इति श्रीभाष्ये प्रथमसूत्रे व्याख्यातम्। सूत्रकारैश्च समर्थितमिदम् 'उत्क्रान्तिगत्यागतीनाम्' इत्यादिभिः। श्रुतप्रकाशिकायामपि 'जीवस्वरूपविभुत्वशङ्काव्युदासार्थं व्यापीतिशब्दं व्याचष्टे—अतिसूक्ष्मेति। पुराणादिषु व्यापिशब्दप्रयोगात् स एवात्र श्लोके प्रयुक्तः। यत्रयत्र जीवस्य व्यापित्वाभिधायिनः शब्दाः, तत्रतत्रायमेवार्थो द्रष्टव्य इति भावः। जीवस्य धर्मभूतज्ञानेन व्याप्तिरात्मसिद्धावेवोच्यते 'व्याप्तिरपि चैतन्यमात्रेणैव न स्वरूपेणेति' इति। यत्तु 'अनादिमत्परं ब्रह्म' (गी. १३. १२.) इति व्याख्याने, 'ब्रह्म-बृहत्त्वगुणयोगि शरीरादर्थान्तरभूतं स्वतः शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वमित्यर्थः, 'स चानन्त्याय कल्पते' इति श्रुतेः। शरीरपरिच्छिन्नत्वञ्चास्य कर्मकृतं कर्मबन्धनान्मुक्तस्यानन्त्यम्' इत्युक्तम्। यच्च 'लोके सर्वमावृत्य तिष्ठति' (गी-१३. १३.) इत्यत्र 'लोके यद्वस्तुजातं तत्सर्वमावृत्य व्याप्य तिष्ठति, परिशुद्धस्वरूपं देहादिपरिच्छेदरहिततया सर्वगतमित्यर्थः' इति-उक्तम्, एवम्प्रकरणान्तरेऽपि 'अनवच्छिन्नं ज्ञानैकाकारम्' इत्युक्तम्, तदभिन्नं ज्ञानव्याप्त्यादितात्पर्यमेवेति मन्तव्यम्, सारभाष्यादिषु 'स चानन्त्याय' इत्यादेस्तथैव व्याख्यानात्। दीपे तु 'प्रदीपवदावेशः' (४. ४. १५.) इति सूत्रे बालाग्रश्रुतिमुपादाय 'प्रत्यगात्मनो ह्यणुत्वमेव स्वरूपमिति सूत्रकारमतम् 'नाणुरतच्छ्रुतेः' इति साभिसन्धिकमुक्तत्वाच्च। अतस्सदाणुरेवात्मेति सूत्रभाष्यकारादीनां सिद्धान्त इति प्रतिपादितो स्वयंनिश्चितकरणेऽप्येवमेवोक्तम् 'स्वरूपेणाणुरात्मायं गुणद्वारेण सर्वगः। उभयव्यवहारोऽपि युज्यते प्रत्यगात्मनः।' इति ॥

दी॥ तद्वदेव शरीराणि विहाय जीर्णानि अन्यानि संयाति संगच्छति नवानि देही आत्मा पुरुषवत् अविक्रिय एवेत्यर्थः ॥ २२ ॥

कस्मात् अविक्रिय एवेति ? आह—नैनं छिन्दन्ति इति ॥ एवं प्रकृतं देहिनं न

आ॥ त्वमिति सूचयति वर्तमानापदेशेन। कुतोऽयोग्यता। नित्यसर्वगतादिविशेषणेश्वरस्वरूपत्वात्। शाश्वत इत्येकरूपत्वमात्रमुक्तम्। स्थाणुशब्देन नैमित्तिकमप्यन्यथात्वं निवा-

ज॥ शङ्कामनूद्यावतारस्य कृतत्वात्। स्वाभिप्रायेण तूपोद्घातमुक्त्वा साध्यमाहेत्यवतारः कर्तव्यः। 'नित्यः सर्वगतः' इत्यादिकं जीवेऽसम्भावितमित्याशङ्क्य तन्निवर्त्यशङ्काप्रदर्शनपूर्वकं व्याचष्टे—कुत इति॥ वर्तमानच्छेदाद्यदर्शनमात्मनः छेदाद्ययोग्यताया किं निश्चययुक्तिः, उत सम्भावनायुक्तिः। नाद्यः, कदाचिदप्यदृष्टस्यापि पश्चाद्दर्शनात्। द्वितीये तु कुतो योग्यतानिश्चय इति शङ्कार्थः। नित्यसर्वगतेति भावप्रधानो निर्देशः। ईश्वरस्य तावच्छेदाद्ययोग्यत्वं सिद्धम्, नित्यसर्वगतत्वादिविशेषणवत्त्वात्। नह्येवंभूतस्य छेदादिकं सम्भवति। अतस्तद्रूपतिविम्बस्यापि जीवस्य तदयोग्यत्वमिति भावः। मन्त्रवर्णे शाश्वत इतीश्वरविशेषणमुक्तम्, अत्र स्थाणुरिति। तयोर्भेदमाह—शाश्वत इति ॥ एकरूपत्वमात्र सामान्येनान्यथात्वाभावः। तस्य सामान्यप्रकरणत्वात्, स्थाणुरित्यस्य नैमित्तिकनिषेधप्रकरणत्वात्। अस्यार्थभेदकथन-

ता॥प्रवेशाविशेषयोग्यतेति स्वभावशब्दं प्रयुञ्जानस्य भावः। व्यापित्वस्य पूर्वोक्तं हेतुत्वप्रकारं प्रपञ्चयति

---

शा॥छिन्दन्ति शस्त्राणि, निरवयवत्वात् न अवयवविभागं कुर्वन्ति। शस्त्राणि अस्यादीनि। तथा न एनं दहति पावकः, अग्निरपि न भस्मीकरोति। तथा—न च एनं क्लेदयन्ति आपः। अपां हि सावयवस्य वस्तुनः आर्द्रीभावकरणेन अवयवविश्लेषापादने सामर्थ्यम्। तत् न निरवयवे आत्मनि संभवति। तथा स्नेहवत् द्रव्यं स्नेहशोषणेन नाशयति वायुः।

---

आ॥रयति। नित्यत्वं सर्वगतत्वविशेषणम्, अन्यथा पुनरुक्तेः। ऐक्योक्तावप्यनुक्तविशेषणोपादानाद्भेश्वरैक्ये पुनरुक्तिः। युक्ताश्च बिम्बधर्माः प्रतिबिम्बेऽविरोधे। तथा च 'रूपंरूपं प्रतिरूपो बभूव' 'आभास एव च' इत्यादिश्रुतिस्मृतिसिद्धा। न चांशत्वविरोधः, तस्येवांशत्वात्। नचैकरूपत्वांशता। प्रमाणं चोभयविधवचनमेव। न चांशस्य प्रति-

---

ज॥स्योत्तरत्रोपयोगं वक्ष्यामः। नित्य इतीश्वरविशेषणं प्रतिभाति, तदन्यथा व्याचष्टे—नित्यत्वमिति॥ भिन्नपदोक्तमपि विशिष्टस्य विशेषणं विशेषणमुपसङ्क्रामति। सन्निधानाच्च सर्वगतत्वमिति भावः। इदं पृथगीश्वरविशेषणं किं न स्यादित्यत आह—अन्यथेति। 'अजो नित्यः' इति नित्यत्वमीश्वरस्य प्रागुक्तम्। अप्रमेयस्येति सर्वगतत्वञ्च। अतस्ताभ्यां पुनरुक्तेरित्यर्थः। अस्याप्युत्तरत्रोपयोगः। ननु जीवस्येश्वरप्रतिबिम्बत्वमत्र यद्वारमुक्तम्। अतः पुनरुक्तिरित्यत आह—ऐक्योक्ताविति। जीवस्येश्वरैक्यविषये न पुनरुक्तिदोषः, कुतः, ऐक्यमात्रस्य पुनः पुनरुक्तावपि पूर्वपूर्वानुक्तानां तत्रतत्रोपयुक्तानामीश्वरविशेषणानामुत्तरत्रोपादानादिति। ऐक्यमत्र गौणं विवक्षितम्। विशेषणभेदाद्विशिष्टभेद इति भावः। ननु एतदपि नास्ति, शाश्वत इत्युक्तस्यैव स्थाणुशब्देन ग्रहणादित्यादिशङ्कानिरासाय शाश्वत इत्येकरूपत्वमानमित्यादिकः प्राचीनो ग्रन्थः। ननु प्रतिबिम्बत्वं तत्तत्साध्यसिद्धये हेतुत्वेनोक्तम्। न चैकस्यैव हेतोरनेकसाध्यसिद्ध्यर्थं पुनःपुनरुपन्यासे दोषोऽस्ति। तत्रस्य हेतोः, प्रमेयभेदात्। अतः कथमियं शङ्केति। उच्यते—एकत्रोक्तमीश्वरप्रतिबिम्बत्वमन्यत्रापि हेतुत्वेन शिष्यैरेव ज्ञायताम्, किं स्वयं वचनेनेति शङ्कितुरभिप्रायः, ईश्वरप्रतिबिम्बत्वमात्रस्य तत्तद्विशिष्टशङ्कानिरासासामर्थ्यात् तत्तदौपयिकविशेषणप्रदर्शनार्थं स्वयमुपादानमिति परिहाराभिप्रायः। नन्वीश्वरस्य नित्यसर्वगतत्वादिविशेषणवत्त्वादस्तवच्छेद्यत्वादिकम्, जीवस्य तु कुतः। तथाविधेश्वरप्रतिबिम्बत्वादितिचेत्, यो यत्प्रतिबिम्बः, स तद्धर्मवानिति नियमाभावादित्यत आह—युक्ता इति॥ बिम्बधर्माः बिम्बसमानधर्माः। यो यत्प्रतिबिम्बः, सोऽसति विरोधे तद्धर्मेति व्याप्तिरभिप्रेतेति भावः। स्यादिदं व्याख्यानं यदि जीवस्येश्वरप्रतिबिम्बता स्यात्। सैव कुतः सिद्धेत्यत आह—तथेति॥ ननु जीवस्येश्वरप्रतिबिम्बत्वाङ्गीकारे'अंशो नानाव्यपदेशात्' 'ममैवांशो जीवलोके' इत्यादिवाक्यसिद्धेन तदंशत्वेन विरोधः स्यात्। प्रतिबिम्बो हि बिम्बादत्यन्ताभिन्न इति केषाञ्चिन्मतम्। अत्यन्ताभिन्नइत्यपरेषाम्। अंशस्तु तदेकदेशः,तेन भिन्नाभिन्नः,यथा पटांशस्तन्तुः पटेन। ततः पक्षद्वयेऽपि कथं न विरोधइत्यत आह—नचेति॥ जीवस्येश्वरप्रतिबिम्बत्वाङ्गीकारेऽपि न तदंशत्वविरोधः। कुतइत्यत आह—तस्येति॥ प्रतिबिम्बत्वस्यैवांशशब्दप्रवृत्तिनिमित्तत्वात्। अयं भावः—अत्यन्तभिन्नस्य जीवस्य यदीश्वराधीनत्वसादृश्योपेतत्वं तत्प्रतिबिम्बत्वमुच्यते। अभेदमतस्य निराकरिष्यमाणत्वात्, तदेव तदंशत्वमिति कुतो विरोध इति। नन्वंशत्वं तदेकदेशत्वं, तत्कथमुच्यते प्रतिबिम्बत्वमेवांशत्वमिति तत्राह—नचेति॥ अंशता अंशशब्दप्रवृत्तिनिमित्तम्। नकेवलमेकदेशत्वमंशशब्दप्रवृत्तिनिमित्तम्। अपि तु प्रतिबिम्बतापीति भावः। अस्तु नामानेकार्थत्वमंशशब्दस्य, तथापि 'अंशो नाना'इत्यादौ प्रतिबिम्बत्वमेवांशत्वमित्यत्र किं प्रमाणं तदेकदेशत्वं किं न स्यादित्यत आह—प्रमाणमिति॥ जीवस्येश्वरप्रतिबिम्बत्वं तदंशत्वं च तावदुच्यते। न च परस्परविरुद्धः शास्त्रार्थो

रा॥सर्वेभ्यस्तत्त्वेभ्यस्सूक्ष्मत्वादस्य तैर्व्याप्त्यनर्हत्वात्;*व्याप्यकर्तव्यत्वाच्च छेदनदहनक्लेदन†शोषणानाम् । अत आत्मा

---

ना॥—सर्वेभ्य इति।अत आत्मा नित्य इति—सूक्ष्मत्वेन छेदनाद्ययोग्यत्वादात्मा नाशरहित इत्यर्थः।

---

प्र-पा॥ * *व्याप्येतिल्यप्, यद्वा व्याप्येन सूक्ष्मवस्तुना इति †शोषणादेः- पा॥

---

श॥एनं तु आत्मानं न शोषयति मारुतः अपि ॥ २३ ॥

यतः एवं तस्मात्—अच्छेद्योऽयम् इति ॥ यस्मात् अन्योन्यनाशहेतुभूतानि एनम्

---

आ॥बिम्बत्वं कल्प्यम् , गाध्यादिष्वंशबाहुरूप्यदृष्टेरितरत्रादृष्टेः । स्थाणुत्वेऽप्यैक्षणत्वाद्यविरुद्धमीश्वरस्य,उभयविधवाक्यात् ,अचिन्त्यशक्तेश्च । न च मायैयकं 'त्वयीश्वरे ब्रह्मणि नो विरुध्यते' 'न योगित्वादीश्वरत्वात्' 'चित्रं न चैतत् त्वयि कार्यकारणे' इत्याद्यैश्वर्येणैव विरुद्धधर्माविरोधोक्तेः,महातात्पर्याच्च । मोक्षो हि महापुरुषार्थः। तत्रापि मोक्ष एवार्थः ।

---

ज॥भवितु युक्तः । तत्रानेकार्थस्यांशशब्दस्य विरुद्धार्थं परित्यज्यार्थान्तरं गृह्यतदित्यर्थापत्तिरेवात्र प्रमाणमिति भावः । स्यादेतत् ,यथा प्रतिबिम्बत्वमेव तत्त्वम् , अंशशब्दस्यापि तदेव प्रवृत्तिनिमित्तमिति वचनद्वयविरोधशान्त्यर्थं कल्प्यते । तथैकदेशत्वमेव तत्त्व प्रतिबिम्बशब्दस्यापि तदेव प्रवृत्तिनिमित्तमिति कुतो न कल्प्यम्, वचनद्वयविरोधस्यैवमपि शान्तेरित्यत आह—नचेति ॥ अंशस्यांशत्वस्यैकदेशत्वस्य प्रतिबिम्बत्व प्रतिबिम्बशब्दप्रवृत्तिनिमित्तत्व कुतो न कल्प्यम् । कुतइत्यत आह—गाधीति ॥ गाध्यादिष्वंशशब्दाभिधेयेषु अंशत्वस्य बाहुरूप्यदृष्टेः ; इतरत्र प्रतिबिम्बशब्दाभिधेयेषु सूर्यकादिषु प्रतिबिम्बत्वस्यानेकरूपत्वादृष्टेः । इदमुक्त भवति—इन्द्रांशो गाधीत्युच्यते । तत्र विशेष एवांशशब्दप्रवृत्तिनिमित्त, भेदाभेदादेः प्रमाणबाधितत्वात् । पटांशस्तन्तुरित्यत्रैकदेशत्व सूर्यांशश्चक्षुरित्यत्रात्यन्तभिन्नस्य तदधीनसादृश्यम् । एवमंशशब्दोऽनेकार्थः प्रयोगेषु दृश्यते । तथाचोक्त 'द्विरूपावंशकौ तस्य' इत्यादि। नचैव प्रतिबिम्बशब्दस्यानेक प्रवृत्तिनिमित्तं दृश्यते । तथाच सावकाशस्यांशशब्दस्य निरवकाशेन प्रतिबिम्बशब्देन बाधो युक्तो नतु वैपरीत्यम्—इति ॥

नन्वीश्वरस्य स्थाणुत्व न युज्यते,'तदैक्षत''सोऽकामयत'इत्यादिकर्तृत्वविरोधादित्यतआह - स्थाणुत्वेऽपीति।कुत इति चेत्—किं द्वयोः परस्परपरिहारेण वृत्तिदर्शनाद्विरोधश्चोद्यते,उत सहादर्शनात्।नाद्यः,कर्तृत्वरहितस्य कस्याप्यदर्शनात्। न द्वितीय इत्याह—उभयेति।अन्यत्र सहादृष्टं स्थाणुत्वं कर्तृत्वं च कुतो भगवतीत्यत आह—अचिन्त्येति। मायावादी तु कर्तृत्वस्थाणुत्वयोरेक कर्तृत्व मायामयम्,स्थाणुत्व तु पारमार्थिकम् , काल्पनिकपारमार्थिकयोश्च गगने नीरूपत्वनीरूपत्वयोरिव न विरोध इति विरोधसमाधानं मन्यते; तदसदित्याह—नचेति।कुतइत्यतआह—त्वयीति। ब्रह्मणि ईश्वर इति सम्पूर्णैश्वर्ये न योगित्वात् ,किन्तु ईश्वरत्वात्।कार्यकारणे सकलकार्योत्पादनसामर्थ्योपेते। इत्यादीनि क्रियाविशेषणम्, विरुद्धानामन्यत्र सहानवस्थितानां धर्माणां भगवति अविरोधस्य सहावस्थानस्य उक्तेः। तथाच बादरायणीयं मतमवलम्बमानस्यैव विरोधसमाधानम् असाम्प्रदायिकमिति भावः।इतश्च तदयुक्तमित्याह—महातात्पर्याच्चेति । सकलवेदाना परमेश्वरगुणोत्कर्षे महातात्पर्यम्। तत्रेक्षितृत्वादीना मिथ्यात्वकल्पने तद्विरोधः स्यादित्यर्थः। समस्तवेदाना भगवद्गुणोत्कर्षे तात्पर्यमित्येतदेव कुत इति चेत्—उच्यते—यस्य हि शास्त्रस्य यत्प्रयोजनं, तत् यज्ज्ञानाद्भवति, स तस्य विषय इति नियमः । अन्यथा विषयप्रयोजनयोः संबन्धो न स्यात्। तथा च तत्र प्रेक्षावतां प्रवृत्तिर्न भवेत्। वेदस्य च मोक्षः प्रयोजनम्। स च गुणोत्कर्षज्ञानादेव भवतीति तत्रैव तस्य महातात्पर्यं युक्तमिति प्रतिपादयिष्यन् , सर्ववेदाना मोक्षः प्रयोजनमि-

रा॥नित्यः स्थाणुरचलोऽयं सनातनः स्थिरस्वभावोऽप्रकम्प्यः

ता॥स्थिरेत्यादि । स्थाणुरचल इतिपदद्वयं नित्यत्वप्रपञ्चनरूपम् ,नाशायोग्यत्वनाशकाविषयत्वपरं वा,

शा॥आत्मानं नाशयितुं न उत्सहन्ते अस्यादीनि तस्मात् नित्यः। नित्यत्वात् सर्वगतः।सर्वं

आ॥'अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे। अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमेतयोः ॥' 'पुण्यचितो लोकः क्षीयते' इत्यादिश्रुतिस्मृतिभ्यः । स च विष्णुप्रसादादेव सिद्ध्यति । 'वासुदेवमनाराध्य को मोक्षं समवाप्नुयात्' 'तुष्टे तु तत्र किमलभ्यमनन्त ईशे' तत्प्रसादादवाप्नोति परां सिद्धिं न संशयः' 'येषां स एव भगवान्दययेदनन्तः सर्वात्मनाश्रितपदो यदि निर्व्यलीकम् । ते वै विदन्त्यतितरन्ति च देवमायां नैषां ममाहमिति धीः श्वसृगालभक्ष्ये' 'तस्मिन्प्रसन्ने किमिहास्त्यलभ्य धर्मार्थकामैरलमल्पकाले' 'ऋते यदस्मिन्भव ईश जीवास्तापत्रयेणोपहता न शर्म' 'आत्मलॅभन्ते' 'ऋते भवत्प्रसादाद्धि कस्य मोक्षो भवेदिह' 'तमेवं विद्वान्' इत्यादिश्रुतिस्मृतिभ्यः । स चोत्कर्षज्ञानादेव भवति लोकप्रसिद्धेः । लोकप्रसिद्धमविरुद्धमप्यङ्गीकार्यम् । अहल्याजारत्वाद्यपि दोषकृतोऽपि ते न बहुतरो लेप आसीदित्युत्कर्षमेव वक्ति । बहुतरफलो ह्यसौ'तस्य न लोम च मीयते' इति श्रुत्यन्तराच्च। 'यो मामेवमसम्मूढो जानाति

ज॥स्वेयासिद्ध न स्वर्गादिः फलान्तरमिति कैश्चिदङ्गीकृतत्वादित्यतस्तन्नास्साधयति—**मोक्षइति** ॥ वेदो हि महच्छास्त्र'वेदशास्त्रात्परं नास्ति'इतिवचनात्।तस्य च महापुरुषार्थेनैव प्रयोजनेन भवितुं युक्तम्। मोक्षश्च महापुरुषार्थः । अतः स एव तस्य प्रयोजनमिति भाव ।मोक्षस्य महापुरुषार्थत्वं कुत इत्यतआह—**तत्रापीति** ॥ पुरुषार्थेष्वपि अत्र निर्धारणेन महत्त्वं गम्यते । अन्तेषु धर्ममोक्षेषु मध्येषु अर्थकामेषु अन्तयोरन्तरं मध्यम् । नैतावता धर्मो मोक्षसम , क्षयिफलत्वादित्याह—**पुण्येति** ॥ चितः प्राप्तः । अस्त्वेव ततः किमित्यत आह—**सचेति** ॥ मोक्षस्य भगवत्प्रसादसाध्यत्वम् अन्यसाध्यत्वाभावश्चेति द्वे एते प्रमेये । तत्र यथायोगं वाक्यान्येतानि ज्ञातव्यानि । यदि निर्व्यलीकं छद्मना विना सर्वात्मना सर्वेण प्रकारेण आश्रितपदो भगवान्येषां दययेत् दयां कुर्यात् । तर्हि येषां श्वसृगालभक्ष्ये देहे 'ममाहम्' इति धीर्न भवति, ते देवमायां देवस्य महिमानं विदन्ति, अतितरन्ति च संसारमित्यर्थः । ऋते सत्ये । यद्यस्मात् । ईशेति सम्बुद्धिः । अनलत्वाद्विश्छायाम् आश्रयेमेति सम्बन्धः । ज्ञानं प्रसादसाधनमित्यनुपदं वक्ष्यते । अतस्तमेवमित्याद्युदाहरणम् । ततोऽपि किमित्यत आह—**सचेति** ॥ विष्णुप्रसादश्च लोके सत्पुरुषप्रसादो गुणोत्कर्षज्ञानसाध्यः प्रसिद्धः । तद्वल्लेनानुमानादित्यर्थः । नन्वीश्वरस्यानुमानाविषयत्वात्कथं तत्र लोकप्रसिद्धमङ्गीकार्यम् । अन्यथाऽज्ञानादिकमङ्गीकार्यं स्यादिति । अत आह—**लोकेति** ॥ अन्यथा मीमांसारम्भानुपपत्तिरिति भावः । नन्विन्द्रप्रसादकामोऽहल्यायै जारेति तन्निन्दामेव करोति । ततो भगव्यासितक्रमिदमनुमानमित्यत आह—**अहल्येति** । अहल्याजारत्वादिप्रतिपादकं वाक्यमप्युत्कर्षमेव वक्ति । कथं दोषकृतोऽपि ते यस्तत्फलं बहुतरो लेपः, स नासीदित्यस्यार्थस्य अनेन व्यञ्जनादित्यर्थः । कुत एतत्, अत्यन्तालौकिककल्पनादेव कल्पनस्य न्यायस्त्वात् । तत्फलं बहुतरो लेप इत्येतत्कुतइत्यत आह—**बह्विति** । असौ परनारीधर्षणदोषः । हीति सकलधर्मशास्त्रप्रसिद्धिं द्योतयति । स लेपस्तस्य नासीदित्येतत्कुत इत्यत आह—**तस्येति**। अहल्याधर्षणेन तस्येन्द्रस्य लोमापि न क्षीयते इत्यर्थः । भगवत्प्रसादस्तद्गुणोत्कर्षज्ञानसाध्य इत्येतन्न केवलमनुमानात्सिद्धं, किं तर्हि, तद्वचनाच्चेत्याह—**य इति**। अत्र स सर्वविदित्यादिस्तुत्या प्रसादोऽवगम्यते ।

रा॥पुरातनश्च ॥ २३ ॥ २४ ॥

ता॥स्वाभाविकौपाधिकातिशयपरिणामराहित्यपरं वेति भावः।पुरातन इति। अत्र नित्यशब्देनानन्तत्वस्योक्तत्वात्सनातनशब्दोऽनादित्वपरतया सङ्कोचनीय इति भावः ॥ २३ ॥ २४ ॥

प्र पा॥१†सङ्कोचनीय इति—गोबलीवर्दनयेन संकोचनीयइत्यर्थः। 'पदान्तरवैयर्थ्यपरिजिहीर्षया पदान्तरार्थसङ्कोचः गोबलीवर्दनय.' इति हि न्यायविद ॥

श॥गतत्वात् स्थाणुः इव स्थिर इत्येतत् । स्थिरत्वात् अचलः अयम् आत्मा।अतः सनातनः

आ॥पुरुषोत्तमम्'इति तदुक्तेश्च।'सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः। विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा। पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा। नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः' इति नारदीये। अन्योत्कर्षं ऐक्यं च 'तथैव सर्वशास्त्रेषु महाभारतमुत्तमम्' 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्'इत्यादिग्रन्थान्तरसिद्धोत्कर्षमहाभारतविरुद्धम् । तत्र हि 'नास्ति नारायणसमं न भूतं न भविष्यति। एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम्' 'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः' 'न त्वत्समोऽस्ति'इत्यादिषु साधारणप्रश्नावसर एव महान्तमुत्कर्षं विष्णोर्वक्ति। अन्यत्र यत्किंचिदुक्तावप्यसाधारण एवावसरे। तद्वदग्न्यादेरपि वेदादावस्ति। 'त्वमग्न इन्द्र वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः' 'विश्वस्मादिन्द्र उत्तरः' इत्यादिषु, तद्ग्रन्थविरोधाच्च। तथाहि स्कान्दे शैवे 'यदन्तरं व्याघ्रहरीन्द्रयोर्वने यदन्तरं मेरुगिरीन्द्रविन्ध्ययोः।यदन्तरं सूर्यसुरेडपविम्बयोस्तदन्तरं रुद्रमहेन्द्रयोरपि। यदन्तरं सिंहगजेन्द्रयोर्वने यदन्तरं सूर्यशशाङ्कयोर्दिवि। यदन्तरं जाह्नविसूर्यकन्ययोस्तदन्तरं ब्रह्मगिरीशयोरपि। यदन्तरं प्रलयजवारिविप्रुषोर्यदन्तरं स्तम्बहिरण्यगर्भयोः। स्फुलिङ्गसंवर्तकयोः

ज॥तदेवं भगवद्गुणोत्कर्षे महातात्पर्यं सर्वागमानामिति प्रमितम्। ननु ब्रह्मरुद्रादीनां सर्वोत्कृष्टत्वप्रसिद्धेर्विष्णोः सर्वोत्कर्ष एव नास्ति,कुतस्तत्र सर्वागमानां महातात्पर्यमिति चेत्—न, तत्प्रसिद्धेर्भ्रान्तित्वात्। तत्कुत इत्यत आह—सत्यमिति। सत्यं वक्ष्यमाणम्। तस्य लेशस्येति सर्वत्र सम्बध्यते। ननु पुराणविरोधाल्लौकिकी प्रसिद्धिरस्तु भ्रान्तिः, पुराणेष्वेवान्येषां सर्वोत्कर्षो भगवदैक्यं च उच्यते, तत्कथम्। न हि पुराणस्य पुराणं बाधकम्, साम्यादित्यत आह—अन्येति। अन्योत्कर्ष ऐक्यं च पुराणेषु प्रतीतमपि महाभारतविरुद्धम्, अतो न ग्राह्यमित्यर्थः। अनैक्यं प्रसङ्गादुक्तम्। महाभारतस्य पुराणबाधकत्वं कुत इत्यत उक्तम्—तथैवेति। इत्यादिना ग्रन्थान्तरेण सिद्धः प्रमित उत्कर्षः सर्वशास्त्रोत्तमत्वं यस्य तत्तथोक्तम्। कथं महाभारतविरुद्धत्वमित्यत आह—तत्र हीति। तत्र महाभारते इत्यादिषु वाक्येषु। वक्ति भगवान् व्यासः। इतोऽपि महाभारतस्य पुराणबाधकत्वं युक्तमित्युक्तम्—साधारणेति। 'कः सर्वोत्कृष्टः' इत्यादिसाधारणप्रश्नरूपेऽवसरे विष्णुप्रशंसामनुपक्रम्य स्वरूपकथनावसर इति यावत्। पुराणेऽप्येवमेवान्योत्कर्षोक्तौ साम्यमेवेत्यत आह—अन्यत्रेति। अन्यत्र पुराणे यत्किञ्चिदुक्तावप्यन्योत्कर्षोक्तावप्यसाधारण एवावसरे तत्स्तुतिप्रसङ्गे तदुक्तमिति शेषः। असाधारणावसरोक्तमपि रुद्रादेरुत्कृष्टत्वादि कुतो दुर्बलमित्यत आह—तद्वदिति। यत्स्तुतिप्रस्तावोक्तं सर्वोत्कृष्टत्वं वेदादावग्न्यादेरप्यस्ति, तस्यापि ग्राह्यत्वं स्यादित्यर्थः। इतश्च न पुराणोक्तरुद्रादेरुत्कृष्टत्वं ग्राह्यमित्याह—तद्ग्रन्थेति। तद्ग्रन्थः शैवपुराणम्, तत्कथमित्यत आह—तथाहीति। तद्ग्रन्थेत्युक्तप्रदर्शनाय शैव इत्युक्तम्। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति जाह्नवीति ह्रस्वः।

श॥चिरन्तनः, कारणात् कुतश्चित् निष्पन्नः अभिनवः इत्यर्थः॥

न एतेषां श्लोकानां पौनरुक्त्यं चोदनीयम्, यतः एकेनैव श्लोकेन आत्मनः नित्यत्वम् अविक्रियत्वं चोक्तम् 'न जायते म्रियते वा' इत्यादिना। तत्र यदेव *आत्मविषयं

---

आ॥यदन्तरं तदन्तरं विष्णुहिरण्यगर्भयोः।अनन्तत्वान्महाविष्णोस्तदन्तरमनन्तकम्।माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम्। तत्समो ह्यधिको वापि नास्ति कश्चित्कदाचन। एतेन सत्यवाक्येन तमेव प्रविशाम्यहम्' इत्याह। तत्रैव शिवं प्रति मार्कण्डेयवचनं—'संसारार्णवनिर्मग्न इदानीं मुक्तिमेष्यसि' इत्यादि।पाद्मे शैवे मार्कण्डेयकथाप्रबन्धे शिवा निर्दिश्य विष्णोरेव मुक्तिमाह—'अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दनः' इत्यादि, समग्राह्यविरोधाच्च। वेदश्चेतिहासाद्यविरोधेन योज्यः 'यदि विद्यात्' इति वचनात्। अनिर्णयाच्चेन्द्रादिशङ्कयाऽन्यथा तत्रापीष्टसिद्धिः, नामवैशेष्यात्। अतो भगवदुत्कर्ष एव सर्वागमानां महातात्पर्यम्। तथापि स्वतःप्रामाण्यान्सक्षेपोच्यते, अविरोधात्। न च प्रमाणसिद्धस्य अन्यग्राहणयापह्नवो युक्तः, धर्मवैचित्र्यादर्थानाम्। स्वतः प्रामाण्यानङ्गीकारे मानोक्तादावप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः। अनन्यापेक्षया च तत्परत्वं सिद्धं॥तत्रैव स्कान्द एव।शिवान्मुक्ति निषिध्य। इतश्च न पुराणोक्त शिवादुत्कृष्टत्वे ग्राह्यमित्याह—समेति समं शैववैष्णवपक्षयोः। 'नाहं न च शिवोऽन्ये च' इत्यादि तद्वचनम्। अस्तु लौकिकी प्रसिद्धिर्भ्रान्तिः, पुराणं च विप्रलम्भमूलं व्यामोहनार्थम्। तथापि 'विश्वाधिको रुद्रः' इत्यादिवेदविरोध इत्यत आह—वेदश्चेति। सङ्कुचितार्थतया व्याख्यातव्य.। कुत इत्यत आह—यदीति। इतिहासाद्यननुरुध्य यथाश्रुतवेदव्याख्यानेऽनिष्टमाह—अनिर्णयाच्चेति। न केवलं विश्वाधिक इत्यादिवेदो विष्णोः सर्वोत्कर्षस्याविरोधी, किंतु प्रत्युत तत्र वेदेऽस्मदिष्टस्य विष्णोः सर्वोत्कर्षस्य सिद्धिरपीत्याह—तत्रापीति। कुत इत्यत आह—नामेति। विष्णोर्नामभिर्विशेष्यादिशिवत्वाद्यप्रादिसर्वनामवत्त्वादित्यर्थः। महातात्पर्यं चेत्यादिनोक्तमर्थमुपसंहरति अत इति। अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चेत्यर्थः। अस्त्वेवम्, तथाऽपीश्वरवादेन मायामयत्वे तद्विरोधः। गुणोत्कर्षस्य सत्त्वे हि स स्यात्। न च वेदतात्पर्यविषयत्वमात्रेण सत्यता, मोक्षापेक्षेश्वर प्रसादयितुमुक्तस्य राजाद्युत्कर्षस्येवासत्त्वसम्भवात्। संवादाभावेन सत्यत्वनिश्चयायोगादित्यत आह—तथापीति। एवमप्युक्त्या प्रसादयितुं प्रतिपादितत्वेऽपि स्वतः प्रामाण्यात् संवादमनपेक्ष्य ज्ञानग्राहकेणैव प्रामाण्यस्य निश्चितत्वात्। नहि प्रामाण्यनिश्चये विषयासत्त्वशङ्का सम्भवति। एवं सति बौद्धाद्यागमविषयस्यापि सत्त्वं स्यादिति चेत् न, प्रसक्तस्यापि तत्प्रामाण्यग्रहणस्य बलवद्विरोधेनापोदितत्वात्। न च तथा प्रकृतेऽपीत्याह—अविरोधादिति। नन्वन्यत्र पुरुषे सर्वोत्कर्षस्यादर्शनात्तद्दृष्टान्तेनेश्वरेऽपि तदभावस्य साधयितुं शक्यत्वात् अनुमानविरोधोऽस्तीत्यत आह—न चेति। कालातीतमनुमानमिति भावः। प्रमाणविरुद्धस्याप्यनुमानत्वेऽतिप्रसङ्गं सूचयति—धर्मेति। धर्मवैचित्र्यं धर्मवैचित्र्यम्। एवमनुमानेऽर्थानां धर्मवैचित्र्यं न स्यादिति भावः। यद्वाऽनेन ग्रन्थेनासम्भावनाविरोधं परिहर्तुं सम्भावनां दर्शयति। भवेदेवं यदि स्वत एव प्रामाण्यग्रहः स्यात्। तदनङ्गीकारे निरुत्तरमित्यत आह—स्वत इति। संवादाधीनः प्रामाण्यग्रह इत्यङ्गीकारे तु प्रामाण्यनिश्चयाय संवादकमानोक्तौ तस्याप्यदोषत्वं प्रामाण्यमन्यसंवादेन साधयेदित्यनवस्थालक्षणातिप्रसङ्ग इत्यर्थः। इतोऽपि न वेदतात्पर्यगोचरस्य भगवद्गुणोत्कर्षस्यासत्त्वं शङ्कनीयमित्याह—अनन्येति। प्रयोजनानपेक्षया चेत्यर्थः। तर्हि तत्परत्वमेव न सिद्ध्येत्। प्रयोजनपर्यालोचनया हि तत्प्राक् साधितमित्यत

---

पा॥ * अविक्रियम् पा

रा ॥ चिन्तयितुमपि नार्हः; अतश्चाविकार्यः विकारानर्हः । तस्मादुक्तलक्षणमेनमात्मानं विदित्वा तत्कृते नानुशोचितुमर्हसि ॥ २५ ॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६

शां॥अथ नित्यजातं नित्यमृतं देहमेवैनमात्मानं मनुषे, न देहातिरिक्तमुक्तलक्षणम्;

---

ना॥भवति।अतश्चेति,पूर्वोक्तप्रमाणानां बाधकाभावादपीत्यर्थः।यद्वा अनुमानान्तरमुच्यते।तथाहि—आत्मा विकारानर्हः,विकारित्वग्राहकप्रमाणशून्यत्वात्; यथेश्वरस्वरूपम्,इत्यन्वयदृष्टान्तः,यथा घटादिः,इति व्यतिरेकः । यद्वा सामान्येन व्याप्तिः—यद्यादृशाकारग्राहकप्रमाणशून्यम्, तत्तादृशाकारं न भवति, यथा 'नीलं न पीताकारम्' इति । अविकार्य इत्येतावति निर्दिष्टे कादाचित्कविकाराभावमात्रेण सिद्धसाधनता स्यादिति तत्परिहारैक प्रत्ययार्थं विवृणोति—विकारानर्ह इति । निषेधापेक्षया वेदनस्य पूर्वकालत्वात् क्त्वानिर्देशः; न तु शोकापेक्षया । तेनात्मवेदनस्य शोकाभावहेतुत्वमुक्तं भवति । अर्हसि, आत्मवेदिनस्ते शोकयोग्यतैव न स्यादिति भावः ॥ २५ ॥

एवं देहातिरिक्तात्माभ्युपगमे शोकनिमित्ताभाव उक्तः। अथ नास्तिकदृष्ट्या देहात्मवादेऽपि शोकनिमित्तं नास्तीत्युच्यते—अथचेत्यादिना श्लोकत्रयेण।'अथ'इति पक्षान्तरारम्भार्थः,प्रश्नार्थो वा,अभ्युपगमार्थो वा । वाशब्दोऽपि विशेषणद्वयसमुच्चयार्थः । नित्यजातं नित्यमृतं नियतोत्पत्तिनाशमित्यर्थः । उत्तरश्लोके चेममर्थं प्रपञ्चयिष्यति । नहि नित्यस्य जातत्वमृतत्वसम्भवः । न च जन्ममरणक्रियास्वरूपं नित्यत्वेन विशेषयितु शक्यम् । व्यस्तस्य नित्यशब्दस्यात्मविशेषणत्वभ्रमव्युदासाय 'नित्यजातम्' इतिवत् 'नित्यमृतम्' इति समस्योक्तम् । देहमितिविशेषणादिसामर्थ्यफलितमुक्तम् । एवेति'च' शब्दार्थः । अवधारणफलितमाह—नदेहेति । पूर्वमात्मनो नाशाभावाच्छोकप्रसङ्ग एव नास्तीत्युक्तम् । इदानीं

प्र-पा॥१. मानान्तरमिदमुच्यते. पा॥
२. साधनताशङ्का स्यादिति. पा॥
३. हारपरं प्रत्ययार्थं. पा॥

---

शं॥तस्मात् एवं यथोक्तप्रकारेण एनम् आत्मानं विदित्वा त्वं न अनुशोचितुम् अर्हसि 'हन्ता अहम् एषां, मया एते हन्यन्ते' इति ॥ २५ ॥

आत्मनः अनित्यत्वम् अभ्युपगम्य इदम् उच्यते—अथ चैनम् इति ॥ अथ च इति अभ्युपगमार्थः । एनं प्रकृतम् आत्मानं नित्यजातं लोकप्रसिद्ध्या प्रति अनेकशरीरोत्पत्ति

---

आ॥अत एवाव्यक्तादिरूपः ॥ २५ ॥

अस्त्वेवमात्मनो नित्यत्वम् । तथापि देहसंयोगवियोगात्मकजनिमृती स्त एवेत्यत

---

ज॥—अतएवेति । अचिन्त्यशक्तित्वादेव । यथोक्तम् 'अतोऽनन्तेन तथाहि लिङ्गम्' इति ॥ २५ ॥

ननु सर्वशङ्कोद्धारेणात्मनित्यत्वं प्रतिपाद्य तस्मादेवमित्युपसंहृतम्। तत्किम्'अथ च'इति पुनरुच्यत इत्यतोऽङ्गीकृत्यात्मनित्यत्वं प्रकारान्तरेण शोकशङ्कैर्यमित्याशयेनाह—अस्त्वेवमिति। युद्धे च मृतिर्नियता जनिमृतिनिमित्त च दुःख मदीयाना भविष्यतीति ममैव शोक इति शङ्काशेषः।अनेन पूर्वार्धोऽपि व्याख्यातः । अत एव देहसंयोगवियोगात्मकजनिमृती इत्युक्तम् । अन्यथा देहसयोगवियोगावित्येव वा जनिमृती इत्यन वा भूयात् । स्त एवेत्यनेन नित्यशब्दोऽवधारणार्थं इत्युक्तं भवति । अस्त्वेवमात्मनो नित्य-

रा॥तथाप्येवमतिमात्रं न शोचितुमर्हसि, परिणामस्वभावस्य देहस्योत्पत्तिविनाशयोरवर्जनीयत्वात् ॥ २६ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७

रा॥उत्पन्नस्य विनाशो ध्रुवः अवर्जनीय उपलभ्यते ; तथा विनष्टस्यापि जन्म अवर्जनीयम्। *कथमिदमुपपद्यते—विनष्टस्योत्पत्तिरिति, †सत एवोत्पत्त्युपलब्धेः, ‡असतश्चानुप-

ता॥देहतयाभिमतस्यात्मनो नाशे सत्यपि दुष्परिहरत्वान्महाबाहुः त्वं नातीव शोचितुमर्हसीत्यभिप्रायेण 'एव'शब्दः। यद्वा पूर्वं देहातिरिक्तात्माभ्युपगमात्परलोकादिभयेनातिमात्रशोकोऽपि युज्यते। इदानीं तु ससारमोचकादिवन्महाबाहोस्तव अतिमात्रप्रीतिस्थाने कथमतिमात्रशोक इति भाव.। 'त्वं महाबाहो' इति शूरस्य ते स्वपरमरणोद्वेगो न युक्त इत्याकूतम्। प्रतिज्ञाया हेतुसाकाङ्क्षत्वादुत्तरश्लोकस्थ वा विशेषणद्वयसूचित वा हेतु निष्कृष्याह—परिणामेति ॥ २६ ॥

ध्रुवमृत्युमृतादिशब्दानामर्थान्तरव्युदासाय प्रकृतोपपादक 'जातस्य' इत्यादिकं व्याख्याति—उत्पन्नस्येत्यादि। उपलभ्यत इति हिशब्दसूचितप्रमाणप्रसिद्धिरुच्यते। हेतुपरत्वेऽपि हिशब्दस्यार्थात्तत्सिद्धिः। मृतस्य जन्मव्याघाताभिप्रायेण चोदयति—कथमिति। यदि केवलमौपदेशिकोऽयमर्थस्स्यात्, तथाभ्युपगम्येत। अत्र तु 'जातस्य हि' इति लोकसिद्धानुवादेनोच्यते। लोके च प्रागसत एवोत्पत्तिर्दृष्टा। न तु कदाचिदुत्पद्य निरुद्धस्य। यदि च नष्ट पुनर्जायेत, तदा दुःखात्यन्तनिवृत्तेरशक्यत्वादपवर्गशास्त्रमखिलमप्रमाण स्यात्। व्याधिशत्रुविजयादिप्रयासश्च निरर्थकस्स्यात्। पुत्रादिमरणे च न शोचनीयम्। अतो नेदमुपपत्तिमदिति भावः। परिहरति—सतएवेति। नन्विदमुभयमप्य-

प्र पा॥** 'ध्रुवं जन्म मृतस्य' इत्यनेन नष्टस्य वस्तुन उत्पत्तिरभिहिता। सा च लोकानुभवविरुद्धा, लोके प्रागसत एव घटादेरुत्पत्त्युपलम्भात्, प्राक् सत उत्पत्त्यनुपलम्भात्, नष्ट हि वस्तु नाशात्प्राक् सदेवेत्यसत्कार्यवादिनामाशङ्कामनुवदति भाष्ये— कथमिदमुपपद्यत इति ॥

*† सत्कार्यवादसिद्धान्तेन परिहरति—सत एवेति। अनुभवविरोधमूलाशङ्कामनुभवानुगुण्यं प्रदर्श्य निराकरोति—उत्पत्त्युपलब्धेरिति ॥

*‡ असत उत्पत्तौ बाधिकां सत उत्पत्त्युपलब्धिं प्रदर्श्य तत्र साधकाभावमप्याह—असतश्चेति ॥

१ अतिमात्र प्रीतिस्थाने. ग ङ पा॥
२ वादेन कथ्यते घ ङ झ पा॥
३ निरुद्धस्य. पा॥ ४ मरणेनशोच झ पा ॥

शं॥जातो जातः इति वा मन्यसे तथा प्रति तत्तद्विनाशं नित्यं वा मन्यसे मृतं मृतो मृतः इति, तथापि तथाभावेऽपि आत्मनि त्वं महाबाहो न एवं शोचितुम् अर्हसि, जन्मवतो नाशः नाशवतो जन्म चेति अवश्यभाविनी इति *(यस्मात्) ॥ २६ ॥

तथा च सति—जातस्य इति ॥ जातस्य हि लब्धजन्मनः ध्रुवः अव्यभिचारी

आ ॥ आह—अथचेति ॥ २६ ॥

कुतोऽशोकः नियतत्वादित्याह—जातस्येति ॥ २७ ॥

ज॥ त्वमिति वदता 'आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते' इति मायावादिनो व्याख्यानं निरस्तं भवति, 'ध्रुवं जन्ममृतस्य च' इत्युत्तरवाक्यविरोधात्, अव्यक्तादीनीत्यनेनापि विरोधात् ॥ २६ ॥

अनेनैवाभिप्रायेणैतदेकवाक्यतयोत्तर श्लोकद्वयं क्रमेणावतारयति—कुत इति। शङ्कामनूद्य तथापि

पा॥ * कुण्डलित पद पुस्तकान्तरे न दृश्यते.

शा॥लब्धेः। *उत्पत्तिविनाशादयस्सतो द्रव्यस्यावस्थाविशेषाः। †तन्तुप्रभृतीनि हि द्रव्याणि सन्त्येव‡रचनाविशेषयुक्तानि पटादीन्युच्यन्ते।§असत्कार्य¶वादिनाप्येतावदेवोपलभ्यते। न

ता॥युक्तम्,सत उत्पत्तिनैरपेक्ष्यात्,प्रागसतामेव च घटादीनामुत्पत्तिदर्शनादित्याशङ्क्याह—उत्पत्तीति। निदर्शयति—तन्तुप्रभृतीनि हीति। अन्त्यतन्तुसंयोगात्पूर्वं दीर्घैकतन्त्वारब्धे च त्वयाप्येवमिष्यत इति भाव.। उक्तं च नारायणाचार्यैः—'एकैकशो दीर्घतमात्तन्तोः पटादेरुत्पत्तिर्दृष्टा' इति। असत्कार्यवादिनं प्रति किमवयवीति कश्चिदवयवसमुदायातिरिक्तः पदार्थो दृश्यते, कल्प्यते वेति विकल्पमभिप्रेत्य प्रथमकल्पे दूषणमाह—असदिति। एतावत् रचनाविशेषयुक्तत्वमात्रमित्यर्थः। वादिनोपलभ्यत इति पदाभ्यां वाङ्मनसविसंवादमभिप्रैति। एतावदेवेत्युक्तमर्थं प्रपञ्चयति—नहीति। द्वितीयकल्पं दूष-

प्र-पा॥**ननु द्रव्यस्योत्पत्तिराद्यक्षणसम्बन्धः। क्षणे आद्यत्वं च तदधिकरणक्षणध्वंसानधिकरणत्वम्। तत्रस्य यत्नोत्पत्तिकपराद्‌र्नायां, तत्परम्। इत्थं च प्राक् सतः निरुक्ताद्यक्षणसम्बन्धरूपोत्पत्तिर्न युज्यते, उत्पद्यमानस्य वस्तुनः प्रागपि सत्त्वे आद्यत्वेनाभिमतक्षणस्य तदधिकरणक्षणध्वंसाधिकरणत्वेन आद्यत्वस्यैव बाधितत्वात्। अत प्रागसत एवोत्पत्तिरित्यनायत्याङ्गीकार्यम्। एव नाशो नाम प्रतियोगिसत्ताविरोध्यभावविशेषः 'नश्यति, नष्ट' इत्यादिप्रतीतिसिद्धः। इति सतो नाशो नोपपद्यते। तथा सति घटादिनाशानन्तरमपि घटादिरस्तीति प्रत्ययप्रसङ्गादिति पश्चादसत एव पदार्थस्य नाशोऽङ्गीकार्य इत्याशङ्कायामाह — उत्पत्तिविनाशादय इति। सतो द्रव्यस्यावस्थाविशेषा इति—घट उत्पन्न इत्यादिव्यवहारविषयीभूतोत्पत्तिः घटत्वावस्थैव कपालद्वयसंयोगरूपा, घटो नश्यतीत्यादिव्यवहारविषयीभूतो नाशोऽपि तद्विभागरूपावस्थैव तादृशघटत्वनाशरूपेति भाव। नचैवं घटत्वावस्थाया एव घटोत्पत्तिरूपत्वे तस्या घटस्याद्यक्षण इव द्वितीयादिक्षणेऽपि सत्त्वात् तदानीमपि घटादिकमुत्पन्न इति व्यवहारः स्यादिति वाच्यम्, आद्यक्षणावच्छिन्नघटत्वावस्थाया एवोत्पत्तिरूपत्वाङ्गीकारेणादोषात्। क्षणे आद्यत्वं च घटत्वावस्थाधिकरणक्षणध्वंसानधिकरणत्वरूपम्। इत्थं च घटादिद्रव्यस्योत्पत्तेः प्राक् सतोऽपि निरुक्ताद्यक्षणावच्छिन्नघटत्वावस्थारूपोत्पत्तिर्नानुपपन्नेति न सत्कार्यवादानुपपत्ति.। घटनाशानन्तरं 'घटोऽस्ति' इति व्यवहारस्य च नापत्ति., घटत्वविशिष्ट एव सत्तायास्तादृशव्यवहारेण व्यवह्रियमाणत्वात् विशेषणीभूतघटत्वावस्थायामपि सत्ताया भानेन व्यवहर्तव्यत्वाभावात्॥

*† नन्वसतः कार्यस्योत्पादानङ्गीकारे पटादिप्रतीतिव्यवहारविषय. कः, न तावत्तन्तु., तस्य पटादिनिर्माणात्प्रागपि सत्त्वात्, तदानीमपि पटादिप्रतीतिव्यवहारप्रसङ्गादित्याशङ्क्य तन्तोरेवावस्थाविशेषविशिष्टस्य तादृशप्रतीतिव्यवहारविषयत्वाभ्युपगमेन परिहरति—तन्तुप्रभृतीनीति॥

*‡ रचनाविशेषयुक्तानीति—रचनाविशेषस्य पटत्वावस्थारूपस्य प्रागसत्त्वेऽपि केवलतन्तूनां पटनिर्माणात्प्राक् सत्त्वात् न सत्कार्यवादविरोधः। पटादिप्रतीतिव्यवहारयोश्च रचनाविशेषविशिष्टविषयकत्वात् प्राक् विशेषणाभावात् न विशिष्टविषयकपटादिप्रतीतिव्यवहारानुपपत्तिश्चेति भाव॥

*§ तन्त्वपेक्षया अतिरिक्तद्रव्यान्तरस्य पटादिनामकस्य अभ्युपगमोऽसत्कार्यवादिनामनुपलब्धिपराहत इत्याह—असत्कार्यवादिनामपीति॥

¶ वादिनामप्ये. पा॥

*| न हि तत्र तन्तुसंस्थानविशेषातिरेकेण द्रव्यान्तरं प्रतीयते—तादृशसंस्थानविशिष्टतन्त्वादिरूपद्रव्यातिरेकेण द्रव्यान्तरं प्रतीयत इत्यर्थः॥

१. नीतिमालायाम्॥

*२. चन्द्रिकायां वादिनोपलभ्यत इति पदाभ्यां वाङ्मनसविसंवादमभिप्रैतीति—वादिनेति पदेन असत्कार्यत्वं तदुक्तमित्युक्तम्। एतावदेवोपलभ्यत इति पदेन रचनाविशेषविशिष्टतन्त्वादेरेवोपलब्धिरसत्कार्यवादिनोऽपीत्युक्तम्। अनयोरायोक्तेस्तदीयोपलब्धेश्च परस्परं विरोधाद्वाङ्मनसयोस्तदीययोः कलहोऽभिप्रेत इति भावः॥

रा॥हि तत्र तन्तुसंस्थानविशेषातिरेकेण द्रव्यान्तरं प्रतीयते।*कारकव्यापारनामान्तरभजन व्यवहारविशेषाणामेतावतैवोपपत्तेः न द्रव्यान्तरकल्पना युक्ता। अत उत्पत्तिविनाशादय स्सतो द्रव्यस्यावस्थाविशेषा। उत्पत्त्याख्यामवस्थामुपयातस्य द्रव्यस्य तद्विरोध्यवस्थान्तर

ता॥यति—कारकेति। यदि साद्वयवद्रव्यमपि सर्वस्याप्यनागन्तुकत्वं वदाम, तदा भवेदेव कारकव्यापा रादिनैरर्थक्यादिदोषः। वयं हि द्रव्याणां सर्वेषामनागन्तुकत्वं तदवस्थानां चागन्तुकत्वं ब्रूमः। घटा दिवत्प्रदीपादिष्वप्यवस्थान्तरापत्तिरनुमीयते। चूर्णितविशीर्णनष्टस्येव तु सूक्ष्मावस्थाप्राप्त्यानुपलम्भः। अतो न कश्चिद्दोष इति भावः। व्यवहारविशेषोऽत्र उदकाहरणादिरभिमतः, नामान्तरभजनस्य पृथ गुक्तत्वात्। एतेन कारणगतपरिमाणादिबुद्धिसंस्थानादिभेदः पूर्वरोत्तरत्वनव्यत्वानव्यत्वादिरपि निर्व्यू ढः। द्रव्यान्तरत्वकल्पनाया गुरुत्वान्तरकार्यादिप्रसङ्गस्यावयवावयविगुरुत्वयोरत्यन्तप्रतिबन्धादिना नि र्वाहश्चातिक्लिष्ट इत्यभिप्रायेणाह—न द्रव्यान्तरेति। आहुश्च—'यदि द्रव्यान्तरं कार्यं कारणेभ्यो भ वेदिह। गुरुत्वमतिरिच्येत कार्ये तच्च न दृश्यते। द्विपलं घट इत्येतद्व्यपदेशो न युज्यते' इति। निग मयति—अत इति। तावत एवोपलम्भादन्यस्यानुपलम्भात्कल्पकाभावाच्चान्यथैवोपपत्त्यनादिरर्थः। ननु भवतु नामोत्पत्तिर्द्रव्यस्यावस्थाविशेषः, विनाशस्त्वभावरूपः, तद्विरुद्धश्च कथं तदवस्थेत्युच्यत इत्यत्राह —उत्पत्त्याख्यामिति। अयमभिप्रायः—न तावदभावाख्यं निश्चितपदार्थान्तरं विविच्योपलभामहे। नापि नास्तिव्यवहारादिना कल्पयितुं युक्तम्, उभयसम्प्रतिपन्नावस्थान्तरादिनैव निर्वाहात्। न च श्या मावस्थाप्रहाणेन रक्तावस्थापत्तिभेदे घटनाशव्यवहारप्रसङ्गः, कपालाद्यवस्थावद्रक्तावस्थाया घटावस्थावि रोधित्वस्य भवताप्यनभ्युपगमात्। न च भावत्वेनैकराश्यनुप्रविष्टानां विरोधो न युज्यत इति वाच्यम्, तेजस्तिमिरशीतोष्णतृणदहनादीनां भावानामेव सहानवस्थानवध्यघातुकत्वलक्षणविरोधदर्शनादभावा भावस्य च भावराशौ स्वीकारात्। अन्यथा पदार्थत्वेनैकराशेरभावस्यापि भावविरोधो न कथञ्चिदुपपद्यते। तदेव विरोध्युत्तरावस्था प्रध्वंसः। विरोधिपूर्वावस्था प्रागभावः। वस्त्वन्तरगतासाधारणविरोधिधर्म एव

प्र पा॥[1] *असत्कार्यवादिना हि कारकव्यापारसाफल्याय नामान्तरव्यपदेशव्यवहारोपपत्तये जलाहरणादिरूपप्रवृत्त्युपपत्तये च असतः कार्यस्योत्पत्तिरभ्युपगता। तेन अभ्युपगमे कारकव्यापाराणां वैयर्थ्यं नामान्तरव्यपदेश व्यवहारस्य चानुपपत्तिः, जलाहरणादिप्रवृत्तिबाधश्चेत्या शङ्क्याह—कारकव्यापारेति॥

*† न द्रव्यान्तरकल्पना युक्तेति—रचनाविशेषविशिष्टमृद्द्रव्यादिभिरेव सर्वोपपत्तौ अनुपलब्धाति रिक्तद्रव्यकल्पनागौरवमयुक्तमिति भावः॥

१ व्यापारनैरर्थक्या ख ग घ ङ च पा॥

२ घटस्यैव सूक्ष्मा घटस्य सूक्ष्मा, घ ङ पा॥

३ परिमाणवृद्धि घ ज पा।

*४ द्रव्यान्तरकल्पनाया गुरुत्वान्तरकार्यादि प्रसङ्गस्य अवयवावयविगुरुत्वयोरत्यन्तप्रतिबन्धादिना निर्वाहश्चातिक्लिष्ट इतीति—कपालद्वयारब्धघटस्य कपालद्वयापेक्षयातिरिक्तद्रव्यत्वे तत्र कपालगतगुरुत्वापेक्षया तिरिक्तगुरुत्वं स्यादेव, अवयवगतगुणस्य स्वसजातीयावयविगुणारम्भकत्वादिति तदङ्गीकारे तदुपलब्धिप्रसङ्गः। न हि तुलायाम् एकत्र पार्श्वे घटस्य अन्यत्र च कपालद्वयस्य तद्घटोपादानकपालद्वयसमगौरवस्य स्थापने घटावस्थितिपार्श्वे गुरुत्वमधिकमुपलभ्यते॥ ननु विद्यतामवयविगुरुत्वं गुरुत्वप्रकारकोपलब्धौ स्वाश्रयावयवगुरुत्वसम्बन्धेन अवयवगतगुरुत्वस्य प्रतिबन्धकत्वाङ्गीकारेण नातिप्रसक्तिः, अवयवगतगुरुत्वान्तरोपलब्धेः निरुक्तप्रतिबन्धकत्वेनानुत्पत्तेः। अवयवगतगुरुत्वप्रकारकोपलब्धौ वा स्वाश्रयावयवसम्बन्धेन अवयविगतगुरुत्वस्य प्रतिबन्धकत्वमाश्रित्य अवयवगतगुरुत्वोपलब्ध्युत्पत्तिवारणं क्रियत इति नाधिकगुरुत्वोपलब्धिप्रसङ्ग इत्याशङ्क्य तथा कल्पनेऽतिक्लिष्टत्वादाह—गुरुत्वान्तरेति। गुरुत्वान्तरकार्य [तदुपलब्धि॥

५ भारत शान्तिपर्वणि मोक्षधर्मे

६ तावत् ङ पा॥

७ उपपद्यते ख ज ङ झ पा॥

रा॥हि तत्र तन्तुसंस्थानविशेषातिरेकेण द्रव्यान्तरं प्रतीयते।*कारकव्यापारनामान्तरभजनव्यवहारविशेषाणामेतावतैवोपपत्तेः।न द्रव्यान्तरकल्पना युक्ता। अत उत्पत्तिविनाशाद्वयस्सतो द्रव्यस्यावस्थाविशेषाः। उत्पत्त्याख्यामवस्थामुपयातस्य द्रव्यस्य तद्विरोध्यवस्थान्तर-

ता॥यति—कारकेति। यदि सावयवद्रव्यमपि सर्वस्याप्यनागन्तुकत्वं वदामः,तदा भवेदेव कारकव्यापारादिनैरर्थक्यादिदोषः। वयं हि द्रव्याणां सर्वेषामनागन्तुकत्वं तदवस्थानां चागन्तुकत्वं ब्रूमः। घटादिवत्प्रदीपादिष्वप्यवस्थान्तरापत्तिरनुमीयते। चूर्णितविशीर्णघटस्येव नु सूक्ष्मावस्थाप्राप्त्यानुपलम्भः। अतो न कश्चिद्दोष इति भावः। व्यवहारविशेषोऽत्र उदकाहरणादिरभिमतः, नामान्तरभजनस्य पृथगुक्तत्वात्। एतेन कारणसत्त्वापरिमाणादिबुद्धिसंस्थानादिभेदः पूर्वत्वोत्तरत्वनष्टत्वानष्टत्वादिरपि निर्व्यूढः। द्रव्यान्तरत्वकल्पनायां गुरुत्वान्तरकार्यादिप्रसङ्गस्यावयवावयविगुरुत्वयोरन्यतरप्रतिबन्धादिना निर्वाहश्चातिक्लिष्ट इत्यभिप्रायेणाह—न द्रव्यान्तरेति। आहुश्च—'यदि द्रव्यान्तरं कार्यं कारणेभ्यो भवेदिह। गुरुत्वमतिरिच्येत कार्ये तच्च न दृश्यते। द्विपलं घट इत्येतद्व्यपदेशो न युज्यते' इति। निगमयति—अत इति। तावत एवोपलम्भादन्यस्यानुपलम्भात्कल्पकानां चान्यथैवोपपन्नत्वादित्यर्थः। ननु भवतु नामोत्पत्तिर्द्रव्यस्यावस्थाविशेषः; विनाशस्त्वभावरूपः, तद्विरुद्धश्च कथं तदवस्थेत्युच्यत इत्यत्राह—उत्पत्त्याख्यामिति। अयमभिप्रायः—न तावदभावाख्यं किञ्चित्पदार्थान्तरं विविच्योपलभामहे। नापि नास्तिव्यवहारादिना कल्पयितुं युक्तम्, उभयसम्प्रतिपन्नावस्थान्तरादिनैव निर्वाहात्। न च श्यामावस्थाप्रहाणेन रक्तावस्थापरिग्रहे घटनाशव्यवहारप्रसङ्गः, कपालावस्थावद्रक्तावस्थाया घटावस्थाविरोधित्वस्य भवताप्यनभ्युपगमात्। न च भावत्वेनैकराश्यनुप्रविष्टेना विरोधो न युज्यत इति वाच्यम्, तेजस्तिमिरशीतोष्णतृणदहनादीनां भावानामेव सहानवस्थानवध्यघातुकत्वलक्षणविरोधदर्शनादभावाभावस्य च भावत्वस्वीकारात्। अन्यथा पदार्थत्वेनैकराशेरभावस्यापि भावविरोधो न कथञ्चिदुपपद्यते। तदेव विरोध्युत्तरावस्था प्रध्वंसः। विरोधिपूर्वावस्था प्रागभावः। वस्त्वन्तरगतासाधारणविरोधिधर्म एव

प्र पा॥** *असत्कार्यवादिना हि कारकव्यापारसार्थक्याय नामान्तरघटितव्यवहारोपपत्तये जलाहरणादिरूपप्रवृत्त्युपपत्तये च असतः कार्यस्योत्पत्तिरभ्युपगता। सत्कार्याभ्युपगमे कारकव्यापारादीनां वैयर्थ्यं, नामान्तरघटितव्यवहारस्य चानुपपत्तिः, जलाहरणादिप्रवृत्तिरपि च नेत्याशङ्क्याह—कारकव्यापारेति॥

*† न द्रव्यान्तरकल्पना युक्तेति—रचनाविशेषविशिष्टमृदद्रव्यादिभिरेव सर्वोपपत्तौ अनुपलब्धातिरिक्तद्रव्यकल्पनागौरवमयुक्तमिति भावः॥

१. व्यापारनैरर्थक्या ख ग घ. ङ श पा॥

२ घटस्यैव सूक्ष्मा घटस्य सूक्ष्मा, घ ङ. पा॥

३ परिमाणवृद्धि. घ श पा॥

*४ द्रव्यान्तरकल्पनायां गुरुत्वान्तरकार्यादिप्रसङ्गस्य अवयवावयविगुरुत्वयोरन्यतरप्रतिबन्धादिना निर्वाहश्चातिक्लिष्ट इतीति—कपालद्वयारब्धघटस्य कपालद्वयापेक्षयातिरिक्तद्रव्यत्वे तत्र कपालगतगुरुत्वापेक्षयातिरिक्तगुरुत्वं स्वीकार्यम्, अवयवगतगुणस्य स्वसजातीयावयविगुणारम्भकत्वादिति तदङ्गीकारे तदुपलब्धिप्रसङ्गः। न हि तुलायाम् एकत्र पार्श्वे घटस्य अन्यत्र च कपालद्वयस्य तदुपादानकपालद्वयसमगौरवस्य स्थापने घटाधारस्थितिपार्श्वे गुरुत्वमधिकमुपलभ्यते॥ ननु विशिष्यतासम्बन्धेन गुरुत्वप्रकारकोपलब्धौ स्वाश्रयावयवत्वसम्बन्धेन अवयवगतगुरुत्वस्य प्रतिबन्धकत्वाङ्गीकारेण नातिप्रसक्तिः, अवयविगतगुरुत्वान्तरोपलब्धेः निरुक्तप्रतिबन्धकत्वेनानुत्पत्तेः अवयवगतगुरुत्वप्रकारकोपलब्धौ वा स्वाश्रयावयवत्वसम्बन्धेन अवयविगतगुरुत्वस्य प्रतिबन्धकत्वमाश्रित्य अवयवगतगुरुत्वोपलब्धेरुत्पत्तिवारणं क्रियत इति नाधिकगुरुत्वोपलब्धिप्रसङ्ग इत्याशङ्क्य तथा कल्पनेऽतिक्लिष्टेत्याह—गुरुत्वान्तरेति॥ गुरुत्वान्तरकार्ये

५ भारते शान्तिपर्वणि मोक्षधर्मे. [तदुपलब्धि ॥

६ तावि. श. पा॥

७ उपपद्येत ख. ज. ङ. श. पा॥

रा॥तदवस्थस्य चोत्पत्तिः। एवमुत्पत्तिविनाशाख्यपरिणामपरम्परा परिणामिनो द्रव्यस्यापरिहार्येति *न तत्र शोचितुमर्हसि ॥ २७ ॥

रा-अ ॥ सतो द्रव्यस्य पूर्वावस्थाविरोध्यवस्थान्तरप्राप्तिदर्शनेन योऽल्पीयाञ्छोकः, सोऽपि मनुष्यादिभूतेषु न सम्भवतीत्याह—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना ? ॥ २८

रा॥मनुष्या†दिभूतानि सन्त्येव द्रव्याण्यनुपलब्धपूर्वावस्थान्युपलब्धमनुष्यत्वादि‡मध्यमावस्थान्यनुपलब्धोत्तरावस्थानि स्वेषु स्वभावेषु वर्तन्त इति न तत्र परिदेवनानिमित्तमस्ति ॥

ता॥शोचसि, तर्हि तदेव हि द्रव्य तदुत्तरावस्थं तथोत्पन्नमिति किं न प्रीयस इति भावः। एकस्यैव परिणामस्य निरूपणभेदादुत्पत्त्याख्या विनाशाख्या चेति **उत्पत्तिविनाशाख्यपरिणाम**मित्युक्तम्। एवं प्रलयापेक्षया सृष्टेर्विनाशत्वेऽपि पुरुषार्थयोगायोगादिविवक्षया व्यवहारव्यवस्था। **परिणामिन** इति अपरिहार्यत्वकारणं तत्स्वभावत्वमुक्तम्। इतिशब्देनापरिहार्यपदं हेत्वभिप्रायमिति व्यञ्जयति ॥ २७ ॥

एवमपरिहार्यत्वेनाशोचनीयत्वमुक्तम्। अथ तत्तद्वस्तूनां प्रतिनियतस्वभावत्वेन पूर्वोत्तरावस्थायाः सुखरूपत्वदुःखरूपत्वयोरन्यतरानैकान्त्यानुपलभ्यदशापत्त्या चाशोचनीयत्वमुच्यते—**अव्यक्तादीनी**ति। भूतशब्दस्यात्र देहपरत्वार्थमुक्तम्—**मनुष्यादीनी**ति। अव्यक्तव्यक्तादिशब्दानां प्रकृत्यवस्थाविशेषादिपरत्वभ्रमव्युदासाय यादवप्रकाशोक्तसङ्क्षादिपरत्वस्य च प्रकृतानुपयोगज्ञापनायोक्तम्—**अनुपलब्धे**त्यादि। 'अदर्शनादिहायातः पुनश्चादर्शनं गतः। नासौ तव न तस्य त्वं वृथा किमनुशोचसि' इति ह्यन्यत्राप्युच्यते। **स्वेषु स्वभावेषु वर्तन्त** इति। अयमभिप्रायः—न तावदेषां द्रव्याणां मनुष्यत्वादिव्यक्तावस्था स्वभावः, सहतिविशेषादिसाध्यत्वात्। नाप्यव्यक्तपूर्वोत्तरावस्था, तस्या अपि विभागादिसाध्यत्वात्। अतस्सामान्यतः परिणामित्वमात्रं स्वभावः। ततश्च यथापरिणामिनो द्रव्यस्याव्यक्तपूर्वावस्था व्यक्तमध्यावस्था च न शोकनिमित्तम्, एवमुत्तरावस्थापि। एवकारोऽपरिवर्जनीयत्वपरः, स्वभावप्रातिपरो वा। यद्यव्यक्तावस्थैव स्वभाव इति मनुषे[1], तदा स्वभावपरित्यागलक्षणमनुष्यत्वाद्यवस्थैव शोचनीया। यदि पुनर्मनुष्यत्वावस्थैव स्वभावः प्रतिबन्धकवशादव्यक्तावस्थेति मन्वीथाः, तदा प्रतिबन्धकस्यावर्जनीयत्वादागन्तुकस्य तस्य कदाचिदपगमे पुनर्मनुष्यत्वादिसिद्धेश्चावर्जनीयत्वाच्च कथञ्चिदपि शोचनीयम्। यदि तु स्वभाव एव वस्तूनां सामान्यतश्शोकनिमित्तम्[2], तर्हि प्रतिनियतविचित्रस्वभावानन्तवस्तुसन्तते जगति सर्वस्य सर्वथा दुःखजलनिधाने मज्जनमिति नेदानीं विशेषतश्शोकनिमित्तमस्ति। अथौपाधिकस्यापि सुखहेतोर्वियोगाच्छोकः[1], तदा दुःखहेतूनां शत्रुप्रभृतीनां मैश्वर्यादेश्च परमार्थतश्शोकनिमित्तत्वम्। न तु सुखहेतोश्शत्रुनिरसनस्य सार्वभौमत्वादेर्वा। अथ सुखहेतोः स्वशरीरादेर्नाशात् बिभेषि[1],

प्र पा॥ *न शोचितुं पा॥ †दीनि भूता पा॥ ‡मध्यावस्था.पा॥ १ तदेव द्रव्य ख ग घ ञ पा॥ २ तदुत्तरावस्थतयोत्पन्न ख ग घ ढ ञ. पा॥ ३. परत्वमुक्तम् पा॥ ४ महाभारते स्त्रीपर्वणि २-१२ ॥ ५ सिद्धेश्चावर्जनीयत्वात् ख ग घ ङ,ञ ढ पा ॥

श॥जन्म इति च स्वाभाविकश्चेत् अपरिहार्यः सः अर्थः। तस्मिन् अपरिहार्ये अर्थे न त्वं शोचितुम् अर्हसि ॥ २७ ॥

ज॥न शोचितुमर्हसीत्युक्तम्। तत्र को हेतुरित्यर्थः ॥ २७ ॥

रा-अ॥ एवं शरीरात्मवादेऽपि नास्ति शोकनिमित्तमित्युक्त्वा शरीरातिरिक्त आश्चर्यस्वरूप *आत्मनि द्रष्टा श्रोता वक्ता श्रवणायत्तात्मनिश्चयश्च दुर्लभ इत्याह—

**आश्चर्यवत्पश्यति कश्चिदेनम् आश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९**

रा॥ एवमुक्तस्वभावं स्वेतरसमस्तवस्तुविसजातीयतया आश्चर्यवदवस्थितमनन्तेषु

ता॥तर्हि महाबाहुना भारतेन त्वया जिघांसूनां सन्निधौ यथाशक्ति व्यापारेण शरीरादिरक्षणं कार्यम्।यदि च बन्धुवधादिनिमित्तलोकापवादादेर्भीतिः¹, तदा समर्थस्य ते बन्धुसंरक्षणाद्यभावनिमित्तो महीयानपवादस्स्यात्, भीरुत्वादिनिमित्ता मरणातिरिक्ता चाकीर्तिस्स्यात्, न चायं दुस्त्यजः शीतातपादिगांस्पर्शिकदुःखवच्छोकः, किन्त्वविचारितरमणीयाभिमानमूलतया तन्निवृत्त्या परिहार्यः, अत एव देहात्ममोहमहाग्रहगृहीतस्य लोकायतसमयरहस्यतत्त्वविचारेणापि न कथञ्चिदपि शोचितुमर्हसीति परिदेवना ²किंनिमित्तेत्यर्थः। तदिदमुक्तं—न तत्र परिदेवनानिमित्तमस्ति—इति ॥ २८ ॥

एवमन्यावहनादपरिसमापनेन पूर्वोक्तं स्वसिद्धान्तमेव देहात्ममोहमूलदुरितावलीमलीमसे जगति तदधिकारिदुर्लभत्वादिकथनेन प्रशमतीत्याह—एवमिति। कतिपयपदविशेषितोऽयमौपनिषद एव 'आश्चर्यवत्' इत्यादिश्लोकः। एवमुक्तस्वभावम् इति 'एनम्' इत्यस्यार्थः। अव्यक्तोऽयम्' इत्यादिनोक्तं वैजात्यम् ³आश्चर्यत्वहेतुत्वायाह—स्वेतरेति। आश्चर्यवच्छब्दस्य पश्यत्यादिक्रियाविशेषणत्वभ्रमव्युदासायोक्तम्—आश्चर्यवदवस्थितमिति। आत्मनो वैलक्षण्यकथनमेवात्रोचितमिति भावः। एतेन कर्तृदृष्टान्ततया शङ्करोक्तं योजनान्तरमपि दूषितम्। कश्चिदिति निर्धारणार्थमाह—अनन्तेष्विति। ज्ञानेन

प्र-पा॥*आत्मा द्र ग पा॥ १ बाधा पा॥ ।स ग. घ. ङ. पा॥ ४. आश्चर्यवत्त्व. पा॥
२. अत एव ग.ङ ङ. पा॥ ३ का किंनिमित्तेत्यर्थ. ५. हेतुत्वायाह. ग. घ ङ. च ज. झ. पा॥

श॥कार्यकारणसङ्घातात्मकान्यपि भूतानि उद्दिश्य शोकः न युक्तः कर्तुम्, यतः—अव्यक्तादीनि इति॥ अव्यक्तादीनि अव्यक्तम् अदर्शनम् अनुपलब्धिः आदिः येषां भूतानां पुत्रमित्रादिकार्यकारणसङ्घातात्मकानां तानि अव्यक्तादीनि भूतानि प्राक् उत्पत्तेः। उत्पन्नानि च प्राक् मरणात् व्यक्तमध्यानि। अव्यक्तनिधनानि एव पुनः अव्यक्तम् अदर्शनं निधनं मरणं येषां तानि अव्यक्तनिधनानि। मरणात् ऊर्ध्वम् अव्यक्ततामेव प्रतिपद्यन्ते इत्यर्थः। तथा चोक्तम्—'अदर्शनादापतितः पुनश्चादर्शनं गतः' इति। तत्र का परिदेवना को वा प्रलापः अदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु इत्यर्थः॥ २८॥

दुर्विज्ञेयः अयं प्रकृत आत्मा; किं त्वामेव एकम् उपालभे साधारणे भ्रान्तिनिमित्ते।

आ॥तदेव स्पष्टयति—अव्यक्तादीनीति॥ २८॥

देहयोगवियोगस्य नियतत्वादात्मनश्चेश्वरसरूपत्वात्सर्वथा अनाशाच्च शोकः कार्य इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति—आश्चर्यवदिति।

ज॥स्पष्टं च जन्ममरणस्वरूपनिरूपणेन॥ २८॥

आश्चर्यवदिति श्लोकस्य न प्रकृतसङ्गतिर्दृश्यते। तदुत्तरश्च पुनरुक्त इत्यत आह—देहयोगेति। द्वन्द्वैकवद्भावोऽयम्। सर्वथेति विध्वनाशाभावादिभिः सर्वैः प्रकारैरित्युपसंहर्तुमुत्तरेण श्लोकेन। ईश्वरसरूपत्वेऽपि कथमनाश इत्याशङ्कापरिहारहेतुत्वात् उपसंहर्तुम् इत्युक्तम्। अप्रमेयस्येत्यादिना प्रागुक्त-

रा॥जन्तुषु महता तपसा क्षीणपाप उपचित*पुण्यः कश्चित्पश्यति। तथाविधः कश्चित्परस्मै वदति। एवं कश्चिदेव शृणोति। श्रुत्वाप्येनं यथावदवस्थितं तत्त्वतो न कश्चिद्वेद। चकारात् द्रष्टृवक्तृश्रोतृष्वपि तत्त्वतो दर्शनं तत्त्वतो वचनं तत्त्वतश्श्रवणं दुर्लभमित्युक्तं भवति ॥ २९ ॥

ता॥हीनानां नराणां पशुभिस्समत्वप्रदर्शनायोक्तम्—जन्तुष्विति। 'कश्चित्' इत्यस्य तात्पर्यार्थमाह—महतेति।तथाचोच्यते—'क्षपाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते'इति।अन्यशब्दोऽत्र पूर्वोत्तरवाक्यगतकश्चिच्छब्दसमानार्थः। 'परस्मै' इत्यर्थकथोक्तिः। श्रुत्वापि न वेद इत्युक्ते व्याघातशास्त्रानारम्भादिदोषस्स्यादित्याशङ्क्योक्तम्—यथावदवस्थितं तत्त्वत इति। प्रामाणिकसमस्ताकारयुक्तमनारोपितेन प्रकारेणेत्यर्थः। तत्रवेदिनोऽत्र दुर्लभत्वमात्रे तात्पर्यं श्रुत्वापीत्यादिवाक्यस्थचकारस्यानुक्तसमुच्चयार्थत्वेन तत्समुच्चेतव्यानि चाह—चकारादिति। देहातिरिक्तस्यात्मनो द्रष्टैव तावद्दुर्लभः; किमुत यथावस्थितद्रष्टा? । तथाविधेषु सत्स्वपि वक्तैव दुर्लभः, किमुत तत्त्वरहस्यवक्ता? । तादृशेषु सत्स्वपि श्रोतैव दुर्लभः; किम्पुनर्गाम्भीर्यसकलशिष्यगुणसम्पन्नतया यथावस्थितश्रोता तादृशः? इत्यभिप्रायः। प्रथमं श्रवणम्, ततो मननाच्छ्रवणायत्तात्मनिश्चयः, ततश्च वचनयोग्यता, तत्रापि चिराभ्यासादिना यथावस्थितवचनयोग्यता,ततश्च निदिध्यासनाद्दर्शनम्,ततो स्पष्टतरतमं चिरनिरीक्षणसंस्कारात्मविशेषदर्शनमिति वा क्रमः। अत्र देहातिरिक्तश्चेदात्मा, किं तथा नोपलभ्यते? इति शङ्कापाकरणाय दुर्ज्ञानत्वकथनम्। सर्वेषामनुभवास्ये वा वस्तुनि किं व्यामोहकमुपालभे? इति भावः ॥ २९ ॥

प्र पा॥ *पुण्यकर्मा. पा॥ १ नराणामपि ग घ ङ पा॥ ४ ततोऽपि ग. घ ङ ज. झ पा॥
२. यथा ग ज झ पा॥ ३. ५. सविशेषत्व दर्शने शास्त्रादिदोषप्रसङ्गणक्षमत्वम् ॥

श॥कथं दुर्विज्ञेयः अयम् आत्मा इति? आह आश्चर्यवत् इति॥ आश्चर्यवत् आश्चर्यम् अदृष्टम् अद्भुतम् अकस्मात् दृश्यमानं तेन तुल्यम् आश्चर्यवत् आश्चर्यमिव एनम् आत्मानं पश्यति कश्चित्। आश्चर्यवत् एनं वदति तथैव च अन्यः। आश्चर्यवत् च एनम् अन्यः शृणोति। श्रुत्वा दृष्ट्वा उक्त्वा अपि आत्मानं वेद न चैव कश्चित्। अथवा—यः अयम् आत्मानं पश्यति स आश्चर्यतुल्यः। यो वदति यश्च शृणोति, स अनेकसहस्रेषु कश्चिदेव भवति। अतः दुर्बोधः आत्मा इत्यभिप्रायः ॥ २९ ॥

आ॥दुर्लभत्वेनेत्यर्थः। तच्चाश्चर्यं लोके। दुर्लभोऽपीश्वरस्वरूपत्वात्सूक्ष्मत्वाच्चात्मनस्तद्द्रष्टा ॥ २९ ॥

ज॥नात् पुनरिति। एवं यः कश्चित्पश्यति स आश्चर्यवदित्यनुक्त्वा चतुर्थपादेन तदुपपादनं क्रियते। तद्व्याचष्टे—दुर्लभत्वेनेति। दुर्लभत्वमाश्चर्यशब्दप्रवृत्तौ निमित्तमित्यर्थः। तत्कथमित्यत आह—तच्चेति। 'आश्चर्यमनित्ये' इत्यादिस्मृतिं हिशब्देन सूचयति। सर्वेषाम् आत्मद्रष्टृत्वात्कथमात्मद्रष्टा दुर्लभोऽपि?, येनाश्चर्यमुच्यत इत्यत आह—दुर्लभोऽपीति। ईश्वरस्वरूपत्वादिनात्मद्रष्टा दुर्लभ इति भावः। अनेन आश्चर्यं एवाश्चर्यवदित्युच्यत इत्युक्तं भवति। यत्प्रतिबिम्बस्य जीवस्य द्रष्टापि दुर्लभः, किं तत्सामर्थ्यं वर्णनीयमितीश्वरसामर्थ्यदर्शनम्। देहयोगवियोगस्येत्यादिना 'देही नित्यम्' इति श्लोको व्याख्यातः। स्वधर्ममित्यादयः श्लोका अतिरोहितार्थत्वान्न व्याख्याताः। एवमुत्तरत्रापि ॥ २९-३८ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३०

रा॥सर्वस्य देवादिदेहिनो देहे वध्यमानेऽप्ययं देही नित्यमवध्यो मन्तव्यः। तस्मात्सर्वाणि देवादिस्थावरान्तानि भूतानि विषमाकाराण्यप्युक्तेन स्वभावेन स्वरूपतस्समानानि

ता॥ अथ यथा देवादिस्थावरान्तेषु भूतेषु देहांशे जातिगुणदेशकालदुर्भेदत्वसुभेदत्ववैषम्यमुपलभ्यते ; तद्वद्देहिन्यपि सुखित्वदुःखित्वादिवैषम्यं दृश्यते। देवादिशब्दाश्च देवत्वादिविशिष्टात्मपर्यन्ताः । एवं नित्यानित्यत्वादिलक्षणवैषम्यमपि सम्भाव्येतेति शङ्कानिराकरणायोच्यते—देहीति । वध्यमानेपीति सामर्थ्यानीतमुक्तं 'हन्यमाने शरीरे' इतिवत्। अन्यथा देहे सर्वस्येत्यस्य नैरर्थक्यं देहीत्येतावतैव देहवर्तित्वसिद्धेः। भूतशब्दोऽत्र क्षेत्रज्ञपर्यन्तः। 'सर्वाणि' इत्यादिसूचितशङ्काहेतुः विषमाकाराण्यपि इत्यनूदितः। देवादिभेदात्तत्प्रयुक्तसुखादिभेदाच्चेति शेषः। उक्तेन स्वभावेनेति । पूर्वोक्तसूक्ष्मत्वा-

प्र-पा॥१. सुभेदत्वादि. ख. ग. ङ. झ. पा ॥

२. नित्यत्वानित्यत्वा. ग. घ. ङ ज. झ. पा ॥

*३. मूले देहे वध्यमानस्य नोक्तम् ; तत्कथमुच्यते भाष्ये देहे वध्यमानेऽपीति—इत्याशङ्कायामाह—वध्यमानेऽपीति सामर्थ्यानीतमुक्तमिति । देहिनो वध्यत्वप्रतिषेधस्याप्रसक्तप्रतिषेधत्ववारणाय देहवधेनैव देहिनो वध्यत्वप्रसक्तेर्वाच्यतया देहिनो वध्यत्वप्रतिषेधसामर्थ्यात्, आनीतमध्याहारेणोपस्थापितमुक्तमित्यर्थः। वचनान्तरैकवाक्यत्वादपि उक्तार्थपरत्वं समर्थयति—'हन्यमाने शरीरे' इतिवत्—इति ॥

*४ अन्यथा—उक्तार्थपरत्वाभावे सर्वस्येत्यस्य नैरर्थक्यम्, अत्र पाठश्चन्द्रिकायां प्रामादिकोऽसाधुरिव भाति। 'देही' इत्येतावतैव देहवर्तित्वसिद्धेरित्यनन्तरग्रन्थपर्यालोचनायां देहे इत्यस्य नैरर्थक्यमित्येव पाठेन भवितव्यमित्येव भाति। तदा अयमर्थः—वध्यमानेऽपीत्यर्थाविवक्षायां श्लोके देहइतिपदं व्यर्थं स्यात्—इति। ननु देहे इति सप्तम्यन्तपदेन देहवर्तित्वमात्मनः प्रतीयते। तदसत्त्वे तद्बोधो न स्यादिति तद्बोधकत्वेनैव तत्सार्थक्यमित्याशङ्कायाम् आह—देहीत्येतावतैव तत्सिद्धेरिति। नात्सिद्धेः—आत्मनो देहवर्तित्वस्य देहविशिष्टार्थकेन देहीत्यनेनैव सिद्धेरित्यर्थः। सर्वस्येति पाठस्य सार्वत्रिकत्वे तु कथञ्चित् तत्साधुत्वमुपपादनीयम्। तदायमर्थः—सर्वस्येत्यस्य देहे सर्वस्येति वाक्यस्य, नैरर्थक्यं वैयर्थ्यं स्यादित्यर्थः। वाक्यस्य पदसमुदायरूपस्य तद्घटकस्य कस्यचिदेकस्य पदस्य वैयर्थ्येऽपि वैयर्थ्यस्य दुरपह्नवत्वेन उक्तरीत्या निरुक्तवाक्यघटकस्य 'देहे' इति पदस्य वैयर्थ्येन निरुक्तवाक्यस्य वैयर्थ्यमिति । न च 'देहे' इति पदसत्त्वेऽपि 'वध्यमाने' इतिपदाध्याहारेणैव 'देहे वध्यमानेऽपि' इत्यर्थपरत्वं मूलस्य वाक्यम्। तथाच सति तत्पदासत्त्वेऽपि अध्याहृतपदार्थस्य देहिशब्दैकदेशदेहशब्दार्थे अन्वयोपगमादेव विवक्षितार्थलाभ इति तद्वैयर्थ्यं सिद्धान्तेऽपि दुर्वारमेवेति वाच्यम् ; 'देही' इति तद्धितवृत्त्येकदेशदेहशब्दस्य पदान्तरार्थान्वितार्थकत्वे असामर्थ्येन वृत्तेरेवासाधुत्वप्रसङ्गात् ॥

*५. 'सर्वाणि भूतानि' इत्यत्र भूतशब्दस्य शरीरमात्रपरत्वे 'शोचितुमर्हसि' इत्यनेन शरीरविषयकशोचनाभाव एव उक्तः स्यात्। तथात्मनामवध्यत्वं तस्मादित्यनेन न हेतुतया परामर्शयोग्यमिति वाक्यार्थबाध इति परिचिन्त्य भूतशब्दस्य शरीरपरत्वमाह—भूतशब्दोऽत्रेति ॥

६. इत्यादिसूचितः शङ्का. क. ख. ग. घ. झ. पा॥

७ देहादि. घ. झ. पा॥

शा॥अथ इदानीं प्रकरणार्थम् उपसंहरति—देही इति ॥ *सर्वस्य प्राणिजातस्य देहे वध्यमानेऽपि अयं देही न वध्यः यस्मात् तस्मात् भीष्मादीनि सर्वाणि भूतानि उद्दिश्य

पा॥ *यस्मात् देही - शरीरी नित्य सर्वावस्थासु अवध्यो निरवयवत्वात् नित्यत्वाच्च तत्रावध्योऽयम्, देहे शरीरे सर्वस्य सर्वगतत्वात् स्थावरादिषु स्थितोऽपि सर्वस्य. पा ॥

रा॥नित्यानि च। देहगतं तु वैषम्यमनित्यत्वञ्च । ततो देवादीनि सर्वाणि भूतान्युद्दिश्य न शोचितुमर्हसि ; न केवलं भीष्मादीन्प्रति ॥ ३० ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१

रा॥अपिचेदं प्रारब्धं युद्धं प्राणिमारणमपि अग्नीषोमीयादिवत् स्वधर्ममवेक्ष्य न विकम्पितुमर्हसि। धर्म्यान्न्यायतः प्रवृत्ताद्युद्धादन्यन्न हि क्षत्रियस्य श्रेयो विद्यते।*'शौर्यं तेजो

ता॥च्छेद्यत्यादिनेत्यर्थः। नित्यानि चेति। न तु नित्यत्वानित्यत्वलक्षणवैषम्यं शङ्कनीयमित्यर्थः । देहगतं तु वैषम्यमिति। देहगतमन देवादिमनित्वलक्षणवैषम्यम् सुखादिवैषम्यन्त्वात्मगतमपि तत्तद्देहौपाधिकधर्मभूतज्ञानावस्थाविशेषतारतम्यात्मकम् । चेतनानां देहादिशब्दैर्व्यपदेशस्तु शरीरस्यापृथक्सिद्धिमात्रनिबन्धन इति भाव । प्रकृतसङ्गतिज्ञापनाय सर्वाणीत्यस्य व्यवच्छेद्यमाह—न केवलं भीष्मादीन् प्रतीति । एवम् 'अशोच्यानन्वशोचस्त्वम्' इत्यादिना 'न त्वं शोचितुमर्हसि' इत्यन्तेनास्थानकारुण्यमपोदितम् ॥ ३० ॥

अथ 'स्वधर्मम्' इत्यादिना 'मरणादतिरिच्यते' इत्यन्तेन धर्माधर्मधीरपोद्यते । अपिचेति समुच्चेतव्यहेत्वन्तरपरप्रकरणभेदद्योतनार्थः। धर्म्याद्धि युद्धात् इति वाक्यशेषप्रदर्शित'स्वधर्मम्' इत्यस्य विशेष्यमाह—इदं युद्धमिति स्वो धर्मः स्वस्य वा धर्मः स्वधर्मः। विकम्पितुमित्येतत्सामर्थ्यसिद्धमुक्त—

प्र पा॥*गा. १८-४३॥ १ देहमात्रगत देवादि वैषम्य ॥ २. ननु देवत्वादिरूपस्य देहधर्मस्यात्मन्यसत्त्वे कथं देवादिशब्दैर्देहवाचिभिरात्मनो व्यवहरणमित्याशङ्कायामाह—देहादीति । देहादिशब्दैः—देहादिवाचिभिः शब्दैरित्यर्थः । आदिशब्देन ज्ञानादिपरिग्रहः । धर्मभूतज्ञानादिवाचिभिरपि हि शब्दैरात्मनो व्यवहारः श्रुत्यादौ दृश्यते—'विज्ञानं यज्ञं तनुते' इत्यादौ । निरूपितं चैतद् सूत्रकृता 'तद्गुणसारत्वात्तु तद्व्यपदेशः' इत्यत्र । तथाच आदिशब्देन ज्ञानप्रदर्शनं दृष्टान्तार्थम् । यथा वा आत्मनोऽपृथक्सिद्धज्ञानादिरूपधर्मवाचिभिः शब्दैः तद्धर्मिण आत्मनो व्यपदेशः, तद्वत् तदपृथक्सिद्धदेहवाचिभिरपि देवादिशब्दैस्तत्प्रतिपादनं नानुपपन्नमिति भाव ॥

* ३ 'श्रोत्रियेभ्यो गा देहि' इत्युक्त्वा 'सर्वेभ्यो ब्राह्मणेभ्योऽन्नं देहि' इत्युक्ते 'न केवलं श्रोत्रियमात्रेभ्य' इति यथा वा उपस्थितकतिपयमात्रे अन्नदानादिरूपेतरायव्यवच्छेदः सर्वशब्देन प्रतीयते, तद्वत् 'सर्वाणि भूतानि न त्वं शोचितुमर्हसि' इत्यत्र सर्वशब्देन 'कथं भीष्ममहं सङ्ख्ये' इत्यादिना शोचनीयत्वेनोपस्थितभीष्मादिमात्रे शोचनाद्यत्वाभावरूपेतरायव्यवच्छेदः प्रतीयत इत्याशयेनोक्तं भाष्ये 'न केवलं भीष्मादीन् प्रति' इति— प्रकृतसङ्गतीति । प्रकृतसङ्गतिज्ञापनाय—'सर्वाणि भूतानि न त्वं शोचितुमर्हसि' इति सकलप्राणिविषये शोचननिषेधस्य उपदिश्यमानस्य अप्रसक्तप्रतिषेधरूपत्वेन असङ्गतत्वशङ्का स्यादिति तन्निराकरणाय प्रसक्तत्वेन प्रकृतसङ्गतिं ज्ञापयितुमित्यर्थः ॥

* ४ 'सर्वाणि' इत्यस्य व्यवच्छेद्यम्—अशेषार्थकसर्वशब्दो हि शेषव्यवच्छेदार्थकः । तेन व्यवच्छेदेन व्यवच्छिद्यमानं शेषमाहेत्यर्थः । 'न केवलं भीष्मादीन् प्रति' इति व्यवच्छिद्यमानस्य केवलभीष्मादेश्शोचनीयत्वेनोपस्थितस्य कथनेन शोचनस्य प्रसक्तिर्दर्शिता भवतीति प्रकृतसङ्गतिरिति भाव ॥

शा॥न त्वं शोचितुम् अर्हसि ॥ ३० ॥

इह परमार्थतत्त्वापेक्षायां शोको वा मोहो वा न संभवति इत्युक्तम्। न केवलं परमार्थतत्त्वापेक्षयामेव— स्वधर्मम् इति ॥ स्वधर्मः अपि स्वो धर्मः क्षत्रियस्य धर्मः युद्धं तमपि

रा॥धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्' इति हि वक्ष्यते। अग्नीषोमीयादिषु च न हिंसा पशोः, निहीनतरच्छागादिदेहपरित्यागपूर्वकक-ल्याणतरदेहस्वर्गादिप्रापकत्वश्रुतेस्संज्ञपनस्य*"न वा उ वेतन्म्रियसे न रिष्यसि देवाँ इदेषि

ता॥प्रारब्धमिति। अधर्मधीहेतु सामान्यनिषेधमनुवदति—प्राणिमारणमपीति। प्रबल विशेषशास्त्र निषेधशास्त्रात् निषेधस्याप्रसक्तिं वा स्मारयति—अग्नीषोमीयादिवदिति। धर्मयुद्धव्यतिरिक्तस्य कस्य-चिदन्यस्य श्रेयसः क्षत्रिये स्वरूपनिषेधभ्रम व्युदस्यन् क्षत्रियस्य प्रशस्यतर धर्म्ययुद्धादन्यन्नास्तीत्येतदर्थ-मन्वयमाह—धर्म्यादिति। धर्म्यत्वं धर्मादनपेतत्वम्। तद्धेतुर्न्यायतः प्रवृत्तत्वम्। तच्च निरायुध-निवृत्तशरणागतादिषु शस्त्रप्रयोगाद्यभावात्।हिशब्दसूचित वक्ष्यमाणमाह—शौर्यमिति। ननु'अग्नीषो-मीयादिवत्'इत्येतदेव न सम्प्रतिपन्न तस्यापि हिंसात्वेनाधर्मत्वस्यावर्जनीयत्वात्; न च निषिद्धत्वमुपाधिः 'न हिंस्यात्' इति सामान्यनिषेधेन तस्य साधनव्यापकत्वात्। नापि विहितेतरत्वमुपाधिः, अविहिता-प्रतिषिद्धेष्वपि तस्य विद्यमानत्वेन साध्यव्यभिचारात्। नच साध्यसमव्याप्तत्वाभिप्रायेण सामान्यनिषेधो विशेषविधिवाक्यविरोधात्सङ्कुचितविषयः, सङ्कोचहेतोर्विरोधस्यैवाभावात्, सामान्यविशेषवाक्ययोः प्रत्यवायक्रतुसाधनत्वस्वरूपादेकस्यैव क्रतुप्रत्यवायसाधनत्वाविरोधात्। न च प्रत्यवायसाधनं न विधीयेत इति वाच्यम्,[5] हरीतकीभक्षणादिष्विव क्रत्वनुप्रविष्टप्रायश्चित्तार्हहिंसासाध्यदुःखस्याल्पतया क्रतुसाध्य-सुखस्य च भूयस्तया तदुपपत्तेः। उक्तं च साङ्ख्यैः—"*सा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपक-रिष्यति'—इत्यादि। आह च पञ्चशिखाचार्यैः—'स्वल्पस्सङ्करस्सुपरिहरस्सप्रत्यवमर्शः'इति। अतोऽग्नीषो-मीयवदित्यसिद्धस्यासिद्धेन निदर्शनमुक्तमित्यत्राह—अग्नीषोमीयादिषु चेति। अधर्मसाधको हिंसा-त्वहेतुरसिद्धः।उपाधिश्च न पक्षव्यापकः,पक्षस्याहिंसारूपत्वात् तत एव निषेधाभावाच्चेति भावः।अहिंसा-त्वमेवोपपादयति—निहीनतरेति। अनर्थप्रापकव्यापारत्वं हिंसालक्षणम्। अत्र तु तद्विपरीतत्वेन रक्षण-त्वमेव युक्तमिति मन्त्रलिङ्गेन ज्ञापयति—नवा इति।एतादिति क्रियाविशेषणम्।सुगेभिस्सुगैरित्यर्थः। पित्र-

प्र पा॥ *यजु.४.६ १.४६ यजु-तैत्ति ब्राह्मणे च. ३.७.७.१४ †नवा उवेतन्म्रियसे इति॥ हे पशो त्वम् एतत् - एतेन संज्ञपनव्यापारेण, न वा उ - सर्वथा नम्रियसे, अत एव न रिष्यसि - न विनश्यसि, किन्तु सुगेभि. - सुखेन गन्तुं शक्यै, पथिभि.-मार्गैः, देवान् इदेषि—देवानेव प्राप्नोषि। यत्र-यस्मिन्नुत्तम-लोके, सुकृत.-पुण्यकृत सन्त यान्ति - गच्छन्ति। दुष्कृत - पापिन., नापि-नैव गच्छन्ति; यत्र सुकृतो दुष्कृतोऽपि न यान्ति इति वा। तत्र-तस्मिन्नुत्तमलोके, सविता देव - भगवान् त्वा दधातु - स्थापयतु इति। 'हिरण्यशरीर ऊर्ध्व. स्वर्गं लोकमेति'इत्यादैतरेयब्राह्मण (७-४) श्रुतिश्चाऽनुसन्धेया॥

१. निषेधविषयम्, ग. ■.

*२. 'अग्नीषोमीयादिवत्' इतिदृष्टान्तप्रदर्शनपर-भाष्यवाक्यस्य द्वेधा प्रयोजनं प्रदर्शयति—प्रबलमित्या-दिना। प्रबलं विशेषशास्त्रं निषेधशास्त्रात् निषेधस्या-प्रसक्तिं वा स्मारयति—निषेधशास्त्रात्प्रबलं विशेषशा-स्त्रं स्मारयति, निषेधस्याप्रसक्तिं वा स्मारयतीत्यन्व-यः। निषेधशास्त्रं—'न हिंस्यात्' इति सामान्यतः प्राणिहिंसानिषेधप्रतिपादकं शास्त्रमित्यर्थ.। विशेषशा-स्त्र—विशेषतः यागीयपशुविशसनपरम् 'अग्नीषोमीय पशुमालभेत' इति शास्त्रमित्यर्थ.। प्राबल्यं चास्य उत्सर्गापवादन्यायेन; सामान्यनिषेधविधिबाधकत्वात्। सिद्धान्ते यागीयपशु-हिंसाया हिंसात्वमेव नेत्यभ्युपगमात् नोत्सर्गापवाद-न्यायोऽत्र प्रवर्तत इत्यभिप्रेत्य'अग्नीषोमीयादिवत्' इति भाष्यस्यावतरणिकान्तरमाह—निषेधस्याप्रसक्तिं वेति। यतोऽग्नीषोमीयपशुविशसनस्य न हिंसात्वम्,अतो 'न हिंस्यात्' इति निषेधस्य नात्र प्रसक्तिरिति भाव.॥

३ विशेषशास्त्रं निषेधस्याप्र.स घ निषेधस्याप्रस.ङ.

*४. निरायुधनिवृत्तशरणागतादिषु—निरायुधश्च निवृत्तश्च शरणागतश्चेति त्रयाणां पदाना द्वन्द्वः॥

*हिंसा हि गुणस्य. रा. ङ

५.　　६.

या॥ पथिभिस्सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतः । तत्र त्वा देवस्सविता दधातु' इति श्रूयते । इह च युद्धे मृतानां कल्याणतरदेहादिप्राप्तिरुक्ता, 'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति' इत्यादिना।*अनश्चिकित्सकशल्यादिकर्म आतुरस्येवास्य रक्षणमेवाग्नीषोमीयादिषु संज्ञपनम् ॥ ३१ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२

रा॥अयत्नोपनतमिदं निरतिशयसुखोपायभूतं

ता॥पश्वादिविधिस्तु कार्तयुगधर्मविशेषाधिकारिविशेषनियतः 'पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति' इत्यादिवचनादिति भावः। अस्त्वग्नीषोमीयादौ श्रुतिबलादहिंसात्वम्,इह तु कथमित्यत्राह—इह चेति । अयमप्यर्थः श्रुतिस्मृतिसिद्ध इति भावः । ननु 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इत्यादिनाग्नीषोमीयादेरन्यस्य हिंसात्वं प्रतीयते। अन्यथान्यत्रेति तद्व्यवच्छेदानुपपत्तेरित्यत्राह—अत इति। अयमभिप्रायः—न तावदिह दुःखजननमात्रं हिंसा,रक्षणरूपेषु चिकित्सकशल्यप्रयोगादिष्वपि प्रसङ्गात् । नापि प्राणवियोजनमात्रम्, अतद्रूपेषु सर्वस्वहरणबन्धनपीडादिषु हिंसाशब्दप्रयोगदर्शनात् । न चायमुपचारः,नियामकाभावात्, विपरिवर्तस्यापि दुर्वारत्वात् । अतोऽनर्थपर्यवसितस्तादात्विकदुःखजनको व्यापारो हिंसेत्येव तत्त्वम्—इति । ततश्च 'अन्यत्र तीर्थेभ्यः' इत्येतत्पश्वादेर्भाविपुरुषार्थविशेषानभिज्ञपामरदृष्ट्योक्तम् । तस्मिन्नपि वाक्ये हिंसात्वं नास्तीत्येव तात्पर्यम्।उक्तं च मनुना—'तस्माद्यज्ञे वधोऽवधः' इति । तत्रापि वध इति पामरदृष्ट्यानुवादः। अवध इति तत्त्वकथनम्।यद्यपि क्रत्वनुप्रविष्टाना सोमोच्छिष्टभक्षणप्रभृतीनां हिंसालक्षणवत्तल्लक्षणान्तरेण व्यवच्छेदश्शक्यः; तथापि तेषां प्रत्यवायानाधायकत्वं वचनबलादेव तथात्वमङ्गीकुर्मः; न पुनः क्रत्वर्थतया विधानमात्रेण । नन्वेवमुत्सर्गापवादन्यायस्य कीदृशो विषयः? । तादृश एव, यत्र निरवकाशविशेषवाक्यविरोधादेव सावकाशसामान्यशब्दसङ्कोच इति निस्तरङ्गमेतत् ॥ ३१ ॥

पुनरपि प्राणिमारणरूपस्यापि युद्धस्य प्रशंसामुखेनाधर्मभ्रममुन्मूलयति—यदृच्छयेति।यदृच्छयोपपन्नमित्यनाहेतुत्वादिभ्रमव्युदासायाह —अयत्नोपनतमिति । प्राक्तननिरतिशयपुण्यविपाकलभ्यत्वादिदानीमयत्नोपनतत्वम्। निरतिशयसुखोपायभूतमिति। स्वर्गशब्दो हि 'यस्मिन्नोष्णं न शीतं' 'यन्न दुःखेन

प्र पा॥*अतश्चिकित्सकर्म पा ।
१. भारते शान्तिपर्वणि मोक्ष १७९ ३४ ॥
२ पथ शुद्धिकरो यागादिरित्यत्राह. पा.
३
४. अग्नीषोमीयादेरपि हिंसात्व प्रती ख ग घ ङ ।
५ वियोगजननमात्र. ज श पा॥ ६ नारक ख ग झ पा॥ ७ तादात्विकाल्पदु ख घ ज पा॥
८ (मनुस्मृतौ. ५ ३९) 'यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा । यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥'
९ तत्र लक्ष. ज ख.ग घ ङ झ.पा॥
१० अनाधायकत्व. ज ख. ग. घ ङ झ पा॥
११ वचनबलात् 'न सोमेनोच्छिष्टा भवन्ति' इति श्रुतिबलादित्यर्थ
१२ १३. १४. दुःखेन यन्न. पा॥

शा॥अवेक्ष्य त्वं न विकम्पितुं प्रचलितुं न अर्हसि क्षत्रियस्य स्वाभाविकात् धर्मात् आत्मस्वाभाव्यादित्यभिप्रायः । तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति परमं धर्म्यम् । धर्मात् अनपेतं धर्म्यम् । तस्मात् धर्म्यात् युद्धात् श्रेयः अन्यत् क्षत्रियस्य न विद्यते हि यस्मात् ॥ ३१ ॥

कुतश्च तत् युद्धं कर्तव्यम् इति? उच्यते – यदृच्छया इति॥ यदृच्छया च अप्रार्थितम् आगतम् उपपन्नं स्वर्गद्वारम् अपावृतम् उद्घाटितं ये एतत् ईदृशं युद्धं लभन्ते

रा॥निर्विघ्नमीदृशं युद्धं सुखिनः पुण्यवन्तः क्षत्रिया लभन्ते ॥ ३२ ॥

ता॥सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं तत्सुखं स्वर्गपदास्पदम्' इति निरतिशयसुखविशेषे व्युत्पन्नः। देशविशेषस्तु तादृशसुखभोगस्थानतया स्वर्गः। धर्माणां च स्वतो निरतिशयसुखसाधनत्वं स्वभावः। फलाभिसन्ध्यादिलक्षणप्रतिबन्धकवशादन्यथात्वमिति च्विप्रत्ययमप्रयुञ्जानस्य भावः। अप्रावृतशब्दाभिप्रेतं निर्विघ्नत्वम्। सुखिन इत्यस्य पुण्यवन्त इति प्रतिपदम्। न हि सुखमेवेदृशयुद्धलाभहेतुः। अतोऽत्र सुखशब्देन सुखसाधनं लक्ष्यत इति भावः। यद्वात्र सुखिशब्दः सुखयोग्यत्वलक्षणसम्बन्धपरः। तद्योग्यत्वं च पुण्यवत्त्वमेवेति भावः ॥ ३२ ॥

१. यत्तत्सुखं स्व. पदास्पदम्. पा ॥

*२. भाष्ये 'स्वर्गद्वारम्' इत्यस्य निरतिशयसुखोपायभूतमिति व्याख्यानं न युक्तम्, युद्धस्य नश्वरपरिमितसुखरूपस्वर्गसाधनस्य निरतिशयसुखरूपमोक्षसाधनत्वाभावात्। न च वर्णाश्रमधर्माणामुपासनाङ्गतया मोक्षसाधनत्वमक्षतमिति वाच्यम्, मुमुक्षोरुपासकस्य विषये तथात्वेऽपि तद्व्यतिरिक्तविषये अतथात्वेन सामान्यतो निरतिशयसुखोपायभूतमिति प्रतिपादनायोगात्। किन्तु अभूततद्भावे च्विप्रत्ययमाश्रित्य निरतिशयसुखोपायीभूतमित्येव व्याख्येयमित्याशङ्कायामाह—धर्माणामिति ॥

*३. स्वतो निरतिशयसुखसाधनत्वं स्वभाव इति—स्वाभाविकनिरतिशयसुखरूपमोक्षसाधनत्वं स्वभाव इत्यर्थः। तथा च—स्वाभाविकनिरतिशयसुखसाधनत्वस्य स्वाभाविकत्वेन तस्य पूर्वकालीनसद्भावाभावरूपाभूतत्वस्य विवक्षाया असम्भवेन नाभूततद्भावे च्विप्रत्ययप्रसङ्ग इति भावः ॥

*४. ननु धर्माणां निरतिशयसुखरूपमोक्षसाधनत्वस्यैव स्वाभाविकत्वे फलेच्छया अनुष्ठीयमानानामेषां कुतो न मोक्षरूपफलोपधायकत्वमित्याशङ्कायामाह—फलाभिसन्ध्यादीति ॥

*५. प्रतिबन्धकवशादन्यथात्वमिति—फलाभिसन्धेर्मोक्षप्रतिबन्धकत्वात् तद्बलात् फलेच्छयानुष्ठितधर्माणां मोक्षरूपफलोपधायकत्वाभावरूपमन्यथात्वमित्यर्थः। यथा वा वह्नेर्दाहकत्वं स्वभावः, दाहानुपधायकत्वरूपमन्यथात्वं तु मण्यादिरूपप्रतिबन्धकवशात्, तद्वदित्यर्थः। उपायशब्दश्चात्र स्वरूपयोग्यतारूपं मोक्षसाधनत्वमाचष्टे, न तु तदुपधायकत्वमिति नानुपपत्तिः ॥

*६. भाष्ये पुण्यवन्त इति व्याख्या निर्मूला, मूले तद्व्याख्येयशब्दस्याभावादित्याशङ्क्य 'सुखिनः' इत्यस्यैवेदं व्याख्यानमित्याह—सुखिन इत्यस्य पुण्यवन्त इति प्रतिपदमिति ॥

*७. सुखिन इत्यस्य यथाश्रुतार्थपरत्वे दूषणमाह—नहीति। उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकप्रयोज्यताया विधेये मानस्य 'धनी सुखी' इत्यादौ दृष्टत्वेन सुखिन इत्युद्देश्यवाचकपदार्थतावच्छेदकसुखे युद्धलाभरूपविधेयप्रयोजकताया भानावश्यकत्वेन तद्बाध इत्याह—सुखमेवेति। यद्यप्युद्देश्यविधेयभावस्थले विधेये उद्देश्यतावच्छेदकप्रयोजनत्वमानमप्यौत्सर्गिकं 'सुखी, धनी' इत्यादाविति प्रकृते युद्धलाभस्य सुखप्रयोजकत्वमाने नानुपपत्तिः, तथापि स्वर्गद्वारमित्यनेनैव तस्योक्तार्थत्वान्न तद्भानमिह वक्तु शक्यमिति भावः ॥

*८. सुखिन इत्यस्य पुण्यवन्त इत्यर्थबोधकत्वं कथमित्यत्र लक्षणया तत्परत्वमाह—सुखशब्देन सुखसाधनं लक्ष्यत इति ॥

*९. लक्षणया निर्वाहे अस्वरसात् मुख्यतया निर्वाहमाह—यद्वेति। सुखिशब्दः सुखयोग्यत्वलक्षणसम्बन्धपर इति—'तदस्यास्ति' इत्यर्थे विधीयमानमत्वर्थीयप्रत्ययस्य सम्बन्धसामान्यवाचिषष्ठ्यर्थगर्भत्वात् 'पुत्री, धनी' इत्यादौ पितृपुत्रभावस्वस्वामिभावादिरूपसम्बन्धबोधकत्ववत् प्रकृते सुखयोग्यतारूपसम्बन्धबोधकताया: प्रत्ययस्याङ्गीकारादिति भावः ॥

*१०. सुखयोग्यत्वं च पुरुषस्य तत्साधनपुण्यवत्त्वमेवेति विवक्षितार्थमाह—तद्योग्यत्वं चेति ॥

शं॥क्षत्रियाः हे पार्थ किं न सुखिनः ते? ॥ ३२ ॥

**अथ *चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥** ३३

रा॥ अथ †‡क्षत्रियस्य स्वधर्मभूतमिममारब्धं सङ्ग्रामं §मोहात् करिष्यसि चेत्—ततः प्रारब्धस्य ¶धर्मस्याकरणात्स्वधर्मफलं निरतिशयसुखं विजयेन ||निरतिशयां च कीर्तिं हित्वा पापं ( निरतिशयमवाप्स्यसि ॥ ३३ ॥

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिः मरणादतिरिच्यते ॥** ३४

रा॥ न ते केवलं निरतिशयसुखकीर्तिहानिमात्रम्, 'पार्थो युद्धे प्रारब्धे पलायित'

ता॥ एवं युद्धस्य धर्म्यत्वेन निरतिशयसुखसाधनत्वमुक्तम् । अथ तदकरणे प्रत्यवायमाह—अथ चेदिति । युद्धाकरणस्य ब्राह्मणादीनां पापहेतुत्वाभावात् स्वशब्दः क्षत्रियत्वपर इत्यभिप्रायेणोक्तम्—क्षत्रियस्य स्वधर्मभूतमिति । 'इमम्' इति निर्देशाभिप्रेतमुक्तम्—आरब्धमिति । मोहात् धर्मेऽप्यधर्मत्वभ्रमादित्यर्थः । न हि युद्धस्याकरणमात्रं क्षत्रियस्यापि प्रत्यवायहेतुः, सर्वदा युद्धकरणप्रसङ्गादित्यत उक्तम्—प्रारब्धस्येति । स्वधर्मफलमिति । धर्मशब्दोऽत्र फलपरः, अन्यथा पौनरुक्त्यात्, अनुवादमात्रत्वेऽनिष्टप्रसङ्गपर्यवसानाभावाच्चेति भावः । आगामिकीर्तिविषयतयोक्तम्—विजयेनेति । न केवलं दृष्टादृष्टरूपनिरतिशयपुरुषार्थहानिमात्रम्, निरतिशयदुःखहेतुभूतं पापमवाप्स्यसीति वाक्यार्थः ॥ ३३ ॥

एवं दृष्टादृष्टरूपफलहानिरदृष्टप्रत्यवायश्चोक्तः । अथ दृष्टप्रत्यवायमाह—अकीर्तिं चेति । अकीर्तिरिह दुष्कीर्तिः । 'न ते केवलम्' इत्यादावपि पारलौकिकनिरतिशयपापमात्रमित्यनुसन्धेयम् । प्रारब्धे पलायित इति कान्दिशीकतया प्रथमव्यापारमप्यकृत्वेति भावः । अव्ययशब्देनानिनाशित्वाभिधानात्स

प्र पा॥ *त्वद् धर्म्यमिमं पा॥ †क्षत्रियाणां पा॥ *‡भाष्ये क्षत्रियस्य स्वधर्मभूतमिति क्षत्रियस्येत्यंशः क्षत्रियवाचियुष्मच्छब्दसमभिव्याहारलभ्य इति चन्द्रिकायां स्पष्टम्, धर्म्यमिति मूलस्य स्वार्थे ष्यञाश्रयणेन स्वधर्मभूतमित्युक्तम् ॥

§मोहादज्ञानात्. पा॥ ¶धर्मस्य पा॥ ||निरतिशयां कीर्तिं च. पा॥ () निरतिशयं प्राप्स्यसि पा॥

†न केवलं पा॥ १ क्षत्रियपरः ग घ पा॥

*२ 'ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' इत्यत्र तत इत्यनेन पूर्वप्रकृतयुद्धस्याकरणमत्र परामर्शयोग्यमिति तत्र आरब्धत्वमर्थिकं विशेषणं भाष्ये प्रारब्धमित्यनेन प्रतिपादितमुत मूलमनर्थकं न स्यादित्याशङ्कायामाह चन्द्रिकायाम्—इममिति निर्देशाभिप्रेतमुक्तमिति, अत उक्तं प्रारप्स्यसि च । उक्तमित्यनेन मूलवैयर्थ्यशङ्का परिहृता । अत उक्तमित्यादिना प्रारब्धविशेषणवैयर्थ्यशङ्का परिहृता । क्षत्रियस्य युद्धानेदकरणं प्रत्यवायवहं, तदा सर्वदा क्षत्रियस्य युद्धोद्यमाभावात्सर्वदा तस्य प्रत्यवायप्रसङ्ग इति तदर्थं प्रारब्धत्वं युद्धे विशेषणमिति तत्सार्थक्यमिति भावः ॥

३ सप्यता घ ज झ, मवाप्स्य ग पा॥

४ इत्यादौ नापि घ ङ च छ झ पा।

५ इत्यप्यनुसन्धेयम् घ ज झ. पा।

श॥ एवं कर्तव्यताप्राप्तमपि—अथ इति ॥ अथ चेत् त्वम् इमं धर्म्यं धर्मादनपेतं विहितं सङ्ग्रामं युद्धं न करिष्यसि चेत् ततः तदकरणात् स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा केवलं पापम् अवाप्स्यसि ॥ ३३ ॥

न केवलं स्वधर्मकीर्तिपरित्यागः—अकीर्तिम् इति ॥ अकीर्तिं* चापि भूतानि कथयि

पा॥ *चापि युद्धे पा॥

रा॥इत्यव्ययां सर्वदेशकालव्यापिनीमकीर्तिं च समर्थान्यसमर्थान्यपि सर्वाणि भूतानि कथयिष्यन्ति। ततः किमिति चेत्—शौर्यवीर्यपराक्रमादिभिस्सर्वसंभावितस्य तद्विपर्ययजा ह्यकीर्तिर्मरणादतिरिच्यते ; एवंविधाया *अकीर्तेर्मरणमेव तव श्रेय इत्यर्थः ॥ ३४॥

रा॰अ॥ बन्धुस्नेहात्कारुण्याच्च युद्धान्निवृत्तस्य शूरस्य ममाकीर्तिः कथमागमिष्यतीत्यत्राह—

भयाद्रणादुपरतं मन्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५

रा॥येषां कर्णदुर्योधनादीनां महारथानामितः पूर्वं त्वं शूरो वैरीति बहुमतो भूत्वेदानीं

ता॥र्वकालव्यापित्वमुच्यताम्, सर्वदेशव्यापित्वं तु कथमुच्यते। इत्थं—यद्यकीर्तिस्सर्वदेशव्यापिनी न स्यात्, सर्वकालव्यापित्यपि न स्यात्, कालक्रमेण सङ्कोचाद्विच्छेदोपपत्तेः—इति। यद्वा देशतः कालतश्चान्यूनत्वमेवात्र अव्ययत्वं विवक्षितम्। भूतान्यपीति अपिशब्दान्वयः। चापीत्यनतिरिक्तार्थत्वे निष्प्रयोजनत्वम्। 'तत्रैते भूतानि' इति सामान्यनिर्देशात्, अपिशब्दान्वयवशाच्चोक्तं समर्थान्यसमर्थान्यपीत्यादि। अकीर्तेरिष्टत्वमाशङ्क्योत्तरार्धमुच्यत इत्याह—ततः किमिति। चशङ्कानिराकरणार्थः। अर्जुनस्य सम्भावितत्वहेतूनाह—शौर्येति। सर्वसम्भावितस्येति। पूर्वनिर्दिष्टैस्समर्थैरसमर्थैश्च भूतैस्सम्भावितस्येत्यर्थः। ननु मरणादतिरेकः किं हेयतया, उपादेयतया वा। न प्रथमः, 'जीवन् भद्राणि पश्यति' 'आत्मार्थे पृथिवीं त्यजेत्' इत्यादिवचनात्। न द्वितीयः प्रकरणविरोधादित्यत्राह—एवंविधाया इति। 'जीवन् भद्राणि' इत्यादिकं तु धर्मिष्ठपुत्रस्य तेऽत्र नोपादेयम्। न चेयमकीर्तिर्लघीयसी, येन मरणाच्छ्रेयसी स्यात्। किन्त्वेवंविधा सर्वकालदेशव्यापिनी, इयं च नरकायापि स्यात्, तथैव स्मृत्यादिसिद्धत्वात्। तथाचोत्तरस्मिन् रामायणे रघुनाथवाक्यम् 'अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित्। पतत्येवाधमान् लोकान्यावच्छब्दस्स कीर्त्यते' इति। युद्धे मरणे तु तत एव स्वर्गाय स्यादिति भावः॥३४॥

एवं धर्माधर्मभ्रमो निवारितः। अथास्थानस्नेहः क्षिप्यते 'भयात्' इत्यादिना। बन्धुस्नेहादित्यादि। शूरस्य सतः स्नेहकारुण्याभ्यां निवृत्तस्य मे कीर्तिरेव स्यादिति भावः। येषामित्यतिप्रसिद्धपरामर्शात्कर्णदुर्योधनादीनामित्युक्तम्। तेनापकारस्वर्गं स्मारयति। यद्यपि भीष्मादयो याथार्थ्यं जानीयुः, तथापि कर्णादयो न तथेति भावः। भूत्वेत्यस्य यास्यसीत्युत्तरक्रियैककर्तृत्वेन 'स्नात्वा होष्यामि' इत्यादिष्विव क्रियापेक्षया पूर्वेणापि भविष्यता कालेन सम्बन्धभ्रमव्युदासायोक्तम्—पूर्वमिति। बहुभिर्गुणैर्युक्तत्वेन मतो हि बहुमत इत्यभिप्रायेणाह—शूरो वैरीति। यदि शूरत्वे प्रागपि निर्वैरः, यदि च वैरी सन् शौर्यरहितः, तदा महारथा न त्वा गणयेयुरिति भावः। तत्क्षणावधि वैरानुवृत्तिसूचनायोक्तम्

प्र॰पा॥* अकीर्तेः, मरणान्मरणमेव. प॥ १. भारते॥ ३ क्षत्रियपुत्रस्य.पा॥ ४. सर्वदेशकालव्यया ग.ग घ.पा॥
२. 'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥' ५ रामायणे.उत्तरकाण्डे॥ ६. भोक्ष्यामि.ग.घ.ङ.झ.पा॥

शं॥ष्यन्ति ते तव अव्ययां दीर्घकालाम्। धर्मात्मा शूरः इत्येवमादिभिः गुणैः संभावितस्य च अकीर्तिः मरणात् अतिरिच्यते, संभावितस्य च अकीर्तेः वरं मरणम् इत्यर्थः ॥ ३४ ॥

किञ्च—भयात् इति॥ भयात् कर्णादिभ्यो रणात् युद्धात् उपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपया इति त्वां महारथाः दुर्योधनप्रभृतयः। के मंस्यन्ते इति? आह—येषां च त्वं दुर्योधनादीनां बहुमतो बहुभिः गुणैः युक्तः इत्येवं मतः बहुमतो भूत्वा

गा॥युद्धे समुपस्थिते निवृत्तव्यापारतया लाघवं सुग्रहता यास्यसि,ते महारथास्त्वां *भयाद्युद्धादुपरतं मंस्यन्ते। शूराणां हि वैरिणा शत्रुभयादृते बन्धुस्नेहादिना युद्धादुपरतिर्नोपपद्यते॥ ३५॥

रा अ॥ किञ्च—

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्?॥ ३६

रा॥ शूराणामस्माकं सन्निधौ कथमयं पार्थः क्षणमपि स्थातुं शक्नुयात्, अस्मत्सन्निधानादन्यत्र ह्यस्य सामर्थ्यमिति तव सामर्थ्यं निन्दन्तः शूराणामवाच्यवादांश्च बहून्वदिष्यन्ति तव शत्रवो धार्तराष्ट्राः तताऽधिकतरं दुःखं किं तव? एवंविधावाच्यश्रवणान्मरणमेव श्रेय इति त्वमेव मंस्यसे॥ ३६॥

रा अ॥अतश्शूरस्यात्मना परेषां हननमात्मनो वा परैर्हननमुभयमपि श्रेयसे भवतीत्याह—

हतो वा †प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥ ३७

ता॥—इदानीमिति। लाघवपदं सुग्रहता लाघवशब्देनोपचरिता। सुग्रहत्वं नाम सुग्रहत्वाभिमानविषयत्वम्, बन्धुस्नेहादिव्याजुक्ता शङ्का निराकरोति—शूराणां हीति। यदि शूरत्ववैरिभयादन्यतर न स्यात्, तदा युद्धेताप्यन्यथा सिद्धिरिति भावः॥ ३५॥

एवं प्राचीनमपकारं भविष्यत्प्राप्यापादकारोपं चाभिधाय पुनरागामिनाप्यपकारेणास्थानस्नेहत्वं द्रढयतीत्यभिप्रायेणाह—किञ्चेति। प्रस्तुतोदन्तपालनं सामर्थ्यनिन्दाप्रकारमाह—शूराणामस्माकमित्यादिना। शूराणामवाच्यवादांश्च बहूनिति शूरान् प्रति ये न वाच्याः किन्तु कातरानीचान् प्रति,तान् पारुष्याश्लीलपरिहासादिवादानित्यर्थः। अहितशब्दोऽत्र अवाच्यवादहेतुपरः इत्यभिप्रायेणाह—शत्रवो धार्तराष्ट्रा इति। यदि च भीष्मद्रोणकृपशल्यादयः स्थिता वदेयुः, तदा शौर्यगौरवादिना सह्येतापि। ऊर्ध्वं पुनस्सूरैश्शूराभिमानिभिर्महापकारिभिः कृतान् बहूनवाच्यवादान् सहेथा इति भावः। ननु गुणाभिनिवेशाद्विशब्देषु हि तरादीनौचित्यम्, न नात्यादिशब्देषु, नातः परतरं इत्यादिकं प्रयुज्यत इत्यत्राह—तत इति। ततोऽवाच्यवादात् तच्छ्रवणादिति यन्वितम्। दुःखशब्दः प्रातिकूल्यविशेषवाची। प्रतिकूलतरमितिवद् दुःखतरमित्युक्तमित्यधिकतरशब्देन प्रत्ययार्थ निष्कृष्य वदतो भावः। तवेति—नहि त्वं रथ्यापुरुषः, न च समाध्यादिनिष्ठः, येनात्र दुःखिता न स्यादिति भावः। त्वंशब्दः पूर्वश्लोकोक्तदुःखतरमरणतत्परः इत्याह—एवमिति। त्वमेव मंस्यसे इति—गाण्डीवसामर्थ्यादिनिन्दाप्रसङ्गे धर्मपुत्रमपि हि भवान् हन्तुमुद्योक्ष्यते, किं पुनः कर्णादीन्। अत इदानीं निवृत्तोऽपि तदा दुस्सहतरदुःखप्रेरितो युद्धं करिष्यसीति हृदयम्॥ ३६॥

'हतो वा' इति श्लोकं पूर्वश्लोकस्यावशेषतयावतारयति— अत इति। उभयथापि तव लाभ इति

प्र पा॥ * भयाद्रणादुपरतं पा॥ †प्राप्स्यसे पा॥

---

गा॥पुनः त्वं यास्यसि लाघवं लघुभावम्॥ ३५॥

किञ्च—अवाच्यवादान् इति॥ अवाच्यवादान् अवक्तव्यान् वादान् च बहून् अनेकप्रकारान् वदिष्यन्ति तव अहिताः शत्रवः निन्दन्तः कुत्सयन्तः तव सामर्थ्यम्। ततः

रा॥धर्मयुद्धे परैर्हतश्चेत्तत एव परमनिःश्रेयसं प्राप्स्यसि ; परान्वा हत्वा *अकण्टकं राज्यं भोक्ष्यसे ; अनभिसंहितफलस्य युद्धाख्यस्य धर्मस्य परमनिःश्रेयसोपायत्वात् तच्च परमनिःश्रेयसं प्राप्स्यसि; †तस्माद्युद्धायोद्योगः परमपुरुषार्थलक्षणमोक्षसाधनमिति निश्चित्य तदर्थमुत्तिष्ठ । कुन्तीपुत्रस्य ‡तवैतदेव युक्तमित्यभिप्रायः ॥ ३७ ॥

रा-अ॥मुमुक्षोर्युद्धानुष्ठानप्रकारमाह—

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
३८ ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥

रा॥एवं देहातिरिक्तमसंस्पृष्टसमस्तदेहस्वभावं नित्यमात्मानं ज्ञात्वा §युद्धे चावर्जनीय-

ता॥भाव॥ 'प्राप्स्यसे,भोक्ष्यसे'इत्यर्जुनं प्रत्यभिधानेऽपि शूरस्येत्यादिसाधारणाभिधानं भीष्मादिहननस्य तच्छ्रेयोहेतुतया शोकहेतुत्वं नास्तीति ज्ञापनार्थम् । श्रेयस इत्यनेन यथेच्छं स्वर्गराज्यादिसुखापवर्गान् सङ्गृह्णाति । न हि हतत्वमात्रात्पुरुषार्थ इत्यत उक्तं—धर्मयुद्धे इति । तत एवेति । श्रेयस्साधनतया शास्त्रसिद्धहननादेवेत्यर्थः । परमनिःश्रेयसमिति । स्वर्गशब्दोऽत्रामृतत्वप्रकरणात्परमनिःश्रेयसपरस्तत्सानपरो वा । यथा 'स एतेन प्राज्ञेनात्मनाऽमुष्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वा अमृतस्समभवत्' 'अनन्ते स्वर्गे लोकेऽज्येये प्रतितिष्ठति' 'स्वर्गलोका अमृतत्वं भजन्ते' इति, 'राज्यं सुराणामपि चाधिपत्यम्' इति क्षुद्रस्वर्गापेक्षकार्जुनोद्देशेन वचनाध्याहार्यमेवार्थ इति भावः । परान्वा हत्वेति । महारथानां भीष्मद्रोणकर्णादीनां जयो हि हननमन्तरेण न युज्यत इति भावः।'जित्वा भोक्ष्यसे' इत्युभाभ्यां फलितमुक्तम्—अकण्टकमिति । प्रतिकूलेषु जाग्रत्सु राज्यं सिद्धमपि हि न भोगाय स्यादिति भावः । अर्जुनानादृतराज्यभोगमात्रपर्यवसानव्युदासायाह—अनभिसंहितेति। मुमुक्षोर्हि राज्यभोगादिरानुषङ्गिकः। संबुद्धितात्पर्यमाह—कुन्तीपुत्रस्येति।'सूत सूते क्षत्रिया राजपुत्री'इति हि प्रसिद्धम्।नहि सिंहीसुतेन हरिणीसुतस्याचरितमनुसरणीयम् । न च शुद्धक्षेत्रजन्मना त्वया महीयसो धर्मस्य विच्छेदः कार्य इतिभावः ॥

एवमस्थानस्नेहकारुण्यधर्माधर्मधियाकुलत्वमुपशमितम् । अथ धर्मत्वेन स्थापितस्य मुमुक्षुविषयानुष्ठानप्रकारं वदतीत्याह—मुमुक्षोरिति । न हि राज्यादिकामिनामीदृशी बुद्धिरपेक्षिता । अतोऽल्पास्थिरदुःखमिश्रसुखप्राप्त्यफलेन किं ममेति नाशङ्कनीयमिति भावः । पूर्वोक्तमात्मतत्त्वज्ञानमनुष्ठानदशायामनुवर्तनीयतया दर्शयति—एवमिति । देहातिरिक्तमिति । सति धर्मिणि हेयविरहादिधर्मचि-

प्र-पा॥*निष्कण्टकं पा॥ †तस्माद्युद्धायोत्तिष्ठ. पा॥ ‡तव तदेव.पा॥ §युद्धं तु.पा॥ १ ऐतरेयोप ३-अ.४, २. एतेनैव. पा, ३.नास्माल्लोकादुत्क्रम्यामुष्मिन्. इति तत्रत्यपाठः ॥

४. केनोप ४.खं.३४॥ ५. कठोप.१.१.१३॥ ६ गी.२.८॥ *७.परान्वा हत्वेति जित्वेति मूलस्य हत्वेति व्याख्याने निमित्तमाह—महारथानामित्यादिना॥

८. *९. 'सुखदु खे समे कृत्वा' इत्यादिश्लोकावतारिकाया भाष्ये मुमुक्षोरित्याधिकारिविशेषनिर्देशस्य प्रयोजनमाह—नहीति ॥

*१०. अल्पास्थिरदुःखमिश्रेति पाठेऽन्वितम् ॥

*११.असंस्पृष्टदेहस्वभावमित्यतः प्राक् देहातिरिक्तमित्यस्य भाष्ये कीर्तनस्य प्रयोजनमाह—सति धर्मिणीति॥

शा॥तस्मात् निन्दाप्राप्तेः दुःखात् दुःखतरं नु किम्? ततः कष्टतरं दुःखं नास्ति इत्यर्थः॥३६

युद्धे पुनः क्रियमाणे *कर्णादिभिः—हतो वा इति॥ हतो वा प्राप्स्यसि स्वर्गम्, हतः सन् स्वर्गं प्राप्स्यसि । जित्वा वा कर्णादीन् शूरान् भोक्ष्यसे महीम् । उभयथापि तव लाभ एव इत्यभिप्रायः । यत एवं तस्मात् उत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः 'जेष्यामि

पा॥ कर्णादिभि कि. पा॥

रा॥ शस्त्रपातादिनिमित्तसुखदुःखार्थलाभालाभजयपराजयेष्वविकृतबुद्धिः स्वर्गादिफलाभिसन्धिरहितः केवलकार्यबुद्ध्या युद्धमारभस्व। एवं कुर्वाणो न पापमवाप्स्यसि,पापं दुः-

ता॥न्तेति भावः।पौनरुक्त्यभ्रमपरिहाराय लाभालाभयोर्धनादिविषयत्वमुक्तम्।विषमयोस्सुखदुःखप्रवाहयोस्समीकरणं कथमित्यत्रोक्तम्—अविकृतबुद्धिरिति । विकारो हर्षशोकादिरूपः; तदभावकथनेन विशेषादिमतत्वान्तर्गतानवमादानुद्धर्षयोर्ग्रहणम्। युद्धायेति । तादर्थ्यविभक्तिसूचितान्यार्थत्वनिवृत्तिरुच्यते—स्वर्गादीति । 'मा फलेषु कदाचन' 'एतान्यपि तु' इत्यादिवक्ष्यमाणमत्रानुसंहितम् । तत इत्यस्योपयुक्तहेतुविशेषपरत्वमेवोचितम् , आनन्तर्यादिपरत्वं तु अनुपयुक्तमित्यभिप्रायेणाह—केवलकार्यबुद्ध्येति । पापशब्दोऽत्र न गुरुवधादिशङ्कितपापपरः, युद्धस्य स्वधर्मतामात्रेण तन्निवृत्तौ सुखदुःखसमाम्यादिबुद्धिविशेषस्यैवाभिधानेऽपि तस्य नैरर्थक्यप्रसङ्गात् । नैव च कृतपापपरः,नावाप्स्यसीत्यनन्वयात् ।

प्र पा॥ *१ सुखदुःखयोस्समत्वप्रतिपादनेनैव सुखसाधनत्वलाभयोः समत्वमपि प्रतिपादितमेवेति लाभालाभाविति पुनरुक्तं स्यादिति तत्परिहाराय लाभालाभावितिपदमर्थलाभतदलाभपरतया भाष्ये व्याचष्ट इत्याह—पौनरुक्त्यभ्रमपरिहारायेति ॥

*२ विषमयोः सुखदुःखयोः समीकरणमशक्यं कथं कर्तुं शक्यमित्याशङ्का परिहर्तुं गीतायां कण्ठतोऽनुक्तमपि 'अविकृतबुद्धिः' इत्येतदुक्तं भाष्ये इत्याह— विषमयोरित्यादिना । तथा च सुखदुःखयोस्समत्वं तदनुभवाधीनविकाररहित्यविवक्षितमिति नानुपपत्तिरिति भावः ॥

*३ मुमुक्षोर्हर्षशोकरूपविकाररहित्यं मोक्षसाधनीभूतपरमात्मोपासने कथमुपयुज्यते । धर्माणामेव हि वर्णाश्रमविहितानां तत्रोपयोग इत्याशङ्कायां साधनसप्तकेऽन्तर्भावेनाङ्गतयैवास्योपयोग इत्याह—विकारादीति ॥

४. गी २ ४७॥

५ गी-१८. ६ ॥

*६. भाष्ये केवलकार्यबुद्ध्येत्येतत् तत इत्यस्य व्याख्या, तत इत्यस्य निरुक्तबुद्धिविशेषहेतुकत्वार्थकत्वादानन्तर्यार्थकत्वं तु तस्य निरर्थकमित्याह—आनन्तर्यादीति ॥

*७ 'नैव पापमवाप्स्यसि' इत्यत्र पापशब्दस्य संसारपरत्वं भाष्ये प्रतिपादितम् । तदपेक्षया शङ्कितगुरुवधादिरूपपापपरत्वमत्र वक्तुं युक्तम्, न स्यैव 'अहो बत महत्पापं कर्तुं व्यवसिता वयम्' इति पूर्वं प्रसक्तत्वादित्याशङ्क्य युद्धे गुरुवधादिकर्मण्यपि धर्मत्वस्थापनेनैव तत्राधर्मत्वाधीनपापत्वबुद्धेर्गुरुवधादौ प्रशमितत्वेन पुनश्च तादृशपापशङ्काया अनुदयात् न तादृशपापप्रतिषेधोऽत्र वक्तव्य इति संसार एवात्र पापमूलकत्वात् लक्षणया पापशब्दार्थ इत्यभिप्रायेण संसारपरत्वं पापशब्दस्योक्तमित्याह — पापशब्दोऽत्रेत्यादिना ॥

*८ युद्धस्य स्वधर्मतामात्रेण — स्वधर्मत्वोपदेशमात्रेण । तन्निवृत्तौ—गुरुवधादौ पापशङ्कानिवृत्तौ ॥

*९. न चानुपपन्नप्रतिषेधप्रसङ्गेन न गुरुवधादिरूपशङ्कितपापपरत्वम् , अत्र पापशब्दस्य निरुक्तबुद्धिविशेषस्य पापपरिहारप्रयोजकतापरस्य च शब्दस्य निरुक्तभाष्यत्वानुवादरूपस्य वैयर्थ्यादपि न तत्परत्वमित्यभिप्रायेण भाष्ये संसारपरत्वमुक्तमित्याह सुखदुःखसमाम्यादीति ॥

*१० ननु मास्तु गुरुवधादिरूपशङ्कितपापपरत्वम् , अस्य कृतपापान्तरपरत्वं किं न स्यादित्याशङ्क्याह—न चेति । कृतपापपरः —अविप्रतिपन्नाचरितपापान्तरपरः । नावाप्स्यसीत्यनन्वयादिति—कृतपापस्य भूतत्वेन लृडर्थभविष्यत्वान्वितप्राप्तिकर्मत्वस्य तत्राप्रसक्तत्वेन तन्निषेधायोगादिति भावः ॥

श ॥ शत्रून्, मरिष्यामि वा' इति निश्चयं कृत्वा इत्यर्थः ॥ ३७ ॥

तत्र स्वधर्मः इत्येवं युद्ध्यमानस्य उपदेशमिमं शृणु—सुखदुःखे इति ॥ सुखदुःखे समे तुल्ये कृत्वा, रागद्वेषौ अकृत्वा इत्येतत् । तथा लाभालाभौ जयाजयौ च समौ

रा॥स्वरूपं संसारं नावाप्स्यसि ; संसारबन्धनान्मोक्ष्यस इत्यर्थः ॥ ३८ ॥

रा-आ॥एवमात्मयाथात्म्यज्ञानमुपदिश्य तत्पूर्वकं मोक्षसाधनभूतं कर्मयोगं वक्तुमारभते—

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९

ता॥करिष्यमाणे च न प्रायश्चित्तम्। न च विद्याव्यतिरिक्तेषूत्तराश्लेषः। अतोऽत्रामृतत्वप्रकरणान्मुमुक्ष्व-पेक्षयानिष्टफलत्वाविशेषेण पुण्यपापरूपसकलसांसारिककर्मपरः। ततश्च तत्फलभूतसंसारोऽत्र लक्ष्यत इत्यभिप्रायेणाह—दुःखरूपं संसारमिति। 'नैवं पापमवाप्स्यसि' इत्युक्ते पापहेतुत्वाभावमात्रं प्रति-भातीत्यत आह—संसारबन्धादिति। परम्परयेति शेषः। 'सोऽमृतत्वाय कल्पते' इति पूर्वोक्तमिह स्मारितम् ॥ ३८ ॥

अथ पूर्वप्रकरणोक्तशोकापनोदनहेतुषु प्रधानार्थेनोत्तरप्रकरणारम्भं सङ्गमयति—एषेति ।

प्र-पा॥[*] १.ननु मास्तु अत्र पापशब्दस्य कृतपापपर-त्वम्, करिष्यमाणपापपरत्वं किं न स्यादित्यत्राह—करिष्यमाणे च न प्रायश्चित्तमिति। 'नैव पापमवा-प्स्यसि' इत्यनेनादृशममत्वबुद्धियुक्तस्वधर्मरूपयुद्धानुष्ठा-नस्य प्रायश्चित्तविधयैव पापपरिहारहेतुत्वं नाभ्यन्, प्रायश्चित्तं च कृतपापस्यैव धर्मशास्त्रेषु प्रसिद्धम्, न तु करिष्यमाणपापस्येत्यतो न युक्तमत्रत्यपापशब्दस्य करिष्यमाणपापपरत्वमिति भाव ॥

[*] २ ननु मास्तु प्रोक्तममत्वबुद्धिममवहि-तस्य युद्धस्य स्वधर्मस्य प्रायश्चित्तविधया भविष्यत्कालीन-पापपरिहारकत्वं कृतपापस्यैव प्रायश्चित्तापनोद्यत्वात्, अथापि करिष्यमाणपापाश्लेषापादकत्वमेवात्र विवक्षित 'नैव पापमवाप्स्यसि' इत्यनेनेत्यत्राह—न च विद्याव्य-तिरिक्तेषूत्तराश्लेष इति। विद्याव्यतिरिक्तेषु ब्रह्म-विद्याव्यतिरिक्तेषु कर्मस्वित्यर्थः। उत्तराश्लेष. उत्तराश्लेषापादकत्वम्। तथा च 'एवंविदि पापं कर्म न श्लिष्यते' इत्यादिभिर्वेदान्तवाक्यै ब्रह्मविद्याया एव उत्तराघाश्लेषप्रयोजकत्वप्रतिपादनात्, तथैव शा-रीरके 'उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्या-दिषु स्थापनात् करिष्यमाणपापाश्लेषापादकत्वपरत्वम-पि नैवमित्यादिवाक्यस्य न वक्तुं युक्तमित्यर्थः। तत श्च शङ्कितपापपरत्वस्य कृतपापान्तरपरत्वस्य करिष्य-माणपापपरत्वस्य चोक्तरीत्या अयोगात् परिशेषात् पापशब्दोऽत्र लक्षणया संसारपर एव ॥

[*] ३. कथं संसारस्य पापशब्दप्रवृत्तिनिमित्त-योग, अनिष्टहेतु. हि पापशब्दप्रवृत्तिनिमित्तमि-ति चेत्—मोक्षप्रकरणात् मुमुक्षोः मोक्षविरोधित्वेन पुण्यपापयोरुभयोरप्यनिष्टावहत्वात् पापशब्दवाच्य-त्वेन तत्कार्यस्य संसारस्य लक्षणया तच्छब्दवाच्यत्व-मित्यभिप्रायेण पापमित्यस्य संसारमित्यर्थो भाष्ये कथित इत्याह—अत इत्यादिना ॥

[*] ४. पापशब्दस्योक्तरीत्या सांसारिकपुण्यपा-परूपकर्मपरत्वेऽपि 'नैवं पापमवाप्स्यसि', इत्यनेन पाप-कर्तृत्वं तव न भविष्यतीत्यर्थकत्वाश्रयणेऽपि संसार-बन्धं नावाप्स्यसीत्यर्थः फलित इति तदभिप्रायेण स-सारबन्धादिति भाष्यमवतारयितुमित्याह—नैवं पापमवा-प्स्यसीत्युक्ते पापहेतुत्वाभावमात्रं प्रतिभातीत्यतेति। पापहेतुत्वं—पापकर्मकर्तृत्वरूपं तद्धेतुत्वं विवक्षितम्। मात्रपदेन संसारबन्धाभावभानस्य व्यवच्छेदः ॥

५. मात्रपदं पा ॥

[*] ६. एवमपि परम्परया संसारबन्धाभावो लभ्य-ते। पापकर्माकरणेन संसारे स्वभावः, तदभावात्सं-सारौपयिकप्रवृत्तिविरहः, ततस्संसारबन्धान्मोक्षणम्, इतिरीत्या संसारबन्धनिवृत्तिः फलितेति फलितार्थो भाष्ये संसारबन्धादित्यादिनोक्त इत्यभिप्रायेणाह—परम्परयेति शेषइति ॥

गी॥कृत्वा ततो युद्धाय युज्यस्व। न एवं युद्धं कुर्वन् पापम् अवाप्स्यसि। एष उपदेशः प्रासङ्गिकः ॥ ३८ ॥

शोकमोहापनये लौकिको न्यायः 'स्वधर्ममपि चावेक्ष्य' इत्याद्यैः श्लोकैः उक्तः,

रा॥संख्या बुद्धिः; बुद्ध्याऽवधारणीयमात्मतत्त्वं सांख्यम्। ज्ञातव्ये आत्मतत्त्वे तज्ज्ञानाय या बुद्धिरभिधेया; 'न त्वेवाहम्' इत्यारभ्य 'तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि' इत्यन्तेन सैषा तेऽभिहिता। आत्मज्ञानपूर्वकमोक्षसाधनभूतकर्मानुष्ठाने यो बुद्धियोगो वक्तव्यः; स इह योगशब्देनोच्यते। *'दूरेण ह्यवरं कर्म बुद्धियोगात्' इति हि वक्ष्यते। तत्र योगे या बुद्धिर्वक्तव्या, तामिमामभिधीयमानां शृणु; यया बुद्ध्या युक्तः कर्म

ता॥तत्पूर्वकशब्देनात्मज्ञानकर्मयोगयोः क्रमाभिधानौचित्यमुक्तम्; आत्मयाथात्म्यज्ञानोपदेशानन्तरं तच्चिन्तनरूपज्ञानयोगाभिधानस्यौचित्येऽपि तस्य कर्मयोगसाध्यत्वात्प्रथमं कर्मयोग उच्यते। पश्चात्तु तत्फलतया [1]'प्रजहाति यदा कामान्' इत्यादिना ज्ञानयोगो वक्ष्यते। **वक्तुमिति**—प्रसक्तं प्राधान्येन प्रपञ्चयितुमित्यर्थः। सांख्ययोगाख्यवेदविरोधितन्त्राभिधानभ्रमं सांख्यशब्दस्यात्र [2]'ज्ञानयोगेन सांख्यानाम्' इति वक्ष्यमाणज्ञानयोगविषयत्वभ्रमं च व्युदस्यन्नाह—**संख्येति**। 'बुद्धिर्मनीषा मेधा संख्या संवित्तिरुपलब्धिः' इति नैघण्टुकाः। [4]'पुरुषं निर्गुणं सांख्यम्' इत्याद्यौपनिषदप्रसिद्ध्या परमात्मवदात्मन्यपि सांख्यशब्द उपपन्नः। न च 'ज्ञानयोगेन सांख्यानाम्' इत्यादिष्वर्थवैरूप्यप्रसङ्गः, तद्बुद्धियोगेन सर्वत्र तच्छब्दप्रयोगात्। सदपि च वैरूप्यं प्रकरणाद्यानुगुण्येन सर्वत्र सह्यते। एकवचनमत्र जात्यभिप्रायत्वज्ञापनाय—**आत्मतत्त्वमित्युक्तम्**। **तज्ज्ञानायेत्यनेन** तन्निर्णयमात्रमव्यवहितफलमिति दर्शितम्। **बुद्धिरिति**। निर्णयफला वाक्ययुक्तिपरामर्शगर्भा बुद्धिर्विवक्षितेति [5]न साध्यसाधनभावविरोधः। अथवा बुद्धिरिह शास्त्रनिष्पाद्यो निर्णयः। **तज्ज्ञानायेति** साक्षात्कारादिपरः। आत्मतत्त्वाभिधानप्रदेशमवच्छिद्याह—**नत्वेवेति**। ततः परस्तात्तु स्वधर्ममित्यादिना धर्माधर्मप्रमादस्थानस्नेहयोराक्षेपो हि नियत इति भावः। योगशब्दस्यात्र प्रकरणादिविशेषितमर्थमाह—**आत्मज्ञानेत्यादिना**। इदं त्वभिप्रेतं विवृणोति—**दूरेणेति**। **इमामिति** निर्देशसूचितमविलम्बिताभिधानमाह—**अभिधीयमानामिति**। एतेनानुष्ठानानु-

प्र-पा॥*गी. २. ४९॥ १. गी. २. ५५॥ *५ न साध्यसाधनभावविरोध —तज्ज्ञानायेत्यनेनात्मसाध्यसाधनभावविरोध इत्यर्थः॥
२. गी. ३. ३॥ ३
४ मन्त्रिकोपनिषदि, १४. वा॥

शा॥न तु तात्पर्येण। परमार्थदर्शनं तु इह प्रकृतम्। तच्च उक्तम् उपसंह्रियते—एषा ते अभिहिता इति शास्त्रविषयविभागप्रदर्शनाय। इह हि प्रदर्शिते पुनः शास्त्रविषयविभागे उपरिष्टात् 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति निष्ठाद्वयविषयं शास्त्रं प्रवर्तिष्यते, श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्ति इति; अत आह—**एषा ते अभिहिता इति**॥ एषा ते तुभ्यम् अभिहिता उक्ता सांख्ये परमार्थवस्तुविवेकविषये

आ॥सांख्यं ज्ञानम्। 'शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते' इति भगवद्वचनाद्व्यासस्मृतौ। योग उपायः, 'दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये' इति प्रयोगाद्भागवते। नेतरौ सांख्ययोगौ उपादेयत्वेन विवक्षितौ। कुत्रचित्सामस्त्येन कर्मयोग इत्यादि-

ज॥पूर्वप्रकरणोपसंहारपूर्वकं तत्सङ्गतत्वेनोत्तरप्रकरणारम्भप्रतिज्ञार्थम् 'एषा तेऽभिहिता' इत्युक्तम्। तत्र सांख्ययोगशब्दौ कापिलपातञ्जलशास्त्रवचनाविति प्रतीतिनिरासाय व्याचष्टे—**सांख्यमिति**। प्रतीतार्थावेव कुतो न स्यातामित्यत आह—**नेतराविति**। इतरौ शास्त्रलक्षणौ। कुत्रचिदागमे एतौ तूपादेयौ, 'बुद्ध्या युक्तः' इत्यादिवचनात्। अतो न तावत्र विवक्षिताविति वाक्यशेषः। प्रकृतिपुरुषविवेकादेस्तदुक्तस्योपादेयत्वात् कथमेतदित्यत उक्तम्—**सामस्त्येनेति**। एकदेशस्योपादेयतया तदुपादेयत्वे सौगता-

रा॥बन्धं प्रहास्यसि ; कर्मणा बन्धः कर्मबन्धः संसारबन्ध इत्यर्थः ॥ ३९ ॥

रा-श्र॥वक्ष्यमाणबुद्धियुक्तस्य कर्मणो माहात्म्यमाह—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४०

रा॥इह कर्मयोगे नाभिक्रमनाशोऽस्ति

ता॥प्रविष्टबुद्धेस्तद्विषयाभिधीयमानबुद्धेश्च भेदोऽपि दर्शितः।यद्वाऽनुष्ठानप्रकारविषयबुद्धिजनकमभिधानं शृण्वित्यर्थः। एतेन कर्मयोगशब्दोऽप्यष बुद्धिविशेषयोगमूल इति दर्शितम्। बुद्ध्या येत्यनयोर्वैयधिकरण्येन क्रियाद्वयान्वयभ्रमं निरस्यति—यया बुद्ध्या युक्त इति । कर्मबन्धशब्दस्यानतिशयितार्थसमासान्तरमपाकरोति—कर्मणा बन्ध इति। 'तृतीया तत्कृतार्थेन गुणवचनेन' इति तत्पुरुषः।बन्धशब्दस्यात्र मुख्यार्थासम्भवात् अभिप्रेतमाह—संसारेति। एतेनानुष्ठीयमानकर्मसम्बन्धहानभ्रमोऽपिनिरस्तः॥३९॥

नन्विमां शृण्वित्युक्तेऽनन्तरं व्यवसायेत्यादि वक्तव्यम्, मध्ये 'नेहाभिक्रम' इत्येतत् मद्धच्छतइत्यत्राह—वक्ष्यमाणेति । उपक्रमे माहात्म्यकथनेन बुभुत्सातिशयजननाय प्ररोचना क्रियत इति भावः । इहेत्यनेन सूचितं कर्मान्तरेभ्यो वैलक्षण्यमाह—कर्मयोग इति । अभिमुखक्रमणशङ्कां व्युदस्यति—

प्र-पा॥*१. भाष्ये कर्मणो बन्ध इति षष्ठीतत्पुरुषमुपेक्ष्य कर्मणा बन्ध इति तृतीयातत्पुरुषाश्रयणे बीजमाह—कर्मबन्धशब्दस्येति । विवक्षिताधिकार्थबोधकसमासाश्रयणापेक्षया तदबोधकसमासाश्रयणमन्याय्यमित्यभिप्रायेण।कर्मनिदानितार्थबोधकसमासान्तरमिति । अधिकार्थबोधकसमासान्तरमित्यर्थः । अधिकार्थं, कर्माधीनप्रकृतिसम्बन्धरूपो विवक्षितार्थः । स च कर्मणा बन्ध इति तृतीयासमासेनैव लभ्यः, तद्बोधकत्वं न षष्ठीतत्पुरुषस्येति तदाश्रयणं न युक्तमिति तदपाकरोतीत्यर्थः ॥ २ अष्टाध्याय्या. २-१-३०.

शां॥बुद्धिः ज्ञानं साक्षात् शोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम्।योगे तु तत्प्राप्त्युपाये निस्सङ्गतया द्वन्द्वप्रहाणपूर्वकम् ईश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च इमाम् अनन्तरमेव उच्यमानां बुद्धिं शृणु । तां बुद्धिं स्तौति प्ररोचनार्थम्—बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धं कर्म एव धर्माधर्माख्यः बन्धः कर्मबन्धः तं प्रहास्यसि ईश्वरप्रसादनिमित्तज्ञानप्राप्त्या एव इत्यभिप्रायः ॥ ३९ ॥

किञ्च अन्यत्—नेह इति ॥ न इह मोक्षमार्गे कर्मयोगे अभिक्रमनाशः अभिक्रमणम् अभिक्रमः प्रारम्भः तस्य नाशो नास्ति यथा कृष्यादेः,योगविषये प्रारम्भस्य न अनैकान्तिकफलत्वम् इत्यर्थः । किञ्च—न अपि चिकित्सावत् प्रत्यवायः विद्यते । *किं तु स्वल्पमपि

आ॥प्रयोगाच्च । निन्दितत्वाच्चेतरयोर्मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पञ्चरात्रस्तुत्या ।

ज्ञा॥देरपि तत्प्रसङ्ग इति भावः । इतोऽपि न योगः पातञ्जलशास्त्रमित्याह—कर्मेति । अस्मिन्नेव योगे 'कर्मयोगो विशिष्यते' इत्यादिप्रयोगाच्च । न हि शास्त्रे कर्मयोगशब्दोऽस्तीति । न केवलमुपादेयत्वाभावादितरौ विवक्षितौ, किन्त्वित्यत आह—निन्दितत्वादिति । कथं निन्दितत्वमित्यत आह—भिन्नेति। 'सांख्य योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा' इति सांख्यादीनां विरुद्धमतत्वमुक्त्वा 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते' इति पञ्चरात्रस्तुत्या निरुद्धानामितरस्तुतिरपरनिन्दा गमयतीति प्रसिद्धमेवेति भावः । एवं तर्हि

पा॥ *किं तु भवति स्वल्प. पा ॥

रा॥अभिक्रम आरम्भः, नाशः फलसाधनभावनाशः,आरब्धस्यासमाप्तस्य विच्छिन्नस्यापि ■ निष्फलत्वम्,आरब्धस्य विच्छेदे *प्रत्यवायोऽपि न विद्यते; अस्य कर्मयोगाख्यस्य धर्मस्य स्वल्पांशोऽपि महतो भयात् संसारभयात् त्रायते।अयमर्थः।†'पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते' इत्युत्तरत्र प्रपञ्चयिष्यते। अन्यानि हि लौकिकानि वैदिकानि च साध-

ता॥अभिक्रम आरम्भ इति। उपक्रमशब्दवदयमिति भावः।नियारूपस्याभिक्रमस्य कथमविनाशित्वमित्यतो नाशः फलसाधनभावनाश इति । तात्पर्यमाह—आरब्धस्येति । प्रत्यवायशङ्काहेतुं दर्शयन् द्वितीयं पादं व्याकरोति—आरब्धस्य विच्छेद इति । उक्तविवरणरूपमुत्तरार्धं व्याख्याति—अस्येति । संसारभयादिति । महत्त्वविशेषितं भयं संसारभयमेव हीति भावः । स्वल्पांशस्यापि संसारनिवृत्तिहेतुत्वे देशकालादिवैगुण्यात्प्रमादिकाद्गत्यकरणादिना च विच्छिन्नस्याप्यवश्यं पुनरनुसन्धानादिति दर्शयन्नस्य श्लोकस्योक्तार्थकपरत्वे सङ्ग्रहविस्तररूपत्वेन वक्ष्यमाणापौनरुक्त्यं चाह—अयमर्थ इति। कृतांशस्य कथं नाशप्रसङ्ग इति शङ्कायामिहत्यस्य व्यवच्छेद्यं दर्शयति—अन्यानि हीति । लौकिकानीत्यतिशङ्काहेतुदृष्टान्त उक्तः । वैदिकानीति सामान्यनिर्देशस्याय भावः—नित्यनैमित्तिकान्यपि वि-

प्र-पा॥ *प्रत्यवायो वा. पा॥ †गी. ६-४०॥ १ इत्याह ग ग घ. ङ. पा॥ ^२. अत्र नाशशब्दो ह्यन्यर्थक, न तु ध्वमार्थक इति बोध्यम्॥ ^३ वक्ष्यमाणापौनरुक्त्य—वक्ष्यमाणेनापौनरुक्त्यमित्यर्थः ॥

शा॥अस्य धर्मस्य योगस्य अनुष्ठितं त्रायते रक्षति महतः भयात् संसारभयात् जन्ममरणादिलक्षणात् ॥ ४० ॥

आ॥वेदानां त्वेकार्थत्वान्न विरोधः। पार्थक्य तु सांख्याद्यपेक्षया युक्तम्, तत्रैव चित्रशिखण्डिशास्त्रे पञ्चरात्रमूले वेदैक्योक्तेश्च । एवमेव सर्वत्र सांख्ययोगशब्दः उपादेयवाचको वर्णनीयः। युक्तेश्च ज्ञानं पूर्वं जीवमुक्तम्। उपायश्च वक्ष्यते। बुध्यतेऽनयेति बुद्धिः । सांख्य-

ज॥वेदारण्यकस्यापि निन्दा स्यादित्यत आह—वेदानां त्विति । एकार्थत्वात्तत्त्वज्ञानेन । ज्ञानान्येतानि भिन्नानीति पार्थक्योक्तेः कथमेकार्थत्वमित्यत आह—पार्थक्यं त्विति । युक्तमित्यनेन तेषामेव प्रकृतत्वादित्यभिप्रैति । तथात्र आद्यवाक्ये वेदारण्यकपदेन पञ्चरात्रमुत्तरवाक्ये च पञ्चरात्रपदेन वेदारण्यकमुपलक्ष्यते इति भावः। वेदपञ्चरात्रयोरेकार्थत्वं कुत इति चेत् —उदाहृतमोक्षधर्मवाक्यार्थान्यथानुपपत्त्या तावत् । अपरं प्रमाणमाह—तत्रैवेति । मोक्षधर्म एव 'ये हि ते यतयः ख्याताः सप्तचित्रशिखण्डिनः । तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्। वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ' इत्यादिना चित्रशिखण्डिशास्त्रस्य वेदैक्योक्तेश्च असङ्गतमेतदित्यत आह—पञ्चरात्रेति'। पञ्चरात्रमूलकस्येत्यर्थः । एतच्च वैखानससंहितोपक्रम एव प्रसिद्धम् । अत एतद्व्याख्यानं 'ज्ञानयोगेन सांख्यानां' 'सांख्ययोगौ पृथग्बालाः' इत्यादावप्यतिदिशति—एवमेवेति । शब्द इति जात्यभिप्रायमेकवचनम् । इतोऽप्यत्र सांख्ययोगशब्दौ ज्ञानोपायवाचिनावित्याह—युक्तेश्चेति । तामेव युक्तिं दर्शयति—ज्ञानं हीति । अत्रोक्तवक्ष्यमाणयोरर्थयोः सांख्ययोगशब्दौ प्रयुक्तावुक्तवक्ष्यमाणार्थौ ज्ञानोपायावेवेति तदर्थावेतौ युक्ताविति । जीवं ज्ञानमिति । जीवस्य तत्त्वमित्यर्थः । यद्यपीश्वरतत्त्वं चोक्तम्, तथापि तादर्थ्येनेत्यदोषः । ननु बुद्धिर्ज्ञानं तदुत्पादकत एव न तत्त्वाभिहितं नापि श्रूयते। तत्कथमुच्यते 'सांख्ये बुद्धिरभिहिता, योगे त्विमां शृणु' इति; तत्राह—बुध्यते इति। वागिति शेषः । ननु सांख्यं न वाचोऽधिकरणं तत्कथं सप्तमी, किमर्थं च प्रसिद्धवाक्शब्दपरित्यागेन अप्रसिद्धबुद्धिशब्दोपादानमित्यत आह—सांख्येति ।

रा॥नानि विच्छिन्नानि न फलाय भवन्ति, प्रत्यवायाय च भवन्ति ॥ ४० ॥

रा-अ ॥ काम्यकर्मविषयाया बुद्धेर्मोक्षसाधनभूतकर्मविषयां बुद्धिं विशिनष्टि—

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**

**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥** ४१

रा ॥ इह शास्त्रीये सर्वस्मिन् कर्मणि व्यवसायात्मिका बुद्धिरेका—मुमुक्षुणाऽनुष्ठेये कर्मणि बुद्धिर्व्यवसायात्मिका *बुद्धिः; व्यवसायो निश्चयः, सा हि बुद्धिरात्मयाथात्म्य-निश्चयपूर्विका । काम्यकर्मविषया तु बुद्धिरव्यवसायात्मिका; †तत्र हि कामाधिकारे ‡देहातिरिक्तात्मास्तित्वज्ञानमात्रमपेक्षितम्, नात्मस्वरूपयाथात्म्यनिश्चयः; स्वरूपयाथा-

ता॥च्छेदे सति न फलाय स्युः; प्रत्यवायाय च भवेयुः। अगस्त्यादिमूलमीपद्वैकल्यमात्र हि तत्र सह्यम्। काम्येषु स्वङ्गवैकल्येऽपि नैष्फल्यमिति विशेष इति प्रत्यवायाय च भवन्तीति न केवलं स्वर्गादेरलाभमात्रम्, ब्रह्मरक्षस्त्वप्राप्त्यादेरपि स्यादिति भावः ॥ ४० ॥

एवं माहात्म्याभिधानव्याजेनास्य कर्मणस्सर्वकर्मभ्यो वैषम्यमुक्तम्। अथोपदेश्यव्यतया प्रतिज्ञातां तद्विषयबुद्धिं काम्यकर्मविषयबुद्धिभ्यो हेतुफलवैषम्येण विशिषन्नुपदिशतीत्याह—काम्येति । 'इह' इति सङ्गृहीतमाह—शास्त्रीये सर्वस्मिन् कर्मणीति । अविहिताप्रतिषिद्धलौकिककर्मणां भिन्नफलत्वात्तद्विषयेऽप्यैक्यं मा भूदित्यत उक्तं शास्त्रीय इति । यद्वा सङ्ग्राहकोपाधिकथनमिदम् । प्रस्तुतयुद्धादिमात्रव्युदासाय—सर्वस्मिन्निति—नित्यनैमित्तिककाम्यतदवान्तरविधाभेदसङ्ग्रहः । नानाकर्मविषयनानाबुद्धेः कथमेकत्वमिति शङ्कायां विशेषणप्रकरणसामर्थ्यफलितेन विषयेण बुद्धिं विशिनष्टि—मुमुक्षुणेति। व्यवसायशब्देन कृत्यव्यवसायभ्रमं निरस्यति—निश्चय इति। पौनरुक्त्यव्युदासाय विशेषं समासोत्तरपदलक्ष्यं च दर्शयन् मुमुक्षुणेत्युक्तमुपपादयति—सा हीति । व्यवसायात्मिकेत्येतद्व्यवच्छेद्यमाह—काम्येति । ननु देहातिरिक्तपारलौकिकात्मज्ञानमन्तरेण कथं देहान्तरानुभाव्यस्वर्गादिसाधनयागादिमहाप्रयासानुष्ठानमित्यत्राह—तत्र हीति । कामनयाधिक्रियत इति वा, कामेनाधिकारो यत्रेति वा कामाधिकारः—काम्यकर्म, तदधिकारित्वं वा । यद्वा तच्छास्त्रम् । अधिकारश्च मदभिलषितसाधनत्वान्मदर्थमिदं कर्मेत्यभिमानः । देहातिरिक्तात्मशब्देन देहान्तरपरिग्रहार्हस्थिरत्वमभिप्रेतम्; अन्यथातिरेकमात्रनिर्णयेऽपि देहसमकालनाशित्वभ्रमे सति पारलौकिककाम्यकर्माननुष्ठानप्रसङ्गात् । मात्रशब्दाभिप्रेतं विवृणोति—नात्मेति । आत्मस्वरूपयाथात्म्यं चात्र नित्यत्वस्वयम्प्रकाशत्वानन्दत्वभगवच्छेषत्वस्वाभाविकापहतपाप्मत्वादिरूपमभिप्रेतम् । ननु देहोत्तरकालमनुभाव्ययोः स्वर्गापवर्गयोः क्वचिदात्मास्तित्वज्ञानमात्रमपेक्षितम्; क्वचित्तद्याथात्म्यनिश्चय इति कुतोऽयं विवेक इत्यत्राह—स्वरूपेति । अयमभिप्रायः—कामाधिकारे याथात्म्यनिश्चयोऽनुपयुक्तो वा शास्त्रबलाद्वापेक्ष्यते । पूर्वत्रापि याथात्म्यनिश्चया-

प्र-पा॥* बुद्धेर्व्यवसायो. पा ॥ †तत्र कामा. पा ॥ ‡देहातिरिक्तात्मस्थिरत्व. पा॥ १.कर्मणामभिन्न. पा॥ २ व्यवसायविषय ख. ग. ज. पा ॥ ३. वदन्. ख. ग. घ ङ. श. पा ॥

शं॥येयं साङ्ख्ये बुद्धिरुक्ता योगे च, वक्ष्यमाणलक्षणा सा—व्यवसाय इति ॥ व्यव-

आ॥विषयो यया वाचा बुध्यते, सा वागभिहितेत्यर्थः ॥ ३९ ॥ ४० ॥

ज॥गांग्यं चासौ विषयश्च अनेन विषयमनमीयमित्याह । नाविशदं वाक्यमनुक्तम्, किं तु तत्र बोधो यथोत्पद्यते, तथेत्यप्रसिद्धपदोपादानप्रयोजनमित्युक्तं भवति ॥ ३९ ॥ ४० ॥

रा॥स्यानिश्चयेऽपि स्वर्गादिफलार्थित्वतत्साधनानुष्ठान*तत्फलानुभवानां सम्भवादवि रोधाच्च । सेयं व्यवसायात्मिका बुद्धिः

ता॥भावे किं स्वर्गादिफलेच्छैव न स्यात्, उत तत्साधनानुष्ठानम्, उत तत्फलानुभवः । न प्रथमः — सुखरूपतया प्रमाणसिद्धेषु स्वरमत इच्छासिद्धेः । न द्वितीयः — तदर्थिनस्तदनुकूलकरणकलेवरादिमत स्तस्य तत्फलकालेऽप्यवस्थान निश्चिन्वत पामरकृष्यादिन्यायेनानुष्ठानोपपत्तेः । न तृतीयः — अविक लानुष्ठितोपायस्य फलोत्पत्तेरन्यनिरपेक्षत्वात्, अनुभवार्थमेवोत्पन्नतया च तदनुभवसिद्धौ सार्वभौमादिभो गेष्विव स्वर्गादिभोगेष्वनुभववेलायामात्मयाथात्म्यानुभवनैरपेक्ष्यात् । तदेतदभिप्रेत्योक्तं सम्भवादित्य न्तेन । अनुपपत्त्यभावोऽत्र सम्भवः । नापि शास्त्रवत्त्वादिति वक्तुं युक्तम्, शास्त्रमपि दृष्टार्थं वा विदधी त, अदृष्टार्थं वा । अत्र केवलदृष्टार्थत्वे दत्तोत्तरम् । अन्यत्रापि न तावद्यागादिकरणशरीरनिर्वर्तकत्व, तदनालोचनात् । नापि कर्तुरात्मनस्संस्कारतयाऽनुप्रवेशः, नामाधिकारप्रकरणेषु प्रोक्षणादिविधिवत् 'आ त्मानं तरन्तो जानीयात्' इति विध्यभावाद्वेदान्तविहितज्ञानस्यातिशयितफलान्तरार्थत्वादिना कर्मशेषत्वा भावस्य शारीरके समर्थितत्वात् । आत्मतत्त्वानभिज्ञानामपि च स्वर्गादिफलं प्रतिपादयन्ति हि— 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा' इत्याद्याश्श्रुतयः । 'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः' इत्यादिना चानन्तरमेवोच्यते । अविदुषां धूमादिमार्गेण स्वर्गारोहणा दिकं चोपनिषत्सु जोघुष्यते । अतो विध्यभावादेवात्रादुपकारकत्वमपि निरस्तम् । तदेतदभिप्रेत्योक्तम्— अविरोधाच्चेति । शास्त्रादिविरोधाभावादित्यर्थः । पक्षान्तरे च शास्त्रविरोधस्स्यादिति भावः । मो क्षाधिकारे तु विपरीतमिदमन्यथा । तथाहि यथावस्थितस्वरूपप्राप्तिरेव हि मोक्षपुरुषार्थः । न कथम निश्चीयमान इष्येत । कथं च तज्ज्ञानं तदिच्छामप्यन्तरेण तत्साधनमनुष्ठीयेत । स्वरूपयाथात्म्यज्ञानं च विहिततया साधनानुप्रवेशीति कथं तद्व्यतिरेकेण साधनं पुष्कलमनुष्ठितं स्यात् । कथं च स्वरूपाविर्भाव लक्षणफलानुभवः स्वनिश्चयशून्यस्य स्यात्— इति युक्तिविरोधः । चोदयन्ति च शास्त्राणि मोक्षस्य वैविध्योपकारकतया आत्मतत्त्वज्ञानम् । अतस्तदभावे शास्त्रविरोधः स्यादिति । ननु व्यवसायात्मिकाया बुद्धेः किमिदमेकत्वम्, न तावद्व्यक्त्यैक्यं नानाविधबुद्धिसन्तानसम्भवात् । नापि विषयैक्याद्येकरूपत्वम्, अङ्गप्रधानाद्यवान्तरविषयभेदेन तदयोगात् । नापि समुदायगोचरत्वात्तदैक्यम्, काम्यकर्मस्वपि तत्साम्या

प्र पा॥ *तत्फलानुभवानां पा॥

१ तत पा॥ २ विज्ञान ग ग घ ङ च पा॥

३ मुण्डकोप. १ २ ७. † स्मृति॥ अष्टादशोक्तम् अष्टादशावरमित्युक्तम्, श्रुतेरपि प्रदर्श नार्थमिदम् । श्रुतिस्मृतिगोचरं कर्मेत्यर्थः । यद्वा षोडशर्त्विक्पत्नीयजमानरूपाष्टादशपुरुषेषु विहितम् । यद्वा 'नव ग्राम्यान्पशूनालभते नवारण्यान् उभयान्पशू नालभते' इति श्रुत्युक्ताष्टादशपशुहिंसकं कर्मेति । यज्ञशब्दः कर्मसामान्यवाची । येषु पुरुषेषु स्मृतिविहितमवरं कर्म फलाभिसन्धिमत्, एतत् श्रेयो येऽभिनन्दन्ति ते पुरुषा जरामृत्युं अपि यन्तीत्यन्वयः प्लवा अदृढाः — संसारपारं तारयितुं नालं मध्ये भग्नस्स्यादित्यर्थः ॥ इति श्रुतप्रकाशिका ॥

४ इत्यादि. चा पा॥ ५ तु न स्यात् पा॥

शं॥सायात्मिका निश्चयस्वभावा एका एव बुद्धिः इतरविपरीतबुद्धिशाखाभेदस्य बाधिका सम्यक् प्रमाणजनितत्वात्, इह श्रेयोमार्गे हे कुरुनन्दन याः पुनः इतरा विपरीतबुद्धयः,

आ॥योगे त्विमां बुद्धिं शृण्वित्युक्तम् । बह्व्यो हि बुद्धयो मतभेदात् । तत्कथमेकत्र निष्ठां

ज॥ननु व्यवसायात्मिकेति श्लोके न प्रतिज्ञातो योग उच्यते । नापि बुद्ध्या युक्त इत्यादिवत्प्रशंसा, ॥ तिकथाऽपमित्यत आह—योगइति । ज्ञानोपायविषयामिमां वक्ष्यमाणां वाचं शृणु, श्रुत्वा तत्र निष्ठा

रा॥एकफलसाधनविषयतयैका; एकस्मै मोक्षाख्यफलाय हि मुमुक्षोस्सर्वाणि कर्माणि विधीयन्ते। अत एकशास्त्रार्थत्वैकत्वात् सर्वकर्मविषया बुद्धिरेकैव; यथैकफलसाधनतया आग्नेयादीनां षण्णां सेतिकर्तव्यताकानामेकशास्त्रार्थतया तद्विषया बुद्धिरेका, तद्वदित्यर्थः।अव्यवसायिनां तु स्वर्गपुत्र*पश्वन्नादिफलसाधनकर्माधिकृतानां बुद्धयः फलानन्त्यादनन्ताः; तत्रापि बहुशाखाः; एकस्मै फलाय चोदितेऽपि दर्शपूर्णमासादौ कर्मणि 'आयुराशास्ते'

ता॥दित्यत उक्तम्—एकफलसाधनविषयतयेति । तदेवोपपादयति—एकस्मा इति। सर्वाणीति—नित्यनैमित्तिककाम्यानां सर्वेषां कर्मणां मुमुक्षुणानुष्ठितानां साक्षात्परम्परया वा मोक्षसाधनोपकारित्वेन मोक्ष एक एव प्रधानं फलम् । 'सर्वमायुरेति' इत्याद्यवान्तरफलाभिधानमपि तदुपयोगित्वमात्रादिति भावः । अस्तु सर्वेषामेकफलसाधनत्वम् । तथाऽपि क्रमभाविकर्मस्वरूपनानात्वे कथं तद्बुद्धेरैक्यमित्यत्राह—अत इति । एकफलसाधनतया सर्वेषां कर्मणामेकविधिपरिगृहीतत्वेनैकशास्त्रार्थत्वात्तद्गोचरबुद्धेरवान्तरकर्मभेदसद्भावेऽप्येकशास्त्रार्थगोचरत्वादेकत्वमुच्यत इत्यर्थः । पृथग्विधिविहितानां पृथग्वाक्यविहितेतिकर्तव्यताकानां कथमेकशास्त्रार्थत्वमित्यत्रोक्तप्रकारेणैकत्वे दृष्टान्तमाह—यथेति । आग्नेयादयो हि सेतिकर्तव्यतासाध्यषड्यागाः उत्पत्तिवाक्यैः पृथगुत्पन्नास्समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नाः कामाधिकारे पुनरेकफलसाधनत्वेनैकतया विधीयन्ते । तथा चैकशास्त्रार्थगोचरतया तद्बुद्धिरप्येकैव तद्वदित्यर्थः । 'अव्यवसायिनाम्' इति हेतुपरमित्याह—स्वर्गपुत्रेत्यादिना । फलानन्त्यादनन्ता इति । फैलबाहुल्यात्स्वर्गादिनन्तफलभेदेन तत्साधनानामपि कर्मणां भिन्नशास्त्रार्थत्वात्तद्विषया बुद्धयोऽपि यावत्फलभेदं भेदिन्य इत्यर्थः । अनन्तबहुशाखशब्दयोः प्रधानाप्रधानस्वरूपभेदप्रकारभेदविषयतया पौनरुक्त्यं परिहरन् कर्मभेदाभावेऽपि वैषम्यान्तरपरं बहुशाखशब्दं व्याचष्टे—तत्रापीति । एकैकस्यैव बहुशाखत्वमुपपादयति—एकस्मा इति । एकैकमपि हि काम्यकर्म प्रधानफलावच्छिन्नभेदेन एकपादपस्थानीयं विरोधिगुणफलाद्यवच्छिन्नतत्तदंशभेदेन बहुशाखं भवति । मोक्षशास्त्रे तु सर्वायुःप्राप्त्यादिकमपि साधनानुष्ठानार्थत्वेन मोक्षोपयोगितया तदेकफलान्तर्भूतमित्युक्तम् । वैषम्यद-

प्र·पा॥*पश्वादि पा॥१. छा.४-ख. ११-ख २-वा. १स य एतमेव विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति'। इयं श्रुतिर्भाष्ये १. २.१५.व्याख्याता।तत्रत्येयं भक्ति 'अपहते पापकृत्याम्-ब्रह्मप्राप्तिविरोधि पापकर्मापहन्ति,लोकी भवति-तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति, सर्वमायुरेति-ब्रह्मोपासनसमाप्तेर्यावदायुरपेक्षितं तावदेवेति, ज्योग्जीवति 'ब्राह्मचर्यादिनियमपरत्वे यावद्ब्रह्मप्राप्ति जीवति' इति ॥

२. आग्नेय.,अग्नीषोमीयोपांशुयाजौ,ऐन्द्रौ द्वौ, ऐन्द्राग्नमिति पक्षत्रयम् । उत्पत्तिवाक्यैरिति-प्रथमप्रतिपत्तिजनकवाक्यैरित्यर्थः । पृथगुत्पन्नानिति-पृथक्प्रतिपादितान् । उत्पत्तिवाक्यैः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्यां चाच्युतो भवति' इत्येवमादिभिः । समुदायानुवादिवाक्यद्वयेनेति-'य एवं विद्वान् पौर्णमासीं यजते''य एवं विद्वानमावास्यां यजते' इति ततश्च 'दर्शपौर्णमासाभ्याम्' (आप-श्रौ-४-३-४७) इति स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्तव्यतया निर्धारितेत्यर्थः ॥

३. फलबाहुल्याद्बहुफ्र. सर्वा. पा ॥

४ स्थानीयमविरोधि. ग. घ. ज. झ. पा ॥

शं॥यासां शाखाभेदप्रचारवशात् अनन्तः अपारः अनुपरतः संसारो नित्यप्रततः भवति,

आ॥बुद्धिरित्युक्तमित्यर्थः,प्रारब्धस्य विधिना विनाऽसम्भवात्। बह्व्यो हि बुद्धयो ज्ञानोत्पत्तिविषया वाचः परस्परविरुद्धाः सन्ति । कथम्, मतभेदात् ; एकमतमालम्बमानाः किञ्चिज्ज्ञानसाधनमाचक्षते । अपरं मतमाश्रित्यान्यप्रतिषेधेनान्यदाहुः । तत्र चेदमेव तत्त्वं नेदमिति विनिगमकं नास्ति । ततस्मात्कथ-

र ॥ *इत्याद्यवगतावान्तरफलभेदेन बहुशाखत्वं च विद्यते। अतोऽव्यवसायिना बुद्धयोऽनन्ता बहुशाखाश्च। एतदुक्तं भवति—नित्येषु नैमित्तिकेषु कर्मसु प्रधानफलान्यवान्तरफलानि च यानि श्रूयमाणानि, तानि सर्वाणि परित्यज्य मोक्षैकफलतया सर्वाणि कर्माण्येकशास्त्रार्थतयाऽनुष्ठेयानि, काम्यानि च स्ववर्णाश्रमोचितानि तत्तत्फलानि परित्यज्य मोक्षसाधनतया नित्यनैमित्तिकैरेकीकृत्य यथाबलमनुष्ठेयानि—इति ॥ ४१ ॥

ता॥योपपत्तिस्थैर्याभिप्रायेण निगमयति—अत इति। प्रधानावान्तरफलभेदादित्यर्थः। आकाङ्क्षाक्रमेणान्वयप्रदर्शनायानन्ता बहुशाखा इति व्युत्क्रमेण व्याख्यातम्। ननु कथं भिन्नप्रधानावान्तरफलसाधनत्वेन विहितानां नित्यनैमित्तिककाम्यकर्मणामेकमेव फलं स्यात्, कथन्तरामेकशास्त्रार्थत्वम्। काम्यानां च कर्मणां निष्कामेन कथमनुष्ठानम्? यदि च तत्तत्काम्यफलाभावेऽपि तत्तत्कर्मानुष्ठानं तर्हि तत्तदधिकाराभावेऽपि ब्राह्मणादेः क्षत्रियादिधर्मानुष्ठानप्रसङ्गः सर्वकाम्यापरिहार फलादिविरोधाद्यापत्तौ दुष्करश्च। कतिपयोपसंहारे तु किं नियतमनुष्ठेयमित्यत्र किं नियामकमित्यादिशङ्कापरिहाराय बुद्धेरेकत्वमुक्तौ फलमाह—एतदुक्तमिति। नित्यनैमित्तिकयोः प्रधानफलान्यवान्तरफलानि च प्राजापत्यलोकादिप्राप्त्युपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारादिरूपाणि। सकलितनित्यनैमित्तिकयोरत्र नित्यनैमित्तिकशब्देन सङ्ग्रहः। काम्यशब्दः केवलकाम्यपरः। ननु तानि सर्वाणि परित्यज्येत्ययुक्तम्, मुमुक्षोरप्युपात्तदुरितक्षयादेरवश्यापेक्षितत्वादित्यत उक्तम्—मोक्षैकफलतयेति। दुरितक्षयादेरप्यन्तःकरणशुद्धिद्वारेणोपकारकत्वान्न प्रथमफलत्वमिति भावः। एकशास्त्रार्थतयानुष्ठेयानीति। विनियोगभेदादन्यत्र भिन्नफलत्वं भिन्नशास्त्रार्थत्वं च। अत्र तु सर्वासामप्येकत्र विनियुक्तानां फलैक्यं शास्त्रार्थैक्यं च श्रूयते। सिद्धं च नित्यकाम्यज्योतिष्टोमादावपि विनियोगपृथक्त्वमिति भावः। स्ववर्णाश्रमोचितानीति। कस्यचिद्धि निजफलमुद्दिश्य कानिचित्कर्माणि विधीयन्ते। तेषामेव कर्मणां फलान्तरार्थतया विनियोगेऽपि स एवाधिकारी भवितुमर्हति 'कृतकल्प्यानिरोधः तु युक्तः कल्पनिरोधः' इति न्यायादधिकार्यन्तरकल्पने प्रमाणाभावात्। यथा नित्यकाम्यज्योतिष्टोमादौ, यथा चाध्ययनस्य जपादाविति भावः। निष्कामस्य काम्यकर्मानुष्ठानोपपादनायोक्तम्—तत्फलानि परित्यज्य मोक्षसाधनतयेति। नित्यनैमित्तिकैरेकीकृत्येति—एकफलसाधनतयैकशास्त्रार्थीकृत्येत्यर्थः। यथाबलमिति। शक्त्यनुरोधेन हि शास्ति शास्त्रम्। आह च मनुः—तैद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम्' इति। एवं नित्यनैमित्तिकयोरिव काम्येष्वपि मुमुक्षोः कतिपयाङ्गवैकल्येऽपि न दोष इत्युक्तं भवति। एतेन विच्छेदे प्रत्यवायाभावकथनमपि न ज्योतिष्टोमाद्यैकैकार्न्तविच्छेदपरम्, अपि त्वामोक्षादनुष्ठेयैकशास्त्रार्थभूतकर्मकलापे भयाजादिवदितिकर्तव्यतास्थानीयैकैककर्मानुष्ठानेऽपि देहादिवैगुण्यकृतोऽत्रान्तरानुष्ठानपरमिति च दर्शितम्॥

प्र पा॥ * 'भुवनारत्नमाशाले' इत्या पा॥
१. सर्वकाम्यकम ग ग. न पा
२ परिहाररूपाणि पा।
३ मनु

दी॥प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्च उपरतासु अनन्तभेदबुद्धिषु संसारोऽपि उपरमते,ताश्च बुद्धयः बहुशाखाः,बह्व्यः शाखाः यासां ता बहुशाखाः,बहुभेदा इत्येतत्।प्रतिशाखाभेदेन हि अनन्ताश्च बुद्धयः। केषाम्? अव्यवसायिनाम्,प्रमाणजनितविवेकबुद्धिरहि

आ॥करोमीत्यत आह—व्यवसायात्मिकेति। सम्यग्युक्तिनिर्णीतानां मतानामैक्यमेवेत्यर्थः॥

ज॥मेवं त्वदीयायामेव वाचि निष्ठां विश्वासं करोमि।ननु सर्वाण्यपि मतानि व्यवसायात्मकान्येव,स्वे स्वेऽर्थं संशया सन्देहाभावात्। अतः कथमुच्यते व्यवसायात्मिका अव्यवसायिनां बुद्धय इति,तत्राह—सम्यगिति। युक्तिरिति प्रमाणसामान्यमुच्यते। प्रमाणत्वेन निर्णीतत्वमेवात्र व्यवसायशब्दार्थो न

अथ काम्यकर्माधिकृतान्निन्दति—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४

रा॥यामिमां पुष्पितां पुष्पमात्रफलाम् आपातरमणीयां वाचमविपश्चितोऽल्पज्ञाः भोगैश्वर्यगतिं प्रति वर्तमानां प्रवदन्ति, वेदवादरता वेदेषु ये

ता॥एवं काम्यकर्मविषयबुद्धितो मोक्षसाधनभूतकर्मविषयाया बुद्धेः वैलक्षण्यमुपपाद्य अनन्तर मोक्षसाधने प्रवृत्तिसौष्ठवार्थमितरफलवैतृष्ण्यजननाय तत्फलसाधनकर्माधिकृतान् निन्दतीत्युपरितनश्लोकत्रयमवतारयति—अथेति । काम्यकर्माधिकृतानिति काम्यकर्मसु स्वर्गादिस्वाभिलषितसाधनत्वस्वार्थतात्बुद्धियुक्तानित्यर्थः । 'पुष्पिताम्' इत्येतत्फलव्यवच्छेदमुखेनासुखोदर्कत्वपरमित्यभिप्रायेणाह—आपातरमणीयामिति । अल्पज्ञा इति । विविध पश्यन्ति हि विपश्चित्त्वम् । 'पृषोदरादीनि यथोपदिष्टम्' इति पश्यच्छब्दावयवस्य पच्छब्दस्य लोपः । तत्र बहुज्ञत्वम् । तद्व्यतिरेकश्चात्रोपनिषत्साध्यस्थिरास्थिरादिविवेकाभावादल्पज्ञत्वमिति भावः । जन्मकर्मेत्यादेः गतिविशेषणत्वभ्रमव्युदासाय गति प्रतीत्यस्यापेक्षितपूरणाय च क्रममुल्लङ्घ्य प्रागेवोक्तम् । भोगैश्वर्यगतिं प्रति वर्तमानामिति । एतेन वाचमित्यस्य काम्यविधिभागपरत्वमुक्तं भवति । सामान्येन वैदिकनिन्दा-

प्र-पा॥ *१ भूतकर्मविषयाया बुद्धेर्वैलक्षण्यमुपपाद्य अनन्तर मोक्षसाधने ॥

२. तत्फल. ग. घ. ङ. दा. पा ॥

*३. पुष्पितामित्येतदिति—एतत्पदमित्यर्थः ॥

*४ 'एवं वाक्य साधारणम्' इतिन्यायेन पुष्पमात्रयुक्तामित्यर्थकत्वमाश्रित्य मात्रशब्देन फलव्यवच्छेद इत्यभिप्रायेण भाष्ये पुष्पमात्रफलामिति तथा व्याख्यानेन फलितार्थपरमापातरमणीयामिति पद व्याचष्टे—असुखोदर्कत्वपरमिति। सुखोदर्कं न भवतीत्यसुखोदर्कम्, तस्य भावस्तत्त्वम्, तत्परमित्यर्थः ॥

५. अष्टाध्याय्याम् . ६. ३. १०९.

*६. 'भोगैश्वर्यगतिं प्रति' इत्यग्रिमवाक्यस्य 'यामिमाम्' इति प्राथम्यवाक्यव्याख्यानावसरे व्याख्यानमनुचितम्, क्रमभङ्गस्य मूलस्य व्याख्येयत्वादिस्याशङ्क्य तथा व्याख्यानस्य प्रयोजनद्वयमाह—जन्मकर्मेति । 'जन्मकर्मफलप्रदाम्' इत्यादिभोगैश्वर्यगतिसमभिव्याहृतविशेषणस्य तत्रैव भोगैश्वर्यगत्यन्वयभ्रमो भवेदिति तन्निराकरणेन 'वाचम्' इत्यत्रैव विशेषणताप्रतीतिरेकं प्रयोजनम्, 'भोगैश्वर्यगतिं प्रति' इत्यत्र 'वर्तमानाम्' इति विशेषणस्य 'वाचम्' इत्यनान्वयिनः पूरणमपरं प्रयोजनमित्यभिप्राय. ॥

७. वाचमित्येतस्य. ग. घ. ङ. पा ॥

शां॥तानाम् इत्यर्थः ॥ ४१ ॥

येषां व्यवसायात्मिका बुद्धिः नास्ति ते—यामिमां इति॥याम् इमाम् वक्ष्यमाणां पुष्पितां पुष्पित इव वृक्षः शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति । के ?

जा॥निश्चयमात्रमित्यर्थः। प्रामाणिकमेव मत ग्राह्यम्, तत्र न कदाचिद्विप्रतिपत्तिः,यतस्तत्रैकत्र निष्ठाभावः। अप्रामाणिकेषु विद्यमानापि विप्रतिपत्तिः किङ्करिष्यतीति भावः ॥ ४१ ॥

रा॥ स्वर्गादिफलवादाः, तेषु सक्ताः नान्यदस्तीतिवादिनः तत्सङ्गातिरेकेण स्वर्गादेरधिकं फलं नान्यदस्तीति वदन्तः कामात्मानः कामप्रवणमनसः स्वर्गपराः स्वर्गपरा-

ता॥भ्रममपाकरोति—स्वर्गादिफलवादा इति। वेदशब्दोऽत्र 'वेदेषु वेदान्तेषु च गीयते' इत्यादाविव कर्मभागपरः। तत्रापि विधिभागफलार्थवादभागविषयतया पुरुषवाक्यवेदवाक्यविषयतया वा वाचं वेदवादेत्यनयोरपौनरुक्त्यमिति भावः। नान्यदस्तीतिवादे पूर्वोत्तरपदानामर्थं हेतुतया उपादत्ते—तत्सङ्गातिरेकेणेति। अपवर्गस्वरूपनिषेधोऽत्रास्य इत्यभिप्रायेणोक्तम्—अधिकं फलमिति। 'वादिनः' इत्यनेन तथावदनशीलत्वनिरूपणाव्यञ्जनाय वदन्त इति वर्तमानप्रत्ययान्तेन व्याख्यातम्। कामप्रवणमनस इति—कामेष्वात्मा मनो येषां ते कामात्मान इति व्यधिकरणबहुव्रीहिरिति भावः। स्वर्गपरायणा इति। स्वर्गः परः परायणं परमप्राप्यं येषां ते स्वर्गपराः मोक्षविमुखा इति भावः। 'कामात्मानः स्वर्गपराः' इतिपदद्वयस्य सामान्यविशेषविषयतया दृष्टादृष्टविषयतया वा हेतुसाध्यविषयतया वा कामौ-

प्र पा॥ १. 'याम् प्रवदन्ति' इत्यस्य 'वेदवादरताः' इत्यनेन पौनरुक्त्यभ्रमवारणाय 'वेदवादरताः' इत्यस्य वेदेषु ये स्वर्गादिफलवादाः, तेषु सक्ता इति भाष्ये व्याख्यातमित्याह—वेदशब्दोऽत्रेति ॥

२. विधिभागफलार्थवादविषयतयेति— 'वाचम्' इत्येतत् विधिभागविषयम्, 'वेदवाद' इत्येतत् फलार्थवादविषयमिति न पौनरुक्त्यमिति भावः ॥

३ विधिभागफलवादभाग ग म घ पा ॥

४ प्रकारान्तरेणापि पौनरुक्त्यपरिहारपरत्वं भाष्यस्याह—पुरुषवाक्यवेदवाक्यविषयतया वेति। 'वाचम्' इत्येतत् स्वर्गादिपुरुषार्थप्रदकर्मपरलौकिकवाक्यपरम्, 'वेदवाद' इत्येतत् वैदिकतादृशवाक्यपरमिति न पौनरुक्त्यमिति भावः ॥

५ भाष्ये नान्यदस्तीति वादे स्वर्गादिपुरुषार्थे सङ्गातिरेको हेतुतयोक्तः—तत्सङ्गातिरेकेणेत्यनेन। अयं हेतुः मूलवाक्यात्कथं लभ्यत इत्याशङ्क्य नान्यदस्तीति पूर्वं 'वेदवादरताः' इत्युक्त्वा तस्यार्थः स्वर्गादिफलवादेषु सक्ता इत्यर्थकत्वेन उत्तरवाक्ये च 'कामात्मानः स्वर्गपराः' इत्युक्त्या तेन च स्वर्गादिषु सङ्गोक्त्या नान्यदस्तीति वाक्यार्थपूर्वोत्तरवाक्याभ्यां हेतुर्लभ्यत इति परिहारमाह—नान्यदस्तीति वादे पूर्वोत्तरपदानामर्थं हेतुतयोपादत्ते—इति ॥

६ स्वर्गपराः स्वर्गपरायणा मोक्ष ङ पा॥

७ विषयतया वा क ग घ ए ॥

शं॥अविपश्चितः अमेधसः,अविवेकिनः इत्यर्थः।वेदवादरताः बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रताः हे पार्थ न अन्यत् स्वर्गपश्वादिफलसाधनेभ्यः कर्मभ्यः अस्ति इति एवंवादिनः वदनशीलाः ॥४२॥

आ॥स्युरवैदिकानि मतानि अव्यवसायात्मकानि। ननु वैदिकानि। तेऽपि हि केचित्कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह—यामिमामिति। यामाहुस्तयेत्यन्वयः। मोक्षफल

जा॥यामिमामिति श्लोकस्य प्रकृतोपयोगादर्शनात्सङ्गतिमाह—स्युरिति। न तु वैदिकान्यप्यव्यवसायात्मकानि। ततः किं प्रकृते इत्यत उक्तम्—तेऽपीति। व्यवसायात्मकं मतं वैदिकमतमवलम्बमाना अपि केचित् वैदिकानि मर्माण्येव कर्माणि स्वर्गादिफलान्याहुः। भवान्तु काम्यान्येव स्वर्गादिफलकानि निष्कामानीश्वरार्पणबुद्ध्याऽनुष्ठितानि तु ज्ञानार्थानीत्यभिप्रैति। तथाच त्वद्वचने निष्ठानुपपत्तिस्तदवस्थेति भावः। आह तेषां वैदिकाभासत्वप्रदर्शनाय निन्दामिति शेषः। भोगैश्वर्यगतेरपि प्रकृतत्वात्तयेति तत्परामर्शभ्रान्तिं वारयति—यामिति। अन्यथा यच्छब्दः साकाङ्क्षोऽनन्वितः स्यादिति भावः। वाचः पुष्पितत्वं कथमित्यत आह—मोक्षेति। अलङ्कलत्वेनोपमा। वेदवादरता इत्येतत्कथं निन्दावचन-

रा ॥ यणाः स्वर्गादिफलावसाने पुनर्जन्मकर्माख्यफलप्रदां क्रियाविशेषबहुलां तत्त्वज्ञान-

ता॥न्मुख्यान्यवैमुख्यपरतया वा पुनरुक्तिपरिहारः। स्वर्गादिफलभोगमध्ये जन्मादिभ्रमं व्युदस्यति—स्वर्गादिफलावसान इति । 'यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' 'आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन' 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः' इत्यादिश्रुतिस्मृतयः इह द्रष्टव्याः । जन्मवत्कर्मणोऽप्यनुशयाख्यकर्मशेषस्य तत्त्वख्यापनाय समानाधिकरणसमासतां दर्शयति—जन्मकर्माख्यफलप्रदामिति। कर्मशेषेण पुनरुत्कृष्टापकृष्टजन्मप्राप्तौ श्रुतिस्तावत् 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म।एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति' 'तद्य इह रमणीयचरणा अभ्याशो यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणाः

प्र-पा॥१ छा ५.१०.५ †सम्पततिअनेनेति सम्पातः कर्मशेषः, यावत्कर्मशेषमुषित्वेत्यर्थः ।यावाच्छब्दः साकल्यार्थः । साकल्यं च-फलप्रदानप्रवृत्तकर्मविशेषविषयम्, न तु सर्वकर्मविषयमिति । अथ अनन्तरम् , तमेव धूमादिमार्गम् यथेतं - यथागतम् , 'पुनर्निवर्तन्ते' इति ॥

२ बृ ६. ४ ६ †अस्यार्थः अयम् - संसारी इह-लोके,फलमुद्दिश्य यत्किञ्चित्कर्म करोति, तस्य कर्मण अन्तं प्राप्य भोगेनावसानं प्राप्य, कृत्स्नफलमुक्त्वेति यावत्। तस्मात् लोकात् अस्मै लोकाय पुनरेति किमर्थमित्यत आह—कर्मणे इति । कर्म कर्तुमित्यर्थः । इति ॥

३ गी ८ १६ ॥

४ वि पु ६ ५ ५० *'न केवलं द्विजश्रेष्ठ नरके दुःखपद्धतिः' इति पूर्वार्धम् ॥

५. 'जन्मकर्मफलप्रदाम्' इत्यस्य जन्म च कर्म-फलं चेति द्वन्द्वस्य स्वरसतः प्रतीयमानत्वेन तमुपेक्ष्य जन्म च कर्म च जन्मकर्मणी,ते च ते फले चेति द्वन्द्वगर्भकर्मधारयमाश्रित्य जन्मकर्माख्यफलप्रदामिति व्याख्यानस्य भाष्यगतस्याभिप्रायमाह—जन्मवदिति ॥

६ मु. १ २. ७ ॥

७. छा. ५. १०. ७. †तदिति । तत् - तेषु ये अभ्याशः अभ्यागन्तारः, अभ्याङ्पूर्वात् अशेर्धातोः क्विबन्तात् बहुवचनान्तोऽयं शब्द । इति प्रसिद्धौ। यत् - यदा, रमणीयचरणाः - चर्यत इति चरणम् - कर्म, रमणीयकर्माणः । भुक्तशिष्टपरिपक्वसुकृतकर्मयुक्ता भवन्तीत्यर्थः । अत्र यदा शब्दानुरोधात् तदेत्यध्याहर्तव्यम् , शिष्टं स्पष्टम् । कपूयचरणाः - कुत्सितकर्माण इत्यर्थः । भुक्तशिष्टकर्मानुसारिजन्म प्राप्नुवन्तीत्यर्थः ॥

शा॥ते च—कामात्मान इति ॥ कामात्मानः कामस्वभावाः, कामपरा इत्यर्थः । स्वर्गपराः, स्वर्गः परः पुरुषार्थः येषां ते स्वर्गपराः स्वर्गप्रधानाः । जन्मकर्मफलप्रदां, कर्मणः फलं कर्मफलं, जन्मैव कर्मणः फलं जन्मकर्मफलं, तत् प्रददातीति जन्मकर्मफलप्रदा, तां वाचम् । प्रवदन्ति इति अनुषज्यते । क्रियाविशेषबहुलां, क्रियाणां विशेषाः क्रियाविशेषाः ते बहुला यस्यां वाचि तां, स्वर्गपशुपुत्राद्यर्थाः यया वाचा बाहुल्येन प्रकाश्यन्ते।

आ॥मपेक्ष्य स्वर्गादिपुण्ययुक्तां वाचं प्रवदन्ति। वेदवादरताः—कर्मादिवाचकवेदवादरताः। वेदैर्यन्मुख्यत उच्यते तत्र रताः । नान्यदस्तीति वादिनः । परोक्षविषया वेदाः । परोक्ष-

ज॥मिच्छत आह—वेदेति। कथमेतस्मात्तदाक्षिप्यते कथञ्चायाऽपि निन्द्यत्यत आह—वेदैरिति। वादशब्दोऽत्रापातः प्रतिपादने वर्तते । वदने चात्राभिधानम् । आपाततः प्रतिपाद्य च कर्मादि । सावधारणं चैतत्,'अब्भक्षो वायुभक्षः' इति यथेत्यर्थः। सावधारणत्वं कुत इति चेत्—उत्तरपदबलादिति तानि पठति—नान्यदिति । आपाततः प्रतीतार्थादन्यस्य सद्भावे सत्येषा निन्दा । कोऽसौ कुतश्चे-

**रा॥ रहिततया क्रियाविशेषप्रचुरां भोगैश्वर्यगतिं प्रति वर्तमानां*यामिमां पुष्पितां वाचं ये प्रवदन्तीति संबन्धः ; तेषां भोगैश्वर्यप्रसक्तानां तया वाचा भोगैश्वर्यविषयया अपहृत-**

ता॥अभ्याशोह यत्ते कपूया योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा'इत्यादिः।जन्मकर्मादेस्सर्वस्य कर्मशेषमूलत्वे स्मृतयश्च—'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य स्वकर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुलरूपायु:श्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते। विष्वञ्चो विपरीता नश्यन्ति'इति। तथा 'ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते। तच्चक्रवदुभयोर्लोकयोस्सुख एव वर्तते' इत्यादयः । वैराग्यपादे चायमर्थो व्यक्तमनुसन्धेय । अत्र जन्मास्वकर्मफलप्रदामिति केषुचित्कोशेषु पाठः । ननु ज्योतिष्टोमादिक्रियाविशेषस्वरूपमात्रं कामिनो ज्ञानिनश्च समानम् । तत्कथं 'क्रियाविशेषबहुलाम्' इति कामिनो विशिष्याभिधीयते । तत्रोक्तम्—**तत्त्वज्ञानरहिततयेति** । ज्ञानिना हि सर्वं कर्म क्रियमाणमपि ज्ञानप्रचुरमेव । तच्चैकफलसाधनतया एकशास्त्रार्थरूपम्। न च मोक्षानुपयुक्तास्सर्वे क्रियाविशेषास्तेन क्रियन्ते। अतः प्रयासबहुलं परिमितनश्वरफलं चामुमुक्षोः कर्मेति भावः।अन्येषां वाचा अन्येषामपहृतचित्तत्वभ्रमं निरस्यन् षष्ठ्यन्तपदयोरदृष्टविशेष्ययोः प्रस्तुतविशेष्यविषयत्वं चाह—**तेषामिति** । **तयेति** । यद्वृत्तप्रतिनिर्देशरूपव्याख्येयोपादानम्। तत्परामृष्टं प्रकृतं चेतोपहरणहेतुमाह—**भोगैश्वर्यविषययेति** । 'अपहृतचेतसाम्' इत्यस्य पूर्वपदेनार्थ

प्र पा॥* यामिमां वाचं प्रवद. पा ॥

१ गौतमधर्मशास्त्रे. २-प्रपाठक ११-अध्याये १० ११.सूत्रे॥ २. आपस्तम्बधर्मे. २ १ २, ३ ॥

३. ज्ञानिना हि ग ङ पा ॥

*४ षष्ठ्यन्तपदयोरिति—भोगैश्वर्यप्रसक्तानामपहृतचेतसामित्यनयोरित्यर्थः ॥

*५ तयेति — यद्वृत्तप्रतिनिर्देशरूपव्याख्येयोपादानमिति—यामिमामिति यच्छब्देन यन्निर्दिष्टं, तस्य प्रतिनिर्देशः तयेत्ययं शब्दो मूलस्थोऽत्र व्याख्येय उपात्त इत्यर्थः ॥

**श॥भोगैश्वर्यगतिं प्रति,भोगश्च ऐश्वर्यं च भोगैश्वर्ये,तयोः गतिः प्राप्तिः भोगैश्वर्यगतिः, तां प्रति साधनभूताः ते क्रियाविशेषाः, तद्बहुलां तां वाचं प्रवदन्तः मूढाः संसारे परिवर्तन्ते इत्यभिप्रायः ॥ ४३ ॥**

**आ ॥ प्रिया इव हि देवाः। मां विधत्तेऽभिधत्ते मामित्यादिभिः पारोक्ष्येण प्रायो भगवन्तं वदन्ति । भोगैश्वर्यगतिं तत्प्राप्तिं प्रति। तत्प्राप्तिफला एव वेदा इति वदन्तीत्यर्थः॥४२॥४३॥**

**तेषां सम्यग्युक्तिनिर्णयात्मिका बुद्धिः समाधौ समाध्यर्थं न विधीयते । सम्यङ्निर्णीतार्थानामीश्वरे मनःसमाधानं सम्यग्भवति । तद्धि मोक्षसाधनम् । उक्तं चैतदन्यत्र**

ज ॥ त्यत आह—**परोक्षेति**। क्वचित्प्रकटवचनादिवेत्युक्तम् । अत एव प्राय इत्याह । देवा वेदाभिमानिनः । तत्प्रकारसूचनार्थं मां विधत्ते' इत्याद्युदाहृतम् । वदन्ति वेदाः ॥ ४२ ॥

गतिशब्दस्यावगतिरप्यर्थः प्रतीयेतेत्यत आह —**भोगेति** । अन्यथाऽसदनुवादप्रसङ्गादिति भावः । एषाऽपि कथं निन्देत्यत आह—**तत्प्राप्तीति** । मोक्षं वेदफलं न मन्यन्त इत्यर्थः ॥ ४३ ॥

तयापहृतेत्यादेरप्रतीतिनिरासायार्थमाह—**तेषामिति** । तेषां बुद्धिर्मनोवृत्तिर्व्यवसायात्मिका सम्यग्युक्तिनिर्णयात्मिका न भवति । तत एवेश्वरे सम्यक्समाधानार्थं न विधीयत इत्यर्थः । सम्यग्युक्तिनिर्णयात्मकत्वाभावे कुतः समाध्यभाव इत्यत आह—**सम्यगिति** । अनेन समाधिशब्दार्थोऽपि विवृतो भवति । किमीश्वरे मनःसमाधानेन, येन तदभावे निन्दा स्यादित्यत आह—**तद्धीति** । मोक्षाभावश्च महानिन्देति वक्ष्यति। **सम्यङ् निर्णीतार्थानामित्युक्तम्**। न केवलमानुमानिकं किन्तु पुराणेऽप्युक्तमित्याह—**उक्तञ्चेति** । वरीयसीः वरीयस्यः। 'सुपां सुलुक्'इत्यादिना जसः पूर्वसवर्णः। वाचो वेदवाचः।

रा॥ज्ञानानां यथोदितव्यवसायात्मिका बुद्धिस्समाधौ मनसि न विधीयते, नोत्पद्यते; समाधीयतेऽस्मिन्नात्मज्ञानमिति समाधिर्मनः, तेषां मनस्यात्मयाथात्म्यनिश्चयपूर्वकमोक्षसाधनभूतकर्मविषया बुद्धिः कदाचिदपि नोत्पद्यते इत्यर्थः। अतः काम्येषु कर्मसु मुमुक्षुणा न सङ्गः कर्तव्यः ॥ ४२ ॥ ४३ ॥ ४४ ॥

रा-अ॥एवमत्यल्पफलानि पुनर्जन्मप्रसवानि कर्माणि मातापितृ *सहस्रेभ्योऽपि वत्सल-

ता॥पौनरुक्त्यपरिहाराय तदर्थस्य प्रकृतव्यवसायात्मकबुद्ध्यभावहेतुत्वाय चोक्तम्—अपहृतज्ञानानामिति। यथोदितेति– प्रागुक्तप्रकारेत्यर्थः। न विधीयते केनचिद्धेतुना न क्रियत इत्यर्थः। ततः फलितमुच्यते—नोत्पद्यत इति। समाधिशब्दस्य बुद्धिविशेषपर्यवसायामभ्यानन्वयान्मनोविषयत्वे व्युत्पत्तिमाह—समाधीयतेऽस्मिन्निति—निधीयतेऽस्मिन्निति निधिवत्। यथोदितेत्यापाततमुक्तं प्रकारं विवृणोति—तेषांमनसीत्यादिना। विधीयत इति वर्तमाननिर्देशतात्पर्यसिद्धमुक्तम्—कदाचिदपीति। एवं निन्दा किमर्थमित्यत आह—अत इति।व्यवसायात्मकबुद्धिविरोधादित्यर्थः।मुमुक्षुणा न सङ्गः कर्तव्य इति—निस्सङ्गेन काम्यानामपि करणमनुमन्यते। स्वरूपमात्रस्य मोक्षविरोधित्वाभावात् मोक्षेच्छास्ति चेद्बन्धकेच्छा न कार्येत्युक्तं भवति ॥ ४२ ॥ ४३ ॥ ४४ ॥

अथैवं काम्यकर्मसु तदधिकृतेषु च निन्दितेषु हिततमोपदेशिनश्शास्त्रस्यैव तत्कर्मविधानमनुपपन्नम्। विहितस्य चात्र त्याज्यतयोपदेशो व्याहतः; कर्मविधिशास्त्राणामप्रामाण्यं वा, तत्प्रामाण्ये वा तन्निषेधोपदेशस्याप्रामाण्यं प्रसज्यत इतिशङ्कामुत्तरश्लोकद्वयेन परिहरतीत्याह—एवमत्यल्पेत्यादिना। पुनर्जन्म येषां प्रसवभूतं तानि पुनर्जन्मप्रसवानि। संसारविपिनानलस्यानां हि कर्मणां परिणितसोः फलस्य नियतपूर्ववर्तित्वसूचकत्वादिभिर्देहविशेषपरिग्रहः प्रसूनस्थानीयः। प्रियहितोपदेशितया मातापित्रोरु-

प्र·पा॥ *सहस्रेभ्यो वत्सल. पा॥
१. किमर्थमित्याह क. ख. ग. ङ. पा ॥
२. विरोधित्वात् . क. ग. द. ङ. पा॥
३. तत्स्वरूप. क. ग. घ. ङ. ज. पा ॥

श॥तेषां च—भोग इति ॥ भोगैश्वर्यप्रसक्तानां, भोगः कर्तव्य ऐश्वर्यं च इति भोगैश्वर्ययोरेव प्रणयवतां तदात्मभूतानाम्। तया क्रियाविशेषबहुलया वाचा अपहृतचेतसां आच्छादितविवेकप्रज्ञानां व्यवसायात्मिका सांख्ये योगे वा बुद्धिः समाधौ, समाधीयते अस्मिन् पुरुषोपभोगाय सर्वम् इति समाधिः अन्तःकरणं बुद्धिः तस्मिन् समाधौ, न विधीयते न भवति इत्यर्थः ॥ ४४ ॥

ये एवं विवेकबुद्धिरहिताः तेषां कामात्मनां यत् फलं तत् आह—त्रैगुण्य इति। त्रैगुण्यविषयाः, त्रैगुण्यं संसारः विषयः प्रकाशयितव्यः येषां ते वेदाः त्रैगुण्यविषयाः।

आ॥'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन्। स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात्' ॥ ४४ ॥

तां योगबुद्धिमाह—त्रैगुण्यविषया इत्यादिनेतरदपोह्य वेदानां परोक्षार्थत्वात् त्रिगुणस-

ज॥स्वप्ने निरुक्त्या स्वप्नप्रतीतार्थदृष्टान्तेन हेयानुमितं हेयत्वेनानुमितम्।इदमेव हि सम्यङ्निर्णीतार्थत्वम्, यद्धेयोपादेयविवेकेन हेयहानमुपादेयोपादानं च। तद्धि मोक्षसाधनमित्येतत्तु श्रुत्यादिप्रसिद्धमेव ॥ ४४ ॥

यथैषा चतुःश्लोकी न प्रतिज्ञातं योगमाह,तथा 'त्रैगुण्य'इत्येतदपीति प्रतीतिनिरासायाह — तामिति। प्रतिज्ञाताम्। आदिग्रहणेनाध्यायसमाप्तेरिति सूचयति,सप्तमोपक्रमे पुनःप्रतिज्ञानात्। तर्हि प्रतिज्ञानन्तरमेव कुतो नावोचदिति मन्दाशङ्कानिरासायोक्तम्—इतरदिति।लोकौ निष्ठाभावे कारणमेवमयोग्यदानीं

रा॰॥ तरतया आत्मोज्जीवने प्रवृत्ता वेदाः किमर्थं वदन्ति, कथं वा वेदोदितं त्याज्यतयो-च्यत *इत्यत आह—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६

ता॰॥ यदानम। मर्वजन्मानुवृत्तिसूचनाय महच्छब्दः। सर्वात्मसाधारणचतुर्विधपुरुषार्थसकलपुरुषार्थनिवृत्तिसाधनाभिधायितया कदाचिदप्यनुपरमादिना च तत्सन्ततत्वोक्तिः। अतिशयहेतुत्रयम् आत्मोज्जीवने प्रवृत्ता इति विभिस्सूचितम्। न हि देहादेरारोग्यादिमात्रे कदाचिदेव व्यापृता इति श्रमाभिप्राया भाव। किमर्थं वदन्तीति—न तावद्यतारणार्थं, हितोपदेशित्वात्। नापि हितान्तरपर्यवसितोपच्छन्दनार्थं, प्रतिप्रकरण तत्तत्फलमात्रपर्यवसितत्वात् । अतोऽनाधेयातिशयपरमकारुणिकपुरुषोत्तमाज्ञारूपाणां वेदानामामूलपर्यन्तमानमर्शिसितदुःखदुर्दिनानुबन्धिसुखरूपणारम्भोनसाधनोपदेशो विषसंपृक्तमधुभोजनोपदेशवद्युक्तः, निषेध एव तु कर्तव्य. । यद्वा न सोऽपि, प्रत्यक्षादेस्तत्रमज्ञकत्वाभावात् ; स्वयं प्रसज्य प्रतिषेधे जननीमज्जनशालनगमत्यादित्यभिप्राय. । कथमेति—वेदविरुद्ध हि त्याज्यतयोपदेश्यं, न तु

प्र पा॥ *इत्याह. पा॥

*१. लौकिकमाता तादृश पिता च एकैकजन्मनि प्रियहितपरतया अनुवर्तेत, वेदस्तु सर्वजन्मस्वित्यभिप्रायेण महच्छब्दःमहदाचार्यैः उक्त इत्यभिप्राय इत्याह—सर्वजन्मति ॥

२ साधारणतया य. ग. ङ च ज पा॥

३. अतिशयित य ङ ञ पा॥

*३. अतिशयहेतुत्रयमात्मोज्जीवने प्रवृत्ता इति त्रिभिस्सूचितम्—अतिशयत्रमन्तरत्वेत्यत्र तत्वथा वात्मत्यातिशय ॥ त्रिभि आत्मशब्दोज्जीवनशब्दप्रवृत्तशब्दै ॥

*४ तदेव हेतुत्रयमाह—नहीत्यादिना ॥ देहारोग्यादिमात्रे कदाचिदेव व्यापृता इति आत्मशब्देन देहव्यवच्छेद, उज्जीवनशब्देन आरोग्यस्य व्यवच्छेद, प्रवृत्तशब्देन कादाचित्कव्यापारस्य व्यवच्छेद इति विवक्षार्थलाभ इति भाव ॥

५ एव तु तत्र. य ङ ञ पा॥

६ प्रतिषेधस्य य ग. ङ ञ. पा ॥

शं॰॥ त्वं तु निस्त्रैगुण्यो भव अर्जुन निष्कामो भव इत्यर्थः। निर्द्वन्द्वः, सुखदुःखहेतू सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ, ततः निर्गतः निर्द्वन्द्वः भव। नित्यसत्त्वस्थः सदा सत्त्वगुणाश्रितः भव । तथा निर्योगक्षेमः, अनुपात्तस्य उपादानं योगः, उपात्तस्य रक्षणं क्षेमः ।

आ॰॥ स्वर्गादिप्रतीतितोऽर्थ इव भाति। परोक्षवादो वेदोऽयमिति युक्तम् । अतः प्राती-

ज्ञा॰॥ प्रतिज्ञातमा" । अन्यथा तत्प्रतिबन्धेनाप्यानर्थक्यादिति भावः । अथवा वक्ष्यमाणाना वाक्याना द्वेधा वृत्तिमनेनान्वेष्टि । त्रैगुण्याद्यैरितरयोगविरुद्धम् अपोह्य वैश्विरयोगमाहेति। यद्वा 'बहूनि मे व्यतीतानि' इत्यादिप्रागुक्तं विहाय अन्ययोगविषयं ज्ञातव्यमित्यर्थं । तथाच वक्ष्यति 'साधनं प्राधान्येनोक्तम्' इति। वेदास्त्रैगुण्यविषयाः त्वं तु निस्त्रैगुण्यो भव इत्यनेन वेदपरित्यागो विधीयते इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे—वेदानामिति । त्रिगुणसम्बन्धीत्यनेन 'तस्येदम्' इत्यर्थे तद्धितोऽयम् । त्रिविधा हि तद्धितगतिरिति वचनादिति सूचयति । सम्बन्धि कार्यम् । प्रतीतितः आपाततः प्रतीतितः । अर्थः प्रति-

रा॥त्रयो गुणास्त्रैगुण्यं सत्त्वरजस्तमांसि ; सत्त्वरजस्तमःप्रचुराः पुरुषास्त्रैगुण्यशब्देनोच्यन्ते;तद्विषया वेदाः;तमःप्रचुराणां रजःप्रचुराणां सत्त्वप्रचुराणां च *वत्सलतरत्तयैव हितमवबोधयन्ति वेदाः। यद्येषां स्वगुणानुगुण्येन स्वर्गादिसाधनमेव हितं नावबोधयन्ति; तदैते

ता॥वेदविहितमिति भावः।त्रयो गुणास्त्रैगुण्यमिति। अत्रार्थान्तरासम्भवात् 'चातुर्वर्ण्यादीनां स्वार्थे'इत्युपसङ्ख्यानात्स्वार्थिकप्रत्ययः। गुणशब्दस्य प्रयोगप्राचुर्याल्लङ्घ्यविशेषान्वयबलाद्वक्ष्यमाणपर्यालोचनाच्च सिद्धमर्थविशेषं निर्दिशति—सत्त्वरजस्तमांसीति। स्वर्गादिफलकरणेतिकर्तव्यताधिकारिविशेषादिविषया हि वेदाः। न पुनस्सत्त्वरजस्तमोविषया दृश्यन्त इत्यत्राह—सत्त्वरजस्तमःप्रचुरा इति। तत्तद्गुणप्राचुर्यात्पुरुषास्तत्तच्छब्देनोपचर्यन्ते। भाष्यान्तरोक्ता तु फललक्षणा मन्दा ; अधिकारव्यवस्थापनं त्वत्रोपयुक्ततममिति भावः। अस्त्येव गुणत्रयप्रचुरपुरुषविषया वेदाः ;चोद्यस्य किमायातमित्यत्राह—तम इति।एकस्मिन्नेवाधिकारिणि गुणत्रयप्राचुर्यभ्रमनिरासेन तत्तद्विधिनिषेधविषयाधिकारिवैचित्र्याभिव्यक्त्यर्थं तमःप्रचुराणामित्यादिपृथङ्निर्देशः। तामसाद्यधिकारिबाहुल्याल्पत्वाल्पतरत्वप्रकाशनाय सत्त्वरजस्तमसामत्र व्युत्क्रमपाठः। ततश्च क्रमादैहिकामुष्मिकापवर्गाभिलाषिण उपलक्ष्यन्ते। सत्त्वप्रचुराणामिति दृष्टान्ताभिप्रायः।अत एव सूपपादकग्रन्थे यद्येषामित्यादिना रजस्तमःप्रचुराणामेव ग्रहणम्। स्वगुणानुगुण्येनेति—यथा वातपित्तकफोपात्तशुद्धमसङ्कीर्णप्रकृतीन् पुरुषानालोच्य हितोपदेशिनो वैद्यास्तत्प्रकृत्यनुकूलं भोजनभैषजादि विदधति,अपथ्यादीनि च निषेधन्ति; तदभावे च यथा दुरुपदेशादिमूढचेतसः प्राणिनोऽपथ्यगरलादिसेवया प्रणश्यन्ति, यथा च ताम्बूलाद्यर्थिनः पुत्राः पित्रादिभिस्तत्प्रदानाभावे चौर्यादिना प्रणश्यन्ति, तथात्रापीति भावः।स्वर्गादिसाधनमेवेति—न हि पिपासादिपीडितानां

प्र·पा॥*वत्सलतयैव. पा॥ १.स्वार्थे उपसङ्ख्यानात्. घ. ङ. ङ. पा॥ २. इत्यत आह. ग. घ.ङ. पा॥ ३. अधिकारिष्वव. ग. घ ङ. पा॥ ४ अपथ्यादीनि. ख. ग. घ ज. ङ. पा,

'आत्मनो हितं कर्म आरभ्यम्, तेन सह वर्तमान सात्म्यम्' इति भैषज्यरत्नावल्यां। 'सात्म्यं नाम तद् यत्सातत्येनोपसेव्यमानमुपशेते' इति चरके, 'सर्वप्राणभृतां तस्मात्सात्म्यं क्षीरमिहोच्यते' इति सुश्रुते च॥

दी॥योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिः दुष्करा इति अतः निर्योगक्षेमः भव। आत्मवान् अप्रमत्तश्च भव। एष तव उपदेशः स्वधर्मम् अनुतिष्ठतः॥४५॥

आ॥तिकेऽर्थे भ्रान्तिं मा कुर्वित्यर्थः।'वादो विषयकत्वं च मुखतो वचनं स्मृतम्'इत्यभिधानम्।न तु वेदपक्षो निषिध्यते।'वेदे रामायणे चैव पुराणे भारते तथा।आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते''सर्वे वेदा यत्पदम्''वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूना*मात्मनो रुचिरेव च' 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः' इति

जा॥याद्य प्रयोजनं च। वेदानां परोक्षार्थत्वं कुत इत्यत आह—परोक्षतेति। यत एवं भवति,अतः प्रातिसिद्धाचात्प्रसक्तां भ्रान्तिं मा कार्षीः। कथमेतदनेन लभ्यते इत्यत आह—वादइति। वेदवादरता इत्यत्राप्येतदेव चाभिधानम्। प्रतीत एवार्थोऽस्तु इत्यत आह—नत्विति। पक्षः परमसिद्धान्तः। उत्तानार्थो वेदो निषिध्यत एव। योगविरोधित्वादित्यतः पक्ष इत्युक्तम्। कुत इत्यत आह—वेदइति। धर्ममूलं धर्मज्ञतेः कारणम्। तद्विदां वेदविदां मन्वादीनाम्। स्मृतिर्ग्रन्थः। शीलं मनोगतिः। आचारो धर्मबुद्ध्यानुष्ठानम्। आत्मनः मनसो रुचिः विकल्पविषये। प्रणिहितो विहितः। तद्विपर्ययः प्रतिषि-

* आत्मनस्तुष्टिरेव च. पा॥

रा॥रजस्तमःप्रचुरतया सात्त्विकफलमोक्षविमुखाः स्वापेक्षितफलसाधनमजानन्तः कामप्रावण्यविवशा *अनुपादेयेषूपादेयभ्रान्त्या प्रविष्टाः प्रणष्टा भवेयुः;अतस्त्रैगुण्यविषया वेदाः, त्वं तु निस्त्रैगुण्यो भव; इदानीं सत्त्वप्रचुरस्त्वं तदेव वर्धय,नान्योन्यसङ्कीर्णगुणत्रयप्रचुरो

ता॥तदानीं रसायनादिवन्निषेधयमिति भावः।मोक्षवैमुख्यं स्वापेक्षितफलसाधनाज्ञानं च तमःकृत्यम्। काम प्रावण्यादिकं तु यथाशं रजस्तमःकृत्यम्; कामप्रावण्यविवशाः काम्यफलाभिसन्धिबलेनात्मानं नियन्तुमशक्ताः।अनुपादेयेष्वित्यादि—यथा बौद्धादय इति भाव्यम्। प्रणष्टा भवेयुरिति—दुष्कर्मविपाकेन स्थावरादिभावमभ्याधिव्याधिचिरकालपतया पुरुषार्थयोग्यतागन्धरहिता भवेयुरित्यर्थः। अत इति—उक्तप्रकारेण शास्त्रोपदेशस्य हितमत्वादित्यर्थः। त्वंत्विति तुशब्देनाधिकारिवैषम्यं द्योतयति। किमस्याधिकारिणो वैषम्यं, कथं च संसारिणस्त्रैगुण्यनिषेधः, तथा सति 'नित्यसत्त्वस्थः' इत्यनेन विरोधश्च स्यादित्यत्राह—इदानीं सत्त्वप्रचुर इति। 'शिष्यस्तेऽहम्' इत्यादिवचनपरामर्शादिदमुक्तम्। अर्जुनशब्दसमुच्चितात्पर्यलब्धो विशेषोऽस्य सत्त्वप्राचुर्यम्। अर्जुनशब्दस्यावदातपर्यायत्वात् सत्त्वस्यापि शुक्लशब्दव्यपदेशादधिकारिवैषम्यस्य चापेक्षितत्वात्तथा प्रसिद्ध्यादिबलाद्वेदमेवात्र तात्पर्यम्। तदेव वर्धयेति न तु सिद्धं सत्त्वप्राचुर्यं परित्यज्य विहिताकरणनिषिद्धकरणादिना रजस्तमसी वर्धयेत्यर्थः। 'निस्त्रैगुण्यो भव' इति निषेधे गुणत्रयसाधारणे सति कथं सत्त्वं वर्धयेत्युच्यत इत्यत्राह—नान्योन्येति। सत्त्व

प्र-पा॥ *अनुपायेऽप्युपाय, अनुपायेषूपाय. पा ॥

१. †वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिकभेदभिन्ना बुद्धशिष्या बौद्धाश्चत्वारः बहुधा गण्यन्तेऽवान्तरविशेषाननिगणय्य। शिष्यैर्हि योगश्च आचारश्चेति द्वयङ्करणीयमिति तेषां शैली। तत्रायामाप्तार्थस्य प्राप्तये पर्यनुयोगो योगः, गुरूक्तार्थस्याङ्गीकरणमाचारः। ततश्च गुरूक्तार्थस्य शून्यमत्वस्याङ्गीकरणात् उत्तमाः, यथाश्रुतिप्रतिपत्तृत्वेन पर्यनुयोगस्याकरणात् अधमा ये शिष्यास्ते उत्तमाधमभावेन मध्यमतामवाप्ता बुद्धेन माध्यमिका इति अभाणिषत। ते च सर्वशून्यत्ववादिनः। ये च बुद्धोक्ते सर्वशून्यत्वे बाह्यार्थशून्यतामवधृत्यापि कथमान्तरस्य ज्ञानस्यापि शून्यत्वमिति पर्यनुयोगमकुर्वन्,ते पर्यनुयोगाचाराङ्गीकारात् बुद्धेन योगाचारा अभाणिषत। ये तु अस्मिन्नवावसरे प्रथमतः किमपि नापृच्छन्, किन्तूपदेशमूलस्यान्ते तर्कमकुर्वन्, ते बुद्धेन गुरुणा सूत्रान्ते प्रश्नकर्तृत्वात् सौत्रान्तिका इत्यगादिषत। ते बाह्यपदार्थानां सत्यत्वमभ्युपगम्यापि क्षणिकतामातिष्ठन्ते। बाह्यार्थानामप्रत्यक्षतामपलप्यानुमेयतां च वदन्ति। ये माध्यमिकान् प्रतिसर्वशून्यत्वम्, योगाचारान्प्रति च बाह्यार्थशून्यत्वम्; सौत्रान्तिकान् प्रति बाह्याभ्यन्तरतत्त्वमित्यादि विरुद्धमुपदिष्टं गुरुणा बुद्धेनेत्येवमसूयामाविष्कुर्वन्तो बुद्धं बहु विरुद्धं भाषसे इत्येवमभाषिषत, शिष्यास्तु नाहमेतादृशा भवन्त एव विविधविरुद्धार्थश्रोतार इति वैभाषिका इति समबूबुधद्बुद्ध इति ते वैभाषिकाख्यातिमलप्सतेति नामनिरुक्तिश्चतुर्णाम्॥

*२ 'शिष्यस्तेऽहम्' इत्यादिवचनपरामर्शादेवमुक्तमिति—'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' इति वचनेन स्वस्य श्रेयोऽन्विष्य भगवन्निकटे शिष्यभावं प्राप्य तदुपासिप्रतिपादनेन सत्त्वप्राचुर्यमर्जुनस्येदानीं मन्यत इति भावः॥

श॥सर्वेषु वेदोक्तेषु कर्मसु यानि उक्तानि अनन्तानि फलानि तानि न अपेक्ष्यन्ते चेत्—

आ॥वेदानां सर्वात्मना विष्णुपरत्वोक्तेस्तद्विहितस्य तद्विरुद्धस्य च धर्माधर्मोक्तेश्च॥४५॥

ज॥द्वः। निरश्चितयोगनिरोधे हि चेदे सिद्धान्तो निषेध्यः स्यात्; नचैवं,प्रत्युत तदनुगुण एवेति भावः। धर्मशब्दोऽत्र निवृत्तिधर्मपरः॥४५॥

रा॥भव ; न तत्प्राचुर्यं वर्धयेत्यर्थः;निर्द्वन्द्वः निर्गतसकलसांसारिकस्वभावः; नित्यसत्त्वस्थः गुणद्वयरहितनित्यप्रवृद्धसत्त्वस्थो भव;कथमितिचेत्—निर्योगक्षेमः आत्मस्वरूपतत्प्राप्त्युपायबहिर्भूतानामर्थानां *योगं प्राप्तानां च क्षेमं परित्यज्य आत्मवान् भव।आत्मस्वरूपान्वे-

ता॥ गुणत्रयसाधारणो निषेधः; स तु सङ्कीर्णविषयः,अन्यथा'नित्यसत्त्वस्थः'इति वक्ष्यमाणानुपपत्तेरिति भावः।'निस्त्रैगुण्यो भव'इत्येतत्'अरोगो भव' इत्यादिवत्पुरुषव्यापारासाध्यत्वेन प्रैषेणानुपपत्तेः आशीरूपमिव दृश्यत इत्यत्राह—नतदिति।रजस्तमःप्राचुर्यहेतुभूताहारादिकं परित्यजेत्युक्तं भवति। निर्गतेत्यादि। द्वन्द्वशब्दः पुण्यपापमूलसांसारिकस्वभाववर्गद्वयपर इति भावः। एतेन फलस्वरूपं वा साधनानुष्ठानदशासमकालीनस्वास्थ्यं वा द्वन्द्वतितिक्षारूपेतिकर्तव्यता वा विवक्षिता । गुणद्वयरहितेति। नित्यसत्त्वस्थपदं मत्स्यभक्षादिवदवधारणगर्भमिति भावः। यद्वा नित्यपदेन कदाचिदपि गुणान्तरानभिभूतत्वमिहाभिप्रेतम् । अत एव च प्रवृद्धत्वम् । गुणान्तराभिभवे हि नित्यप्रवृद्धिर्न स्यादिति भावः । सत्त्वसम्बन्धमात्रस्य सर्वक्षेत्रसाधारणत्वान्नित्यप्रवृद्धेत्युक्तम् । ननु रजस्तमःप्राचुर्यं न वर्धयेति निषेधः, सत्त्वप्राचुर्यं वर्धयेति विधिश्च नोपपद्यते, न ह्यसौ 'एतद्रजः, इदं तमः, इदमहं वर्धयामि' इति बुद्ध्या प्रवर्तते; यतो निषिध्येत; यतश्च निर्दिष्टे रजस्तमसी शमयेत् ; न चासौ सत्त्वतदुपायौ जानाति, येन तत्र प्रवर्तेत; अतः किमसौ कथं कुर्यादित्यभिप्रायेण शङ्कते—कथमितिचेदिति। तत्र निषेधस्य विधेश्चोपपादकतया 'निर्योगक्षेम आत्मवान्' इति पदद्वयं क्रमाद्व्याचष्टे—आत्मस्वरूपेत्यादिना । 'निर्योगक्षेमः'इति सामान्येन निषेधो मुमुक्षोर्निहितव्यतिरिक्तविषय इति ज्ञापनाय बहिर्भूतानामित्यन्तमुक्तम्। 'आत्मवान् भव' इत्यत्र मत्वर्थानुपपत्तिमाशङ्क्याह—आत्मस्वरूपान्वेषणपर इति । स्वस्यैवाप्रमत्ततागर्भस्वबुद्धिविशेषतः प्राप्त्यपेक्षया सम्बन्धनिमित्तः प्रत्ययः । यद्वा स्वरूपान्वेषणादेव ह्ययमात्मानं लभते, अन्यथा आत्महानिरेव

प्र·पा॥*योगं प्राप्ति पा॥ १ मूलमकम्सां. क. ग ङ छ. पा॥ | २. 'नित्यसत्त्वस्थ' इति पद. क.ग.ङ.पा॥

श्री ॥ किमर्थं तानि ईश्वराय इति अनुष्ठीयन्ते इति ? उच्यते ; शृणु—यावान् इति॥ यथा लोके कूपतडागाद्यनेकस्मिन् उदपाने परिच्छिन्नोदके यावान् यावत्परिमाणः स्नानपानादिः अर्थः फलं प्रयोजनं स सर्वः अर्थः सर्वतः संप्लुतोदके यः अर्थः तावान् एव संप.

आ॥तथापि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्यत आह— यावानर्थ इति। यथा यावानर्थः प्रयोजनमुदपाने कूपे भवति। तावान्सर्वतः सम्प्लुतोदकेऽन्तर्भवत्येव। एवं सर्वेषु वेदेषु यत्फलं तद्विजानतोऽपि ज्ञानिनो ब्राह्मणस्य फलेऽन्तर्भवति। ब्रह्मण-

ज्ञा॥योगोपदेशप्रसङ्गे ज्ञानफलकथनस्य क उपयोगइत्यत आह—तथाऽपीति । यामिमामित्यत्र काम्यकर्मिणां निन्दा कृता; निस्त्रैगुण्यो भवेति च तत्त्यागो विहितः। तत्र प्रष्टव्यम्— किन्निमित्तमेतदिति । ननूक्तः काम्यकर्मिणा समाप्यमात्रेन ज्ञानाभावान्मोक्षो न भवतीति। अत्रेदमुच्यते—यद्यपि ज्ञानफलं काम्यकर्मिणां न भवति, तथाऽपि तन्निन्दादिकं नोपपद्यते । कुतः, काम्यकर्मिणा फलं स्वर्गादिकं ज्ञानिना न भवति इति ज्ञानकर्मणोः साम्यमेवेति योगानुष्ठाननियमाक्षेपे सत्याहेत्यर्थः । केचिदस्य श्लोकस्य कर्ममात्रत्यागे तात्पर्यमाहुः। अपरे तु यत्कर्मसमुचितं ज्ञानं मोक्षसाधनं तत्कर्मपर एव वेदभागोऽधिगन्तव्यः, न तु समस्तवेदाभ्यासेनायुः समापनीयमिति । तन्निरासाय व्याचष्टे—यथेति । सामर्थ्यात्तथैवशब्दयोरध्याहारः; यावांस्तावानित्येतयोरावृत्तिश्च । सर्वेषु वेदेष्विति तदुक्तकाम्यकर्मिणामित्यर्थः । ब्राह्मणस्येति न क्षत्रियादिव्यावृत्तिः शङ्क्येति भावेनाह—ब्रह्मेति । वर्णविपर्ययो निरुक्त-

रा॥घणपरो भव। अप्राप्तस्यप्राप्तिर्योगः,प्राप्तस्य परिरक्षणं क्षेमः।एवं वर्तमानस्य ते रजस्तमः प्रचुरता नश्यति, सत्त्वं च वर्धते। न च वेदोदितं सर्वं सर्वस्योपादेयम् ;यथा सर्वार्थपरिकल्पिते सर्वतस्संप्लुतोदके उदपाने पिपासोर्यावानर्थः *यावदेव प्रयोजनम्, *तावदेव तेनोपादीयते, न सर्वम् ; एवं सर्वेषु च वेदेषु ब्राह्मणस्य विजानतः वैदिकस्य*

ना॥स्यादिति भावः। एवं निषेधस्य विधेश्चानुष्ठानाय विषय उक्तः । अतः किमित्यत्र तदुभयाधीन फलद्वयमाह एवमिति । न साक्षाद्गुणान्विषयीकृत्य तत्र किञ्चित्कर्तव्यम्, तेषां तु नियोगक्षेमत्यात्मयत्नाभ्याममात्विकाहारादित्यागहेतुभ्यां स्वयमेव यथार्हं नाशोन्मेषौ स्यातामिति भावः ॥ ४५ ॥

*अथ सनिदर्शनमधिकारिभेदं प्रतिपादयन्तं 'यावानर्थः' इत्यादिश्लोकं व्याचष्टे*—**नचेति** । वर्णाश्रमप्रवरचरणादिभेदेन प्रतिनियताधिकारिविषया हि वेदोदिता धर्मा इति भावः । **सर्वार्थपरिकल्पित इति**– *तत्तत्प्रयोजनाभिलाषिसर्वाधिकार्यर्थं परिकल्पिते । यद्वा सर्वशब्दः प्रयोजनकात्स्न्यपरः*, स्नानपानादिनानाप्रयोजनार्थं परिकल्पिते । एतच्च 'सर्वतस्संप्लुतोदके' इत्यनेनार्थसिद्धमुक्तम् । उदपान कूपतटाकादि । **पिपासोरिति** दार्ष्टान्तिकप्रस्थानानुरोधेनाध्याहारः । नन्वत्र दृष्टान्तदार्ष्टान्तिकयोः का सङ्गतिः[1]; न हि पिपासोरुदपाने यावत्प्रयोजनं, तावदेव विजानतस्सर्वेषु वेदेष्वित्याशङ्का परिहर्तुं *वाक्यपूरणायाध्याहृत्योक्तम्*—**तावदेव तेनोपादीयत** इत्यादि । *सर्वेषु चेति चशब्द उपादेयानुपादेयांशसङ्कलनद्योतनार्थः* । ननु ब्राह्मणस्येत्येतत्प्रकरणासङ्गतम्, क्षत्रियादेरप्युपदिश्यते । कश्चात्र ब्राह्मणस्य विशेषः, ब्रह्मविद्याया अपि त्रैवर्णिकसाधारणत्वात् । विजानत इति चायुक्तम्; विजानतैव हि कर्मानाधिकारादिष्वपि प्रवर्तते । *ब्राह्मणशब्दश्चात्र न 'तदधीते' इत्याद्यर्थान्तरपरः; 'ब्राह्मोऽजातौ' इति निपातनेन जातिव्यतिरिक्तार्थे ब्राह्म इत्येव वक्तव्यत्वात्। तत्राह*—**वैदिकस्य मुमुक्षोरिति।** *ब्रह्म* अणतीतिनिरुक्त्या ब्राह्मणः 'शकन्ध्वादिषु पररूपं वक्तव्यम्' इति पररूपे कृते प्रज्ञादित्वादण्प्रत्यये च ब्राह्मण इति रूपं भवति । ब्रह्म चात्र वेदः,वेदेष्वित्यनेन प्रसक्तत्वात् । अतोऽत्र ब्राह्मणशब्दो वैदिक

प्र-पा॥ *यावदेव पानीय प्रयोजन. पा ॥
१ तत किमि. ग घ झ पा॥
२. इति श्लोक. क ख ग ङ पा॥
३ चकार क ख ग, घ ङ झ पा॥
४. कर्माधिकारा. ख. ग. घ. ङ. झ पा॥
५ अष्टा ४ २ ५९॥ ६. अष्टा ६-४ १७१॥
७ रिक्तार्थेषु क, ख, ग ज झ पा॥
८. अष्टा ६. १ ९४ स वा ॥

शा॥यते, तत्र अन्तर्भवति इत्यर्थः । एव तावान् तावत्परिमाणः एव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु यः अर्थः यत् कर्मफलं सः अर्थः ब्राह्मणस्य संन्यासिनः परमार्थतत्त्वं विजानतः यः अर्थः यत् विज्ञानफलं सर्वतः सम्प्लुतोदकस्थानीयं तस्मिन् तावान् एव

आ॥तीति ब्राह्मणोऽपरोक्षज्ञानी । स हि ब्रह्म गच्छति । विजानत इति ज्ञानफलत्वं तस्य दर्शयति ॥

जा॥त्वात्। एवं तर्हि ब्राह्मणशब्दो मुक्तवाचीति स्यात् ,न च मुक्तस्य फलमस्तीत्यत आह––**अपरोक्षेति।** तदुपपादयति– **सहीति** । तर्हि विजानत इति पुनरुक्तिरितिचेन्न , तस्य परोक्षज्ञानविवक्षित्वात् । उभयग्रहणमनुपपन्नमित्यत आह—**विजानत इति** । तस्यापरोक्षज्ञानस्य परोक्षज्ञानफलत्वम् । एतच्च स्वरूपकथनम् । *यद्यपि ज्ञानिनः कर्मिणश्चान्योन्यफलाभावः; तथापि ज्ञानिनः फलं महासमुद्रोदकमिव* महत्त्वात् । कर्मिणां फलं तु कूपोदकमिवात्यन्ताल्पम् । अतस्तयोर्न साम्यम्। तथा चाल्पास्थिरकर्मनिन्दया

रा ॥ मुमुक्षोः यदेव मोक्षसाधनं तदेवोपादेयम् ; नान्यत् ॥ ४६ ॥

रा-अ॥ अतस्सत्त्वस्थस्य मुमुक्षोरेतावदेवोपादेयमित्याह—

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥** ४७

रा॥नित्ये नैमित्तिके काम्ये च केनचित्

ता॥मात्परं इति न क्षत्रियार्थोपदेशाद्यनुपपत्तिः।ब्राह्मणशब्दस्यात्र सन्यासिपरत्वेन शङ्करव्याख्या त्वनिमन्द्या। 'अमौनं च मौनं च निर्विद्याथ ब्राह्मणः'[1]इति श्रुतिस्तु योगिनः प्रकृष्टतरान्तरसत्त्वमवस्थाविशेषमाह। 'विजानत'इति च विशिष्टज्ञानवत्त्वमुच्यते। विशिष्टत्वं च हेयोपादेयविषयतया[2]। तथाविधज्ञानवांश्च मुमुक्षुरेव स्यादिति। तावानित्यस्य व्यवच्छेद्यमाह—नान्यदिति। वेदोदितमपि न मोक्षसाधनव्यतिरिक्तमुपादेयम्, अनधिकृतत्वात्। न ह्यन्यवर्णाश्रमान्यफलकामुकादिधर्मोऽन्यस्योपादेय इति भावः ॥४६॥

एवं तर्हि मोक्षसाधनेतरसकलपरित्यागे नित्यनैमित्तिकनिषेधशास्त्रातिलङ्घनेन कामचारदोषस्स्यात्; तावानिति च कियानुच्यत इति शङ्कायामुत्तरश्लोकमवतारयति—अत इति।न कामचारदोषः,एतावत उपादेयत्वात्, नाप्यन्येच्छोरन्योपायप्रवृत्तिदोषः, तत्तत्फलपरित्यागेन साधारणस्वरूपमात्रस्योपादेयत्वादिति भावः।'कर्मणि'इति सामान्यशब्दस्य योग्यान्विशेषानाह[3]—नित्य इत्यादिना। 'केनचित्'इत्यादिकं राशित्रयेऽपि सम्बध्यते।[*4] तेन नित्यनैमित्तिकयोरपूर्वमात्रार्थतामिच्छतां कुदृष्टीनां दृष्टिरपहृता। कर्मान्तराधिकारोपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारप्राजापत्यादिलोकपशुपुत्रादि यथासम्भवं नित्यादेः

प्र-पा॥ [1] बृ. ५ ५.१ †'अमौनम् मौनेतरमहकारिकलापः. तच्च मौनश्च यथावदुपाददानो विद्याकार्यतदेकनिष्पाद्यां लभेतेत्यर्थः 'इति श्रीभाष्यम् ३-४-४६ [2]. देयविभागविषयतया. ग घ. ङ पा॥ [3]. योग्याविषयानाह. ग. पा ॥ [*4]. 'केनचित्' इत्यस्य भाष्यस्थस्य कर्ममात्रेऽन्वयभ्रमवारणायाह—राशित्रयेऽपीति। राशित्रयेऽपि—नित्यनैमित्तिककाम्यरूपे राशित्रयेऽपि ॥

शां॥संपद्यते।'सर्वं तत् अभिसमेति यत् किञ्चित् प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद' इति श्रुतेः। 'सर्वं कर्माखिलम्' इति च वक्ष्यति। तस्मात् प्राक् ज्ञाननिष्ठाधिकारप्राप्तेः कर्मणि अधिकृतेन कूपतटाकाद्यर्थस्थानीयम् अपि कर्म कर्तव्यम् ॥ ४६ ॥

आ॥कामात्मनां निन्दा कृता। कथम्,एवं'स्वर्गकामो यजेत'इत्यादौ कामस्यापि विहितत्वादित्यत आह—कर्मण्येवेति। त इत्युपलक्षणार्थम्। तव ज्ञानिनोऽपि न फलकाम-

ज॥महानन्तफलज्ञानसाधने योगे प्रेरणं युक्तमेवेति भावः। अपव्याख्यानं तूक्तवक्ष्यमाणन्यायनिरस्तम् ॥

ज्ञानिनः कर्माभावमुक्त्वा इदानीमज्ञानिनः कर्मोच्यत इत्यन्यथा व्याख्याननिरासायाह—कामात्मनामिति। येषां कर्मिणां सकामतया कर्म कुर्वतां या निन्दा कृता यामिमामित्यादिना, सा न युक्तेत्यर्थः। कुतः, 'स्वर्गकामो यजेत' इत्यादौ यजनवत्स्वर्गकामस्यापि विहितत्वात्, न हि विहितं कुर्वता निन्द्यत्वम्, तथात्वे यजनस्यापि निन्द्यत्वप्रसङ्गादिति वदन्विशिष्टविधित्वं मन्यते पूर्वपक्षी। त इत्येतदर्जुनमात्रविषयमित्यन्यथा प्रतीतिनिरासायाह—त इति। सर्ववर्णाश्रमोपलक्षणमर्थः प्रयोजनमस्येति तथोक्तम्। वक्त्रधीने शब्दप्रयोगे वाचकमेव प्रयुञ्जता किं लक्षणयेत्यत आह—तवेति। फलकामः कर्तव्यो यस्यासौ तथोक्तस्तस्य भावस्तत्ता। फलकामस्य कर्तव्यता तव कर्तुरिति वा। कुतोऽपि फलकामो ज्ञानिनो नात्यन्तबाधकः; तदुपनिबन्धनीयस्य ज्ञानस्यातत्त्वात् मोक्षस्य च नियतत्वात्। तथापि

रा॥ फलविशेषेण सम्बन्धितया श्रूयमाणे कर्मणि *नित्यसत्त्वस्थस्य मुमुक्षोस्ते कर्ममात्रेऽधिकारः। तत्सम्बन्धितयाऽवगतेषु फलेषु †न कदाचिदप्यधिकारः, ‡सफलस्य बन्धरूपत्वात् फलरहितस्य केवलस्य मदाराधनरूपस्य मोक्षहेतुत्वाच्च मा च कर्मफलयोर्हेतुर्भूः।

ता॥फलम्। फलविशेषेणेति। यथोत्पत्तिवाक्ये स्वरूपेणैवोत्पन्नाना कर्मणा कामाधिकारे स्वर्गादिफलविशेषेण सम्बन्धितया श्रुतत्वात् स्वर्गादिकं फलमिष्यते; एवं मोक्षाधिकारेऽपि मोक्षाख्यफलविशेषेण सम्बन्धितया श्रुतत्वात्सोऽपि फलमिति भावः।'ते'इतिशब्दस्य प्रकृतान्वित तात्पर्यमाह—नित्यसत्त्वस्थस्य मुमुक्षोरिति। मोक्षतत्साधनादिफलव्यवच्छेदाय तत्सम्बन्धितयाऽवगतेष्वित्युक्तम्। स्वर्गपश्वादिष्विति शेषः। मेति न निषेधविधिः, नित्यभावमात्रबोधक इति न कदाचिदित्युक्तम्। फलयोग्यतानिषेधात्तत्सङ्गनिषेधोऽपि फलित.। कर्ममात्राधिकारे फलानधिकारे च बुद्धिस्थक्रमेण हेतुद्वयमाह—सफलस्येति। न हि मोक्षमिच्छतो बन्धरूपफलाभिलाष उपपन्नः। न च तद्धेतुपरित्याग उचित इति भावः। केवलस्येत्येतत्र फलराहित्यमात्रपर,फलरहितस्येत्युक्तत्वात्। अपि तर्हि स्वरूपत एव प्रयोजनत्वपरम्। तत्र हेतुः—मदाराधनरूपस्येति। कर्मफलयोरिति। पुनरुक्तिप्रसञ्जकषष्ठीसमासादपि उभयपदार्थप्रधानो द्वन्द्व एवोचितः। वक्ष्यमाणाकर्तृत्वानुसन्धानसङ्गश्चात्र युक्त इति भावः। 'कर्मण्येवाधिकारस्ते' 'मा ते सङ्गोऽस्त्वकर्मणि'इति पूर्वोत्तरवचनाभ्यामयं कर्महेतुत्वनिषेधो व्याहन्येते-

प्र-पा॥*नित्यसत्त्वस्थ. पा॥ †कथञ्चिदप्यधिकारः। १ वाक्ये च पा॥ ज. पा॥ ‡सफलस्य, फलस्य पा॥

शा॥तव च—कर्मणि इति॥ कर्मणि एव अधिकारः न ज्ञाननिष्ठायां ते तव। तत्र च कर्म कुर्वतः मा फलेषु अधिकारः अस्तु, कर्मफलतृष्णा मा भूत् कदाचन कस्यांचित्

आ॥कर्तव्यता किम्वन्येषाम्। न त्वस्ति केषांचिन्न तेऽस्तीति। स हि ज्ञानी नरांश इन्द्रश्च। मोहादिस्त्वभिभवादेः। यदि तेषां शुद्धसत्त्वानां न स्याज्ज्ञानं कान्येषाम्। उपदेशादेश्च सिद्धं ज्ञानं तेषाम्। पार्थार्षिपेणेत्यादिज्ञानिगणनाच्च। कामनिषेध एवात्र। फलानि ह्य-

ज॥मोक्षनिलम्बहेतुत्वात्तस्यापि न कर्तव्य, किम्वन्येषामज्ञानिनामिति प्रदर्शनायोपलक्षकपदप्रयोग इति भावः। ननु कर्मण्येवाधिकारो मा फलेष्विति ह्यनुक्तम्, तत्कथ न फलकामकर्तव्यतेत्येकस्यैव ग्रहणम्। उच्यते—फलकामकर्तव्यतानिषेधस्यैवात्र प्राधान्यात्कर्मण्यधिकार इति तदर्थानुवादः। तथापि न फलकामाधिकार इति वक्तव्यम्। मैवम्, अधिकारभावाभावयोः कर्तव्यताकर्तव्यत्वसमर्थनार्थमुक्तत्वेन साध्यस्यैवोपादानात्। तथाच वक्ष्यति। त इत्युपलक्षणार्थमित्युक्तस्य व्याचर्यमाह—नत्विति। केषाञ्चित्फलकामकर्तव्यतास्ति, केवलं ते नास्तीत्यर्थस्तु नेत्यर्थः। कामान् यः कामयत इत्यादौ सर्वेषां निषेधादिति भावः। नन्वर्जुनस्य ज्ञानित्वे स्यादिद, तदेव कुत इत्यत आह—सहीति। हिशब्दसूचिता प्रमाणसिद्धिमेव दर्शयति—नरांश इति। कथं तर्हि 'यज्ज्ञात्वा न पुनर्मोहम्' इत्यर्जुनस्य मोह उच्यते, कथं च प्रश्नस्मरणमित्यत आह—मोहादिरिति। बलवता प्रारब्धकर्मादिना ज्ञानस्याभिभवान्मोहः। विशेषज्ञानार्थं प्रश्न इत्यर्थ.। नन्विन्द्रादीनामेव कुतो ज्ञानित्वमित्यत आह—यदीति। 'सत्त्वं हि ज्ञानकारणम्' 'सत्त्वात्सञ्जायते ज्ञानम्' इति वचनात्। देवाश्च शुद्धसत्त्वा.। अतः कारणसद्भावात्तु तेषां ज्ञानम्; अन्यथा न कस्यापि स्यात्। इतश्चेन्द्रादयो ज्ञानिन इत्याह—उपदेशेति। 'एतदुहेन्द्रो विश्वामित्राय प्रोवाच' इत्यादिरुपदेशः। आदिपदेन प्रजापतौ ब्रह्मचर्यम्। अर्जुनस्य ज्ञानित्वे प्रमाणान्तरमाह—पार्थेति। ज्ञानिषु गणनात्।

रा॥न्त्वयानुष्ठीयमानेऽपि *कर्मणि नित्यसत्त्वस्थस्य मुमुक्षोस्तवाकर्तृत्वमप्यनुसन्धेयम्। फलस्यापि क्षुन्निवृत्त्यादेर्न त्वं हेतुरित्यनुसन्धेयम्। तदुभयं गुणेषु वा सर्वेश्वरे मयि वाऽनु-

ता॥त्यत्राह—त्वयेति। नात्र वस्तुतो हेतुत्वं निषिध्यते ;अपि तु हेतुत्वानुसन्धानमित्यर्थः। ननु फलहेतुत्वनिषेधः पुनरुक्तः, 'मा फलेषु कदाचन' इत्युक्तत्वात्। यदि तु भोजनादिसाध्यक्षुन्निवृत्त्यादिफलनिषेधः; तदा तदुपायेरागस्यापि निवृत्तेश्शरीरधारणादेरप्यभावप्रसङ्गेनोपायानुष्ठानस्यैव लोपस्स्यादित्यत्राह—फलस्यापीति। क्षुन्निवृत्त्यादेरित्यनेन पौनरुक्त्यं परिहृतम्। न त्वं हेतुरित्यनुसन्धेयमिति। नात्र क्षुन्निवृत्त्यादिस्वरूपं निषिध्यते। अपित्वात्मनस्तद्धेतुत्वानुसन्धानमिति भावः। ननु कथं कर्मफलयोर्हेतुस्त्वमहेतुरित्यनुसन्धीयेत। एवं च चार्वाकादिवदनयोर्निर्हेतुकत्वमनुसन्धेयं स्यात्; ततश्चोपायानुष्ठानमेव हीयेत। अहेतुकतया बुध्यमाने प्रयासायोगादित्यत्राह—तदुभयमिति। उभयं - कर्महेतुत्वं फलहेतुत्वं

प्र-पा॥*कर्मणि तवाकर्तृत्वं पा॥ १. यदित्यत्र. ग. पा॥ २. तदुपायविषयरागस्यापि. ज. पा॥

श॥अवस्थायाम् इत्यर्थः। यदा कर्मफले तृष्णा ते स्यात् तदा कर्मफलप्राप्तेः हेतुः स्याः,एवं मा कर्मफलहेतुः भूः। यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव

आ॥स्वातन्त्र्येण भवन्ति। न हि कर्मफलानि कर्माभावे यत्नतो भवन्ति। भवन्ति च काम्यकर्मिणो विपर्ययत्नेऽप्यविरोधे। अतः कर्माकरण एव प्रत्यवायो न तु ज्ञानादिना वाऽकामनया फलाप्राप्तौ। अतः कर्मण्येवाधिकारः। अतस्तदेव कार्यम्। न तु कामेन ज्ञाना-

ज॥एतेनापव्याख्यानमपि निरस्तम्। नन्वत्र मा फलेष्विति फलविषयो निषेधः कृतः। तत्कथमुक्तं फलकामेति तत्राह—कामेति। फलशब्देन तद्विषयं काममुपलक्ष्य तद्विषयो निषेधोऽत्र क्रियते, न फलविषय इत्यर्थः। कुतो लक्षणाश्रयणमित्यत आह—फलानीति। यत्र हि पुरुषस्य कर्तुमकर्तुं वा स्वातन्त्र्यं तत्रैव निषेधो नान्यत्र प्रसक्तेरभावात्। न च फलेषु स्वातन्त्र्यमस्ति। अतो मुख्ये बाधकाल्लक्षणाश्रयणमित्यर्थः। कथमस्वातन्त्र्यमित्यतः करणे तावदाह—नहीति। अकरणेऽपि तदाह—भवन्ति चेति। चोऽवधारणे। अविरोधे प्रबलदर्शनादितत्प्रतिरोध्यभावे। तदनेन ते इति फलेष्विति च पदद्वयं व्याख्यातम्। स्यादेतत्, 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादिकामनाविशिष्टं यजनादिकं कर्म कार्यतयोच्यते। अतो न कामात्मता निन्दोचितेति शङ्कायां किमेतत्कर्मण्येवाधिकार इत्याद्यसङ्गतमुच्यते। यश्च कर्मवत्कामनाया अपि कार्यता मन्यते, कुतस्तस्य फलकामनायामधिकाराभावः सिद्धः। फलेष्विति लाक्षणिकशब्दप्रयोगे च किं प्रयोजनमित्याशङ्क्य पूर्वार्धं व्याचष्टे—अत इति। अत इत्यस्य वक्ष्यमाणेन मूलेऽन्वयः परेण 'इत्यर्थः'इत्यनेनान्वयः।अत्र उक्तन्यायेन पदद्वयस्य लाक्षणिकत्वे सतीत्यर्थः। श्लोकार्थः सम्पन्न इति शेषः। तत्र तावत्कर्मण्येवाधिकारः सर्ववर्णाश्रमिणां न फलकामनायामित्युक्तेऽर्थद्वये हेतुद्वयमाह—कर्माकरण इति। 'कुर्वन्नेवेह कर्माणि' इत्युक्त्वा 'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इत्युक्तत्वात्, कर्माकरण एव प्रत्यवायोऽनिष्टप्राप्तीष्टहानिलक्षणः; न त्वकामनया प्रत्यवायः प्रमाणाभावात्। ननु कामाभावे तत्फलानवाप्तेः कथं प्रत्यवायाभाव इत्यत उक्तम्—फलाप्राप्ताविति। काम्यकर्मफलाप्राप्तावपि न प्रत्यवाय इत्येतदुपपादनायोक्तम्—ज्ञानादिनावेति। वाशब्द उपमायाम्। यथा ज्ञानादिना साधनेन मोक्षं गच्छतः स्वर्गाद्यलाभो न खेदहेतुः, महाफललाभेऽल्पफलहानेरकिञ्चित्करत्वात्। तथाऽकामनया फलाप्राप्तावपि न खेदः। निष्कामेन कर्मणा महाफलस्य ज्ञानादेर्लाभादिति भावः। ततः किमित्यत उक्तस्य हेतुद्वयस्य गीतोक्तं साध्यद्वयमाह—अत इति। न तु फलकामनायामिति च वक्तव्यम्। यत एवं कर्माकरणे प्रत्यवायोऽतः कर्मण्येवाधिकारः। यतः कामाकरणे

रा॥ सन्धेयमित्युत्तरत्र वक्ष्यते । एवमनुसन्धाय कर्म कुरु ।

ता॥च । उत्तरत्रेति । अयमेव तृतीयाध्यायप्रधानार्थ । तथा हि सङ्ग्रह —'असङ्गया लोकरक्षायै गुणे ध्वारोप्य कर्तृताम् । सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता' इति। एवमहेतुत्वत्वचोत्र तावत्परिहृतम्। तथाप्यात्मन्यहेतुत्वानुसन्धाननिषेधेन अननुष्ठानप्रसङ्गस्तदवस्थ इति चेन्मैवं , नह्यत्रानुष्ठानस्याननुष्ठानत या भ्रान्तिरुच्यते , नाप्यनुष्ठातृत्वस्य सतोऽप्यप्रतिपत्तिर्विधीयते , येन विरोधस्स्यात् , किन्त्वनेन हेतुत्वे कस्मिंश्चिदेकस्मैव हेतुत्व त्रैगुण्याद्युपाधिके स्वरूपप्रयुक्तत्व च भ्रान्तिसिद्धमिति तदुभय निषिध्यते । व क्ष्यते हि 'दैवीह्येषा गुणमयी' इत्यादौ, तृतीयाध्याये च। किञ्च,साक्षात्कर्तृत्वाननुसन्धानविधावपि नात्मकर्तृ त्वानुसन्धानकर्तृत्वप्रतिपत्तिनिषेधयोरप्यननुष्ठानप्रसङ्ग । सद्धि कुर्वन्नेव स्वकृतोपकारनिगूहनवदाहार्यबोधेन तथा प्रतिपद्यते। अन्यत्र वा कर्मणि नियमाणइति न कश्चिद्दोष । 'सर्वेश्वर' इति निर्देश तस्मिन् कर्तृत्वारोपसमायौचित्यार्थ । जीवस्यापि हि कर्तृत्व तत्त्वत परमात्मायत्तमिति 'परात्तु तच्छ्रुते ' इत्यधि करणे स्थापितम् । पूर्वोत्तरवाक्यायाविरोधाय कर्मस्वरूपपरित्याग परिहरति—एवमिति । गुणेश्वराधी नत्वानुसन्धानेऽपि किं मे परित्यक्तफलेन दु खस्वरूपेण भोजनादिकर्मणेति त्वया नोदासितव्यमिति भाव ।

प्र पा॥ १ गीतार्थसङ्ग्रह ७-श्लो ॥
२ गी १८ १५
३ शारी २ ३ ४० न तम् पूर्वोक्तकर्तृत्वम्, अस्य जीवा मन , परात् परमात्मन एव इताभैवति।

कुत ? श्रुते 'य आत्मानमन्तरो यमयति'इत्यादि श्रुतेरित्यर्थ । स्मृतेश्चोपलक्षणम् । 'सर्वस्य चाहम्' इत्यादिस्मृते । इति सूत्रार्थ ॥

शा॥जन्मन हेतु॰ भवेत्। यदि कर्मफल न इष्यते,किं कर्मणा दु खरूपेण इति मा ते तव

आ॥दिनिषेधेन वा फलप्राप्ति । कामवचनाना तु तात्पर्य भगवतैवोक्तम्।'रोचनार्थं फल श्रुति ' 'यथा भैषज्यरोचनम्' इति भागवते । अत एव कामी यजेतेत्यर्थ । न तु

आ॥न प्रत्यवायोऽतो न कामेऽधिकार इत्यर्थ । तत किं प्रकृत इत्यत परमसाध्यद्वयमाह—अत इति। यत कर्मण्येवाधिकारोऽतस्तदेव कार्यं विधिविषय इत्यथ । यत कामे नाधिकार , अत कामेन फल प्राप्ति फलप्राप्तये काम इति यावत् , न कार्य । तत्र दृष्टान्त —ज्ञानादिनिषेधेनेवेति । अत्रापि यादा ब्द उपमायाम् । यथा प्रेक्षावता ज्ञानादिक परित्यज्य फलप्राप्तिर्न क्रियते तथेत्यर्थ । पूर्वोक्त एवाभिप्रा य , यदि कर्मैव विधिविषयो न काम , तर्हि'स्वर्गकामो यजेत'इत्यादिवाक्याना किं तात्पर्यमित्यत आह —कामेति । अनादिविषयवासनावासितान्त करणा न सहसा ज्ञानसाधने कर्मणि प्रवर्तितु शक्यन्ते । अतस्तेषा कर्मण्यभिरुचिजननार्थं'स्वर्गकाम 'इत्यादिश्रुति प्रवृत्ता, कर्मणि प्रवृत्तास्तु ज्ञाने काम त्याज यिष्यामीत्यभिप्रायवती। यथा फलेन प्रलोभ्य बालाना भैषज्यरोचन क्रियते तथेत्यर्थ ।अस्त्वेव तात्पर्य,यो जना तु कथमित्यत आह—अत इति । यत एव न्यायेन कर्मण एव कार्यत्व न कामस्येति प्राप्तम्,अत कामी यजेतेत्येव श्रुत्यर्थ । कामानुवादेन यजनं विधीयत इति यावत् । एवशब्दव्यावर्त्यमाह—न त्विति । कामविशिष्टयजनविधाने तु नेत्य । एतदुक्त भवति—विशिष्टविधानशङ्काया नेद विशिष्ट विधान किं तु कामानुवादेन यजनस्यैवेति परमसाध्यमत्राध्याहार्यम् । तत्कुत इत्यपेक्षाया कर्मण एव कार्यत्वात्कामस्य तदभावादिति वा हेतुवचन चोपस्कर्तव्यम् । तदपि कुत इत्यपेक्षाया कर्मण्येवाधि कारो न फलकाम इति गीतोक्तयोहेत्वोरुपस्थानम् । तदपि कुत इत्यपेक्षाया कर्माकामकरणाकरणयो प्रत्यवायभावाभावयोर्हेत्वोरध्याहार । एतदुपपादनाय लाक्षणिकफलशब्दोपादानमिति। भास्करस्त्वाह—

रा ॥ अकर्मण्यननुष्ठाने 'न योत्स्यामि' इति यत्त्वयाभिहितं न *तत्र ते सङ्गोऽस्तु, उक्तेन प्रकारेण युद्धादिकर्मण्येव सङ्गोऽस्त्वित्यर्थः ॥ ४७ ॥

ता॥अननुष्ठानइति। अकर्मणीत्यत्र कर्मशब्दः क्रियावाची; नञ्च तदभावपरइति भावः। अननुष्ठानस्य प्रतिषेधार्थं प्रसङ्गं स्मारयति—नयोत्स्यामीति। अकर्मसङ्गनिषेधफलितमत्यत्र सङ्गमाह—उक्तेनेति ॥

प्र-पा ॥ * तत्र सङ्गो. पा ॥ | १. नञप्यत्र. ख. घ. पा ॥

श्री॥सङ्गः अस्तु अकर्मणि अकरणे प्रीतिः मा भूत् ॥ ४७ ॥

आ॥कामी भूत्वेत्यर्थः। 'निष्कामं ज्ञानपूर्वं च' इति वचनात्, वक्ष्यमाणेभ्यश्च 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिभ्यश्च। अतो मा कर्मफलहेतुर्भूः। कर्मफलं तत्कृतौ हेतुर्यस्य स कर्मफलहेतुः स मा भूः। नर्हि न करोमीत्यत आह—मात इति। कर्माकरणे स्नेहो मास्त्वित्यर्थः। अन्यफलाभावेऽपि मत्प्रसादाख्यफलभावात्, इच्छा च तस्य युक्ता, 'वृणीमहे ते परितोषणाय' इति महदाचारात्। अनिन्दनाद्विशेषत इतरनिन्दनाच्च। सामान्यं विशेषो बाधत इति न प्रसिद्धं 'सर्वांनातय नैकं मत्थम्' इत्यादौ। अतो 'नैकात्म्यतां मे स्पृहयन्ति केचित्' भक्तिमन्विच्छन्तः 'ब्रह्मजिज्ञासा' 'विज्ञाय प्रज्ञां' 'द्रष्टव्यः'

ज॥नित्यनैमित्तिकान्येव कर्माणि मुमुक्षुणा निष्कामतया कर्तव्यानि, न तु ज्योतिष्टोमादीनि कामाधिकारे विहितानि, तेषां निष्कामतया करणे प्रमाणाभावादतोऽसदिदं व्याख्यानमिति तत्राह—निष्काममिति। यज्ञादिकमेव प्रक्रम्य तस्य निष्कामतयाऽनुष्ठानवचनाद्युक्तमिदं व्याख्यानम्। 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा' इत्यादिवक्ष्यमाणवचनेभ्यश्च। न चैतानि नित्यनैमित्तिकविषयाणि। तत्र कामप्रसक्त्यभावेन तत्प्रतिषेधानुपपत्तेः, किञ्च नित्यनैमित्तिकातिरिक्तस्य ज्योतिर्नामकयज्ञस्य फलकामनया विनाऽनिधानाच्च। ज्योतिष्टोमस्यैवाय गुणविधानायानुवाद इति तु न समतम्। आदिपदेन 'विश्वजिता यजेत' इत्यादेर्ग्रहणम्। तत्रापि स्वर्गकामपदाध्याहारो निर्णीत इति चेत्सत्यम्, कामिनां तु तथा स्ववचनेनानुक्तौ कारणमिहोक्तमिति। ननु पूर्वार्धेनैव शङ्काया निरस्तत्वात्किमुत्तरार्धेनेत्यतः क्रमेण पादद्वयोपयोगमाह—अत इति। फलकामस्याकर्तव्यत्वात्कर्मफलहेतुत्वमप्रसक्तं किमिति प्रतिषिध्यत इत्यत आह—कर्मेति। शाकपार्थिवादित्वात्तत्कृतिपदलोपोऽत्रेति भावः। तर्हीति। यदि फलं नाकाङ्क्षयमित्यर्थः। न करोमि स्वयं क्लेशरूपत्वादिति भावः। अकर्मपदस्य निषिद्धेऽपि प्रवृत्तेः सङ्गशब्दस्य चानेकार्थत्वात्प्रकृतोपयुक्ततया व्याचष्टे—कर्मेति। सोपपत्तिकमाक्षिप्ते कथमिदमुत्तरमित्यतो भगवदभिप्रायमाह—अन्येति। प्रसादशब्देन भक्तिज्ञानादिकमप्युपलक्ष्यते। एवं तर्हि भगवत्प्रसादादीच्छया कर्म कर्तव्यमित्युक्तं स्यात्। न च तद्युक्तम्, कामस्य निन्दितत्वात्। अन्यथा स्वर्गादिकामनाया अपि प्रसङ्गात्। अतो नेदं भगवदभिप्रायवर्णनं युक्तमित्यत आह—इच्छाचेति। ते तव परितोषणाय सकलं कर्म वृणीमह इति महदाचारेण भगवत्परितोषणस्य कर्तव्यतावगमात्। ननु तदकर्तव्यतायामपि कामनानिन्दावचनं प्रमाणमस्तीत्युक्तमित्यत आह—अनिन्दनादिति। यथा महदाचारो विशेषविषयो न तथा कामनिन्दावचनं किं तु सामान्यविषयमेव। अतो महदाचारेण बाध्यत इति भावः। तर्हि तद्वत्स्वर्गादिकामनापि कार्येति यदुक्तं तत्राह—विशेषत इति। चशब्देन प्रमाणाभावं समुच्चिनोति। अस्त्वाचारो विशेषविषयः। कामनिन्दावचनं तु सामान्यविषयम्। तथापि कुतो बाध्यबाधकभाव इत्यत आह—सामान्यमिति। सामान्यविशेषशब्दौ तद्विषयप्रमाणपरौ। चशब्दाद्विरोधे सति। उक्तं च प्रमाणम् उपसंहरन्प्रमाणान्तराण्यप्याह—अत इति। एकात्मता सायुज्यम्। अस्यैव होगो

रा-अ ॥ एतदेव स्फुटीकरोति—

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥** ४८

रा ॥ राज्यबन्धुप्रभृतिषु सङ्गं त्यक्त्वा युद्धादीनि कर्माणि योगस्थः कुरु, तदन्तर्भूतविजयादिसिद्ध्यसिद्ध्योस्समो भूत्वा कुरु । तदिदं सिद्ध्यसिद्ध्योस्समत्वं 'योगस्थः' इत्यत्र योगशब्देनोच्यते । योगस्सिद्ध्यसिद्ध्योस्समत्वरूपं चित्तसमाधानम् ॥ ४८ ॥

ता ॥ अनन्तरग्रन्थं सङ्गमयति—एतदेवेति । अनवधारणेनार्थान्तरपरत्वमुदासः । स्फुटीकरोतीति पौनरुक्त्यपरिहारः । राज्यबन्धुप्रभृतिष्विति । राज्यप्रभृतिषु सङ्गः स्वद्वारा बाधकः; बन्धुप्रभृतिषु सङ्गस्तु युद्धाद्यननुष्ठानद्वारेति तदुभयमपि त्याज्यत्वादत्र सङ्गशब्देन सङ्गृहीतमिति भावः । युद्धादीनीति प्रकृतविशेषप्रदर्शनम् । आनुषङ्गिकत्वसूचनायोक्त—तदन्तर्भूतेति । 'लाभालाभौ जयाजयौ' इति पूर्वोक्तानुसन्धानेनाह—विजयादीति । योगस्थः सिद्ध्यसिद्ध्योस्समो भूत्वेत्यनयोरेकवाक्यत्वे पौनरुक्त्याद्भिन्नवाक्यत्वे तु तादृशश्रुतिवाक्यविशेषोपबृंहणीयविस्योगशब्दार्थव्याख्यानरूपत्वेन पौनरुक्त्याद्य दुर्निरीदमावर्तितम् । 'विद्याविनयसम्पन्ने' इत्यादिप्रदेशान्तरोक्तसमत्वान्तरव्यावर्तनायोक्तं—तदिदं सिद्ध्यसिद्ध्योरिति । मार्गान्तरयोगशब्दप्रयोगविषयत्वव्यावृत्त्यर्थमुक्त—योगस्थइत्यत्रेति । योगशब्दस्य सिद्ध्यसिद्धिसाम्ये क्वचिदपि प्रयोगो न दृश्यत इत्यत्राह— योग इति । चित्तसमाधाने प्र-

प्र-पा॥ १. गी. ५-१८॥ २ 'योगश्चित्तवृत्तिनिरोधः' १२ इति पातञ्जलयोगसूत्रमभिप्रेत्य 'चित्तसमाधाने...योगानुशासनादिसिद्ध' इत्युक्तम् ॥

---

दी॥यदि कर्मफलप्रयुक्तेन न कर्तव्यं कर्म, कथं तर्हि कर्तव्यम् इति' उच्यते—योगस्थः इति॥ योगस्थः सन् कुरु कर्माणि केवलम् ईश्वरार्थं,तत्रापि 'ईश्वरो मे तुष्यतु' इति सङ्ग

---

आ॥इत्यादिवचनेभ्यः। स्वार्थसेवकं प्रति न तथा स्नेहः । किं ददामीत्युक्ते सेवादियाचकं प्रति बहुतरस्नेह इति लोकन्यायाच्च भक्तिज्ञानादिकामना कार्येति सिद्धम् ॥ ४७ ॥

पूर्वश्लोकोक्तं स्पष्टयति—योगस्थ इति । योगस्थः—उपायस्थः । सङ्गं फलस्नेहम् । त्यक्त्वा । तत एव सिद्ध्यसिद्ध्योः समो भूत्वा । स एव च मयोक्तो योगः ॥ ४८ ॥

ज ॥ भक्तिमन्विच्छन्त इति । ननु न ब्रह्मजिज्ञासाशब्दो ज्ञानेच्छापरः ;किंतु विचारस्योपलक्षकः । सत्यम्, तथापि तत्पूर्वको विचारो लक्ष्यते। अन्यथा सम्बन्धाभावात् । लोकसिद्धन्यायात् लोकसिद्धव्याप्तिकानुमानात् ॥ ४७ ॥

कर्मण्येवेत्यनेन योगस्थ इत्यस्य गतार्थतापरिहारार्थमाह—पूर्वेति। निष्कामनादिविशिष्टानि कर्माण्येव योगः । अतो योगस्थ इत्यनेनैव लब्ध पुनः कुरु कर्माणीति किमर्थमुच्यत इत्यत आह—योगस्थ इति । ज्ञानोपायमनुतिष्ठन्नित्यर्थः । कर्मसम्बन्ध त्यक्त्वा कर्माणि कुर्वित्येतद्व्याहतमित्यत आह—सङ्गमिति। 'ईश्वरो मे प्रसीदतु इत्यभिसन्धिमपि त्यक्त्वा'इति व्याख्यान पूर्वेणैव निरस्तम्। तत एवेति परामर्शसौकर्याय त्यक्त्वेत्यनुवादः कृतः।सङ्ग त्यक्त्वा'सिद्ध्यसिद्ध्योः समो भूत्वा'इति द्वयमुक्त्वा'समत्व योग उच्यते' इति एकस्यैव ग्रहणमयुक्तम् । तथा सति सङ्गत्यागस्यायोगत्वप्रसङ्गादित्यत आह—तत इति । सङ्गत्यागादेव । एतयोः कार्यकारणभावात्कार्ये गृहीते कारणमर्थाद्गृहीतमिति भावः । ननु समत्वयोगयोर्भेदः केन शङ्कितः, येन 'समत्व योग उच्यते' इति तयोरैक्यमुच्यत इत्यत आह—स एवेति। योगस्थ इत्युक्ते को योग इत्यपेक्षाया भगवता सङ्ग त्यक्त्वा 'सिद्ध्यसिद्ध्योः समो भूत्वा' इति योगो व्या-

रा-अ ॥ किमर्थमिदमसकृदुच्यत इत्यत आह—

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९

रा ॥ योऽयं प्रधानफलत्यागविषयोऽवान्तरफलसिद्ध्यसिद्ध्योस्समत्वविषयश्च बुद्धियोगः, तद्युक्तात्कर्मण इतरत् कर्म दूरेणावरम् । महदिदं द्वयोरुत्कर्षापकर्षरूपं वैरूप्यम्। उक्तबुद्धियोगयुक्तं कर्म निखिलसांसारिकदुःखं विनिवर्त्य परमपुरुषार्थलक्षणं च मोक्षं प्रापयति । *इतरदपरिमितदुःखरूपं संसारमिति । अतः कर्मणि क्रियमाणे उक्तायां बुद्धौ

ता॥योगम्नायशोगानुशासनादिसिद्धः । इदमपि ममत्व तद्रूपमिति योगशब्दार्थ इत्याकूतम् ॥ ४८ ॥

अभ्यासरूपतात्पर्यलिङ्गविवक्षामभिप्रयन् पौनरुक्त्यशङ्काद्वारेणोत्तरश्लोकमवतारयति—किमर्थमिति । इदं साम्यानुसन्धानरूप चित्तसमाधानम् । तद्वचनन्तर प्रशस्यते। कर्ममात्रनिन्दाभ्रम परिजिहीर्षन् बुद्धियोगशब्दस्य प्रकरणविशेषितं वाच्यार्थं तावदाह—योऽयमिति । अजहल्लक्षणया बुद्धिप्राचुर्यहेतुकया लक्षितमाह—तद्युक्तात्कर्मण इति । इतरदित्यनेनं प्रकरणविहितकर्मव्यतिरिक्तविपर्ययात्त कर्मनिन्देति सूचितम् । दूरावरशब्दयोरत्र विवक्षितं निष्कर्षति—महदिति।तृतीया प्रकारे। कृपणाः फलहेतव इत्यनन्तरवाक्येन बुद्धियुक्त इत्यादिना च वक्ष्यमाण श्रुतिस्मृत्यन्तरोदितश्च सिद्धं वैरूप्यप्रकारमाह—उक्तेति। नीतिमन्त्रौषधकेवलयागादिव्यावर्तनाय निखिलशब्दः। तस्योपाधिविशेषावच्छिन्नत्वात् कार्त्स्न्येऽपि प्रयोगादवच्छेदकोपाध्यन्तरव्यावर्तनायोक्तं —सांसारिकेति । केवलकर्मसाध्यस्वर्गादिव्यावर्तनाय परमशब्दः । अपरिमितशब्देन स्वभावसंख्याकालादिप्रयुक्तत्वभावितसमस्तपरिच्छेदनिरासः । हिशब्दस्य हेत्वर्थतामभिप्रयन्नाह—अत इति । प्रकरणादिविरुद्धसांख्याद्युक्तकर्मस्वरूपपरित्यागपूर्वकज्ञानमात्रोपादानभ्रमव्युदासायोक्तं कर्मणि क्रियमाण इति । उक्तायामिति । तात्पर्यातिशयव्यक्त्यर्थं

प्र-पा ॥ *इतरत्स्वपरि. पा ॥
१. इत्यनेन विहित. ङ. पा ॥
२. विषयोऽश. घ. ङ. पा ॥
३. तस्यैवोपाधि. घ. ज. पा ॥

शं॥त्यक्त्वा धनञ्जय । फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिः, तद्विपर्ययजा असिद्धिः,तयोः सिद्ध्यसिद्ध्योः अपि समः तुल्यः भूत्वा कुरु कर्माणि । कोऽसौ योगः यत्रस्थः कुरु इति उक्तम्? इदम् एव तत्—सिद्ध्यसिद्ध्योः समत्वं योगः उच्यते ॥ ४८ ॥

यत् पुनः समत्वबुद्धियुक्तम् ईश्वराराधनार्थं कर्म एतस्मात् कर्मणः—दूरेण इति ॥ दूरेण अतिविप्रकर्षेण हि अवरम् अधमं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात् समत्वबुद्धियुक्तात् कर्मणः, जन्ममरणादिहेतुत्वात् । हे धनञ्जय । यत एवं ततः योग-

आ॥इतश्च योगाय युज्यस्वेत्याह—दूरेणेति । बुद्धियोगात् ज्ञानलक्षणादुपायात् । दूरेण

ज॥ख्यातः । मन्दास्तु पृथगेवैनं विशेषणं कल्पयिष्यन्तीति तदनुजिघृक्षया इदमुदितमिति भावः । स एव यत्समत्वमिति शेषः । योगैकदेशो योगशब्दः ॥ ४८ ॥

ननु योगोपदेशमुपक्रम्य कर्मणो बुद्धियोगादवरत्वं किमर्थमुच्यतइत्यत आह—इतश्चेति । युज्यस्व प्रयतस्व । 'यावानर्थः' इति कर्मफलस्य ज्ञानफलापेक्षयाऽल्पत्वाद्योगाय युज्यस्वेत्युक्तम् । अत्र तु तत्रैव हेत्वन्तरमुच्यते—बुद्धियोगादिति। षष्ठीसमासप्रतीतिनिरासायाह—बुद्धौति । लक्षणशब्दः स्व-

रा॥ शरणमन्विच्छ; शरणं वासस्थानम् । तस्यामेव बुद्धौ वर्तस्वेत्यर्थः । कृपणाः फलहेतवः फलसङ्गादिना कर्म कुर्वाणाः कृपणास्संसारिणो भवेयुः ॥ ४९ ॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५०

रा॥ बुद्धियोगयुक्तस्तु कर्म कुर्वाणः

ता॥पूर्वोक्तमभ्यस्यत इति भावः। 'उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम्' इत्यादिनाऽवगत शरणशब्दस्य रक्षकाद्यर्थान्तरं व्यावर्तयन् विवक्षितं वक्तुं वाच्यं तावदाह—वासस्थानमिति । नन्विदमसङ्गतं बुद्धेर्वासस्थानभूतगृहाद्याश्रयत्वाभावादित्यत्राह—तस्यामेवेति । कर्मयोगनिष्ठ एवोपदिश्यत इति भावः, 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः' इति कृपणशब्दस्य पुरुषविशेषे रूढत्वात्, बुद्धियुक्त इत्यादिना फलाभिसन्धिरहितपुरुषाणां प्रशस्यमानत्वात्, 'मा कर्मफलहेतुः' इति पुरुषे फलहेतुशब्दस्य प्रयुक्तत्वात् 'कृपणाः फलहेतवः' इत्यत्रापि फलाभिसन्धिपूर्वककर्मकारिणः पुरुषा एव निन्द्यन्ते, न तु फलमात्रमित्यभिप्रायेणाह—फलसङ्गादिनेति । पुरुषाणामपि हि स्वकर्मद्वारा फलहेतुत्वमस्त्येव, 'जन्मबन्धविनिर्मुक्ताः' इत्यादेः प्रतिरूपतया परमनिश्श्रेयसवैधुर्यस्यात्र कृपणशब्देनाभिधातुमुचितत्वात् संसारिण इत्युक्तम् । अकृपणप्रदर्शनपरानन्तरश्लोकपरामर्शाच्चायमेवार्थ उचित इति भावः ॥ ४९ ॥

'बुद्धियुक्तो जहातीह' इत्यस्येह कर्मणि क्रियमाणे बुद्धियुक्त इत्यन्वयमभिप्रेत्याह—बुद्धियोगयुक्तस्तु कर्म कुर्वाण इति । यद्वा कर्म कुर्वाण इति प्रकरणापन्नमुक्तम्, इहशब्दस्य तु जहातिना

प्र-पा॥१.अहिर्बुध्न्यसंहि ३६ ३४ †'वर्तते साम्प्रत वर्गे ४९ श्लो ॥
श्रीप उपायार्थकवाचक' इत्युत्तरार्धम् ॥ २ फलहेतुमात्र च ग. पा ॥
२ नामलिङ्गानुशासने, ३ काण्डे, विशेष्यनिघ्न- ४ स्वद्वारा घ पा ॥

शं॥विपर्यायां बुद्धौ तत्परिपाकजायां वा साङ्ख्यबुद्धौ शरणम् आश्रयम् अभयप्राप्तिकारणम् अन्विच्छ प्रार्थयस्व,परमार्थज्ञानशरणो भव इत्यर्थः।यतः अवरं कर्म कुर्वाणाः कृपणाः दीनाः फलहेतवः फलतृष्णाप्रयुक्ताः सन्तः 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः ॥ ४९ ॥

समत्वबुद्धियुक्तः सन् स्वधर्मम् अनुतिष्ठन् यत् फलं प्राप्नोति तत् शृणु—बुद्धि इति।

आ॥अतीव । अतो बुद्धौ शरणं ज्ञाने स्थितिम् । फलं कर्मफलं हेतुर्येषां ते फलहेतवः ॥

ज्ञा॥रूपार्थः।पुरुषार्थसम्बन्धिना कर्मणा सह निर्देशे तथाभूतस्य ज्ञानस्यैव ग्रहणं युक्तमिति भावः।उपायात्पुरुषार्थस्य दूरशब्दो विप्रकर्षवाची, तस्यात्र कथमन्वय इत्यत आह—दूरेणेति। उक्त कर्मणो ज्ञानादतीवावरत्वम्; इदानीमुपपादनीयं तद्विहाय किमिद तृतीययादेनोच्यते इत्यतः साध्यनिर्देशोऽयमिति सूचयन्व्याचष्टे—अत इति। ज्ञाने स्थितिं तदुपाययोगानुष्ठानलक्षणाम्। फलहेतूनां कृपणत्ववर्णनमनुपयुक्तमित्यत आह—फलमिति ॥ ४९ ॥

बुद्धियुक्तः प्रेक्षावान् काम्यं सुकृतं दुष्कृतं च जह्यादिति योगस्वरूपनिरूपणपरतां निराकर्तुमाह—ज्ञानेति । कथं कर्मणो ज्ञानादतीवावरत्वमित्यत काम्यकर्मिणः कृपणाः, दीनाः 'इमं लोकं हीनतरं वा विशन्ति' इत्युक्तम्।तथापि कथं दूरेणावरमित्यपेक्षाया कर्मफलादिलक्षणं ज्ञानफलमाहेत्यर्थः।प्रतीतेऽर्थेऽ प-

रा॥ उभे सुकृतदुष्कृते अनादिकालसञ्चिते अनन्ते

ता॥ न्वयः, 'इहैव तैर्जितस्सर्गः'—इत्यादिवत्। ततश्च प्रतिबन्धकनिवृत्तिरुक्ता भवति। बुद्धिरहितकेवलकर्मादिभिरनिवर्त्यत्वार्थमाह—अनादिकालसञ्चिते अनन्ते इति। अनादिकालसञ्चितत्व-

प्र-पा॥ १. गी. ५-१९॥
२ सर्ग - संसारइत्यर्थः॥
३. निवर्त्यत्वमाह ज. पा॥

शा॥ बुद्धियुक्तः कर्मसमत्वविषयया बुद्ध्या युक्तः बुद्धियुक्तः? स जहाति परित्यजति इह

आ॥ ज्ञानफलमाह—बुद्धियुक्त इति। सुकृतमप्यप्रियं मानुष्यादिफलं जहाति, न बृहत्फलमुपासनादिनिमित्तम्। 'न ह्यस्य कर्म क्षीयते' 'अविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति' इत्यादिश्रुतिभ्यः। अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र; उभयक्षयश्रुतिरप्यनिष्टविषया। नहीष्टपुण्यक्षये किंचित्प्रयोजनम्। नचेष्टनाशो ज्ञानिनो युक्तः। इष्टाश्च केचिद्विषयाः। 'स यदि पितृलोक-

जानिति नूतनत्वे दर्शयिष्यति। अत्र दुष्कृतवत्सुकृतस्यापि सर्वात्मना हानं प्रतीयते तत्सङ्कोचेन व्याचष्टे—सुकृतमिति। अप्रियसुकृतं कीदृशमित्यत आह—मानुष्येति। व्यावर्त्यमाह—नेति। बृहत् प्राज्ञ-केर्शनादिगुणवृद्धिलक्षणं तदनन्तरं चानन्दवृद्धिरूपं फलं यस्य तत् बृहत्फलं तथाभूतं सुकृतमेव नास्ति कारणाभावादित्यत आह—उपासनेति। आदिपदेन निवृत्तं कर्म, कुतः सङ्कोच इत्यत आह—नह्यस्येति। यजते ददाति। तप्यतेऽनेनेति शेषः। अत्राविदित्वेति विशेषणाज्ज्ञानिनः सुकृताक्षयः प्रतीयते। उत्तरत्र वाऽस्याः श्रुतेरुपयोगः। ननु 'नास्त्यकृतः कृतेन' इत्यादिश्रवणात्तत्प्रतिपक्षा एताः श्रुतय इत्यत आह—अत इति। विशेषश्रुतेर्बलवत्त्वादिति भावः। श्रुतिः श्रवणम्। 'क्षीयन्ते चास्य कर्माणि' इति ज्ञानेऽपि कर्मक्षयः प्रतीयत इति चेन्न; निरवकाशश्रुतिविरोधेनास्य दुष्कृतविषयत्वात्। 'तदा विद्वान्पुण्यपापे विधूय' इति ज्ञानिनोऽपि उभयक्षयश्रुतिरस्तीत्यत आह- उभयेति। उक्तैव युक्तिः। युक्तिविरुद्धं च ज्ञानिनः सर्वसुकृतहानम्। तथा हि उपासनादिजनितं सुकृतं ज्ञानिनः किमिष्टमुतानिष्टम्; आद्ये किं तदिच्छया क्षीयते, उत ज्ञानस्वभावात्; आद्यं दूषयति—नहीति। येन ज्ञानी तत्क्षयमिच्छेत् इति शेषः। द्वितीयं निराकरोति—नचेति। ज्ञानस्यापुरुषार्थताप्रसङ्गादिति भावः। नान्त्यः, अनिष्टत्वे कारणाभावात्। निष्फलत्वादनिष्टमित्यत आह—इष्टाश्चेति। केचिदित्यलौकिकाः मुक्तावलौकिका विषया इष्टा भवन्ति, तत्प्राप्तिः सुकृतफलमिति भावः। मुक्तो विषयानिच्छतीत्येतत्कुत इत्यत आह—सयदीति। यशो यशस्वी। ब्राह्मणानां सकाशात्। मुक्तो यद्यत्कामयते तत्कर्मास्मात्परमात्मनः सृजते। इष्टविषयप्राप्तिः सुकृतफलमित्येतदपि अनया श्रुत्योच्यते। उपासनादिकमेव ज्ञानी करोति। कृतेन वा सुकृतं न जायते इत्येतदप्यनया निराकृतम्। ननु मुक्तः किमर्थं विषयानिच्छेत्। न तावत्सुखार्थम्; ज्ञानेनावरणरूपाविद्यानिवृत्तौ आत्मनः स्वरूपसुखस्य व्यक्तत्वात्, पृथक्सुखस्याऽनङ्गीकारात्। नापि दुःखनिवृत्त्यर्थम्; अविद्यानिवृत्त्यैव तत्सिद्धेरिति। मैवम्, नाविद्यैवात्मस्वरूपावरणम्; किन्त्वीश्वरेच्छापि। तथा च वक्ष्यति। तथा च ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति। स्वरूपसुखं च बहुतरं व्यज्यते, न तु सर्वम्। ज्ञानोत्तरमनुष्ठितेन निवृत्तकर्मणा प्रसन्नः परमेश्वरो मुक्तौ विषयानुत्पाद्य तद्भोगेन ज्ञानानभिव्यक्तमपि स्वरूपसुखं व्यक्तीकरोति। अत्र च भाष्यकृतैव तत्तत्प्रमाणान्युक्तानि। अनेनैवाभिप्रायेण श्रुत्यादिषु मुक्तेर्ज्ञानमात्रसाध्यत्वं ज्ञानकर्मसमुच्चयसाध्यत्वं चोच्यते।

रा ॥ बन्धहेतुभूते जहाति ।

ता॥मनन्तत्वनिदानम्॥मुक्तस्य हानिरपुरुषार्थः स्यादित्यनोक्तं—बन्धहेतुभूते इति॥नहि काञ्चनकाला यसशृङ्खल्योर्बन्धहेतुत्वे कश्चिद्विशेषः,मुमुक्ष्वपेक्षया च स्वर्गादिकारणं सुकृतमपि दुष्कृतमेव, अलौकिकत्वे

श ॥ अस्मिन् लोके उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतः तस्मात्

आ॥कामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति''प्रजापतेः सभां वेश्म प्रपद्ये' 'यशोऽहं भवानि ब्राह्मणानाम्' 'स्त्रीभिर्वा यानैर्वा' 'अस्माच्चेवात्मनो यद्यत्कामयते तत्तत्सृजते' 'इमाल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्' 'स एकधा भवति' इत्यादिश्रुतिभ्यः। बहुत्वेऽप्यात्मसुखस्य पुनरिष्टत्वात्कर्मसुखे न विरोधः। अनुभवशक्तिश्चेश्वरप्रसादात्, श्रुतेश्च। न च शरीरपातात् पूर्वमेव।'स तत्र पर्येति''एतमानन्दमयमात्मानमुपसङ्क्रम्य' इत्याद्युत्तरत्र श्रवणात्। नचैकीभूत एव ब्रह्मणा सः 'मग्नस्य हि परेऽज्ञाने किन्नु दुःखतरं भवेत्' इत्यादिनिन्दनान्मोक्षधर्मे, परिहारे पृथग्भोगाभिधानाच्च,शुकादीनां पृथग्दृष्टेश्च, 'जगद्वया-

ज॥ननु ज्ञानमात्रसाध्य यत्स्वरूपसुखं तदेव बहुतरमस्ति। अतः कर्मसाध्यविषयभोगाभिव्यञ्जकपुण्याङ्गीकारः किमर्थमित्यत आह—बहुत्वेऽपीति। कर्मसुखेऽङ्गीकृत इति शेषः। शरीरेन्द्रियरहितस्य मुक्तस्य कथं विषयानुभवे शक्तिरित्यत आह—अनुभवेति। तदुक्तं 'ब्राह्मेण जैमिनिः' इति। किञ्च 'कामरूप्यनुसञ्चरन्' इत्यादिलीलाविग्रहग्रहणश्रुतेश्च मुक्तस्य विषयानुभवो युज्यत इत्याह—श्रुतेश्चेति। ननु यदेतदुदाहृतासु श्रुतिषु विषयेच्छादिकं श्रूयते, तच्चरमशरीरपातात्पूर्वकालीनं किन्न स्यादित्यत आह—नचेति। 'अस्माच्छरीरादुत्थाय''स तत्र पर्येति' 'अस्माल्लोकात्प्रेत्य एतमानन्दमयमात्मानम्' इत्याद्युत्तरत्र श्रवणात्। इत्यादीति क्रियाविशेषणम्। अद्वैतवादिनस्त्वाहुः—ब्रह्मैकमेव तत्त्वम्, तदेवोपाधिभेदभिन्नं जीवभावं प्रतिपद्यते, गगनमिव घटाद्युपाधिभिन्नं घटाकाशादित्वम्, तत्र यस्य जीवस्य ज्ञानमुत्पन्नम्, स ब्रह्मणैकीभवति, घटनाशे घटाकाश इव महाकाशेन इति। तत्रैके जीवब्रह्मभेदस्योपाधेश्च मिथ्यात्वं मन्यन्ते। अन्ये च सत्यत्वम्। यदा च स ज्ञानी ब्रह्मणैकीभूतः, तदा सकलस्य क्रियाकारकलक्षणफलभेदस्य प्रविलयात्कुतो विषयभोगः, यदर्थं मुक्तस्यावस्थानमिति तद्दूषयति—नचेति। एवशब्देन भेदाभेदौ निराकरोति। 'परमात्मानमासाद्य तद्भूता यतयोऽमलाः। अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभिभोः' इति भीष्मेण 'तस्मिन्भूतास्तद्भूता' इत्यभिप्रायेणोक्ते मुक्तास्तद्ब्रह्मैव भूता इत्यर्थान्तरमाशङ्क्य युधिष्ठिरेण'आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ' इति विकल्प्य पृष्टम्। यदि ज्ञानिनो मुक्तौ ब्रह्मणैकीभवन्ति,तदैवं वाच्यम् किं ते संसारानुभूतं दुःखं स्मरन्ति उत न—इति। आद्यस्य दूषणमुक्तम्। 'मोक्षे दोषो महानेष प्राप्य सिद्धिं गतान्नृपान्। यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे'पूर्वं सिद्धिं गतान्नृपान्प्राप्य परेऽपि यतयो यदि तत्र मुक्तौ विज्ञाने विज्ञानेन प्रागनुभूतदुःखस्मरणेन युक्ता वर्तन्ते तर्हि मोक्षे महानेष प्रसिद्धो दोष इति। दोषं च भाष्यकारः स्फुटीकरिष्यति। द्वितीयोऽपि दूषितः—मग्नस्येति। पूर्वानुभूतस्मरणाद्यभावे परेऽज्ञाने मग्नस्य चेतनस्य दुःखतरं दुःखातिशयो न भवेत्किं भवेदेव। तदेवं मोक्षधर्मेऽस्य पक्षस्य निन्दितत्वान्न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः। ननु पूर्वपक्षस्थेन युधिष्ठिरेण निन्दितत्वेऽपि कथं भीष्माचार्येणोक्तमसत्स्यात्। परिहारे तदुक्तदोषस्योद्धारसम्भवादित्यत आह—परिहार इति॥न मयैतदुक्तं किन्तु त्वमन्यथा गृहीत्वा दूषितवानसीत्याशयेन परिहारे भीष्मेण परमात्मनः पृथक्त्वेन मुक्तानां भोगाभिधानाच्च न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः। तथाहि भीष्मवचनम्—

त॥सत्यनिष्टसाधनत्वात्।स्वर्गादेरपि हि मुमुक्षुत्वापेक्षया निरयत्वम्‘एते वै निरयास्तात स्थानस्य परमात्मनः’ इत्यादिभिः प्रतिपादितमिति भावः। ‘बुद्धियुक्तः’ इत्यस्य ‘योगाय’ इत्यस्य च भिन्नार्थपरत्वव्युदासा-

प्र-पा॥१. अनिष्टफलसाधनत्वात्. क.ग.ग.घ ज. प॥ आक्रीडा विविधा राजन् पद्मिन्य(श्च काञ्चना )श्चाम-
२. भारते. शान्तिपर्वणि मोक्षधर्मे. १९८-११. करका॰ ।.. एते वै निरयास्तात...नः ॥
† दिव्यानि कामचाराणि विमानानि सभास्तथा ।

शा॥ममत्वबुद्धियोगाय युज्यस्व घटस्व। योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्त-

आ॥पारवश्यम्’इत्यैश्वर्यमर्यादोक्तेश्च‘इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः’इति च उपाधिनाशे नाशाच्च प्रतिबिम्बस्य। नचैकीभूतस्य पृथग्ज्ञाने मानं पश्यामः ‘आसं दुःखी नासम्’ इति ज्ञानविरोधाच्चेश्वरस्य। अनेन रूपेणेति च, भेदाभावात्; न च प्रतिबिम्बस्य

आ॥‘तथाऽपि तस्य परमं शृणु सम्यगुदीरितम्। इन्द्रियाणि च बुध्यन्ते स्वदेहं देहिनो नृप। करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः’ इति। यद्यपीदं दुर्बोधं तथाऽपि स्वः स्वरूपभूतो देहो यस्य तं स्वदेहं परमात्मानं मुक्तमन्यान्देहान्विषयांश्च मुक्तस्य इन्द्रियाणि बुध्यन्ते।किं तानि कर्तॄणि ? नेत्याह--[करणानीति]। कस्मार्हि पूर्वार्धस्यार्थ इत्यत उक्तम्—[सूक्ष्मइति]। इतश्च न ज्ञानिनो ब्रह्मैक्यमित्याह—शुकादीनामिति। अनेन वाक्यत्रयेण मुक्तानां ब्रह्मभेदे क्रमेण प्रत्यक्षानुमानागमा उपन्यस्ताः। तत्र प्रत्यक्षं न बाधकम्। शुकादयो यद्यपि ज्ञानिनस्तथापीदानीमविनष्टोपाधित्वात्तन्निमित्तभेदवत्तया दृश्यन्ते। प्रारब्धकर्मक्षयादुपाधिनाशे ब्रह्मैव सङ्गता भूताः न पृथक् द्रक्ष्यन्त इत्यत आह—उपाधिनाशइति। जीवात्मानो ब्रह्मणः प्रतिबिम्बा इति समर्थितम्। तत्र यदि तदीयस्योपाधेर्नाशोऽङ्गीक्रियते; तदा तेषां नाशः प्रसज्येत। दर्पणाद्युपाधिनाशे मुखादिप्रतिबिम्बस्य नाशदर्शनादित्यर्थः। यथोक्तम्—शुकादयोऽनिनष्टोपाधित्वाद्ब्रह्मणः पृथग्दृश्यन्ते—इति। तदसदित्याह—नचेति। वस्तुत एकीभूतस्योपाधिनाशे पृथग्ज्ञाने न मानं पश्यामः, गगनादिदृष्टान्तस्यासम्मतत्वात्। गत्योपाधिभेदमनस्य चेदं दूषणम्। निरुपाधिक एव जीवब्रह्मणोर्भेदः, यास्तवं त्वैक्यमिति वदन्प्रष्टव्यः। किं ब्रह्म निर्दुःखं स्वरूपमेवानुसन्धत्ते,न जीवगतं दुःखं तत्तु जीव एवानुसन्धत्तइति पक्षः,उत तदपीति। आद्यं दूषयति—नचैकीभूतस्येति। हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वदर्शनादिति भावः। द्वितीयं निराकरोति—आसमिति। लङत्र सर्वकालोपलक्षणार्थः। जीवरूपेण दुःख्यासं स्वरूपेण तु नेति व्यवस्थयाऽनुसन्धानान्न विरोध इत्यत आह—अनेनेति। इति च युक्तमिति शेषः। कुत इत्यत आह—भेदेति। उपाधेरभेदकत्वस्योक्तत्वादिति भावः। अपरे तु ब्रह्मणैक्यमापन्नस्य मुक्तस्य पूर्वदुःखानुस्मरणमस्ति न वा; नेतिपक्षे सम्यग् हीत्युक्तो दोषः। आद्ये किमसौ पृथक्स्मरति उत ब्रह्मात्मक एव। प्रथमस्य दूषणं —नचैकीभूतस्येति। द्वितीयस्यासमित्यादीनि व्याचक्षते। अनेन ‘मोक्षे दोषो महानयः’ इत्युक्तो दोषः प्रदर्शितो भवति। नन्पाधिनाशे नाशाच्च प्रतिबिम्बस्येति यदुक्तं तदसत्, भेदे हि बिम्बप्रतिबिम्बयोरेतत्स्यात्; न चैवं किन्तु बिम्बमेव प्रतिबिम्बं तदेवेदमिति प्रत्यभिज्ञानात्। ‘नेक्षतोऽन्तमादित्यं नास्तं यन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्’ इति स्मृतावुपदाराबिम्बप्रतिबिम्बेऽपि आदित्यशब्दप्रयोगदर्शनात्। भेदस्तु दर्पणाद्युपाधिकृतः। तथाचोपाधिनाशे भेद एव नश्यति। प्रतिबिम्बस्य कुतो नाशः। एवं जीवस्यापीत्याशङ्क्य प्रत्यभिज्ञानं तावदसिद्धमित्याह—नचेति। न पश्यामो—न प्रत्यभिजानीमः। प्रत्युत प्रत्यक्षादिना तयोर्भेदमेव पश्याम इति

रा ॥ तस्मादुक्ताय बुद्धियोगाय युज्यस्व। योगः कर्मसु कौशलं—कर्मसु क्रियमाणेष्वयं बुद्धियोगः

ना॥याह—तस्मादुक्ताय बुद्धियोगायेति। युज्यस्व सनह्यस्व,उद्युक्तो भवेत्यर्थ.।'समत्वं योग उच्यते' इतिवद्योगशब्दव्याख्याभ्रमनिरासायाह—कर्मस्विति। कौशलशब्दस्य तात्पर्यं वक्तुं वाच्यं तावदाह

श॥मानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिः ईश्वरार्पितचेतस्तया तत् कौशलं कुशलभावः।

आ॥बिम्बैक्यं लोके पश्यामः,उपाधिनाशे मानं वा'मन्नस्य हि परेऽशने'इति दुःखात्मकत्वोक्तेश्च;'यावज्जन्मभावित्वात्' इत्युपाधिनित्यताभिधानाच्च। अतोऽनन्यवचनं प्रतीयमानमप्यौपचारिकम्।दृष्टाश्च ते भगवतो भिन्ना नारदेन।प्रतिज्ञातं च'स एकधा'इत्यादिषु भेदेन प्रतीयन्ते।विरोधे तु युक्तिमतामेव बलवत्त्वम्। युक्तयश्चात्रोक्ताः 'मन्नस्य हि'इत्यादयः। अतो जले जलैकीभाववदेकीभावः। उक्तं च 'यथोदकं शुद्धे शुद्धं' 'यथा नद्यः'इत्यादौ। तत्राप्यन्योन्यात्मत्वे वृद्ध्यसंभवः। अस्ति चेत्समुद्रेऽपि द्वारि। महत्त्वादव्यक्तदृष्टिः। 'ता पयोपादद्दौ तस्य स ऋषिः शंसितव्रतः' इतिमहाकौर्मे। समर्थानां भेदज्ञानाच्च।'नै-

जा॥चार्थः। यथोक्तम्, जीवब्रह्मणोर्बिम्बप्रतिबिम्बयोरौपाधिको भेद इति, तत्रास्मात्मनिष्टम्; किन्तु परस्यैव, जीवोपाधिनाशे प्रमाणाभावेन नित्यत्वात्तन्निमित्तस्यापि भेदस्य मुक्तौ स्थितिरित्याशयेनाह—उपाधिनाशइति। न पश्याम इत्यनुवर्तते। न केवलमुपाधिनाशे प्रमाणाभावः, किन्तु तन्नाशाङ्गीकारे बाधकमप्यस्तीत्याह—मन्नस्येति। उपाध्यभावे स्मरणादिविलोपात्। न केवलमतावत्, उपाधिनित्यत्वे प्रमाणं चास्तीत्याह—यावदिति। अस्तु तर्हि उदाहृतस्मृतिवाक्यं बिम्बप्रतिबिम्बयोरैक्ये प्रमाणमित्यत आह—अत इति। प्रत्यक्षेण भेदस्य प्रतीयमानत्वात्प्रतीयमानमपीत्यनेन प्रत्यभिज्ञायामिव वचनमात्रेऽपि न विवादोऽस्तीत्याह—चारिकमिति। न परस्य मुख्यसम्भवतीत्यनौपचारिकैः सह पाठेऽपि बाधकत्वादौपचारिकत्व ब्रह्मज्ञानेन वा मुक्तिरित्यादौ दृष्टमिति। एव शुकादीनामित्युक्त प्रत्यक्षमुपपादितम्। अधुना आस्तां तावदुपपादनमपेक्ष्य प्रत्यक्ष, तन्निरपेक्षं चास्तीत्याह—दृष्टाश्चेति। ते निवृत्तसकलकर्माणो मुक्ताः। एतच मोक्षधर्मे स्पष्टमुक्तम्। प्राप्तुक्तेश्वरभेद स्मृतिरुदाहृता। श्रुतिं चोदाहरति—प्रतिज्ञातमिति। ननु भेद इवाभेदेऽपि 'परेऽव्यये सर्व एकीभवन्ति' इत्यादिवाक्यानि सन्ति; तत्कथ निर्णय इत्यतः सामान्यन्याय तावदाह—विरोधेत्विति। बलवद्विरोधेन दुर्बलं बाध्यते इति भावः। ततः किं प्रकृत इत्यत आह—युक्तयइति। अत्र भेदपक्षे, उपलक्षणमेतत्। प्रत्यक्षानुगुण्यं च भेदवाक्यानां प्राबल्याय ग्राह्यम्। तर्ह्येकीभवन्तीत्यस्य का गतिरित्यत आह—अतइति। उभयत्रैकीभाववादेन तद्वाक्यस्य गृह्यते। स्थानैक्यविषयमैक्यवाक्यमित्यर्थः। इयं च रूढलक्षणेति न प्रयोजनमन्वेषणीयमिति दृष्टान्तोक्तिः। न केवलमिय गतिर्न्यायप्राप्ता, किं तु श्रौती चेत्याह—उक्तश्चेति। उदकेऽप्यैक्यादसम्मतो दृष्टान्त इत्यत आह—तत्रापीति। नास्त्येव समुद्रे वृद्धिरनुपलम्भादित्यत आह—अस्तीति। समुद्रेऽपि वृद्धिरिति शेषः। अनुपलम्भस्यासिद्धिमाह द्वारीति। नदीनां द्वारि दृश्यते चेति शेषः। अन्यत्र कुतो न दृश्यते इत्यत आह—महत्त्वादिति। सामुद्रस्योदकस्य महत्त्वात्। न केवलं वृद्धिलिङ्गादनुमानादुदकभेदः सिद्धः, किं तर्हि? प्रत्यक्षादपीत्याह—ता इति। या इन्द्रकमण्डलोरादाय स्वकमण्डलूदके क्षिप्तास्ता एवापमत्येन्द्रस्य ददौ वसिष्ठ इति महाकौर्मवचनात्समर्थानां वसिष्ठादीनां जले भेददर्शनाच्च, भेदादर्शने विभज्य कथं दद्यादिति। इतश्च मुक्तभेदवाक्यमेव प्रबलम्।

रा॥कौशलमतिसामर्थ्यम् । अतिसामर्थ्यसाध्य इत्यर्थः ॥ ५० ॥

---

ता॥—अतिसामर्थ्यमिति । बुद्धियोगस्य कर्मसामर्थ्यात्मकत्वं कथमित्यत्राह—अतिसामर्थ्यसाध्य

---

शे॥ तद्धि कौशलं यत् बन्धनस्वभावानि अपि कर्माणि समत्वबुद्ध्या स्वभावात् निवर्तन्ते ।

---

आ॥च तत्साम्युचम्त्येन ब्रह्मेशानादयः सुराः।'यत्ते पदं ते कैवल्यम्'इति निषेधाच्च नारदीये। सविचारश्च निर्णयः कृतो मोक्षधर्मेषु बलवांश्च सविचारो निर्णयो वाक्यमात्रात् । अतो 'यत्र नान्यत्पश्यति'इत्याद्यपि तदधीनसत्तादिवाचि।अन्यथा कथमैश्वर्यादि स्यात्।न च तन्मायामयमित्युक्तम्। अन्यथा कथं तत्रैव'स एकधा'इत्यादि ब्रूयात्।न च'न ह वै सशरीरस्य' इत्यादिविरोधः, वैलक्षण्यात्तच्छरीराणाम् । अभौतिकानि हि तानि । नित्योपाधिविनिर्मितानि ईश्वरशक्त्या। तथाचोक्तम् 'शरीरं जायते तेषां षोडश्या कलयैव हि' इति नारायणरामकल्पे । वदन्ति च लौकिकाद्वैलक्षण्येऽभावशब्दम् 'अप्रहर्षमनानन्दं सुखदुःखयोः'इत्यादिषु।निरुक्त्यभावाच्च न तानि शरीराणि।तथा हि श्रुतिः—'अशारीनिहित-

---

ज॥अभेदनिषेधात्मकत्वादित्याह—नैवेति। कैवल्यं सर्वोत्तमत्वम्। इतोऽपि भेदपक्षो बलवानिति वक्तुमाह—स इति । पूर्वोत्तरपक्षबलाबलचिन्ता विचारः । निर्णयो जीवेशभेदावधारणम् । 'बहवः पुरुषा ब्रह्मन्' इत्यादिनेति शेषः । न हि भिन्नयोर्मुक्तावभेदः सम्भवतीति भावः । ततः किमित्यत आह—बलवानिति । निर्णयश्चेति सम्बन्धः; वाक्यमात्रादेकीभवन्तीत्यादेः । कथं तर्हि यत्रेत्यादिभूमलक्षणमुच्यते इत्यत आह—अत इति । सविचारनिर्णयविरोधादेव । विद्यमानस्याप्यन्यस्य भगवदधीनसत्तादित्ववाचि । इतश्चैवमित्याह—अन्यथेति । यद्यन्यदेव न स्यात्तर्हि कथमीश्वरस्य सर्वेश्वरत्वसार्वज्ञ्यादिकं श्रुत्यादिसिद्धं स्यात् । मायामयमेव तच्छ्रुत्यादावुच्यते इत्यत आह—नचेति। बाधकान्तरमाह—अन्यथेति । यदि भूमाऽद्वितीयः स्यात्, कथं तर्हि तज्ज्ञानान्मुक्तस्य 'स एकधा' इत्यादिभेदेनावस्थानं श्रुतिर्ब्रूयात्; न तद्ब्रह्मज्ञानफलम् , किंतु सगुणविद्योपासनफलमित्यत उक्तम्—तत्रैवेति । भूमप्रकरण एव। ननु नारदेन श्वेतद्वीपे भगवतो भिन्ना दृश्यन्ते मुक्ता एव न भवन्ति, सशरीरत्वात्; सशरीराणामपि मुक्तत्वाङ्गीकारे 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इत्यादिश्रुतिविरोध इत्यत आह—नचेति। कुतो नेत्यत आह—वैलक्षण्यादिति । किं तदस्मदादिशरीरेभ्यस्तेषां वैलक्षण्यमित्यत आह—अभौतिकानीति अजडानीत्यर्थः । तर्हि किमात्मकानीत्यत आह—नित्योपाधीति । विकारित्वाद्विनाशः स्यादित्यत उक्तम्—ईश्वरशक्त्येति । कुत एतदित्यत आह—तथाचेति । नित्योपाधिरेव षोडशी कला । एतदुक्तं भवति—यच्छ्रुतौ सशरीरस्य दुःखानपहतिवचनम् ,तत्कर्माधीनजडशरीराभिप्रायम् ; श्वेतद्वीपे नारदेन दृष्टानि तु शरीराणि चिन्मयानि जडान्यपि न कर्माधीनानि; अतो न दुःखकारणानि। तथा च न तेषां सशरीराणामपि मुक्तत्वे श्रुतिविरोधः—इति।यदि मुक्ताः सशरीरास्तर्हि कथं तेषु 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति शरीराभाववचनमित्यत आह—वदन्तिचेति । लौकिकाद्वैलक्षण्ये सति तद्वदभावोक्तिरिति शेषः । इतश्चाशरीरत्वोक्तिर्युक्तेत्याह—निरुक्तीति । निरुक्तिलभ्यार्थस्य तत्राभावादित्यर्थः। काऽसौ निरुक्तिरित्यतः प्रक्रियासम्पादनगौरवपरिहाराय श्रुतिमेव तत्परां दर्शयति—तथाहीति । अशारि शीर्णमभवदिति हेतोश्छरीरशब्दप्रवृत्तिरित्यर्थः । कथं निरुक्तिलभ्योऽर्थस्तेषु नास्तीत्यत आह—नहीति । एवं तर्हि कथं तेषु 'शरीरं जायते तेषाम्' इति शरीरशब्द

ता॥इत्यर्थ इति । कार्य कारणशब्द उपचरित । अनेन श्लोकेन बन्धकसुकृतदुष्कृतहानमुक्तम्॥५०॥

शा॥तस्मात् समत्वबुद्धियुक्त भव त्वम्॥ ५० ॥

आ॥च्छरीरमभवत्'। न हि तानि शीर्णानि भवन्ति 'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति वचनात् । साम्यात्प्रयोग । प्रयोगाच्च 'अनिन्द्रिया अनाहारा अनिष्पन्दा सुगन्धिन ।देहेन्द्रियासुहीनाना वैकुण्ठपुरवासिनाम्'इत्यादिदृष्टदेहेष्वेव।न चैषाऽन्या गौणी मुक्ति 'बहुनात्र किमुक्तेन यावच्छ्वेत न गच्छति । योगी तावन्न मुक्त स्यादेष शास्त्रस्य निर्णय ' इत्यादित्यपुराणे तदन्यमुक्तिनिषेधात् । ये त्वत्रैव भगवन्त विशन्ति तेऽपि पश्चात्तत्रैव यान्ति । योग्यत्व चात्र विवक्षितम् , युधिष्ठिरप्रश्ने इतरनिन्दनाच्च । सायुज्य च ग्रहवत् । तदुक्तेश्च 'भुञ्जते पुरुष प्राप्य यथा देवग्रहादय । तथा मुक्तावुत्तमाया बाह्यान्भोगास्तु भुञ्जते इति नारायणाष्टाक्षरकल्पे। अतोऽनिष्टस्येव वियोग सोऽस्त्येव सर्वात्मना 'नदु खम्' 'सर्वदु खविवर्जिता' 'अशोकमहिमम्' 'यत्र गत्वा न शोचन्ति' इत्यादिभ्य । विशेषवचनाभावाच्च,येषा त्वीषद्दु खदृश्यते, ते न सायुज्य प्राप्ता , सामीप्यादेव तेषाम् । अत प्रारब्धकर्मशेषभावात् तद्भुक्त्वा सायुज्य गच्छन्ति।

---

त॥प्रयोग इत्यत आह—साम्यादिति। अस्मदादिशरीरे करचरणादिमत्त्वसाम्याद्गौण इत्यर्थ । कुतोऽयमशरीरशब्दस्याभिप्राय सर्वथा विग्रहराहित्यमेव किन्न स्यादित्यत आह—प्रयोगाच्चेति । नारदादिभिर्दृष्टदेहेष्वेव मुक्तेष्वेतद्वाक्यद्वये देहाभावप्रयोगादन्यथाऽनुपपत्त्याऽयमर्थ सिद्ध । न केवल सम्भवमात्रेणेति चार्थ । इत्यादीति क्रियाविशेषणम् , प्रयोगादित्यनेन सम्बध्यते । ननु नारदेन दृष्टा श्वेतद्वीपवासिनो मुक्ता , तथाऽपि नास्माक प्रत्यक्षविरोध , यतएषा श्वेतद्वीपप्राप्तिरूपा निर्गुणमुक्तेरन्या गौणी मुक्ति । निर्गुणायामत्र मुक्तौ वयमैवस्य ब्रूम इत्यत आह—नचैति । श्वेतद्वीपप्राप्तिव्यतिरिक्तमुक्तिनिषेधादियमेव मुक्तिरित्यर्थ । ननु शिशुपालादय श्वेतद्वीपगमनेन विनैवात्र भगवन्त प्रविश्य मुच्यन्ते, तत्कथमेतदित्यत आह--यत्विति। ते न तदा मुच्यन्ते इति शेष । तर्हि क्वेत्यत आह—तेऽपीति । ततो मुच्यन्त इति शेष । ननु केचिदत्रैव मुच्यन्त इत्याद्युक्त्वा 'महाज्ञाना गच्छन्ति क्षीरसागरम्' इति महायोग्यतावतामेव श्वेतद्वीपगमनोक्ते कथमय नियम इत्यत आह—योग्यत्वमिति । अत्र निवास इति शेष । अस्ति सर्वेषा श्वेतद्वीपप्राप्ति । महाज्ञानत्वलक्षण योग्यत्व त्वत्र निवासे विवक्षितमित्यर्थ । नन्विद वाक्य श्वेतद्वीपप्राप्तिं विना सगुणमुक्तिर्नास्तीत्येतत्परम् निर्गुणमुक्तिस्त्वन्याऽस्तीत्यत आह—युधिष्ठिरेति।सायुज्य तत्र प्रसिद्धम् सैव निर्गुणमुक्ति ।तत्रा मनो ब्रह्मणैकत्वमित्यत आह – सायुज्य चेति । यथा ग्रहस्य पुरुषान्तर प्रविश्य भोग , तथा मुक्तस्येश्वर प्रविश्य भोग एव सायुज्य न त्वैक्यमित्यर्थ । कुत एतत् , सायुज्यशब्दसामर्थ्यादागमवाक्याच्चेत्याह—तदुक्तेश्चेति । उत्तमाया मुक्तौ सायुज्यलक्षणायामीश्वर प्रविश्येति शेष । ईश्वरानन्दव्युदासाय—बाह्यानिति । बाह्येष्वपि विभागो वचनान्तरादवसेय ।मुक्तमप्यप्रियमित्यादिनोक्तमर्थमुपसहरति—अत इति । यथा सुकृतत्यागे सङ्कोचस्तथाऽनिष्टत्यागेऽप्यस्ति किमिति जिज्ञासायामाह—स इति । प्राचुर्याभिप्रायाण्येतानि वचनानि किन्न स्युरित्यत आह—विशेषेति । सङ्कर्षणादय समष्टिजीवास्तावन्मुक्ता । तेषा च बललक्ष्मणादिरूपेषु दु ख दृश्यते तदेव विशेषप्रमाणमित्यत आह—येषामिति । न सायुज्य प्राप्ता —न मुक्ता इत्यर्थ , सायुज्ययोग्याना तदभावे मुक्त्यभावात् । तेषा मुक्त्योक्तेस्तर्हि का गतिरित्यत आह—सामीप्यादीति । मुक्तत्वोक्तौ बीजमिति शेष । कुतस्ते न मुक्ता इत्यत आह—अत इति।दु खदर्शे

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।

जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१

रा ॥ बुद्धियोगयुक्ताः कर्मजं फलं त्यक्त्वा कर्म कुर्वन्तः, तस्मात् जन्मबन्धविनिर्मु-

---

ता॥अथ तत्फलभूतबन्धनिवृत्तिपूर्वकामृतत्वप्राप्तिपरस्य'कर्मजम्'इतिश्लोकस्य हेतुफलभावक्रमेणान्वय-माह—बुद्धियोगयुक्ता इति। कर्मजं फलं सांसारिकम्;जन्मबन्धो जन्मना बन्धः स्वच्छन्दत्वहानिः;अथ वा जन्मैव बन्ध इति कर्मधारयः। अनामयं पदं स्थानविशेषो वा,परमप्राप्यं परमात्मस्वरूपं वा, प्रकरण-वशादत्र ब्रह्मपर्यन्तजीवस्वरूपं वा, पद्यते गम्यत इति पदम्;त्रयमपि हि साक्षादन्यथा वा मुक्तप्राप्यत्वात्-

---

श॥ यस्मात्—कर्मजम् इति।कर्मजं'फलं त्यक्त्वा'इति व्यवहितेन सम्बन्धः। इष्टानिष्टदेह-प्राप्तिः कर्मजं फलं कर्मभ्यो जातं बुद्धियुक्ताः समत्वबुद्धियुक्ताः सन्तः हि यस्मात् फलं

---

आ॥तथोक्तम्'संकर्षणादयः सर्वे स्वाधिकारादनन्तरम्। प्रविशन्ति परं देवं विष्णुं नास्त्य-त्र संशयः' इति व्यासयोगे । अतोऽनिष्टस्य सर्वात्मना वियोगः 'परब्रह्मत्वमिच्छामि परब्रह्मन् जनार्दन' इत्यादिना ब्रह्मादिभिरपि प्रार्थितत्वात् , 'न मोक्षसदृशं किंचित् अ-धिकं वा सुखं क्वचित् । ऋते वैष्णवमानन्दं वाङ्मनोगोचरं महत्' इत्यादेश्च, ब्रह्मा-दिपदादप्यधिकतमं सुखं मोक्ष इति सिद्धम् । अतो योगाय युज्यस्व । ज्ञानोपायाय । तद्धि कर्मकौशलम् ॥ ५० ॥

तदुपायमाह—कर्मजमिति । कर्मजं फलं त्यक्त्वाऽकामनयेश्वराय समर्प्य बुद्धियुक्ताः

---

ज॥नात्तद्धेतुभूतप्रारब्धकर्मभावाच्च मुक्ताः । कदा तर्हि मुच्यन्त इत्यत आह—तदिति । अत्रागमसम्म-तिमाह—तथोक्तमिति। सोऽस्त्वयेनेत्याद्युक्तमुपसंहरति—अत इति । तदितरमनिष्टनिवृत्तिमात्रं मुक्तिरित्य-तोऽनुमानागमाभ्यां परमसुखं चेत्याह—परब्रह्मत्वमिति । मुक्तत्वं ब्रह्मादिभिर्दुःखवद्भिरपि मोक्षे सक्ति-श्रुत्यर्थमेतदिति न ब्रह्मण एकान्तितत्वविरोधः । ममानन्तविषयैरनित्यत्वाद्वाङ्मनोगोचरमित्युक्तम् । मह-दित्यनेनाप्युत्तममित्यनेन सम्बध्यते । ब्रह्मादिपदादप्यधिकतममिति । ब्रह्मणो ब्रह्मपदादप्यधिकं दीपस्य दीपपदादप्यधिकमित्यादि ज्ञेयम् । एवं ज्ञानफलप्रदर्शनत्वेन पूर्वार्धो व्याख्यातः । उक्तविधया योग-स्वरूपनिरूपणपरः किंस्यादित्यतोऽस्मदुक्तार्थे तृतीयपादसङ्गतेरन्यथा तदसङ्गतेरित्यभिप्रेत्य तं पठति—अत इति । न दूरस्थहेतुपरामर्शोऽयमिति ज्ञापयितुं तस्मादिति पठितव्येऽत इत्युक्तम् । ज्ञानस्य महा-फलत्वाद्योगाय युज्यस्वेति कथं हेतुहेतुमद्भाव इत्यतो योगायेत्येतद्व्याचष्टे—ज्ञानेति । ननु 'समत्वं योग उच्यते' इति योगो व्याख्यातः। 'योगः कर्मसु कौशलम्' इति पुनर्व्याख्यायते इत्यतः स्तुतिरियं योगस्य क्रियत इति भावेनाह—तद्धीति । तद्योग इति शेषः ॥ ५० ॥

ननु 'कर्मजम्'इति श्लोकः पूर्वोक्तान्न विशिष्यत इत्यत आह—तदिति । तस्य ज्ञानस्य उपायं योगं तज्ज्ञानमुपायो यस्य तं मोक्षं चाह निरूपयतीत्यर्थः । व्यवहितत्वादन्वयमाह—कर्मजं फलं त्य-क्त्वा इति । अग्राह्यस्य फलस्य कथं त्याग इत्यतो व्याचष्टे—अकामनयेति । प्रकृत्यादिभ्य उपसं-ख्यानात्तृतीया । एतत्यागुक्तमित्यतः प्रकारान्तरेण व्याचष्टे—ईश्वरायेति । 'बुद्धियुक्ता मनीषिणः' इति पौनरुक्त्यपरिहारायाह—बुद्धीति । सम्यग्ज्ञानिन इति शास्त्रजनिततत्त्वज्ञानिनः । अनेन मनीषिण इत्यपरोक्षज्ञानिन इति सूचितम्, प्रशंसाया मत्वर्थीयविधानात् । नन्विदमेकं वाक्यं कथं वाक्यार्थद्वयस्य

रा॥ क्ताः अनामयं पदं गच्छन्ति । हि *प्रसिद्धं ह्येतत्सर्वासूपनिषत्स्वित्यर्थः ॥ ५१ ॥

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२**

उक्तप्रकारेण कर्मणि वर्तमानस्य तया वृत्त्या निर्धूतकल्मषस्य ते बुद्धिर्यदा मोहकलिलम्—अत्यल्पफलसङ्गहेतुभूतं मोहरूपं कलुषं व्यतितरिष्यति, तदा अस्मत्त इतः

ता॥दशब्दवाच्यम्। हिशब्दस्यात्र हेतुत्वादिपरत्वासम्भवात्प्रसिद्धिपरत्वम्। प्रसिद्धिस्थलं चाह—प्रसिद्धमिति । एवमुक्तप्रकारेण हेयोपादेयविभागो युक्त्यागमनिरपेक्षं तवैव स्पष्टो भविष्यतीति चमत्कारार्थमुच्यते ॥ ५१ ॥

'यदा'इतिश्लोकेन मोहतरणहेतुं प्रकृतं दर्शयति – उक्तेति। पुण्यपापरूपसांसारिककर्मणा हि मोहः; तच्च फलाभिसन्ध्यादिरहितकर्मणा निवर्त्यम् । ततः कारणाभावात्कार्याभाव इति भावः । अत्यल्पफलसङ्गहेतुभूतमित्यनेन मोहस्येदानीं निर्वेदप्रतिबन्धकत्वमुच्यते। मोहस्वरूपातिरिक्तस्य तत्साध्यस्य कालुष्यस्याभावात् मोहरूपमित्युक्तम्। कलुषशब्दोऽत्र कालुष्यपरः। अस्मत्त इति। आप्ततमेभ्य इति भावः। त्याज्यतयेति । निर्वेदयोग्यत्वायोक्तम् । न हि श्रोतव्येषु श्रुतेषु च उपादेयांशो निर्वेदहेतुः । यद्वा श्रो-

प्र-पा ॥ * प्रसिद्धमेव पा ॥ १ इत्यादिपाठः स. ध ङ पा ॥

शां॥त्यक्त्वा परित्यज्य मनीषिणः ज्ञानिनः भूत्वा जन्मबन्धविनिर्मुक्ताः, जन्म एव बन्धः, जन्मबन्धः, तेन विनिर्मुक्ताः जीवन्त एव जन्मबन्धात् विनिर्मुक्ताः सन्तः पदं परमं विष्णोः *मोक्षाख्यं गच्छन्ति, अनामयम् सर्वोपद्रवरहितम् इत्यर्थः। अथवा—'बुद्धियोगाद्धनञ्जय' इत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतः सम्प्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजनिता बुद्धिः दर्शिता, साक्षात् सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ॥ ५१ ॥

योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्स्यते इति ? उच्यते—यदा इति ॥

आ॥ सम्यक् ज्ञानिनो भूत्वा पदं गच्छन्ति । सयोगकर्म ज्ञानसाधनम् । तन्मोक्षसाधनमिति भावः ॥ ५१ ॥

कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीत्याह—यदेति । निर्वेदं नितरां

ज॥ निरसनम् । मोक्षस्वरूपविवरणेऽपि योगो न सम्यग्विवृत , अज्ञिनः कर्मण एवानभिधानात् , अज्ञाना च सङ्कल्पत्यागादीनामित्यत आह—स इति । समस्ताङ्गसङ्ग्रहाय योगग्रहणम् । तञ्जान यद्यपि योजनावशादिदमेकं वाक्यं तथाप्यर्थद्वयवशात् द्वे वेदितव्ये । योगश्च कर्मज फल त्यक्त्वेत्यनेन समग्रो लक्षित इति भावः ॥ ५१ ॥

'यदा ते' इति श्लोके योगसम्बन्धि न किमप्युच्यत इत्यतस्तत्सङ्गतिमाह --कियदिति । एवं फलकामनादिवर्जितानीश्वराराधनरूपाणि इत्याकाङ्क्षायामाहेत्यर्थः। नन्वियमाकाङ्क्षैवानुपपन्ना। योगो हि ज्ञानफलसाधनतयोपदिष्टः । साधनं च साध्यप्राप्तिपर्यन्तमनुष्ठेयमिति प्रसिद्धमेव । नियतपूर्वक्षणवृत्ति कारणमिति हि तल्लक्षणम् । उच्यते—योगो हि न साक्षाज्ज्ञानसाधनम् ; किं तु श्रवणादिकमेव, प्रमितेः प्रमाणफलत्वात्। योगस्त्वदृष्टद्वारा सत्त्वशुद्धिमुत्पाद्य श्रवणादीनामुपकरोति; उपकारस्य च द्वयी गतिर्दृष्टा । अतो युक्तैवेयमाकाङ्क्षेति । तथाऽपि जिज्ञासुनेति वक्तव्यम् । सत्यम् , मोक्षसाधनज्ञानार्थिनेत्येतावतोऽर्थस्य ग्रहणाय मुमुक्षुणेत्युक्तम् । निर्वेदं वैराग्यमित्यन्यथाप्रतीतिनिरासायाह—निर्वेदमिति । ननु निरः

पा ॥ *भोगा पा

रा॥ पूर्वं त्याज्यतया श्रुतस्य फलादेरितः पश्चाच्छ्रोतव्यस्य च कृते स्वयमेव निर्वेदं

ता॥नव्यस्येत्यस्योपादेयविषयत्वाय श्रुतस्येन्यत्र त्याज्यतयेति विशेषणम्। हेयमङ्गमुपादेयवैतृष्ण्यं च परामृश्य भवति हि निर्वेदः। स च स्वावज्ञारूपः। यथाहुः गान्धर्ववेदिनः—'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः

प्र-पा॥ १. दशरूपके. ४ परिच्छेदे.

शां॥यदा यस्मिन् काले ते तव मोहकलिलं मोहात्मकम् अविवेकरूपं कालुष्यं,येन आत्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्तते, तत् ते तव बुद्धिः व्यतितरिष्यति

आ॥लाभम्, प्रयोगात् 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' इत्यादि। न हि तत्र वैराग्यमुपपद्यते, तथा सति पाण्डित्यादिति स्यात्। न च ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति 'आत्मारामा हि मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' इतिवचनात्, अनुष्ठानाच्च शुकादीनाम्। न च तेषां फलं सुखं नास्ति, तस्यैव महत्सुखत्वात्। तेषां 'या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्। सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्किम्वन्तकासिलुलितात्पततां विमानात्' इत्यादिवचनात्, तेषामप्युपासनादिफलस्य साधितत्वात्, तारतम्याधि-

ज॥पूर्वो विदिर्वैराग्ये रूढः। तत्कुतो लाभार्थतेत्यत आह—प्रयोगादिति। अस्यामपि श्रुतौ वैराग्यार्थता किं न स्यादित्यत आह—नहीति। कुतो नोपपद्यत इत्यत आह—तथासतीति। 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति कात्यायनवचनात्पाण्डित्यस्य विरामार्थधातुयोगबलेनापादानत्वप्राप्तौ अपादाने पञ्चमी स्यात्; न द्वितीयेत्यर्थः। इदमत्राभिप्रेतम्—निरुपसर्गः सत्तार्थस्यैव विदेरर्थं बाधित्वा तं वैराग्यार्थे व्यवस्थापयति; निर्विद्यत इति कर्तरि प्रयोगदर्शनात्।लाभार्थस्य विदेरर्थं विशिनष्टयेव केवलम्—निर्विन्दति निर्विन्दत इति वैराग्ये तत्प्रयोगादर्शनात्—इति।अथवाऽस्तु सर्वत्र निरो धात्वर्थबाधकत्वम्, विशेषकत्वमपि क्वचित् किं न स्यात्, व्याददातीत्यादावुभयदर्शनादिति। न केवल गीतायां प्रयोगाल्लाभार्थता, किं तु वैराग्यार्थनानुपपत्तेश्चेत्याह—नचेति। अनेनान्तःकरणस्य मोहकलिलातिक्रमो नाम ज्ञानप्राप्तिरिति सूचित भवति। आदिपदेन तदुपयुक्त गृह्यते,कुतो न भवतीत्यत आह—आत्मारामा इति। भक्तिं श्रवणादिलक्षणाम् 'कस्य वा महतीमेनामात्मारामः समभ्यसत्' इत्यस्योत्तरत्वात् अनुष्ठानाच्च, श्रवणादेरिति शेषः। ननु शुकादीना श्रवणाद्यनुष्ठानेऽपि फल नास्ति, तत्फलस्य ज्ञानस्य प्राप्तत्वात्।फलाभावानुसन्धानमेव चात्र वैराग्यशब्देनाभिप्रेतम्;यथाऽऽह मायावादी—तदा श्रोतव्यं श्रुतञ्च निष्फलं प्रतिपद्यत इत्यभिप्रायः—इति।अनुष्ठानं तु लोकसङ्ग्रहार्थं संस्काराद्वेत्यत आह—न चेति।कुतो नेत्यत आह—तस्यैवेति। तस्यैव श्रवणादेरेव। स्थान्यादेशोक्तिव्यत्ययेन द्वन्द्वेऽल्पाच्तरस्य परनिपातेन च 'आन्महतः समानाधिकरणजातीययोः' इत्यस्य विधेरनित्यत्वज्ञापनात् 'महत्तत्त्वाद्विकुर्वाणात्' इत्यादिप्रयोगदर्शनाच्च महत्सुखत्वादिति युक्तम्। तथाऽपि श्रवणादिकमेव कथं सुखम्, उत्तरक्षण एव महासुखोदयाद्वैक्योपचारइत्यदोषः। तिष्ठतु तावत्कालान्तरभावि महत्फलमित्येवशब्दः; नन्वस्मदादीनां श्रवणोत्तरक्षणे सुखं नोत्पद्यत इति अत आह—तेषामिति। रसिकानामित्यर्थः।न हि पितृजीवनादिवार्ताश्रवणेनान्येषामिव पुत्रस्यापि न सुखेनोत्पत्तव्यमिति। अस्तु सम्भावना,निश्चयस्तु कुत इत्यत आह—येति। भगवतो भवज्जनाना च स्वमहिमन्याविर्भूतस्वरूपे अब्रह्मण्यस्मुक्ते। न केवलं तात्कालिकं सुखं तत्फलम्, किंतु मुक्तावानन्दवृद्धिश्चेत्याह—तेषामिति।ज्ञानिनामपि ज्ञानोत्तरस्याप्यनुष्ठानस्य यदि फलं स्यात्तर्ह्यनुष्ठान-

रा ॥ गन्तासि गमिष्यसि ॥ ५२ ॥

ता॥स्थानमाननम्'इति। श्रोतव्यस्येत्यादेस्सम्बन्धसामान्यषष्ठ्या विवक्षितविशेषकथनं—कृत इति। स्वयमेवेति। अस्मद्वाक्यादिनिरपेक्ष इत्यर्थः।'गन्तासि'इत्यत्र पदभेदभ्रमं निरस्यति—गमिष्यसीति। 'गन्तासि'इत्यत्र द्वितीयान्वयात्तृजन्तत्वं न युज्यते। तृजन्तत्वे तु भविष्यत्त्वविवक्षा न स्वारसिकी। अतो लुडन्ततयैकरूप्यं युक्तम्। एवं 'जेतासि'इति वक्ष्यमाणेऽपि। अनद्यतनविहितलुडन्तोऽपि शब्दो'व्यतितरिष्यती'त्येतत्तुल्यतया भविष्यन्मात्रार्थेन व्याख्यात इति ॥ ५२ ॥

प्र पा ॥ १ व्याख्यात. ख ग घ ङ. पा॥

श॥ति व्यतिक्रमिष्यति,शुद्धभावम् आपत्स्यते इत्यर्थः। तदा तस्मिन् काले गन्तासि *प्राप्तासि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च, तदा श्रोतव्यं श्रुतं च ते निष्फलं प्रतिभाति इत्यभिप्रायः ॥ ५२ ॥

आ॥गतेश्च। तथाहि—*यदि तारतम्यं न स्यात् नात्यन्तिकं विगणयन्त्यपि ते प्रसादम्।* नैकात्मतां मे स्पृहयन्ति केचित्। एकत्वमप्युत दीयमानं न गृह्णन्तीति मुक्तिमप्यनिच्छतामपि मोक्ष एव फलम्। तमिच्छतामपि भवति सुप्रतीकादीनाम्। कथमनिच्छतां स्तुतिरुपपन्ना स्यात्। वचनाच्च 'यथाभक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे। तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने' इति 'योगिनां भिन्नलिङ्गानामाविर्भूतस्वरूपिणाम्। प्राप्तानां परमानन्दं तारतम्यं सदैव हि'इति 'न त्वामतिशयिष्यन्ति मुक्तावपि कदाचन। मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि'इति च।साम्यवचनन्तु प्राचुर्यविषयम्, दुःखाभावविषयं च। तथाचोक्तम् 'दुःखाभावः परानन्दो लिङ्गभेदः समो मतः। तथाऽपि परमानन्दो ज्ञानभेदात्तु भिद्यते' इति नारायणाष्टाक्षरकल्पे। अतो न वैराग्यं श्रुतादावत्र विवक्षितम्; न च सङ्कोचे मानं किञ्चिद्विद्यमानं इतरत्र प्रयोगे महद्भिः श्रवणीयस्य श्रुतस्य च वेदादेः फलं प्राप्स्यसीत्यर्थः ॥ ५२ ॥

ज॥ स्वैकनिष्ठ्यनियमासम्भवात्स्वर्गवदपवर्गेऽपि तारतम्यं प्रसज्येत। न च तद्युक्तम्, अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेत्यतो नेदमनिष्टमिति भावेनाह—तारतम्येति। प्रमाणविरोधाभावाच्चेति चार्थः। कुतः प्रमाणान्मुक्ततारतम्याधिगतिरित्यतोऽर्थापत्तिं तावदाह तथाहीति। यदि मुक्तानां तारतम्यं न स्यात्, तदा मुक्तिमप्यनिच्छतामैकान्तिनां मोक्षमात्रफलं त मोक्षमिच्छतामपि सुप्रतीकादीनां मोक्षो भवतीत्यङ्गीकार्यं स्यात्। तथा च नात्यन्तिकमिति मोक्षमनिच्छतां स्तुतिः कथमुपपन्ना स्यात्, निमित्ताभावात्। अतः स्तुत्यन्यथानुपपत्त्येच्छतां मुक्तेरनिच्छतां मुक्तिरधिकेति गम्यते इत्यर्थः। आत्यन्तिकं मुक्तिहेतुम्। एकात्मतां सायुज्यम्। एकत्वमपि तदेव। आगमाच्च तारतम्याधिगतिरित्याह—वचनाच्चेति। आविर्भूतस्वरूपिणामिति कर्मधारयादतिशयार्थे इनिः। अनेन जीवन्मुक्तानैश्वर्यतारतम्येनार्थापत्तेरन्यथोपपत्तिः परिहृता,लिङ्गभेदने भिन्नलिङ्गानामित्याद्युक्तेः। 'परमं साम्यमुपैति'इत्यादिवचनविरुद्धं मुक्ततारतम्यमित्यत आह—साम्येति। प्राचुर्यं पूर्णत्वम्। कुत एतत्, उक्तप्रमाणविरोधात्, विशेषवचनाच्चेत्याह—तथाचेति। यद्यपि परानन्दोऽल्पबुद्धिगोचरत्वमात्रेण समः,तथापि न च ज्ञानिनामित्यादिनोक्तमर्थमुपसंहरति—अत इति। अस्तु तर्हि भगवन्महिमादिव्यतिरिक्तश्रुतादौ वैराग्यमत्र विवक्षितमित्यत आह—नचेति। निर्वेदशब्दस्य वैराग्यार्थत्वे निश्चिते तद्बलाच्छ्रोतव्यादिशब्दस्यार्थसङ्कोचः क्रियेतापि; इतरत्र नितरां

पा ॥ *प्राप्स्यसि. पा ॥

रा-अ ॥ 'योगे त्विमां शृणु' इत्यादिनोक्तस्यात्मयाथात्म्यज्ञानपूर्वकस्य बुद्धिविशेष*संस्कृतस्य धर्मानुष्ठानस्य †लक्ष्यभूतं योगाख्यं फलमाह—

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३

रा ॥ श्रुतिः-श्रवणम् । अस्मत्तश्श्रवणेन विशेषतः प्रतिपन्ना, सकलेतरविसजातीयनित्यनिरतिशय‡सूक्ष्मात्मविषया, स्वयमचला-एकरूपा, बुद्धिरसङ्गकर्मानुष्ठानेन निर्मलीकृते

ता॥ 'नित्यात्मासङ्गकर्मेहागोचरा साङ्ख्ययोगधीः । द्वितीये स्थितधीलक्षा प्रोक्ता तन्मोहशान्तये' इति सङ्ग्रहश्लोकमनुसन्दधानो ज्ञानयोगाभिधानोपक्रमभूतमुत्तरश्लोकमवतारयति—योगे त्विति । बुद्धिविशेषो 'व्यवसायात्मिका' इत्यादिना पूर्वोक्तः। लक्ष्यभूतम् उद्देश्यभूतमित्यर्थः। 'श्रुतिविप्रतिपन्ना' इत्यस्य प्रकृतानुपयुक्ताप्रकृतवैदिकवाक्यविरोधार्थताभ्रम 'श्रोतव्यस्य श्रुतस्य च' इति प्रकृतानुरोधेन व्युदस्यति—श्रुतिः श्रवणमित्यादिना। अस्मत्त इति—सार्वज्ञ्यसर्वशक्तिपरमकारुण्यादिभिरनाप्ततभ्रमविप्रलम्भप्रमादादिदोषगन्धादव्याजबन्धोरीश्वरादिति भावः । विशब्दस्य विरुद्धार्थताव्युदासाय वैशिष्ट्यार्थतामीश्वराच्छ्रवणेन सिद्धां दर्शयति—विशेषत इति । स्थास्यतीति स्थायित्व मुक्तम्, विशेषं पूर्वोक्तं व्यनक्ति—सकलेतरेति। 'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति भावः। निश्चलाचलशब्दयोः पौनरुक्त्यपरिहारायोक्त—स्वयमित्यादि । उद्देश्यान्तर्गतमचलत्वम्, निश्चलत्वं तु तत्र विधेयो विशेष इति स्वयशब्दस्य भावः । एकरूपार्थविषयत्वादेकरूपा विषयान्तरसञ्चाररहिता चेत्यर्थः । अथवा 'श्रुतिविप्रतिपन्ना' इति श्रवणस्योक्तत्वान्मननस्थिरीकृतत्व कुतर्कैरकम्पनीयत्वं च पदाभ्यां विवक्षितम् । यद्वा पूर्वो-

प्र-पा ॥ *संस्कृतकर्मा पा॥ †लक्ष्य. पा॥ † सूक्ष्मतत्त्व. पा॥ १. गीतार्थसङ्ग्रहे ६. श्लो॥ २. सिद्धिनये ॥ ३. पदान्तराभ्यां. क ख. ग. ङ. पा.

शं॥ मोहकलिलात्ययद्वारेण लब्धात्म*विवेकप्रज्ञः †कर्मयोगजं फलं परमार्थयोगम् अवाप्स्यसि इति । शृणु—श्रुतिविप्रतिपन्ना इति ॥ श्रुतिविप्रतिपन्ना अनेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रवणैः प्रवृत्तिनिवृत्तिलक्षणैः विप्रतिपन्ना नानाप्रतिपन्ना ‡श्रुतिवि-

आ॥ तदेव स्पष्टयति—श्रुतिविप्रतिपन्नेति। पूर्वं श्रुतिभिर्वेदैर्विप्रतिपन्ना विरुद्धा सती यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि निश्चला भवति, ततश्च समाधावचला ॥

ज॥ लाभे तस्य प्रयोगे विद्यमाने निर्मूल सङ्कोचकल्पनमित्यर्थः । ननु लाभार्थतायामप्यसच्छास्त्रादिव्युदासाय सङ्कोचः कार्य एवेत्याह—महद्भिरिति। अयोग्यतयैव तन्निरासः। प्रकरणाद्वेति भावः ॥ ५२ ॥

ननूत्तरश्लोकेऽपि योगानुष्ठानविधिरेवोच्यते, अतः पुनरुक्तिदोष इत्यत आह—तदेवेति। किं तन्मोहकलिलं कीदृशं च तदतितरणमित्याकाङ्क्षायां पुमासधममध्यमोत्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तमेव योगानुष्ठानावधिमनेन स्पष्टं करोतीत्यर्थः। नन्वत्र श्रुतिविप्रतिपन्नेति श्रवणादितो वैराग्यमुच्यते । यथाह भास्करः—वस्त्वन्तरश्रवणाद्विरक्तेति। ततः पूर्वेणापि वैराग्यमर्थः स्यात् । निश्चलाचलेति च पुनरुक्तिश्च। योगावाप्तेरुत्तरा चेयमवस्था । तत्कथमुच्यते 'तदा योगमवाप्स्यसि' इति—इति शङ्कायां श्लोकं व्याचष्टे—पूर्वमिति । पूर्वावस्थायाः सामर्थ्यलब्ध वैलक्षण्य दर्शयितुमुक्तम्—वेदार्थेति। चलनप्रसक्तिं दर्शयति—

पा ॥ *विवेकप्रज्ञ . पा. †कदा कर्मयोगजं फलं परमार्थयोगम् अवाप्स्यामि—इति चेत्—शृणु. पा. ‡अध्यात्मशास्त्रातिरिक्तशास्त्रैरित्यर्थः. इत्यधिक. पाठो दृश्यते.

रा॥मनसि, यदा निश्चला स्थास्यति, तदा योगम् आत्मावलोकनम्, अवाप्स्यसि। एतदुक्तं भवति—शास्त्रजन्यात्मज्ञानपूर्वककर्मयोगः स्थितप्रज्ञताख्यज्ञाननिष्ठामापादयति; ज्ञाननिष्ठारूपा स्थितप्रज्ञता तु योगाख्यमात्मावलोकनं साधयति—इति ॥ ५३ ॥

रा अ ॥ *एवमुक्तः पार्थोऽसङ्गकर्मानुष्ठानरूपकर्मयोगसाध्यस्थितप्रज्ञताया योगसाधनभूतायास्स्वरूपं, स्थितप्रज्ञस्यानुष्ठानप्रकारं च पृच्छति—

ता॥क्रतुदृष्टसत्वानन्तत्वनिषेधपरोऽयम्शब्द इत्यभिप्रायेणोक्तम्—एकरूपेति। समाधीयते अस्मिन्नात्मज्ञानमिति समाधिर्मन इति निर्वचनेन तैलधारावदविच्छिन्नस्मृतिहेतुतामभिप्रयनीतम्—असङ्गेत्यादि। योगशब्दस्यात्र ज्ञानयोगरूपनिश्चलबुद्धिसाध्यफलविषयत्वात् आत्मावलोकनमित्युक्तम्। समाधिशब्दस्याव बुद्धिविशेषपरत्वे पुनरुक्त्यादि., तत्कालपरत्वे तु लक्षणा च स्यादिति भावः। 'योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यादिभिरनेकार्थतया प्रसिद्धोऽय शब्दस्तत्तद्वाक्यानुकूल्यमनुसन्धेयः। ननूपायतया हि योगो विहितः, स कथं फलतयात्र निर्दिश्यते। आत्मज्ञानपूर्वकस्य च कर्मयोगस्यात्मज्ञानेन साध्य चेदात्माश्रयादिदोषः। श्रवणमननाभ्यां स्थितप्रज्ञस्य ह्यनुष्ठानम्; तथा च कथमनुष्ठानसाध्या *स्थितप्रज्ञता; निश्चलप्रज्ञास्थितिमन्तरेण च कोऽसावपरस्तदापाद्यो योग इत्यत्राह*—एतदुक्तमिति। तत्र प्रथमचोद्य कर्मयोगशब्देन योगाख्यमात्मावलोकनमित्यनेन च परिहृतम्। शास्त्रजन्यात्मज्ञानात्मावलोकनशब्दाभ्यामात्माश्रयादिनिरासः। आत्मज्ञानज्ञाननिष्ठाशब्दाभ्यां श्रवणमननसिद्धतत्त्वनिश्चयज्ञानयोगविषयाभ्यां तृतीयस्य परिहारः। चतुर्थोऽप्युक्तप्रकारेण साक्षात्कारतद्धेतुस्मृतिसन्ततिभेदात्परिहृतः। प्रथमं शास्त्रतस्तत्त्वज्ञानम्, ततः स्मृतिसन्ततिरूपमुपासनम्, ततस्तन्मूलसाक्षात्कार इति ज्ञानपर्वभेदः प्रदर्शितः ॥ ५३ ॥

प्रश्नरूपस्योत्तरश्लोकस्यावतारं तत्र पूर्वोत्तरार्धयोः क्रमात्निष्कृष्टप्रश्नार्थं चाह—एवमिति। पूर्वार्ध-

प्र पा॥ *एवमुक्ते पा॥ १ नामलिङ्गानुशासन ३. काण्डे नानार्थवर्गे १७९. श्लो॥

---

श॥ प्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिः यदा यस्मिन् काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती समाधौ, समाधीयते चित्तमस्मिन् इति समाधिः आत्मा, तस्मिन् आत्मनि इत्येतत्। सा अपि अचला, तत्रापि विकल्पवर्जिता इत्येतत्। बुद्धिः अन्तःकरणम्। तदा तस्मिन् काले योगम् अवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥ ५३ ॥

---

आ॥ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानन्दमग्नत्वात्। तदा योगमवाप्स्यसि उपायसिद्धो भवसीत्यर्थः ॥ ५३ ॥

स्थिता प्रज्ञा ज्ञानं यस्य स स्थितप्रज्ञः। भाष्यतेऽनयेति भाषा लक्षणमित्यर्थः। उक्तं

ज्ञा॥विप्रतिपन्नेति। असच्छास्त्रैरित्यर्थः। अनेन परोक्षज्ञानकाष्ठा दर्शिता। परोक्षतत्त्वनिश्चयानुवृत्तिव्युदासायोक्तम्—ब्रह्मेति। अत्रापि चलनप्रसक्तिमाह—भेरीति। एतत्कथमित्यत आह—परमेति। परमानन्दे उपायसिद्धो भवसीत्यर्थः। *एतेनापरोक्षज्ञानकाष्ठा दर्शिता। उपायेन सिद्धः प्राप्तफलः।* योगशब्देन तत्फलमुपलक्ष्यत इति भावः। श्लोकद्वयेऽप्येतदवस्थाप्राप्तिर्योगानुष्ठानावधिरिति तात्पर्यम् ॥ ५३ ॥

ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः पृच्छतीति प्रसङ्गतः स्पष्टं ह्यनुक्त्वा प्रज्ञाशब्दस्य बुद्धिमात्रार्थत्वप्रतीतिनिरासाय स्थितप्रज्ञशब्दार्थमाह—स्थितेति। प्रतिष्ठा प्राप्ता, ज्ञानमपरोक्षम्। किं प्रभाषेतेत्यतः का भाषेत्यस्यार्थान्तरमाह—भाष्यत इति। ज्ञानीति व्यवह्रियत इत्यर्थः। भाषेति भाषाशब्दस्य

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४

रा॥ समाधिस्थस्य स्थितप्रज्ञस्य का भाषा-को वाचकशब्दः; तस्य स्वरूपं कीदृशा-

ना॥स्वाभिप्रेतं वक्तुमन्वयं तावदाह—समाधीति।समाधिरत्र पूर्वनिरुक्तप्रकारं मनः।तत्र स्थितिः तद्वशी-करणेनावस्थानम्।'किं प्रभाषेत'इत्यनेन पुनरुक्तिपरिहाराय'स्थितप्रज्ञस्य का भाषा' इत्यत्र कर्तृतयान्वयशङ्कामपाकरोति—को वाचकश्शब्द इति। ननु 'स्थितप्रज्ञः'इत्येव वाचके सिद्धे किं वाचकान्तरं पृच्छ्यते,किं चात्र वाचकप्रश्नस्य प्रयोजनमित्यत्राह—तस्येति। केनचिद्वाचकेन हि कस्यचित्प्रकारभूतप्रवृत्तिनिमित्तविशिष्टं स्वरूपं निर्देष्टव्यमिति भावः। स्थितप्रज्ञशब्दात् स्थितधीशब्दस्यार्थान्तरपरत्वभ्रमनिरा-

शा॥प्रश्नबीजं प्रतिलभ्य अर्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया—स्थितप्रज्ञस्य इति ॥ स्थिता प्रतिष्ठिता "अहम् अस्मि परं ब्रह्म" इति प्रज्ञा यस्य स स्थितप्रज्ञः तस्य का भाषा भाषणं वचनं, कथम् असौ परैः भाष्यते समाधिस्थस्य समाधौ स्थितस्य

आ॥लक्षणमनुवदति, लक्षणान्तरं पृच्छामीति ज्ञापयितुम्। समाधिस्थस्येति। कं ब्रह्माणम् ईशं रुद्रं च वर्तयतीति केशवः। तथाहि निरुक्तिः कृता हरिवंशेषु कैलासयात्रायां 'हिरण्यगर्भः कः प्रोक्त ईशः शंकर एव च। सृष्ट्यादिना वर्तयसि तौ यतः केशवो भवान्' इति। वचनान्तराच्च। किमासीत किं प्रत्यासीत। नचार्जुनो न जानाति तल्लक्षणादिकम्। 'जानन्ति पूर्वराजानो देवर्षयस्तथैव च। तथापि धर्मान्पृच्छन्ति वार्तायै गुह्यवित्तये।

ज्ञा॥स्त्रीलिङ्गत्वादनयेत्युक्तम्।व्यवहारकारणानामनेकत्वात्कस्याय प्रश्न इति न ज्ञायते,अत आह—लक्षणमिति। सास्नादिमत्त्वं लक्षणं दृष्ट्वा हि गौरिति व्यवह्रियते। ज्ञानिमात्रव्युदासाय समाधिस्थस्येति विशेषणमिति प्रतीयते। समाधिं कुर्वत इति। यथाऽऽह शङ्करः—'लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया अर्जुन उवाच'—इति। तदसदिति भावेनाह—उक्तमिति। ज्ञानिसामान्यलक्षणविषय एवायं प्रश्नः।किमर्थं तर्हि समाधिस्थस्येत्युक्तमिति चेत् 'समाधावचला बुद्धिः'इत्यनेनोक्तं ज्ञानिसमान्यलक्षणमनेनानुवदतीति ब्रूमः। न हि इद न लक्षण ज्ञानिमात्रानिष्ठधर्मत्वात्। किमर्थोऽनुवाद इति चेत्—तज्ज्ञातं ममेति ज्ञापनायेति वदामः। एतज्ज्ञापने किं प्रयोजनमिति चेत्—लक्षणान्तरं पृच्छामीति ज्ञापयितुम्। अन्यथा सिद्धप्रश्नोऽयमित्युपेक्ष्यः प्रसज्येतेति भावः। लक्षणान्तरप्रश्नस्य चेदं प्रयोजनम्—अयावल्लक्ष्यभावित्वान्न तत्सम्यग्व्यवहारोपयोगि, यावल्लक्ष्यभावि तु सार्वत्रिकव्यवहारोपयोगि ज्ञास्यामीति। अत एव प्रसिद्धलक्षणपदपरित्यागेनाप्रसिद्धभाषापदोपादानमिति। कश्चाश्चेशश्च केशाः ब्रह्मविष्णुमहेश्वराः, ते यस्यावयवभूताः स केशवः परमात्मेति भास्करो निरुक्तवान्—'एतत् श्रुत्वा वचनं केशवस्य'—इत्यत्र। तदसदिति भावेनाह—कमिति। कुत इयं निरुक्तिरित्यत आह—तथाहीति।'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गे सम्भूतौ ततः केशवनामवान्' इति हरिवंशवचनम्। वचनान्तराच्चेयमेव निरुक्तिः स्वीकार्येत्याह—हिरण्यगर्भ इति। अत इति लभ्यते; तेन 'एव'शब्दस्यान्वयः। हिरण्यगर्भ एव न त्वन्यः प्रजापतिः; शङ्कर एव न त्वन्यः समर्थ इति वा। अनेन केशयोः कर्मणोरुपपदयोरन्तर्णीतण्यर्थात्'वृतु वर्तने'इत्यस्माद्धातोः'अन्यत्रापि दृश्यते'इति डप्रत्यय इत्युक्तं भवति। आसेरकर्मकत्वात्कथं कर्मप्रश्न इत्यत आह—किमासीनेति। अध्याहृतप्रतियोगिनिमित्तात् द्वितीया;न कर्मणीत्यर्थः। प्रश्नकरणादर्जुनस्याज्ञत्वं प्रतीतम्, तन्निवारयति—न चेति। तल्लक्षणादिकं ज्ञानिलक्षणं तत्प्रवृत्त्यनुपपत्तिसमाधानं च; प्रश्नस्यान्यथोपपत्ते-

रा॥मित्यर्थः, स्थितप्रज्ञः किंच भाषणादिकं करोति ॥ ५४ ॥

रा-अ ॥ वृत्तिविशेषकथनेन स्वरूपमप्युक्तं भवतीति वृत्तिविशेष उच्यते—

ता॥अथ 'स्थितप्रज्ञः' इति पूर्वार्धोक्तशब्द एवानुवर्तते.।किंच भाषणादिकमिति 'किं प्रभाषेत' इत्यादयः किंशब्दाः क्रियाविशेषणतयान्वीयमानाः क्रियाप्रकारप्रश्नपरा इति भावः । 'किं प्रभाषेत' इति वाचिके 'किं व्रजेत' इति कायिके च पृष्टे 'किमासीत' इति मानसपरम्, ध्यानार्थत्वादनासनस्य॥५४॥

एव करणत्रयानुष्ठानप्रकारप्रश्नस्य साक्षादुत्तरेषु 'प्रजहाति' इत्यादिषु चतुर्षु श्लोकेषु प्रथमस्य स्वरूपप्रश्नोत्तरतामपि दर्शयति—वृत्तिविशेषेति।प्रकृष्टानुकूल्ययोगिन्यात्मनि प्रीतिरूपस्य तोषस्य कामान्तरप्रहा-

प्र पा॥ १. अनुवाचाय. क. ङ. पा॥

श॥हे केशव। स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत किम् आसीत व्रजेत किम् आसनं व्रजनं वा तस्य कथम् इत्यर्थः । स्थितप्रज्ञस्य लक्षणम् अनेन श्लोकेन *पृच्छ्यते ॥ ५४ ॥

यो हि आदितः एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः, यश्च कर्मयोगेन, तयोः 'प्रजहाति' इति आरभ्य आध्यायपरिसमाप्तेः स्थितप्रज्ञलक्षणं साधनं च उप-

आ॥न ते गुह्याः प्रतीयन्ते पुराणेष्वल्पबुद्धिनाम्' इति वचनात् ॥ ५४ ॥

गमनादिप्रवृत्तिर्नाल्पाभिसंधिपूर्विका मात्रादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यन् लक्षणं प्रथमत आह । एवं परमानन्दतृप्तः किमर्थमेवं प्रवृत्तिं करोतीति प्रश्नाभिप्रायः । प्रारब्धकर्मणेषत्तिरोहितब्रह्मणः वासनया प्रायोऽल्पाभिसंधिप्रवृत्तिः संभवतीत्याशयवान् परिहरति । प्रायः सर्वान् कामान् प्रजहाति शुकादीनामपीदृदर्शनात्

ज॥दिति भावः।कुत इत्यत आह—जानन्तीति। समासान्तो विधिरनित्य ,अतः पूर्वराजान इति साधु। देवर्षयश्च तथैव जानन्त्येव धर्मानित्युपलक्षणम् । नातीये गुरोरात्मना च ख्याप्ये । लोकस्य गुह्यार्थवित्तये । एतेषां प्रश्नकरण कौतुकात् कथ गुह्यार्थवित्तये भवतीत्यतो व्यतिरेकमुखेनोपपादयति—न त इति । 'छन्दस्युभयथा' इत्यनोऽल्पबुद्धीनामिति दीर्घत्वाभावः । गुह्यास्तेऽर्थाः पुराणादिषु प्रश्नोत्तरोपनिबन्धनेन विना उक्तिमात्रेणाल्पबुद्धीना व्यक्तं न प्रकाशन्ते। न च प्रश्नाकरणे तदुपनिबन्धनं संभवतीति भावः । एतेन 'मोक्षादिरत्नभिभावे.' इत्येतत्प्रत्युक्तं भवति ॥ ५४ ॥

लक्षणप्रश्नस्यैवोत्तरं प्रतीयते, न तु स्थितधीरित्यादेरित्यतस्तदुत्तरस्थानं दर्शयन्ननन्तरप्रकरणार्थं दर्शयति—गमनादीति । अभिसन्धिः प्रयोजनोद्देशः । ईषदभिसन्धिसूचनायातिशब्दः । प्रवृत्तिमात्रमिहाभिप्रेतं, न भाषणादिक्रमेणेति ज्ञापनाय भाषणादीति नोक्तम् । व्यवहाराय लक्षणप्रश्नो घटते; प्रवृत्त्युद्देशप्रश्नस्तु व्यर्थ एव । न च शक्यः प्रतिवक्तुम् , अनेकेषां प्रवृत्त्युद्देश्यस्यैकरूपस्याभावादित्यभिप्रायेण भगवतोपेक्षितोऽसाविति किं न स्यात् , किं तदुत्तरस्थानप्रदर्शनेन , अन्यथाऽल्पमप्युद्देश्य वक्तव्यमित्यत आह—एवमिति । एव भेरीताडनादावप्यचलेत्युक्तप्रकारेण परमानन्दतृप्तश्चेत्किमर्थं प्रवृत्तिं करोति; न कुर्यात्; करोति च,तस्मादुक्तमसदित्युक्ताक्षेप एवात्र अभिप्रेतप्रश्नस्तु मुखत एव । अतो नोपेक्षामर्हतीति भाव. । एतच्चार्जुनस्य प्रेक्षावत्त्वाद्गम्यते; एवं चेद्गमनादिप्रवृत्तिरित्युक्तः परिहारो न पूर्णः, प्रवृत्तिकारणानुक्तेरित्यत आह—प्रारब्धकर्मणेति । ईषत्तिरोहितं ब्रह्म यस्यासौ तथोक्तः । परिहरति द्वितीयं प्रश्नं वा निर्गत्यादानिति शेष. । ननु सर्वकामप्रहाणं ज्ञानिलक्षणत्वेनोच्यते, तत्कथमल्पाभिसन्ध्यङ्गीकार इत्यत आह—प्राय इति । कुत सर्वशब्दसङ्कोच इत्यत आह—शुकादीनामिति ।

पा ॥ *पृच्छति. पा.

श्रीभगवानुवाच—

प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५

रा॥आत्मन्येवात्मना, मनसा आत्मैकावलम्बनेन तुष्टस्तेन तोषेण तद्व्यतिरिक्तान् सर्वान्मनोगतान् कामान् यदा प्रकर्षेण

ता॥गहेतुत्वात्तथान्वयमाह—आत्मन्येवेति । सर्वशब्दस्य'आत्मनि तुष्टः'इत्येतत्सन्निधानसिद्धं सङ्कोचमाह—तद्व्यतिरिक्तानिति।यद्वा'आत्मन्येवात्मना तुष्टः'इति यथाक्रममेवान्वयः;आत्मैकविषयेण हि मनसान्यतो जातालंबुद्धिरूपसन्तोष इत्यर्थः । एतदभिप्रायेणोक्तं—मनसात्मैकावलम्बनेन तुष्ट इति । तेन तोषेणेति । 'न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः' इतिवत्। प्रकर्षेणेति—अपुनरङ्कुरमित्यर्थः ।

प्र पा॥ १ वि पु १-१७-३९. 'स त्वासक्तमति, कृष्णे दश्यमानो महोरगैः' इति पूर्वार्धम् ॥

शं॥दिश्यन्ते। सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनानि उपदिश्यन्ते, यत्नसाध्यत्वात् । यानि यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि श्री-

आ॥'त्वत्पादभक्तिमिच्छन्ति ज्ञानिनस्तत्त्वदर्शिनः'इत्युक्तेः,नामिच्छन्ति । यदा त्विन्द्रादीनामाग्रहो दृश्यते, तदाऽभिभूत तेषाम् , तथोक्तम् 'आधिकारिकपुंसां तु बृहत्कर्मत्वकारणात् । उद्भवाभिभवौ ज्ञाने ततोऽन्येभ्यो विलक्षणाः' इति । अत एव वैलक्षण्यादनधिकारिणामाग्रहादि चेदस्ति न ते ज्ञानिन इत्यवगन्तव्यम् । न चात्र समाधिं कुर्वतो लक्षणमुच्यते । 'यः सर्वत्रानभिस्नेहः' इत्यादिस्नेहनिषेधात् । नहि समाधिं कुर्वतस्तस्य शुभाशुभप्राप्तिरस्ति । असंप्रज्ञातसमाधेः संप्रज्ञाते त्वविरोधस्तथापि न तत्रैवेति नियमः।

ज॥विरुद्धकामस्येति शेषः। तच्च प्रवृत्तिलिङ्गेनागमाच्च ज्ञातव्यम्। अनुकूलकामस्तु सर्वथास्त्येव, अतोऽपि सङ्कोच इत्यत आह—त्वत्पादेति । तां भक्तिम् । उपलक्षणमेतत् , प्रायेण विरुद्धकामत्यागो ज्ञानिनो लक्षणं चेदिन्द्रादीनां ज्ञानित्वं न स्यात्,बहुतरविरुद्धकामदर्शनात्। तथाभूता अपि चेत् ज्ञानिनः—तर्हि देवदत्तादयोऽपि किं न स्युरित्यत आह यदेति । आग्रहो विरुद्धकामाभिनिवेशः । एतत्प्रमाणेन स्थापयति—तथोक्तमिति । आधिकारिका इति पुरुषविशेषसंज्ञा, 'प्रजापाश्च तथा देवाः'इत्यादिवचनात्। देवदत्तादिप्रतिबन्दीं मोचयति—अत एवेति। एतदागमोक्तादेव। आदिपदेन विरुद्धक्रोधादिग्रहणम् । अनेन कामशब्दः क्रोधादीनामुपलक्षणार्थ इति सूचितं भवति । ननु समाधिं कुर्वतो ज्ञानिनो लक्षणमेतदिति व्याक्रियताम् । तथा सति प्रश्नवाक्यस्थं समाधिस्थस्येति पदं समञ्जसं स्यात् । सर्वशब्दश्चासङ्कुचितार्थः स्यात् । इन्द्रादिविषयाक्षेपाप्रसक्तिश्चेत्यत आह—नचेति । समाधिं कुर्वतः स्नेहनिषेधोऽनुगुण एवेत्यत आह—नहीति । नात्र स्नेहनिषेधमात्रमुच्यते, किन्तु तत्तत्प्राप्यशुभाशुभमिति शुभाशुभार्थप्राप्तिपूर्वकम् । न च तत्प्राप्तिः समाधिं कुर्वतो ज्ञानिनोऽस्ति, कुत इत्यत उक्तम्—असंप्रज्ञातेति । असम्प्रज्ञातः समाधिर्यस्यासौ तथोक्तः । बाह्यार्थानुसन्धानं यत्र नास्ति सोऽसंप्रज्ञातसमाधिः ; इतरः सम्प्रज्ञातसमाधिरिति योगशास्त्रे प्रसिद्धिः। तथा च लक्षणमसम्भवि प्रसजेत् । सावकाशेभ्यो बहुभ्यो निरवकाशस्यैकस्य बलवत्त्वमिति भावः । एवं तर्हि सम्प्रज्ञातसमाधिस्थस्यैतल्लक्षणमस्तु, तत्रोक्तदोषाभावादित्यत आह—संप्रज्ञाते त्विति । यद्यपि सम्प्रज्ञातसमाधौ शुभाशुभप्रतीतिसम्भवेनासम्भवितं नाम लक्षणविरोधो नास्ति ; तथापि कामादिहानं समाधिस्थ एव पुंसि—इति नियमो नास्ति,

रा॥ जहाति; तदाऽयं स्थितप्रज्ञ इत्युच्यते; ज्ञाननिष्ठाकाष्ठेयम् ॥ ५५ ॥

ता॥स्थितप्रज्ञविषयश्लोकचतुष्टय तदवस्थाचतुष्टयविषयमिति मन्वानश्चतुर्थीयमवस्थेत्याह—**ज्ञाननिष्ठाकाष्ठेयमिति।** उक्तं च हैरण्यगर्भैः—'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' इति। 'ऐहिकामुष्मिकसकलफलनिःस्पृहस्य यस्तेषु फलेषु सवासनरागत्यागः, सा वशीकरणसंज्ञेत्युच्यत इत्यर्थः ॥ ५५ ॥

प्र पा ॥ १ हैरण्यगर्भे पा॥

२. पातञ्जल सू १-१५ † 'स्त्रियोऽन्नपानमैश्वर्यम्' इति दृष्टविषयवितृष्णस्य, स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तौ आनुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषयसंयोगेऽपि चित्तस्य विषयदोषदर्शिन प्रसङ्ख्या नवलाद्नाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम्' इति तस्य वृत्ति । दृष्टविषयवितृष्णस्य आनुश्रविकविषयवितृष्णस्य च वशीकारसंज्ञा वैराग्यमिति सूत्रार्थ ॥ ३ प्रदर्शितसूत्रार्थं सङ्क्षेपेण दर्शयति—ऐहिकेति ॥ ४. वशीकार. ग घ पा॥

श॥भगवान् उवाच—प्रजहाति इति॥प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन् काले कामान् इच्छाभेदान् सर्वान् समस्तान् हेयार्थ मनोगतान् मनसि प्रविष्टान् हृदि प्रविष्टान् । सर्वकामपरित्यागे तुष्टिकारणाभावात् शरीरधारणनिमित्तशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्ता, इत्यतः उच्यते—आत्मनि एव प्रत्यगात्मस्वरूपे एव आत्मना स्वेनैव बाह्यलाभनिरपेक्षः तुष्टः परमार्थदर्शनामृतरसलाभेन अन्यस्मात् अलम्प्रत्ययवान् स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य स स्थितप्रज्ञः विद्वान् तदा उच्यते । त्यक्तपुत्रवित्तलोकैषणः संन्यासी आत्मारामः आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः ॥ ५५ ॥

आ॥ 'कामादयो न जायन्ते ह्यपि विक्षिप्तचेतसाम् । ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयात्' इति च स्मृतेः । मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ युक्तं हानं तेषामिति दर्शयति—मनोगतानिति । विरोधश्चोच्यते 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति । न चैतद्दृष्ट्या अपलपनीयम्, पुरुषवैशेष्यात् । आत्मना परमात्मना । परमात्मन्येव स्थितः सन्। आत्माख्ये तस्मिन्स्थितस्य तत्प्रसादादेव तुष्टिर्भवति । 'विषयांस्तु परि-

ज्ञा॥समाधिस्थेऽपि ज्ञानिनि विद्यमानत्वात्, तथाचातिव्याप्तिः स्यादित्यर्थः । असमाधिस्थेऽपि ज्ञानिनि कामाद्यभावः कुत इत्यत आह—कामादय इति । तदर्थं सर्वथेति विशेषणप्रक्षेपेऽपि पुरुषविशेषेऽतिव्याप्तिपरिहारो दुर्घट एव । न चास्मन्मतेऽप्यव्याप्तिदोषः । असम्प्रज्ञातसमाधिस्थव्यतिरिक्तविषयत्वात्, सम्भवतस्तु तद्विषयत्वादिति । कामानां मनोगतत्वाद्व्यर्थं विशेषणमित्यतो नेदं विशेषणम्, किंतु सर्वकामत्यागस्यासम्भवित्वमाशङ्क्य तदुपपादनाय युक्तिरियमुक्तेत्याह —**मनोगता इति** । तत्रैव मनस्येव । कामज्ञानयोर्विरोधः कुत इत्यत आह **विरोधश्चेति** । रसो राग इति वक्ष्यति । ननु सर्वकामप्रहाणमस्मदादिषु न दृष्टम् । तद्दृष्टान्तेन ज्ञानिष्वपि तदभावानुमानादसम्भवित्वं लक्षणस्येत्यत आह —**नचेति** । कुतः? उदाहृतप्रमाणविरोधात् । प्रमाणविरुद्धार्थानुमाने पण्डितमूर्खादिपुरुषवैचित्र्यापलापप्रसङ्गादित्याह **पुरुषेति** । आत्मन्यात्मनेति पदद्वयेन जीव एवालोच्यत इति कश्चित् । तृतीयान्तेन मन इत्यपरः। तदुभयमसदिति भावेनाह—**आत्मनेति** । स्थितः सन्निति शेषोक्तिः । वाक्यार्थं वदन्स्वव्याख्यानोपपत्तौ परव्याख्यानानुपपत्तौ च युक्तिमाह—**आत्माख्य इति** । तस्मिन्स्थितस्य तदेकाग्रचित्तस्य अत्र त्यक्तविषयस्यापि तुष्टिरुच्यते । सा च परमात्मपरिग्रहे सम्भवति ; नान्यथेत्यर्थः । कुत इत्यत

रा॥प्रियागमनहेतुभूतचेतनान्तरगतदुःखहेतुभूतस्वमनोविकारः क्रोधः, तद्रहितः; एवंभूतो मुनिः आत्ममननशीलः स्थितधीरित्युच्यते ॥ ५६ ॥

ततोऽर्वाचीनदशा प्रोच्यते—

**यस्सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥** ५७

यस्सर्वत्र प्रियेष्वनभिस्नेहः उदासीनः, प्रियसंश्लेषविश्लेषरूपं शुभाशुभं प्राप्याभिनन्दनद्वेषरहितः, सोऽपि स्थितप्रज्ञः ॥ ५७ ॥

---

ता॥न यद्दुःखं तदानीमेवाङ्गस्पर्शादिनेवोत्पद्यते, तद्धयमित्यर्थः। क्रोधलक्षणे प्रियविश्लेषादिस्त्रैकालिकः, सर्वत्र क्रोधोत्पत्तिदर्शनात् । अचेतनेषु वातातपकण्टकादिषु बाधकेष्वपि क्रोधाभावात् चेतनेत्युक्तम् । यन्तून्मत्तमत्ताविषि कुप्यति, सोऽपि चेतनत्वाभ्यासेन। अन्तरशब्देन स्वदुःखहेतुस्वमनोविकारव्यावर्तनम्। स हि तथाविधो निर्वेदादिरूपस्स्यात् । क्रोधादात्महननाद्यपि परपीडाभिसन्धिगर्भम् । मनोविकारोऽत्र रजस्तमस्समुन्मेषकृतो व्यापारविशेषः । तदधीनो ज्ञानविशेष इह तच्छब्देनोपचर्यते । मुनिर्मननशील इति व्युत्पत्तिः, तत्र मननस्यात्र साक्षात्करिष्यमाणात्मविषयत्वं यत्तदर्थमुक्तम्—आत्ममननशील इति। एवमस्यास्तृतीयावस्थाया उद्वेगस्पृहादिविरहमात्रेऽप्यौत्सुक्यमात्रमरागमनादोपस्य भस्मच्छन्नदहनवदवस्थितत्वाच्च चतुर्थावस्थातो विशेषः ॥ ५६ ॥

अथ व्यतिरेकसंज्ञाख्या द्वितीया दशोच्यते इत्याह—ततोऽर्वाचीनदशेति । अप्रियेषु स्नेहप्रसङ्गाभावात्प्रियमात्रविषयः सर्वत्रेतिशब्द इति दर्शयति—प्रियेष्विति । अभिस्नेहस्य प्रवृत्तिपर्यन्ततया तदभावोऽत्र तद्विशेषोपादानप्रवृत्तिराहित्यपर्यन्त इत्याह – उदासीन इति । एतेन प्रियेत्यादिना च व्यतिरेकांशत्वं व्यनक्ति । अपक्वान् कषायान् पक्वेभ्यः पृथगनुसन्धाय तेषामपि पाकापादनदशा हि व्यतिरेकसंज्ञा । तत्र स्वयमप्रियेषु प्रवृत्तिरहितो दैवागतप्रियसंश्लेषविश्लेषयोश्चाभिनन्दनादिरहित इत्युक्ते एतेषां रागादीनां पाकाभिप्रायेण मनोव्यापारविशेषनिवारणमुक्तं स्यात् । अभिनन्दनं चानाभिमतोनन्दनम्—अनुबन्धिषु कालान्तरेषु च प्रीत्यनुवृत्तिहेतुभूतनन्दनमित्यर्थः , एवं द्वेषेऽपि ॥ ५७ ॥

---

स पा॥१. स्थानप्रिय पा॥ | २ तद्विषयोपादान. ४ घ ङ, ज झ पा

---

श॥क्रोधः रागश्च भयं च क्रोधश्च वीताः विगता यस्मात् सः वीतरागभयक्रोधः । स्थितधीः स्थितप्रज्ञो मुनिः सन्यासी तदा उच्यते ॥ ५६ ॥

वि॥—यः सर्वत्र इति । यः मुनिः सर्वत्र देहजीवनादिषु अपि अनभिस्नेहः अभिस्नेहवर्जितः तत्तत् प्राप्य शुभाशुभं तत्तत् शुभम् अशुभं वा लब्ध्वा न अभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यति, अशुभं प्राप्य न द्वेष्टि इत्यर्थः । तस्य एवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

---

आ॥रक्तिः शोभनाध्यास इष्यते' इत्यभिधानम् ॥ ५६ ॥

सर्वत्रानभिस्नेहत्वाच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि ॥ ५७ ॥ ५८ ॥

---

ज॥गतार्थमित्यत आह —शोभनेति। अशोभनेषु विषयेषु शोभनत्वभ्रान्तिः। रगो रागो रक्तिः—इत्येतैः काम उच्यते । तथा शोभनाध्यास उच्यते इत्यर्थः ॥ ५६ ॥

वीतक्रोध इत्युक्तत्वान्न द्वेष्टीति पुनरुक्तिरित्यत आह—सर्वत्रेति । सकारणद्वेषवर्जितत्वमवो-

ग ॥ ततोऽर्वाचीनदशामाह—

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८

यदेन्द्रियाणीन्द्रियार्थान् स्प्रष्टुमुद्युक्तानि, तदैव कूर्मोऽङ्गानीवेन्द्रियार्थेभ्यस्सर्वशः प्रतिसंहृत्य मन आत्मन्यवस्थापयति, सोऽपि स्थितप्रज्ञः । एवं चतुर्विधा ज्ञाननिष्ठा पूर्वपूर्वा उत्तरोत्तरनिष्पाद्या ॥ ५८ ॥

इदानीं ज्ञाननिष्ठाया दुष्प्रापतां तत्प्राप्त्युपायं चाह—

ता॥अथ यतमानसंज्ञाख्या प्रथमा दशोच्यते इत्याह—ततोऽर्वाचीनदशेति । प्रसक्तप्रतिषेधार्थमाह—स्प्रष्टुमुद्युक्तानीति । तेन बाधकरोगादिप्रयुक्ताशक्तिसुषुप्त्यादिकृतनिवृत्तिव्यवच्छेदः । तदैवेति । भोगानन्तरनिवृत्तिव्युदासः । कूर्मोऽङ्गानीवेत्यनेनेन्द्रियाणां सङ्कल्पविशेषमात्र नियाम्यत्वमुच्यते । सर्वश इति । विलोकनभाषणविलासपरिहासादि निवृत्तिपरः ; विषयदोषदर्शनादिहेतुप्रकारपरो वा । प्रतिसंहृत्येत्यनेनेन्द्रियनिरोधस्यात्ममननाङ्गता दर्शिता । अत्र च ज्ञाननिष्ठावस्थाविशेषप्रकरणे सुषुप्त्यादिविलक्षणाव्यापारोपरतिमात्रत्वाध्यात्मगोचरमनोवस्थापनपर्यन्ता विवक्षितेत्याह—मनआत्मनीति । किमर्थमिदमवस्थाचतुष्टय विभज्योपदिश्यत इत्यत आह—एवमिति । प्रथम बाह्येन्द्रियाणि विषयेभ्यः प्रतिसंहृत्य मन आत्मनि व्यवस्थापयितुं यतेत ; इयं यतमानसंज्ञा । अथ बलात्संहृतान्यपि बाह्येन्द्रियाणि शाववशेषरागद्वेषादिदोषकलुषित मनः पुनःपुनस्तमरे प्रेरयेत् , स्वयं चात्मनि स्थातुं न शक्नुयात् ; अतः पक्वावशिष्टरागद्वेषादीनौदासीन्यानभिनन्दनादिक्रमेण पचेत् । इयं व्यतिरेकसंज्ञा । ततः पक्वेऽपि दोषदोषे अनादिविषयानुभवभावितवासनामात्रमात्मानमनुबुभूषन्तीं धेमुषीं प्रतिविभत्सेत् ; तत्र निरतिशयानन्दरूपमात्मानं पुरुषद्वेषिण्या योषित इव युवान प्रदर्श्यप्रदर्श्यक्रमादात्मनि तोषं समुत्पाद्य तेन तोषविशेषेण दवीयसा च स्मृतिविधुरेण कालेन बाह्यविषयवासनाजालमुन्मूलयितुमीहेत । सेयमेकेन्द्रियसंज्ञा । या पुनस्समस्तवासनाविलयादौत्सुक्यमात्रस्याप्यसम्भवेन परमवैराग्यदशा ; सा वशीकारसंज्ञा ज्ञाननिष्ठाकाष्ठा योगाख्यमात्मावलोकनं साधयति । तथावलोकन परम्परया निरतिशयपुरुषार्थभूतामृतत्वाय कल्पत इति दर्शित भवति । कामाना तथात्वेनादर्शनं तथा दृश्यमानेष्वपि निस्पृहता सङ्क्लेशेन भुज्यमानेष्वपि नातिस्नेहः प्रचुरेऽपि रागे तन्निरोधसंरम्भ इति चावस्थावैषम्यम् , आत्मरतित्वं तस्य स्वरूपम् , 'आश्चर्यवद्वदति' इति तस्य तदेकभाषण तदनुसन्धानरूप तदासनं तत्प्राप्त्यर्थप्रवृत्तिरूपं तस्य भजनं चेति प्रश्नचतुष्कोत्तरं सिद्धम् ॥ ५८ ॥

अथोत्तरप्रकरणं पूर्वेण पृथगर्थं प्रदर्श्य सङ्गमयन्नवतारयति—इदानीमिति । ज्ञाननिष्ठायाश्चतु-

प्र॰पा॥ १. तोषमुत्पाद्य. क. भ. ग. ड. ढ. पा.

शं॥किञ्च—यदा संहरते इति ॥ यदा संहरते सम्यक् उपसंहरते च अयं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मः अङ्गानि इव यथा कूर्मो भयात् स्वानि अङ्गानि उपसंहरति सर्वशः सर्वतः, एवं ज्ञाननिष्ठः इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वविषयेभ्यः उपसंहरते । तस्य प्रज्ञा प्रतिष्ठिता इति उक्तार्थं वाक्यम् ॥ ५८ ॥

तत्र विषयान् अनाहरतः आतुरस्यापि इन्द्रियाणि संह्रियन्ते, न तु तद्विषयो रागः।

जा॥न्यत इत्यर्थः ॥ ५७॥ ५८ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९

रा॥इन्द्रियाणामाहारा विषया , निराहारस्य विषयेभ्य प्रत्याहृतेन्द्रियस्य देहिनो विषया विनिवर्तमाना रसवर्जं विनिवर्तन्ते , रसो राग विषयरागो न निवर्तत इत्यर्थ ।

ता॥र्विधाया अपीति शेष । निराहारस्येत्यनेन भोजननिषेधभ्रमं व्युदस्यति—इन्द्रियाणामित्यादिना । 'नचैकान्तमनश्नत , युक्ताहारविहारस्य' इति हि वक्ष्यते । अन्यत्रापि 'अत्याशनादतीपानात्' इति श्रूयते । मोक्षधर्मे च 'दशैतानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये' इति । सर्वेन्द्रियविषयाणामाहारशब्देन ग्रहण दृष्टम् , नच प्रसिद्धाहारनिषेधमात्रादशेषविषयनिवृत्ति , तस्य रसविषयेन्द्रियविषयत्वादिति भाव । रसवर्जमित्येतावति वाक्यतात्पर्यमिति द्योतनाय विनिवर्तमाना इत्यनूदितम् । आत्मगोचररागव्यवच्छेदायाह —विषयरागइति । प्रस्तुता एव विषया परमितिनिर्देशम्यारधित्वमर्हन्तीति विषयेँ

प्र पा॥१ गा ६ १६ ॥ ३ भार शाति मोक्ष
२ तै नारायण १ अनु ३४॥ ४ विषयेभ्य परे भ व रे ग घ क ड पा॥

दी॥स कथ सहियते इति ? उच्यते—विषया इति ॥ यद्यपि विषया विषयोपलक्षितानि विषयशब्दवाच्यानि इन्द्रियाणि निराहारस्य अनाहियमाणविषयस्य काष्ठतपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिनो देहवत रसवर्जं रसो रागो विषयेषु य त वर्जयित्वा । रसशब्दो रागे प्रसिद्ध 'स्वरसेन प्रवृत्त , रसिक रसज्ञ ' इत्यादिदर्शनात् । सोऽपि

आ॥नचैतल्लक्षण ज्ञानमयत्नतो भवतीत्याहोत्तरश्लोकै । निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति, इतरविषयाकाङ्क्षाभावो वा, रसाकाङ्क्षादिर्न निवर्तते , स तु अपरोक्षज्ञानात्वेन निवर्तत इत्याह —विषया इति । 'इन्द्रियाणि जयन्त्याशु निराहारा मनी

ज॥'विषया विनिवर्तन्ते' इत्यादिश्लोकत्रयान्तेऽपि 'तस्य प्रज्ञा प्रतिष्ठिता' इत्युक्तत्वादिदमपि लक्षणविवरणमिति भ्रान्ति स्यात् , तन्निरासार्थमाह—नचेति। एतल्लक्षणं यस्माद्भवति तदेतल्लक्षणम् । अयत्नतोऽप्रयत्नत अनुत्तरा कन्येति यथा । यद्येतल्लक्षणकं ज्ञानम् , तर्हि सर्वोऽपि जन कस्मान्न तत्साधयति, कामाद्युपद्रवपरिहारार्थम् । किं दन्दह्यमानशिरा इव नश्यतीति । अतो नास्त्येवेद ज्ञानिषु लक्षणमित्याशङ्कापरिहारार्थमिति शेष । विनिवर्तन्त इत्यनुवर्तते शब्दस्याल्पप्रयत्नसाध्यत्वमर न प्रतीयत इत्याशङ्क्योपोद्घातप्रक्रिययेन्द्रियजयस्य तावन्महाप्रयत्नसाध्यत्वमात्रेण श्लोकेनोच्यत इति भावेन त व्याचष्टे—निराहारत्वेनेति । एतेन रसवर्जमित्यतदन्तस्य वाक्यस्यार्थ उक्त । एवशब्देन रसवर्जमित्येतद्व्याचष्टे । तथा हि—निराहारस्य देहिन तेन निराहारत्वेनेति यावत् विषया रूपादय तद्भोगसामर्थ्यानीन्द्रियाण्यनेनोपलक्ष्यन्ते । तानि विनिवर्तन्ते । रसवर्जं रसो राग त वर्जयित्वा, विषयाभिलाषश्चेतसि यो निराहारत्वेन न निवर्तत इति अस्यैवार्थान्तरमाह—इतरेति। आकाङ्क्षाशब्देन भोगशक्त्योऽपि लक्ष्यन्ते। रसवर्जमित्यस्यार्थो रसाकाङ्क्षादिरिति । ततश्चेय योजना—निराहारत्वेन रसादितरे विषया तद्भोगशक्त्य तदाकाङ्क्षाश्चेति यावत् विनिवर्तन्ते। रस वर्जयित्वा मनसो रसविषयाकाङ्क्षा रसनेन्द्रियस्य तद्भोगशक्तिश्च न निवर्तते —इति।रसोऽपीत्यस्यार्थमाह—सत्विति। आद्येऽर्थे स रस सर्वविषयविषयो राग । द्वितीये स रस तद्भोगशक्ति तदाकाङ्क्षा च। उक्तमर्थं श्लोकारूढ करोति—इत्याहेति । द्वितीयार्थे प्रमाणमाह—इन्द्रियाणीति । जयन्ति भोगशक्तिक्षयेण च रागक्षयेण च । असौ

गा॥रागोऽप्यात्मस्वरूपं विषयेभ्यः परं सुखतरं दृष्ट्वा निवर्तते ॥ ५९ ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६०

आत्मदर्शनेन विना विषयरागो न निवर्तते,अनिवृत्ते विषयरागे विपश्चितो यतमा-

ता॥येभ्य इत्युक्तम् । कारागदिकृतपरत्वमात्रस्यानुपयुक्तत्वाद्विषयरागनिवर्तनौपयिकं परशब्दार्थमाह—सुखतरमिति । विषया हि सुखरूपाः,आत्मस्वरूपं तु ततोऽप्यतिशयेन सुखरूपम्। अत्र 'दृष्ट्वा निवर्तते' इति दर्शनस्य रागकर्तृकतया निर्देश औपचारिकः । यद्वा दृष्ट्वा स्थितस्यास्य देहिनो रागो निवर्तत इत्यन्वयः । एवमात्मदर्शनेन विना विषयरागो न निवर्तत इत्युक्तम् ॥ ५९ ॥

अथानिवृत्ते विषयरागे दुर्जयानीन्द्रियाणीत्युच्यते—'यततः' इति श्लोकेन । विपश्चित्त्वं यतमानत्वे हेतुरिति द्योतनायोक्तं—विपश्चितो यतमानस्यापीति । अत्र विपश्चित्त्वं शास्त्रजन्यहेयोपादेयवि-

श॥रसो रञ्जनारूपः सूक्ष्मः अस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वा उपलभ्य'अहमेव तत्' इति वर्तमानस्य निवर्तते निर्बीजं विषयविज्ञानं संपद्यते इत्यर्थः । न असति सम्यग्दर्शने रसस्य उच्छेदः, तस्मात् सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यम् इत्यभिप्रायः ॥

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षता आदौ इन्द्रियाणि स्ववशे स्थापयितव्यानि । यस्मात्तदनवस्थापने दोषमाह—यतत इति ॥ यततः प्रयत्नं कुर्वतः हि यस्मात् अपि कौन्तेय पुरुषस्य विपश्चितः मेधाविनः 'अपि' इति व्यवहितेन संबन्धः । इन्द्रियाणि

आ॥विणः । वर्जयित्वा तु रसनमसौ रसे हि वर्धते' इति वचनाद्रागवते । रसशब्दस्य रागवाचित्वाच्च ॥ ५९ ॥

अपरोक्षज्ञानरहितज्ञानिनोऽपि साधारणयत्नवतोऽपि मनो हरन्तीन्द्रियाणि । पुरु-

ज॥रसना तु रसे विषये प्रकारद्वयेन च वर्धते । आद्यमर्थमुपपादयति—रसेति । उक्तं युक्तमित्युभयत्र शेषः । रसशब्दस्य रागवाचित्वम् उक्ताभिधानादवगन्तव्यम् । अचेतने चेतनवदुपचाराद्रसः परं दृष्ट्वा निवर्तते इति युक्तम् । अयमर्थसङ्ग्रहः—यदा बाह्येन्द्रियाणि विषयैः सन्निकृष्यन्ते, तदा तद्द्वारा मनस्तत्र प्रवर्तते, प्रवृत्ते च मनसि रागो भवति ; तत आत्मनः क्षोभः । एवम् इन्द्रियाणामविजयः । यो हि यं व्याकुलं करोति, स तेन जित इत्युच्यते । यदा तु बाह्येन्द्रियाणि विषयसन्निधानेऽपि न तैः सन्निकृष्यन्ते ; सन्निकृष्टान्यपि न मनस्तदाभिमुख्येनाहरन्ति ; आहृतेऽपि मनसि न विषयरागो जायते; तदा नात्मनः क्षोभो भवतीत्येष इन्द्रियजयः; सोऽयं सङ्ग्रहेण द्वेधा—बाह्येन्द्रियाणां शक्तिक्षयान्मनसो रागक्षयाच्च; एतत् द्वय च पुरुषभेदेनोक्तप्रकारद्वयेन निराहारत्वब्रह्मसाक्षात्काराभ्यां भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति ॥ ५९ ॥

ननु यत्नज्ञानाभ्यामिन्द्रियजयमुक्त्वा यततोऽपीति तद्विरुद्धं कथमुच्यत इति चेन्न, इन्द्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन प्रत्याहारादिना साधारणेन प्रयत्नेन तत्सम्भवात् । तथा किमपरोक्षज्ञानेन, नित्यानित्यविवेकज्ञानेनापि तदुपपत्तेरित्याशङ्क्य तन्निषेधोऽत्र क्रियत इत्याशयवान्व्याचष्टे—अपरोक्षेति । ज्ञानस्य प्राधान्यसूचनाय विपश्चितोऽपीत्येतत्पश्चादुक्तमपि अपरोक्षेत्यादौ व्याख्यातम् । यततोऽपीत्यस्यार्थः—साधारणेति। हरन्ति विषयसन्निकृष्टानि तदभिमुखं कृत्वा तद्रागीकुर्वन्तीत्यर्थः । पुरुषस्येति व्यर्थं स्त्रीणामप्येवंभावादित्यत आह—पुरुषस्येति । एतच्चोक्तोपपादनार्थम् । प्रमाथीनी-

रा॥नस्यापि पुरुषस्येन्द्रियाणि प्रमाथीनि बलवन्ति मनः प्रसह्य हरन्ति । एवमिन्द्रियजय आत्मदर्शनाधीनः, आत्मदर्शनमिन्द्रियजयाधीनमिति ज्ञाननिष्ठा दुष्प्रापा ॥ ६० ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१

अस्य सर्वस्य परिजिहीर्षया विषयानुरागयुक्ततया दुर्जयानीन्द्रियाणि संयम्य चेत-

ता॥नेश्वरम्। बलवता प्रमाथित्व हि 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इति स्मर्यते— इति ज्ञापनाय बलवन्तीत्युक्तम् । इन्द्रियाणां बलं च रागादिरेव । उक्तश्लोकद्वयतात्पर्यमिद्धमन्योन्याश्रयेण त त्फलमाह—एवमिति ॥ ६० ॥

तर्ह्यन्योन्याश्रयदूषितेऽर्थे साध्यसाधनभावः कथं पूर्वमुपदिष्ट इत्यत्रोच्यते— 'तानि सर्वाणि' इति । अस्येति । अन्योन्याश्रयादिदोषस्येत्यर्थः । संयम्येति । विषयस्पर्शनिवारणमात्रमत्रोच्यते, न त्विन्द्रियजयावस्था। 'मत्परः' इत्यत्र वक्तृविग्रहवैशिष्ट्यविवक्षया सिद्ध शुभाश्रयविग्रहविशेषणस्य चेतस इत्या

प्र पा॥'. मनु २. २१५, 'माता स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्' इति पूर्वो, विद्वांसं - शास्त्रनियमितात्मानमपि पुरुषम्, कर्षं विपरवश करोति त्यर्थ ॥

२ कथ तर्ह्यन्योन्याश्रयदूषितेऽर्थे साध्यसाधनभावः पूर्वमुपदिष्टः ग, घ, ङ, झ, पा ॥

शं॥प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्ति आकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनः ॥६०॥

यतः तस्मात्—तानि इति ॥ तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितस्सन् आसीत मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स

आ॥यस्य शरीराभिमानिनः । कं दोषस्ततः । प्रमाथीनि प्रमथनशीलानि पुरुषस्य ॥ ६० ॥

तर्ह्यशक्यान्येवेत्यत आह—तानीति । बहुयत्नतः शक्यानि । अतो यत्नं कुर्यादित्याशयः । युक्तो मयि मनोयोगयुक्तः । अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्परः ।

ज॥न्यस्य प्रयोजनं वक्तुमाह—को दोष इति। एतावताऽऽत्मनस्तदविजय कथमित्याशयः। मनो हृतवन्ति पुरुषस्य क्षोभणशीलानि न तेन विजितानीति भावः । पुरुषस्येत्यनेनोभयत्राप्यन्वयं दर्शयति ॥

उपोद्घातस्य साध्ये वक्तव्ये तानि सर्वाणीति किमुच्यत इत्यतोऽन्तरापतिता शङ्का निवर्तयितुमेतदिति भावेनाह—तर्हीति । यदि साधारणविवेकज्ञानाभ्यां न जीयन्ते इत्यर्थः । अशक्यान्येव जेतुमिति शेषः । निराहारस्य देहावस्थानासम्भवात् ब्रह्मापरोक्षज्ञानस्य चेन्द्रियजयसाध्यतयाऽभिप्रेतत्वेनेतरेतराश्रयप्रसङ्गादिति भावः । तथा च तज्जयस्य ज्ञानसाधनत्वं यद्विवक्षितं तन्न सम्भवतीति शङ्काशेषः । इन्द्रियसंयमोऽशक्य एवेति शङ्कायां तानि सर्वाणि संयम्यासीतेति किमितदुच्यत इत्यत आह—बहुयत्नेति । यत्न बहुमिति शेषः । यद्यपि तज्जये न परोक्षं साधनम् अस्मदुक्तं वा शक्यं, तथापि तत्प्रतिनिधिना महाप्रयत्नेन जय्यानीत्यर्थः । एतदप्युपोद्घातत्वेनैवोक्तमिति ज्ञातव्यम् । युक्त इति । नैतत् युजिरो रूपम्, येन प्रतिसम्बन्ध्याकाङ्क्षाया तदनुक्तिदोषः स्यात्; किन्तु समाध्यर्थस्य युजेरिति भावेनाह—युक्त इति । मत्पर इत्युत्तरत्र श्रवणान्मय्येवेत्युक्तम् । मत्पर इत्यद्वैतज्ञानम्; इत्यन्यैर्व्याख्यातम्। तत्राक्षरानुसारीत्याशयवान्व्याचष्टे—अहमेवेति । भगवानेव सर्वस्मादुत्कृष्ट इति ज्ञात्वा तस्मिन्नेव निरन्तरं मनसो योजनम् इन्द्रियजये परं साधनमिति भावः । निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्त-

रा॥सद्शुभाश्रयभूते मयि मनोऽवस्थाप्य समाहित आसीत, मनसि मद्विषये सति निर्दग्धाशेषकल्मषतया निर्मलीकृतं विषयानुरागरहितं मन इन्द्रियाणि स्ववशानि करोति, ततो वश्येन्द्रियं मन आत्मदर्शनाय प्रभवति ; यथोक्तं—*"यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्" इति ; तदाह—'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता' इति ॥ ६१ ॥

एवं मय्यनिवेश्य मनः स्वयत्नगौरवेणेन्द्रियजये प्रवृत्तो विनष्टो भवतीत्याह—

ध्यायतो विषयान्पुंसस्सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ ६२
क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३

ता॥दिना विवृतम्। शुभशब्देन हिरण्यगर्भादेः आश्रयशब्देन परिशुद्धात्मस्वरूपस्य च व्यवच्छेदः। युक्तशब्देनात्र विषयस्वभावालुकरं चित्तसमाधानं विवक्षितमित्याह—**समाहित** इति । 'मत्परः' इत्येतावता कथमन्योन्याश्रयादिपरिहार इत्यत्राह—**मनसीति** । अशेषशब्देनोपायविरोधिसर्वकर्मसङ्ग्रहः । निर्मलीकृतं रजस्तमोविरहितं तत एव हि शब्दादिविषयानुरागरहितम् । अत्र प्रज्ञाशब्दस्य ज्ञाननिष्ठाफलपर्यन्तत्वमात्मदर्शनशब्देनोक्तम् । शुभाश्रयानुसन्धानस्य कल्मषविनाशफलत्वे स्मृत्यन्तरसंवादमाह—**यथे**ति । आत्मदर्शनमन्तरेणैवेन्द्रियजयसिद्धेर्नान्योन्याश्रयः । अतः पूर्वोक्तसाध्यसाधनभावोपपत्तिरित्युत्तरार्धेनोच्यत इत्याह—**तदाहेति** ॥ ६१ ॥

उक्तान्योन्याश्रयणफलभूताया इन्द्रियजयात्मदर्शनयोरसिद्धेः प्रकारः श्लोकद्वयेन प्रपञ्च्यत इत्याह—**एवमिति**। अदृष्टात्मस्वरूपस्य विषयान् ध्यायत इत्यनुवादसिद्धां विषयेषु स्वरसवाहितां सहेतुकमाह—

प्र-पा॥*वि.पु. ६. ७ ७४; गारुडपुराणे, पूर्वो. २२२-१६, कक्षम् - शुष्कतृणम् ॥

शं॥मत्परः, 'न अन्योऽहं तस्मात्' इति आसीत इत्यर्थः । एवम् आसीनस्य यतेः वशे हि यस्य इन्द्रियाणि वर्तन्ते अभ्यासवशात् तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

अथेदानीं पराभविष्यतः सर्वानर्थमूलम् इदम् उच्यते—ध्यायत इति ॥ ध्यायतः

आ॥फलमाह—वशेहीति ॥ ६१ ॥

रागादिदोषकारणमाह परिहाराय श्लोकद्वयेन । संमोहः अधर्मेच्छा । तथा हि

आ॥मिति मन्तव्यम् । यदर्थमनुगोद्धात उक्तः, तत्सदर्शनपरतयोत्तरार्धतात्पर्यमाह—फलमिति । यद्येवं ततः किमित्याशङ्कायाम् इन्द्रियजयस्य ज्ञानं फलमाहेत्यर्थः; यत एवं ज्ञानं महायाससाध्येन्द्रियजयफलम्, अत एवायामभीरुर्जनो तत्साधयति, न तु ज्ञानस्योक्तलक्षणत्वाभावादिति श्लोकत्रयतात्पर्यार्थः ॥ ६१ ॥

ध्यायत इत्यादिना प्रकृतानुपयुक्तं किमेतदुच्यत इत्यत आह—**रागादीति** । रागादिदोषस्य कारणं रागादिदोषकारणम्। तथा रागादिदोषः कारणं यस्य तद्रागादिदोषकारणं परिहाराय रागादिदोषस्य; इदमुक्तं भवति—मत्परो युक्त आसीतेतीन्द्रियजयस्य परमसाधनमुक्तम् । रागद्वेषपरिहारोऽप्यपरं साधनमिति वक्ष्यति । तत्र स एव कथं स्यादित्याशङ्कायाम् उपोद्घातप्रक्रिययेदमुच्यते—इति । संमोहो मूर्च्छाऽत्र समाच्छत इत्यतोऽन्यथा व्याचष्टे—**संमोह** इति । अकार्येच्छा अधर्मेच्छा । कुत

रा॥अनिरस्तविषयानुरागस्य हि सम्यनिवेशितमनस इन्द्रियाणि सयम्यावस्थितस्याप्यनादि-पापवासनया विषयध्यानमवर्जनीयं स्यात्।ध्यायतो विषयान् पुंसः पुनरपि सङ्गोऽतिप्रवृद्धो जायते। सङ्गात्संजायते कामः। कामो नाम सङ्गस्य विपाकदशा। पुरुषो यां दशामापन्नो विषयानभुक्त्वा स्थातुं न शक्नोति स कामः। कामात्क्रोधोऽभिजायते—कामे वर्तमाने विषये चासंनिहिते संनिहितान् पुरुषान् प्रत्येभिरस्मदिष्टं विहतमिति क्रोधो भवति। क्रोधाद्भवति सम्मोहः—सम्मोहः कृत्याकृत्यविवेकशून्यता,तया सर्वं करोति। ततश्च

ता॥अनिरस्तेति। अत्र सयम्येति निमीलनादिमात्रकृत निवारणमुच्यते। उपजायत इत्यत्रोपसर्गाभिप्रेतं निविच्य दर्शयति—अतिप्रवृद्धो जायत इति। सङ्गकामयोरभेदात्कार्यकारणभावानुपपत्तिरित्यत आह—कामो नामेति। विपाकदशाशब्देन सामान्यत उक्तेऽपि व्यावृत्ताकारप्रतिपत्तिर्न स्यादिति तल्लक्षणमाह—पुरुष इति। सर्वदा कामस्य क्रोधहेतुत्वं नास्तीत्यत उक्तं—विषये चासंनिहित इति। न केवलं कामप्रतिबन्धकानेव पुरुषान् प्रति क्रोधः, अपि तु कृत्याकृत्यविवेकान्धतया तस्यां दशायामुपलभ्यमानान् सर्वान् प्रत्यपीति द्योतनाय संनिहितानित्युक्तम्। ईश्वरोऽपि क्रोधवेगमभिनयन् कस्मिंश्चिदेव रक्षसि द्रुह्यति 'सदेवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम्' इत्याह। अथ चाभिजायत इत्यत्रोपसर्गाभिप्रेतार्थः, अभितो जायत इत्यर्थः। समित्येकीकारे, ततोऽत्र सम्मोहः कृत्याकृत्याविवेकात्मा मोह इत्यभिप्रायेणाह—कृत्येति। सम्मोहस्य स्मृतिभ्रंशहेतुत्वेऽवान्तरव्यापारमाह—तयेति। 'क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि' इत्याद्यनुसारेणोक्तम्—सर्वमिति। ततश्चेति। सावान्तरव्यापा-

प्र पा॥१. अस्संनिहितान् ग. पा॥

२ ईश्वरोऽपि हि क. ग. ङ. झ. पा॥

३ श्रीरामायणे आरण्यका ६४ स ७६ श्लो 'पुरेव मे चारुदतीमनिन्दितां दिशन्ति सीतां यदि नाद्य मैथिलीम्' इति पूर्वो॥ अस्यार्थः—पुरेव म चारुदतीं मायामृग प्रतिगमनात् पूर्वं कान्ति मा प्रात इम मृग गृहाण्या मद्धन्दहीति हर्षेण यत् स्मित कृतवती ता तन मद्वेव न्दार्शा त चेत् अनिन्दितान्ताम नद्या जगदुपसहार करिष्यामि यदपि इद निन्दित मिति लोकोऽपि वक्ष्यन्तीति भाव। 'यदि राम समुद्रान्ताम्' इति वक्ष्यत। सदेवेति - सर्वलोकस्य सम्भूतमरणमेव करिष्यामःति भाव। परिवर्तयामि नाशयामि। अन्यथा करिष्यामीति वा॥

४ महाभारते आरण्य॥

श॥चिन्तयत विषयान् शब्दादीन् विषयविशेषान् आलोचयतः पुंसः पुरुषस्य सङ्गः आसक्तिः प्रीतिः तेषु विषयेषु उपजायते उत्पद्यते। सङ्गात् प्रीतेः संजायते समुत्पद्यते कामः तृष्णा। तस्मात् कामात् कुतश्चित् प्रतिहतात् क्रोधः अभिजायते॥ ६२॥

क्रोधात् भवति संमोहः अविवेकः कार्याकार्यविषयः। क्रुद्धो हि संमूढस्सन् गुरुमपि आक्रोशति। सम्मोहात् स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्यात् विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिः। ततः स्मृतिभ्रंशात्

आ॥मोहशब्दार्थ उक्त उपगीतासु। 'मोहसाक्षितम्। अधर्मलक्षणं चैव नियतं पापकर्मसु' इति, तथाचान्यत्र 'संमोहोऽधर्मकामिता' इति। स्मृतिविभ्रमः प्रतिषेधादिस्मृतिनाशः।

आ॥इत्यत आह—तथाहीति। सशब्दस्तु तस्यैव विशेषक इति भावः। अदृष्टरूपाधर्मविषय तद्धेतुषु पापकर्मसु च नियत कामन मोहमशितमित्यर्थः। स्पष्ट चात्र प्रमाणमाह—तथाचेति। यत्किंचिद्विषयस्य स्मृतिविभ्रमस्य प्रकृतानुपयोगात्सम्यग्व्याचष्टे—स्मृतिविभ्रम इति। विभ्रमोऽनवस्थानं नाश

रा॥प्रसन्नचेतसः आत्मावलोकनविरोधिदोषरहितमनसः तदानीमेव हि विविक्तात्मविषया बुद्धिः पर्यवतिष्ठते । अतो मनःप्रसादे सर्वदुःखानां हानिर्भवत्येव ॥ ६५ ॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६

मयि सन्न्यस्तमनोरहितस्य स्वयत्नेनेन्द्रियनियमने प्रवृत्तस्य कदाचिदपि विविक्तात्म-

ता॥ति। 'दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः' इत्याद्यभिप्रेतौपाधिकत्वेन हानियोग्यत्वार्थमाह—प्रकृतीति । प्रतिबन्धकाभावे ह्याशु कार्योत्पत्तिरित्यभिप्रायेण प्रसन्नचेतस इत्यस्यार्थमाह — आत्मावलोकनविरोधिदोषरहितस्येति । मनःप्रसादस्य सर्वदुःखहानिहेतुत्वमात्मदर्शनहेतुत्वादुपपद्यत इति हेत्वर्थस्य हिशब्दस्यार्थमाह—अत इति ॥ ६५ ॥

अथ पूर्वोक्तान्योन्याश्रयफलभूतामात्मदर्शनासिद्धिं 'बुद्धिनाशात्प्रणश्यति' इत्येतद्विवरणरूपेणानूद्य ततः परमप्रयोजनस्याप्यलाभप्रकार उच्यते—नास्तीति। 'युक्त आसीत मत्परः' इति पूर्वोक्तस्य निवृत्तिरयुक्तशब्देनोच्यत इति तात्पर्येणाह—मयीति। यततो ह्यपीति पूर्वोक्तं स्मारयति — स्वयत्नेनेति। नास्तीत्यनेनाभिप्रेतमाह — कदाचिदपीत्यादिना । अतिचिरकालप्रयासेनापीत्यर्थः । द्वितीयपादस्थमयुक्तस्येति

प्र-पा॥ १. वि पु. ६ ७. २२, 'निर्वाणमय एवाऽयमात्मा ज्ञानमयोऽमलः' इति॥ २ गी. २. ६१ ॥

शा॥न्तःकरणस्य हि यस्मात् आशु शीघ्रं बुद्धिः पर्यवतिष्ठते आकाशमिव परि समन्तात् अवतिष्ठते, आत्मस्वरूपेणैव निश्चलीभवति इत्यर्थः ॥

एवं प्रसन्नचेतसः अवस्थितबुद्धेः कृतकृत्यता यतः, तस्मात् रागद्वेषवियुक्तैः इन्द्रियैः शास्त्राविरुद्धेषु अवर्जनीयेषु युक्तः समाचरेत् इति वाक्यार्थः ॥ ६५ ॥

सा इयं प्रसन्नता स्तूयते—नास्ति इति ॥ नास्ति न विद्यते न भवति इत्यर्थः, बुद्धिः आत्मस्वरूपविषया अयुक्तस्य असमाहितस्य । न च अयुक्तस्य भावना आत्मज्ञानाभिनि-

आ॥परोक्ष्येण सम्यक् स्थितिं करोति । प्रसादो नाम स्वतः प्रायो विषयागतिः ॥ ६५ ॥

प्रसादाभावे दोषमाहोत्तराभ्यां श्लोकाभ्याम्—नहि प्रसादाभावे युक्तिश्चित्त-

ज्ञा॥तत्त्वोक्तम्।सर्वदुःखहानिश्चानन्तरस्यैवोक्तेति चाक्षेपशेषः। एतत्परिहारत्वेनोत्तरार्धं व्याख्याति—प्रसन्नेति । एतेन प्रसादस्य फलद्वयमुच्यत इत्यपि प्रतीतिर्निरस्ता भवति । प्रसादे सति ब्रह्मापरोक्षज्ञानं भवति। तच्च व्यवधानेनेति भविष्यति। ततो भवति सर्वदुःखहानिः प्रसादफलतयोक्तेति न वक्तव्यानुक्तिः; नाप्यवक्तव्योक्तिः। 'बुद्धियुक्तः' इति श्लोके सुकृतदुष्कृतहान ज्ञानफलमित्युक्तम्, तदयुक्तम्, अपुरुषार्थत्वादित्याशङ्का परिहर्तुं प्रसङ्गादिदमुक्तमिति । ननु यस्यानायासेनाभिलषितविषयोपनतिस्तस्य मनोऽव्याकुलं प्रसन्नमित्युच्यते । ततः कथं प्रसादस्येन्द्रियजयफलत्वं ज्ञानसाधनत्वं चोच्यत इत्यत आह—प्रसाद इति । अत्र विवक्षितेति शेषः । स्वतोऽपि प्रयत्नं विनाऽपि। विषयागतिर्विषयान्प्रत्यप्रवृत्तिः॥

वक्तव्यस्योक्तत्वान्नास्ति बुद्धिरित्यादिकं किमर्थमित्यत आह—प्रसादेति । श्रवणमननाभ्यामुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानसिद्धेः किमनेन प्रसादेन, यदर्थमिन्द्रियजयोऽपेक्षित इत्याशङ्क्येति शेषः । नन्वत्र प्रसादाभावे इदं स्यादिति नोच्यते, ततः कथमेतदुक्तमित्यतः प्रकरणप्राप्तमध्याहरति—नहीति। ननु प्रसादरहिता अनुमिमते इत्यत आह—चित्तेति । एकाग्रतेत्यर्थः । एवमध्याहारे सति नास्ति बुद्धिरित्येतत्संबध्यत इति भावेनाह—अयुक्तस्येति । ज्ञानमात्रं प्रकृतानुपयुक्तमयुक्तं चेत्यत आह—

रा॥विषया बुद्धिर्न सेत्स्यति। अतएव तस्य तद्भावना च न सम्भवति। विविक्तात्मानमभावयतो विषयस्पृहाशान्तिर्न भवति । अशान्तस्य विषयस्पृहायुक्तस्य कुतो नित्यनिरतिशयसुखप्राप्तिः ॥ ६६ ॥

पुनरप्युक्तेन प्रकारेणेन्द्रियनियमनमकुर्वतोऽनर्थमाह—

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥** ६७

इन्द्रियाणां विषयेषु चरतां वर्तमानानां वर्तनमनु यन्मनो विधीयते पुरुषेणानुवर्त्यते;

---

न॥तद् शङ्कलोचित्यायायुक्तत्वफलभूतमुक्त्यभावलभ्यमिति तात्पर्येणाह — अतएवेति । यद्वा तस्येत्ययुक्तपरामर्शः, अत एवेति नु बुद्ध्यभावादेवेत्यर्थः। अथवा परम्परया हेतुत्वमभिप्रेत्यायुक्तत्वादेवेति निरधाः; भिन्नविषयभावनान्तरनिषेधायोगात्तद्भावनेत्युक्तम् । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' 'रागद्वेषवियुक्तैः' 'सुखेषु विगतस्पृहः' इत्याद्यानुगुण्येन शान्तिं विशिनष्टि—विषयस्पृहा शान्तिरिति। अशान्तस्यैव स्वर्गादिसुखस्याभावदमृतत्वप्रकरणसिद्धं सुखस्य विशेषमाह— नित्यनिरतिशयेति ॥ ६६ ॥

अनेन श्लोकेन प्रत्याहारादियोगाङ्गचतुष्टयस्य तत्फलस्य निःश्रेयसस्य च यथासम्भवमभिधातात्पर्याभ्यां पूर्वपूर्वाभावादुत्तरोत्तरस्यालाभस्सूचितो भवति। अथेन्द्रियनिग्रहाभावे बुद्ध्यभावस्य पूर्वोक्तस्य प्रकारः 'इन्द्रियाणाम्' इत्यनन्तरश्लोकेनोच्यत इत्यपुनरुक्तिः; आदरार्थं वा पुनरुक्तिरित्यभिप्रायेणाह—पुनरपीति। नेत्रस्पन्दादिमात्रव्युदासाय विषयेष्वित्युक्तम्। इन्द्रियाणां सर्वेषां न विषयेषु सञ्चारोऽस्ति,

---

प्र-पा॥ १ गा. २ ५९॥    २ गी २-६४॥    ३. गा २-५६॥

---

दा॥वेशः, तथा न च अभावयतः आत्मज्ञानाभिनिवेशम् अकुर्वतः शान्तिः उपशमः। अशान्तस्य कुतः सुखम्? इन्द्रियाणां हि विषयसेवातृष्णातः निवृत्तिः सुखम्, न विषयविषया तृष्णा। दुःखमेव हि सा। न तृष्णायां सत्यां सुखस्य गन्धमात्रमपि उपपद्यते इत्यर्थः॥

अयुक्तस्य कस्मात् बुद्धिः नास्ति इति, उच्यते—इन्द्रियाणाम् इति॥ इन्द्रियाणां हि यस्मात् चरतां स्वविषयेषु प्रवर्तमानानां यत् मनः अनुविधीयते अनुप्रवर्तते तत् इन्द्रिय-

---

आ ॥ निरोधः । अयुक्तस्य च बुद्धिः सम्यग्ज्ञानं च नास्ति । तदेवोपपादयति—न चायुक्तस्येति । शान्तिर्मुक्तिः 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानात् ॥ ६६ ॥

कथमयुक्तस्य भावना न भवति? आह—इन्द्रियाणामिति । अनुविधीयते क्रियते

---

ज॥सम्यगिति । ब्रह्मापरोक्षज्ञानमित्यर्थः । एतावता प्रमादाभावे दोष उक्तस्तत्किमर्थं नचायुक्तस्येत्येतदित्यत आह—तदेवेति। ध्यानेनैव ज्ञानोत्पादात्कथं 'नास्ति बुद्धिरयुक्तस्य' इत्याशङ्क्येति शेषः। भावना ध्यानम् । अत एव 'न चाभावयतो ज्ञानम्' 'न चाज्ञानिनः शान्तिः' इति योज्यम्। ननु शान्तिः प्रसादः तस्य ज्ञानसाधनत्वेनोक्तत्वात्कथं ज्ञानोत्तरत्वमुच्यत इत्यत आह—शान्तिरिति । एतच्च न केवलं मुक्तौ सर्वदुःखहानिः, किं तु संसारिभिरलभ्यं परमं सुखं चेति ज्ञापयितुं प्रसङ्गादुक्तम् । एतदेवापेक्ष्य भाष्यकृता ब्रह्मादिपदादित्याद्युक्तम् ॥ ६६ ॥

एकेनैव श्लोकेन प्रमेयस्य समुदितत्वात् श्लोकाभ्यामिति किमर्थमुक्तम्, अत आह—कथमिति । कृतश्रवणमननस्य ध्यानोपपत्तेरिति भावः। न भवतीत्याशङ्क्येति शेषः । अनुविधानं सदृशभवनं तदत्रासङ्गतं कर्ता चात्र जीव इति प्रतीयतेऽत आह—अनुविधीयत इति । विपूर्वो दधातिः करोत्यर्थे वर्तते । कर्ता चात्रेश्वर एवेत्यर्थः । अत्रानुः पश्चाद्भावित्वार्थो न लक्षणाद्यर्थ इति कर्मप्रवचनीयो न

रा॥तन्मनोऽस्य विविक्तात्मप्रवणां प्रज्ञां हरति विषयप्रवणां करोतीत्यर्थः; यथाम्भसि नीयमानां नावं प्रतिकूलो वायुः प्रसह्य हरति ॥ ६७ ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८

तस्मादुक्तेन प्रकारेण शुभाश्रये मयि निविष्टमनसो यस्येन्द्रियाणीन्द्रियार्थेभ्यस्स-

ता॥अतत्सदौन्मुख्यमर्थं इति व्यञ्जनाय'इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते'इति प्रयोगान्तरानुसारेण वर्तमानानामित्युक्तम्।यत्तच्छब्दयोर्मनोविषयत्वमेवोचितं प्रज्ञाहरणे तस्यैव प्रधानत्वात्;मनसो बाह्येन्द्रियानुविधाने सर्वेन्द्रियसाधारण्येन वक्तव्ये यदिति निर्धारणस्य प्रयोजनाभावात् बाह्येन्द्रियस्य मनोनुविधाने प्रज्ञाहरणाभावाच्च । 'यद्येकं क्षरतीन्द्रियम्' इति मनुवचने तु मनसोऽनुक्तत्वादिन्द्रियशब्दाभ्यासादेकशब्दबलाच्च निर्धारणार्थतैव। न च तत्तुल्यत्वमस्यापि वाक्यस्य निर्बन्धनीयमिति कृत्वा वर्तनमनु यन्मन इत्याद्युक्तम्। विधीयते इत्यस्य कर्मापेक्षां पूरयति—पुरुषेणेति। स्वस्यैवायमनय इति भावः । अनभिमतहितदेशप्रापणं हि दृष्टान्तेऽभिप्रेतमिति प्रदर्शयन् हरतेर्विनाशनार्थताभ्रमव्युदासाय चाह—विषयप्रवणामिति । अम्भसीत्यस्य हरतिनान्वयभ्रान्तिमपाकरोति—अम्भसि नीयमानामिति। अनिष्टविषयप्रापणनिदर्शनत्वायोक्तं —प्रतिकूल इति ॥ ६७ ॥

'यदा संहरते' इत्याद्युपक्रान्त इन्द्रियनिग्रहोपदेश उपसंह्रियते—तस्मादिति श्लोकेन । तस्मा-

प्र-पा॥ १. गी. ५-४९॥

२. मनु. २-९९. 'इन्द्रियाणान्तु सर्वेषां यद्येकं क्षरतीन्द्रियम्। तेनाऽस्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्' अस्यार्थः - सर्वेषामिन्द्रियाणाम्मध्ये एकमपीन्द्रियं विषयप्रवणं यदि भवति,ततोऽस्य-विषयपरस्य इन्द्रियान्तरैरपि तत्त्वज्ञानं क्षरति, न व्यवतिष्ठते; चर्मनिर्मितोदकपात्रादिव एकेनापि छिद्रेण सर्वस्थानस्थमेवोदकं न व्यवतिष्ठते इति ॥

३. स्वस्यैवायमविनय इति. क.ख.ग.घ. ङ. पा ॥

४. हरतेर्विनाशार्थता. क. ख. ग. घ. ङ. ॥

शं॥विषयविकल्पनेन प्रवृत्तं मनः अस्य यतेः हरति प्रज्ञाम् आत्मानात्मविवेकजां नाशयति । कथं ; वायुः नावमिव अम्भसि उदके जिगमिषतां सांयात्रिकाणां मार्गात् उद्धृत्य उन्मार्गे यथा वायुः नावं प्रवर्तयति एवम् आत्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति॥६७॥

'यततो हि'इत्युपन्यस्तस्य अर्थस्य अनेकधा उपपत्तिम् उक्त्वा तं च अर्थम् उपपाद्य उपसंहरति—तस्मात् इति ॥ इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात् तस्मात्

आ॥नन्वीश्वरेणेन्द्रियाणामनु बुद्धिर्ज्ञानमिति वक्ष्यमाणत्वात् । प्रज्ञां ज्ञानम्। उत्पन्स्यदपि निवारयतीत्यर्थः । उत्पन्नस्याप्यभिभवो भवति ॥ ६७ ॥

तस्मात्सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानीति निगमयति—तस्मादिति ॥ ६८ ॥

ज्ञा॥भवति। नन्विति संप्रतिपत्तिमुक्त्वा सा नुत इत्यत आह—बुद्धिरिति। ग्रहणशक्तिः प्रज्ञा ।तद्ग्रहणमज्ञामुक्तमित्यत आह—प्रज्ञामिति । परोक्षनिश्चयम् । यस्य प्रज्ञान नोत्पन्नं तस्य युक्त्यभावः किं करिष्यति ; विद्यमानस्य हि हरणमत आह—उत्पत्स्यदिति । तर्ह्युत्पन्नपरोक्षज्ञानस्य युक्त्यभावोऽकिंचित्कर इत्यत आह—उत्पन्नस्यापीति । चित्तनिरोधरहितश्रवणमनने अपि न ध्यानोपयोगिनौ तत्त्वनिश्चयवेदार्थनियमौ कुरुत इति भावः ॥ ६७ ॥

अत्र परमं प्रमेयं ज्ञानिलक्षणं प्रकृतं तत्प्रारंभवपरिहाराय ज्ञानस्य महाप्रयत्नसाध्येन्द्रियनिग्रहसाध्यत्वं च,तत्र कस्यायमुपसंहार इति न ज्ञायतेऽत आह—तस्मादिति । ज्ञानी जायत इति शेषः ।

रा॥ येशो निगृहीतानि, तस्यैवात्मनि प्रज्ञा प्रतिष्ठिता भवति ॥ ६८ ॥

एवं नियतेन्द्रियस्य प्रसन्नमनसस्सिद्धिमाह—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९

या आत्मविषया बुद्धिः सर्वभूतानां निशा—निशेवाप्रकाशा, तस्यामात्मविषयायां

ता ॥ दिति इन्द्रियानुविधायिनो मनसः प्रज्ञाप्रतिष्ठानिरोधित्वादित्यर्थः। निग्रहहेतुं प्रागुक्तमनुकर्षति—उक्तेनेत्यादिना ॥ ६८ ॥

एवमुपायमुपदिश्य फलमुपदिशतीत्याह—एवमिति। प्रागुक्तस्यैव फलस्य प्रशंसापरत्वादपुनरुक्तिः, अतो 'या निशा' इत्यादिभिः त्रिभिः श्लोकैः 'प्रजहाति' इत्यादिनोक्तावस्थाचतुष्टयसिद्धिः निगम्यते। 'विहाय कामान्, निःस्पृहः' इत्युभाभ्यां यतमानव्यतिरेकसंज्ञयोरुपलक्षणम्। यद्वा श्लोकद्वयेनावस्थाचतुष्टयफलं तृतीयेन त्ववस्थाचतुष्टयं निगम्यत इति विभागः । 'या' इति प्रसिद्धतया निर्देशोऽत्र प्रस्तुतप्रज्ञाविषयः । साक्षान्निशाया देशकालभेदेन विपरिवर्तमानायाः सर्वभूतसाधारण्याभावादिति तात्पर्येणाह—या आत्मविषयेति । उपचारनिमित्तं व्यनक्ति—निशेवाप्रकाशेति । स्वप्रकाशाया अपि बुद्धेरप्रसृतदशायामप्रकाशत्वमुपपद्यते । इन्द्रियनिग्रहस्य प्रकृतत्वात्स एवात्र संयमिशब्दार्थ इत्यभिप्रायेणोक्तम्—

शं॥यस्य यतेः हे महाबाहो निगृहीतानि सर्वशः सर्वप्रकारैः मानसादिभेदैः इन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

योऽयं लौकिको वैदिकश्च व्यवहारः स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य अविद्याकार्यत्वात् अविद्यानिवृत्तौ निवर्तते, अविद्यायाश्च विद्याविरोधात् निवृत्तिः, इत्येतम् अर्थं स्फुटीकुर्वन् आह—या निशा इति॥ या निशा रात्रिः सर्वपदार्थानाम् अविवेककरी तमस्स्वभावत्वात् सर्वभूतानां सर्वेषां भूतानाम् । किं तत् ? परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः।यथा नक्तंचराणाम् अहरेव सत् अन्येषां निशा भवति,तद्वत् नक्तंचरस्थानीयानाम् अज्ञानिनां सर्वभूतानां निशा इव निशा परमार्थतत्त्वम् अगोचरत्वात् अतद्बुद्धीनाम् । तस्यां परमार्थतत्त्वलक्षणायाम् अज्ञाननिद्रायाः प्रबुद्धो जागर्ति संयमी संयमवान्,जितेन्द्रियो योगीत्यर्थः। यस्यां ग्राह्यग्राहकलक्षणायाम् अविद्यानिशायां प्रसुप्तानि एव भूतानि जा-

आ॥उक्तं लक्षणं पिण्डीकृत्याह—यानिशेति॥ या सर्वभूतानां निशा परमेश्वरस्वरूपलक्षणा । यस्यां सुप्तानीव न किंचिज्जानन्ति तस्यामिन्द्रियसंयुक्तो ज्ञानी जागर्ति सम्यगपरोक्ष्येण पश्यति परमात्मानमित्यर्थः; यस्यां विषयलक्षणायां भूतानि जाग्रति,तस्यां निशायामिव सुप्तः प्रायो न जानाति । मत्तादिवद्भ्रमनादिप्रवृत्तिः, तदुक्तम् 'देहं तु सम

ज ॥ यत एवं निगृहीतेन्द्रियस्यैव प्रसादः, प्रसादवत एव युक्तिः, युक्तिमत एव श्रवणमननाभ्यां तत्त्वज्ञानम्, तत्त्वज्ञानवत एवापरोक्षज्ञानसाधनं ध्यानम्, नान्यथा, तस्मादित्यर्थः ॥ ६८ ॥

ज्ञानिनः सर्वकर्मत्यागप्रतिपादनार्थोऽयं 'या निशा' इत्ययं श्लोक इति कश्चित्।तन्न तत्प्रतिपादकाक्षराश्रवणात्प्रमाणविरोधाच्चेत्याशयेन तत्प्रतिपाद्यमाह—उक्तंलक्षणमिति । चतुःश्लोक्या विविच्योक्तम् । नन्वत्रोक्तं किमपि न प्रतीयत इत्यत आह—येति । परमेश्वरस्वरूपस्य निशासाम्यमुपपादयति—यस्यामिति । विषयत्वमधिकरणत्वं चाविवक्षित्वा कारकत्वमात्रविवक्षया साम्यमिदमुक्तम् । संयमीत्यस्याक्षरार्थं इन्द्रियेति; प्रकरणलभ्योऽर्थो ज्ञानीति। उत्तरार्धार्थमाह—यस्यामिति। अत्रापि पूर्ववत्साम्यम् ।

रा॥बुद्धौ इन्द्रियसंयमी प्रसन्नमनाः जागर्ति—आत्मानमवलोकयन्नास्ते इत्यर्थः; यस्यां शब्दादिविषयायां बुद्धौ सर्वाणि भूतानि जाग्रति—प्रबुद्धानि भवन्ति; सा शब्दादिविषया बुद्धिरात्मानं पश्यतो मुनेर्निशेवाप्रकाशा भवति ॥ ६९ ॥

ता॥इन्द्रियसंयमीति । या पुनः 'त्रयमेकत्र संयमः' इति धारणाध्यानसमाधीनां समुचितानां संयमत्वेन पातञ्जलपरिभाषा, साऽत्र न विवक्षितेति भावः । इन्द्रियसंयमस्य बुद्धिजनने अवान्तरव्यापारं पूर्वोक्तमाह—प्रसन्नमना इति । जागर्तीत्यत्र मुख्यार्थायोगादाह—आत्मानमिति । बुद्धौ जागरणशब्दनिर्दिष्टं प्रबुद्धत्वं प्रकाशमानप्रभूतबुद्धिविशिष्टत्वमेव; सा च सविषया प्रकाशते—इति भावः । बुद्धिप्रकरणत्वात्तस्यामिति निर्देशोऽपि बुद्धिविषयः; सा च बुद्धिः भूतानीत्यसंयमिनिष्ठतया व्यपदेशादात्मदर्शिनो निशात्ववचनाच्च शब्दादिविषयेत्युक्तम् । सर्वभूतानामित्यत्र समासनिमग्नोऽपि सर्वशब्दो भूतानीत्यत्रापि बुद्ध्या निष्कृष्यान्वेतव्य इति सर्वाणीत्युक्तम् । पश्यत इत्यत्र कर्माकाङ्क्षायाम् आत्मानमिति प्रकरणसिद्धमुक्तम् ॥ ६९ ॥

प्र-पा॥१ पातञ्जलयोगानुशासनपरिभाषा.

शा॥प्रति इति उच्यन्ते यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः सा निशा अविद्यारूपत्वात् परमार्थतत्त्वं पश्यतः मुनेः इति॥ अतः कर्माणि अविद्यावस्थायाम् एव चोद्यन्ते, न विद्यावस्थायाम्।विद्यायां हि सत्याम् उदिते सवितरि शार्वरम् इव तमः प्रणाशम् उपगच्छति अविद्या । प्राक् विद्योत्पत्तेः अविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा च सती सर्वकर्महेतुत्वं प्रतिपद्यते न अप्रमाणबुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः, 'प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म' इति हि कर्मणि कर्ता प्रवर्तते 'न अविद्यामात्रम् इदं सर्वं निशा इव'' इति । यस्य तु पुनः 'निशा इव अविद्यामात्रम् इदं सर्वं भेदजातम्' इति ज्ञानं तस्य आत्मज्ञस्य सर्वकर्मसंन्यासे एव अधिकारो न प्रवृत्तौ। तथा दर्शयिष्यति—'तद्बुद्धयस्तदात्मानः' इत्यादिना ज्ञाननिष्ठायाम् एव तस्य अधिकारम् । तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्तेः अनुपपत्तिः इति चेत्—न, स्वात्मविषयत्वात् आत्मविज्ञानस्य । न हि आत्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षा, आत्मत्वादेव । तदन्तत्वात् च सर्वप्रमाणानां प्रमाणत्वस्य । न हि आत्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति । प्रमातृत्वं हि आत्मनः निवर्तयति अन्त्यं प्रमाणं निवर्तयदेव च अप्रमाणीभवति, स्वप्नकालप्रमाणमिव प्रबोधे । लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य । तस्मात् न आत्मविदः कर्मणि अधिकार इति सिद्धम् ॥६९॥

आ॥चरमम्' 'देहोऽपि दैववशगः' इति श्लोकाभ्याम्। मननयुक्तो मुनिः । पश्यत इत्यस्य साधनमाह ॥ ६९ ॥

ज ॥ यदि न किंचित्पश्यति, कथं तर्हि तस्य गमनादिप्रवृत्तिरित्यत आह—मत्तादिवदिति । कुत एतदित्यत आह—तदुक्तमिति । मुनेरित्युक्तत्वाच्चतुर्थाश्रमिण एव ज्ञानमिति व्याख्यानमसदिति भावेनाह—मननयुक्त इति । याज्ञवल्क्यादीनामयतीनामपि ज्ञानश्रवणादिति भावः । मननस्य प्राङ्निवृत्तत्वात्पश्यतो मुनेरिति कथमित्यत आह—पश्यत इति । दर्शनसाधनत्वेन मननमिहोक्तं न तु तत्समकालीनतयेत्यर्थः । एतच्च प्राङ्मननादेः स्पष्टदर्शनसाधनत्वानुक्तेः प्रसङ्गादिहोक्तम् । ननु 'स्थितधीः किं प्रभाषेत' इत्याद्युत्तरमयं श्लोक इति प्रागुक्तम्, तत्कथमिदानीं लक्षणपरतया व्याख्यातः ।

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ ७०**

रा॥यथा स्वेनैवापूर्यमाणमेकरूपं समुद्रं नादेय्य आपः प्रविशन्ति;आसामपां प्रवेशेऽप्यप्रवेशे च समुद्रो न कंचन विशेषमापद्यते;एवं सर्वे कामाश्शब्दादयो विषयाः यं संयमिनं प्रविशन्ति—इन्द्रियगोचरतां यान्ति,स शान्तिमाप्नोति—शब्दादिष्विन्द्रियगोचरतामापन्नेष्वनापन्नेषु च स्वात्मावलोकनतृप्त्यैव यो न विकारमाप्नोति, स एव शान्तिमाप्नोतीत्यर्थः । न कामकामी—यश्शब्दादिभिर्विक्रियते, स कदाचिदपि न शान्तिमाप्नोति ॥ ७० ॥

ता॥एवं शब्दाद्यदर्शनपर्यवसितात्मदर्शनमयी सिद्धिरुक्ता, एतस्या एव सिद्धेरर्वाचीनामदूरविप्रकृष्टां शब्दादिविषयदर्शनेऽप्यविकारतारूपामवस्थामाह—**आपूर्यमाण**मिति। अत्र प्रवेशाप्रवेशयोरविशेषोपलम्भस्य विवक्षितत्वात् **आपूर्यमाण**मिति न प्रविशन्तीभिर्नादेयीभिरद्भिरापूरणं विवक्षितम्,अपितु दार्ष्टान्तिके विवक्षितायाः स्वात्मावलोकनतृप्तेः प्रतिनिर्देशः क्रियते इति दर्शयति—**स्वेनैवे**ति। अचलप्रतिष्ठशब्दोऽत्र सीमातिलङ्घनादिहेतुभूतवृद्धिह्रासराहित्यपर इत्याह—**एकरूप**मिति। नादेय्य इत्यनेन समुद्रप्रयत्ननिरपेक्ष स्वतस्समुद्रप्रावण्यं सूच्यते। दृष्टान्ते निर्मथितार्थमाह—**आसा**मिति। कामा इत्यत्र कर्मणि व्युत्पत्तिमभिप्रेत्याह—**शब्दादयो विषया** इति।अविकारतासिद्ध्यर्थं यच्छब्दस्य पूर्वोक्तमयमित्याभिप्रायतामाह—**यं संयमिन**मिति। रूपादिविषयाणां पुरुषे प्रवेशो नान्नपानादिवच्छरीरान्तःप्रवेशः। अतः तत्तदिन्द्रियद्वारा ज्ञानविषयत्वमेव विवक्षितमित्यभिप्रायेणाह—**इन्द्रिये**ति। यस्येति शेषः,तद्वदित्यनेन सिद्धमाह—**शब्दे**ति । नित्यनिरवद्यनिरतिशयस्वात्मानुभवानन्दसन्दोहमग्नो नश्वरदुःखमिश्रसातिशयविषयानुभवानन्दबिन्दुषु न सज्जते इति भावः।'न कामकामी ' इत्येतत्पूर्वोक्तस्यार्थस्य व्यतिरेकेण दृढीकरणमिति व्यञ्जयंति—**य** इति। विकारस्य प्रसक्तत्वात्कामित्वं स्वकार्यं विकारमप्यजहल्लक्षणया लक्षयतीति **विक्रियते** इत्युक्तम् । कामान्कामयितुं शीलं यस्य स कामकामी; **कदाचिदपी**ति यावत्कामपरित्या-

शं॥ विदुषः त्यक्तैषणस्य स्थितप्रज्ञस्य यतेः एव मोक्षप्राप्तिः न तु असंन्यासिनः कामकामिनः इत्येतम् अर्थं दृष्टान्तेन प्रतिपादयिष्यन् आह—आपूर्य इति।आपूर्यमाणम् अद्भिः अचलप्रतिष्ठम् अचलतया प्रतिष्ठा अवस्थितिः यस्य तम् अचलप्रतिष्ठं समुद्रम् आपः सर्वतोगताः प्रविशन्ति स्वात्मस्थम् अविक्रियमेव सन्तं यद्वत् तद्वत् कामाः विषयसन्निधावपि सर्वतः इच्छाविशेषाः यं मुनिं समुद्रम् इव आपः अविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति सः शान्तिं मोक्षम् आप्नोति । न इतरः काम-

आ॥ तेन विषयानुभवप्रकारमाह—आपूर्यमाणमिति। यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति नोत्सेकं प्राप्नोति; नच प्रयत्नं करोति, नचाभावे शुष्यति; न हि

ज॥अन्यपरादपि तल्लाभ इत्याशयेनेति ब्रूमः । अन्यथा 'प्रभाषेत' इत्यादेरुत्तरमाहेत्यनेनैवावक्ष्यत् । किं तत्र स्थानप्रदर्शनादिनेति ॥ ६९ ॥

पृष्टस्य समस्तस्योत्तरमुक्तं तत्किमापूर्यमाणमित्यनेनेत्यत आह—तेनेति । क्रियमाणेत्युपस्कर्तव्यम् । नित्यसापेक्षत्वादसामर्थ्याभावः । बाह्यानुसंधानरहितस्य युज्येतापि कथंचिद्गमनादिकम् ; विषयानुभवस्तु दृश्यमानः कथं स्यात् , तस्य नियतसाधनसाध्यस्यानुसंधानेन विनाऽनुदयादित्याशङ्कापरिहारार्थमिति शेषः । तद्वत्कामा यं प्रविशन्तीति संक्षेपेणोक्तं तद्विवृणोति—य इति । कामशब्दस्यार्थो विषयैरिति । अन्यथा विहाय कामानित्युत्तरविरोधात् । अचलप्रतिष्ठत्वस्यैव व्याख्यानं नोत्सेक-

विहाय कामान् यः सर्वान्पुमांश्चरति निस्स्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१

रा॥काम्यन्त इति कामाश्शब्दादयः। यः पुमान् शब्दादीन् सर्वान्विषयान् विहाय तत्र निस्स्पृहः तत्र ममतारहितश्च,अनात्मनि देहे आत्माभिमानरहितश्चरति ; स आत्मानं दृष्ट्वा शान्तिमधिगच्छति ॥ ७१ ॥

ता॥गमित्यर्थः । एतेन—यो विक्रियते, स न शान्तिमाप्नोतीत्यनयोरैकार्थ्यशङ्का परिहृता । विषयदर्शने विक्रियमाणोऽन्यदापि स्पृहारहितो न स्यादित्यर्थः ॥ ७० ॥

किं कामकामिनः सर्वदा शान्तिर्न स्यादिति शङ्कामपाकुर्वन्नदर्शनाविकारत्वात्तयोः कारणभूतां विषयसङ्ग्रहणस्पृहाममकारदेहात्मभ्रमाणां क्रमात्कार्यकारणभावनिबन्धनानुलोमप्रतिलोमान्वयव्यतिरेकद्वयानां निवृत्तिरूपामवस्थामाह—विहायेति । पूर्वत्रात्र च श्लोके प्रवृत्तं कामशब्दं निर्वक्ति—काम्यन्त इति । चरतीति वर्तत इत्यर्थः। आत्मदर्शिपुरुषपर्वभेदविषयौ पूर्वश्लोकौ;अयं त्वात्मदर्शनार्थिपुरुषविषय इति विवेकं द्योतयति—आत्मानं दृष्ट्वेति । अनयोश्श्लोकयोर्विषयानुभवनिवृत्तिलक्षणा 'या निशा' इति पूर्वश्लोकोक्तशान्तिरुक्ता ॥ ७१ ॥

शं॥कामी काम्यन्ते इति कामाः विषयाः तान् कामयितुं शीलम् अस्य स कामकामी । स न प्राप्नोति इत्यर्थः ॥ ७० ॥

यस्मात् एवं तस्मात्—विहाय इति ॥ विहाय परित्यज्य कामान् यः संन्यासी पुमान् सर्वान् अशेषतः चरति जीवनमात्रचेष्टाशेषः पर्यटति इत्यर्थः । निस्स्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य सः निस्स्पृहः । निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि 'मम इदम्' इति अभिनिवेशवर्जितः निरहङ्कारः विद्यावत्त्वादिनिमित्तात्मसंभावनारहितः इत्येतत् । स एवंभूतः स्थितप्रज्ञः ब्रह्मवित्

आ॥समुद्रः सरित्प्रवेशाप्रवेशनिमित्तौ वृद्धिशोषौ यद्वत्तरी प्राप्नोति; प्रयत्नं वा करोति; स मुक्तिं प्राप्नोतीत्यर्थः ॥ ७० ॥

एतदेव प्रपञ्चयति—विहायेति।कामान्—विषयान् । निस्स्पृहतया विहाय यश्चरति —भक्षयति; भक्षयामीत्यहंकारममकारवर्जितश्च ; स हि पुमान् ; स एव च मुक्तिमधिगच्छतीत्यर्थः ॥ ७१ ॥

ज ॥ मित्यादि । कुत एषोऽर्थः इत्यतः समुद्रदृष्टान्तोपादानसामर्थ्यादिति भावेनाह—यद्वीति । 'स शान्तिमाप्नोति इत्यस्यार्थमाह—स इति । शान्तिप्रशंसार्थमेतत् ; एतत् दृष्ट्वा केचित् शान्तित एव मुक्तिरित्यनेनाहेत्याहुः; तदसङ्गतार्थत्वात् ॥ ७० ॥

'विहाय'इत्यनेनाप्ययमेवार्थ उच्यते,अतः पुनरुक्तिरित्यत आह—एतदेवेति।यद्यत्र कामा इच्छाविशेषास्तर्हि निस्स्पृह इति पुनरुक्तिः, यदि काम्यन्त इति विषयास्तदा चरतिर्यदि भक्षणार्थस्तदा व्याघातः । अथ गत्यर्थस्तदा व्यर्थम्—इत्यतो व्याचष्टे—कामानिति । 'निर्ममो निरहंकारः' इत्येतदसंभवपरिहाराय व्याचष्टे—भक्षयामीति । कर्तृत्वाभिमान एवाहंकारः, स्वामित्वाभिमान एव ममता, न स्वदेहस्य यादिमात्रमिति भावः । स हि पुमान्—अन्यः पशुरित्यर्थः । कुत इत्यत आह—स एवेति । स पुमानित्यनेनैवान्वयसमाप्तिं वदता शान्तित एव मुक्तिरित्येषोऽर्थो नात्र प्रतिपाद्यत इति दर्शितम् ; स्वव्याख्यानभावश्च ॥ ७१ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७२

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥
श्रीकृष्णाय परब्रह्मणे नमः ॥

---

रा॥एषा नित्यात्मज्ञानपूर्विका असङ्गकर्मणि स्थितिः स्थितधीलक्षणा ब्राह्मी ब्रह्मप्रापिका,

---

ता॥'एषा' इति श्लोकेन परमप्रयोजनतया प्रकृतायास्संसारनिवृत्तिलक्षणशान्तेरुपसंहारः क्रियते; यद्वा श्लोकद्वये शान्तिनिर्वाणशब्दाभ्यामेकमेव फलमुच्यते। 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति'इत्यत्र परं निर्वाणमाप्नोतीति हि व्याख्यास्यति। 'एषा ब्राह्मी'इति श्लोकेनाध्यायार्थस्य निगमनं फलाव्यभिचारस्थापनं च। 'एषा'इति निर्देशस्य पूर्वोक्तनिखिलप्रकारपरामर्शित्वात्त प्रकारमाह—नित्येति। स्थितधीर्लक्षं यस्यास्सा स्थितधीलक्षा—ज्ञानयोगाख्यस्थितप्रज्ञतासाधनभूतेत्यर्थः। ब्राह्मीत्यत्र तद्धितविवक्षितसंबन्धविशेषं दर्शयति—ब्रह्मप्रापिकेति । एनामित्यन्वादेशोऽपि सप्रकारपरामर्शीति व्यञ्जयति—

---

प्र-पा ॥ १. गी ४-३९॥

---

शं॥शान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्याम् अधिगच्छति प्राप्नोति ब्रह्मभूतः भवति इत्यर्थः ॥ ७१ ॥

सैषा ज्ञाननिष्ठा स्तूयते—एषा ब्राह्मी इति ॥ एषा यथोक्ता ब्राह्मी ब्रह्मणि भवा

---

आ ॥ उपसंहरति—एषेति ॥ ब्राह्मी स्थितिः ब्रह्मविषया स्थितिः लक्षणम् । अन्तकालेऽप्यस्यां स्थित्वैव ब्रह्म गच्छति । अन्यथा जन्मान्तरं प्राप्नोति । 'यंयंवापि' इति वक्ष्यमाणत्वात् । ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम्, 'भोगेन त्वितरे' इति ह्युक्तम्। सन्ति हि बहुशरीरफलानि कर्माणि कानिचित् 'सप्तजन्मनि विप्रः स्यात्' इत्यादेः, दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः । तथा ह्युक्तम्, 'स्थितप्रज्ञोऽपि

---

ज॥ज्ञानी स्तूयते'एषा'इत्यनेनेत्यमत् ,प्रथमवाक्ये तदर्शनादिति भावेनाह—उपसंहरतीति । प्रकरणं समापयतीत्यर्थः । ब्रह्मधर्मभूतेति प्रतीतिनिरासायाह—ब्राह्मीति । स्थितिर्नोक्ता कथमेवमुच्यत इत्यत आह—लक्षणमिति । ब्रह्मविषयज्ञानवतो लक्षणमुक्तमित्यर्थः। 'किं प्रभाषेत' इत्यादिप्रश्नपरिहारस्यार्थादुक्तत्वादनुपसंहारः। अन्तकाले चरमे वयस्यपि यः परित्यज्य अस्यां स्थितौ तिष्ठति, सोऽपि ब्रह्मप्राप्नोतीति किमु ब्रह्मचर्यादेव प्रव्रज्येति व्याख्यानमसत् , अप्रकृतत्वादित्याशयवान्व्याचष्टे—अन्तकालेऽपीति । ज्ञानिनो ब्रह्मप्राप्तिरुक्ता,सा किं तद्देहपातानन्तरमेव, उतान्यदेत्यपेक्षायामिदमुच्यते। कुतोऽस्यार्थस्य भगवदभिप्रेतत्वमित्यत आह—यंयमिति । ननु ज्ञानमेव मोक्षसाधनम्; कारणपौष्कल्ये च कार्यं भवत्येव; अतः कथं ज्ञानिनः शरीरान्तरप्राप्तिरित्यत आह—ज्ञानिनामिति । प्रारब्धकर्म सामग्र्याः प्रतिबन्धकं, तदेवान्तकाले ब्रह्मानुसंधानं प्रतिबध्नातीति भावः । ननु ज्ञानादेव सर्वं कर्म क्षीणमित्यत आह—भोगेनेति । अस्तु प्रारब्धकर्मणो भोगेनैव क्षय ; स च ज्ञानं यच्छरीरे जातं तेनैवाभूत्, अतः कथं शरीरान्तरारम्भ इत्यत आह—सन्तिहीति । तानि कथमेकेनैव शरीरेण भुज्येरन्निति शेषः । सप्तजन्मनीति दिगुः । इतश्चैवमित्याह—दृष्टेश्चेति । बहित्यनेकोपलक्षणम् । कथं ज्ञानिना बहुशरीर-

रा॥ईदृशीं कर्मणि स्थितिं प्राप्य न विमुह्यति—पुनस्संसारं नाप्नोति, अस्यां स्थित्यामन्तिमेऽपि वयसि स्थित्वा ब्रह्म निर्वाणमृच्छति—निर्वाणमयं ब्रह्म गच्छति; सुखैकतानमात्मानमवाप्नोतीत्यर्थः ॥

ता॥ईदृशीमिति । मोहनिषेधफलितमाह—पुनरिति । अन्तकालइत्युत्क्रान्तिकालभ्रमव्युदासायाह—अन्तिमेऽपि वयसीति । 'उत्तमे चेद्वयसि साधुवृत्तः' इत्यादिवत्। एतेन बाल्यादिषु विषयप्रवणस्यापि पश्चान्निर्विण्णस्याधिकारस्सूचितः।किंपुनर्ब्रह्मचर्यादिकमारभ्य स्थित इति च भावः।स्थित्यां स्थितिस्तत्सम्बन्धः । षष्ठीसमासभ्रमापाकरणायाह—निर्वाणमयं ब्रह्मेति । निर्वाणब्रह्मशब्दयोरत्रार्वाचीनविषयतामाह—सुखेति ॥

प्र·पा ॥ १·

शं॥इयं स्थितिः सर्वं कर्मसंन्यस्य ब्रह्मस्वरूपेणैव अवस्थानम् इत्येतत् हे पार्थ न एनां स्थितिं

आ॥ यस्तूर्ध्वः प्राप्य रुद्रपदं गतः।सांकर्षणं ततो मुक्तिमगाद्विष्णुप्रसादतः' इति गारुडे । 'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यते' इति नारदीये। निश्चितफलं च ज्ञानम् 'तस्य तावदेव चिरम्' 'यदु च न अर्चिषमेवाभिसंभवति' इत्यादिश्रुतिभ्यः, न च कायव्यूहापेक्षा 'तद्यथेषीकतूलम्' 'तद्यथा पुष्करपलाशे' 'ज्ञानाग्निः सर्वकर्माणि' इत्यादिवचनेभ्यः। प्रारब्धे त्वविरोधः । प्रमाणाभावाच्च । न च तच्छास्त्रं प्रमाणम् , 'अक्षपादकणादानां सांख्ययोगजटाभृताम् । मतमालम्ब्य ये वेदं दूषयन्त्यल्पचेतसः ' इति निन्दावचनात् । यत्र तु स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव न सत्यत्वम् । न हि तेषामपीतरग्रन्थ-

ज॥प्राप्तिर्दृश्यत इत्यत आह—तथाहीति।ननु ज्ञानिनोऽपि यदि शरीरान्तरप्राप्तिस्तर्हि गर्भवासादिभिर्दुःखैर्लुप्तशक्तिकं ज्ञानं न मोक्षाय पर्याप्तं स्यादित्यत आह—निश्चितेति । तस्य ज्ञानिनस्तावदेव चिरं तावानेव विलम्बो यावन्न विमोक्ष्ये विमोक्ष्यते प्रारब्धकर्मणा, अवसिते कर्मणि ब्रह्म संपत्स्यत इत्यर्थः, अवसितकर्मणि ज्ञानिनि विषये यदि पुत्रादयः शव्यं कर्म कुर्वन्ति, यदु च न—यदि वा न कुर्वन्ति ; सर्वथाऽर्चिषमभिसंभवति प्राप्नोत्येवेत्यर्थः ; तदिदमुक्तं—नैनां प्राप्य विमुह्यतीति । पाशुपतवैशेषिकादयस्त्वाहुः, अनियतकालविपाकान्यपि कर्माणि ज्ञानी योगसामर्थ्यात्समाहृत्यानेकशरीरफलान्यपि कायव्यूहनिर्माणेन क्षपयित्वा प्रमुच्यते ; नकुतोऽस्य देहान्तरमिति तत्राह—न चेति। ज्ञानिनः कर्मक्षयार्थमिति शेषः । तथाहि अप्रारब्धकर्मक्षयार्थं वा सा स्यात् , प्रारब्धकर्मक्षयार्थं वा ; तेषां ज्ञानेनैव क्षीणत्वात्—इति भावेनाह—तद्यथेति । द्वितीये तु यःकश्चिज्ज्ञानी तथा करोति, सर्वो वा । आद्ये संप्रतिपत्तिमुत्तरमाह—प्रारब्धेत्विति। द्वितीयासंभवे हेतुमाह—प्रमाणेति। चशब्दात्प्रागुदाहृतप्रमाणविरोधाच्च,पाशुपतादिशास्त्रेषु तथोक्तत्वात्कथं प्रमाणाभाव इत्यत आह—नचेति। तच्छिष्या अपि तच्छब्देनोच्यन्ते इति बहुवचनम् ' उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः'इत्यादौ तत्स्तुतिरपि दृश्यत इत्यत आह—यत्रेति । वैष्णवशास्त्रोक्तप्रकारेण शिवभक्तानां लक्षणयेति शेषः । सत्यत्वे, तदुक्तार्थस्येति शेषः । उक्तनिन्दाविरोधादिति भावः । तर्हि शैवपुराणानि कायव्यूहनिर्माणनियमादौ प्रमाणानीत्यत आह—नहीति । तेषामिति बुद्धिस्थशैवपुराणपरामर्शः, इतरग्रन्थाः उदाहृतगारुडादयः । शैवपुराणानां गारुडादिवैष्णवग्रन्थानां च को विशेषो येन बाध्यबाधकभाव इत्याशङ्क्य दुर्जनव्यामोहार्थं प्रणीतपाशुपतादिशास्त्राणां व्यामोहना-

रा॥एवमात्मयाथात्म्यं युद्धाख्यस्य च कर्मणस्तत्प्राप्तिसाधनतामजानतश्शरीरात्मज्ञानेन

ता॥ननु नित्यात्मज्ञानतत्साक्षात्कारयोरपि प्रकृतत्वात्कर्मनिष्ठामात्रनिगमनपरोऽयं श्लोक इत्ययुक्तमिति शङ्कायां प्रधानभूततदनुबन्धेनान्यकथनमिति दर्शयन्नुत्तराध्यायचतुष्टयसङ्गतिं वक्तुमुक्तमर्थं च सङ्कलय्य दर्शयन्नित्यात्मेत्यादिकं द्वितीयाध्यायार्थसङ्ग्रहश्लोकमपि व्याख्याति—एवमिति। मोहस्य हेतुस्वरूपकार्याणि

शं॥प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति । स्थित्वा अस्यां स्थितौ ब्राह्म्यां यथोक्तायाम्

आ॥विरुद्धार्थे प्रामाण्यम् । तथाह्युक्तम्—'एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु' इति वाराहे । 'कुत्सितानि च मिथ्याणि रुद्रो विष्णुप्रचोदितः । चकार शास्त्राणि विमुक्त्यै पयस्तत्प्रचोदिताः । दधीचाद्याः पुराणानि तच्छास्त्रसमयेन तु। चतुर्वेदैश्च ब्राह्मानि वैष्णवा विष्णुचोदिताः। पञ्चरात्रं भारतं च मूलरामायणं तथा । तथा पुराणं भागवतं विष्णुर्वेद इतीरितः । अतः शैवपुराणानि योज्यान्यन्याविरोधतः' इति नारदीये । अतो ज्ञानिनां भवत्येव मुक्तिः । भीष्मादीनां तु तत्क्षणे मुक्त्यभावः। 'स्मरंस्त्यजति' इति वर्तमानव्यपदेशो हि कृतः। तथोक्तम्—'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणे यदा। विष्णुमाया तदा तेषां मनो वाह्यं करोति हि'इति गारुडे। न चान्येषां तदा स्मृतिर्भवति; 'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम् । भजन्ति तत्स्मृतिं रन्ते देवे। यान्ति नचान्यथा'इति ब्रह्मवैवर्ते । निर्वाणमशरीरम्, 'कायो वाणं शरीरं च'इत्यभिधानात्, 'एतद्वाणमवष्टभ्य'इति प्रयोगाच्च । निर्वाणशब्द-प्रतिपादनमनिन्द्रियां इत्यादिवत् । कथमन्यथा सर्वपुराणादिप्रसिद्धाऽऽकृतिर्भगवत उपपद्यते।न चान्यद्भगवत उत्तमं ब्रह्म'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति भागवते

ज॥र्थत्वे तात्पर्यमाणमाह—तथाहीति । कारयेति स्वार्थे णिच् । अतथ्यानि सर्वथाप्यविद्यमानानि वितथ्यानि व्यधिकरणानि च तेषु दर्शयस्व प्रकाशं प्रसिद्धम् । इदानीं तन्मूलत्वं शैवपुराणानाम् इतरेषां पञ्चरात्रादिमूलत्वमित्यत्र प्रमाणमाह—कुत्सितानीति । तच्छास्त्रसमयेन तच्छास्त्रसिद्धान्तमनुसृत्य । वेदैरिति वेदनामापातप्रतीतिमनुसृत्य । भागवत भगवद्विषयम् । उक्तमुपसंहरति—अत इति । ज्ञानिनां मुक्तिर्भवतीत्येव न तु तद्देहपातानन्तरमिति नियम इत्युपसंहारार्थः। ननु भीष्मादयो ज्ञानिनोऽन्तकालेऽस्यां ब्राह्म्यां स्थितौ स्थिताश्च न मुक्ताश्च तत्कथमेतदुक्तमित्यत आह—भीष्मादीनामिति । साक्षाद्देहत्यागक्षणे मुक्त्या परमेश्वरे मनोयोगेन भाव्यमित्येतत्कुत इत्यत आह—स्मरन्निति । ननु तत्क्षणे मुक्त्या मुक्तिश्चेदज्ञानिनामपि तत्प्रभवेन मुक्तिरित्यत आह—नचेति । भक्तिज्ञानेति द्वन्द्वैकवद्भावः । भक्तिसहितं ज्ञानं भक्तिज्ञानमिति वा । ब्रह्मनिर्वाणं ब्रह्मस्वरूपानन्दमिति व्याख्यानं सर्वप्रमाणविरुद्धमित्यादायवान्निर्वाणमिति भिन्नं पदं व्याचष्टे—निर्वाणमिति । कथमेतदित्यत आह—काय इति । कार्यब्रह्मव्यावृत्त्यर्थमेतत् । अनेन ब्रह्मणो निराकारत्वं प्राप्तम्, तत्प्रतिषेधार्थमाह—निर्वाणेति । प्रतिपादनं व्याख्यानम् । इत्यादिवत् इत्यादेरिव, प्राकृतादिनिषेधादित्यार्थकत्वेनेत्यर्थः । किमनेन व्याख्यानेन निराकारमेव ब्रह्म किं न भवेदित्यत आह—कथमिति । भगवतो विष्णोः साकारत्वेऽपि ब्रह्मणो निराकारत्वमेव; न च भगवानेव ब्रह्म तस्य तदुत्तमत्वेन ततोऽन्यत्वात्। अतो न पुराणादिविरोध इत्यत आह—नचेति। ब्रह्मेत्येतानि वाक्यानि भगवतो ब्रह्मत्वप्रतिपादकानि,यस्मादित्यादीनि तस्यैव सर्वोत्तमत्वेन तदुत्तमाभावप्रतिपादकानि;इन्द्रियग्राह्यमतिक्रान्तस्तदुत्तमः;सर्वमेव योगीन्द्रियग्राह्यम्,उत्तमाध-

भा॥ मोहितस्य तेन च मोहेन युद्धान्निवृत्तस्य मोहशान्तये नित्यात्मविषया या साङ्ख्यबुद्धिः, तत्पूर्विका च असङ्गकर्मानुष्ठानरूपकर्मयोगविषया बुद्धिः स्थितप्रज्ञतायोगसाधनभूता

ता॥ विशदयति—आत्मेत्यादिना निवृत्तस्येत्यन्तेन। व्याख्यानव्याख्येयात्मना सङ्गदश्लोकस्थसमासान्तर्गतपदद्वन्द्वद्वयस्य यथासङ्ख्यं सम्बन्धं व्यनक्ति—नित्यात्मेत्यादिना। साङ्ख्यबुद्धिरिति। कर्मयोगात्प्राक् 'एषा तेऽभिहिता साङ्ख्ये बुद्धिः' इत्युक्तमात्मतत्त्वज्ञानमुच्यते; तद्व्यक्त्यर्थं हि नित्यात्मविषयेत्युक्तम्।

श॥ अन्तकालेऽपि अन्त्ये अपि वयसि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षम् ऋच्छति गच्छति ।

आ॥ 'भगवन्तं परं ब्रह्म' 'परब्रह्म जनार्दन' 'परमं यो महद्ब्रह्म' 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः' 'योऽसावतीन्द्रियग्राह्यः' 'नास्ति नारायणसमं न भूतं न भविष्यति' 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इत्यादिभ्यः। न च तस्य ब्रह्मणोऽशरीरत्वादेतत्कल्प्यम्, तस्यापि शरीरश्रवणात्। 'आनन्दरूपममृतम्' 'सुवर्णज्योतिः' 'दहरोऽस्मिन्नन्तर आकाशः' इत्यादिषु। यदि रूपं न स्यात्, आनन्दमित्येव स्यात्, न त्वानन्दरूपमिति। कथं सुवर्णरूपत्वं स्यादरूपस्य; कथं दहरत्वम्। दहरस्थश्च कश्चित्स्वदेहेत्यादौ रूपवानुच्यते 'सहस्रशीर्षा पुरुषः' 'रुक्मवर्णं कर्तारं' 'आदित्यवर्णं तमसः परस्तात्' 'सर्वतः पाणिपादं तत्' 'विश्वतश्चक्षुरुत विश्वतोमुखः' इत्यादिवचनात् विश्वरूपाध्यायादेश्च रूपवानवसीयते। अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानन्दयशःश्रीशक्त्यादिमांश्च भगवान्। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'यः सर्वज्ञः' 'आनन्दं ब्रह्मणः' 'एतस्यैव आनन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति' 'अनादिमध्यान्तमनन्तवीर्यं सहस्रलक्षामितकान्तिकान्तम्' 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' 'विज्ञानशक्तिरहमासमनन्तशक्तेः' 'तुर्यं तत्सर्वदृक्सदा' 'आत्मानमन्यं च स वेद विद्वान्' 'अन्यतमो

ज॥ मभावेन ब्रह्मेश्वरयोर्भेदो मा भूत्, ब्रह्माशरीरम्, ईश्वरस्तु सविग्रह इत्यतो भेदोऽस्तु, अभेदस्यापि सत्वाद्ब्रह्मशब्दोपपत्तिरित्यत आह—न चेति। तस्य पराभिमतस्य एतद्भगवतोऽन्यत्वं कुत इत्यत आह—तस्यापीति। 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यन्तं वाक्यम् इह विवक्षितम्। इत्यादिषु ब्रह्मविद्यात्वेन सम्मतेष्विति शेषः। कथमत्र श्रवणमित्यत आह—यदीति। रूपं विग्रहः। 'विज्ञानमानन्दं ब्रह्म' इत्यानन्दशब्दस्य नपुंसकत्वदर्शनात्तथोपादानम्। ज्योतिःशब्दो भास्वररूपस्य वाचकः; अत उक्तं—सुवर्णरूपत्वमिति। दहरत्वं दहरस्थत्वम्। अविग्रहस्येति वर्तते। दहरस्थत्वं कथम् अविग्रहस्यानुपपन्नमित्यत, आह—दहरस्थश्चेति। एवमुपपत्तिसापेक्षाणि वाक्यान्युदाहृत्य स्पष्टान्युदाहरति—सहस्रशीर्षेति। अवसीयते परमात्मा। प्राग्भगवतोऽन्यस्योक्तम्न्यं वाक्यविरुद्धमित्युक्तम्; इदानीं व्याहतं च तदिति भावेनाह—अतिपरिपूर्णतमेति। अत्यादिशब्दैर्निरतिशयत्वं द्योत्यते। ऐश्वर्यं वशित्वम्। श्रीः कान्तिः। परमेश्वरे भगवच्छब्दस्यौपचारिकत्वपरिहारार्थतया गुणानां सद्भावे प्रमाणान्याह—परेति। 'आनन्दं ब्रह्मणः' इत्यत्र 'यतो वाचः' इति पूर्ववाक्यमभिप्रेतम्। अमितशब्दात्परश्चन्द्रशब्दोऽध्याहार्यः। द्रष्टृपुरुषभेदात्त्रिविधोक्तिः। ऐश्वर्याद्यनन्तगुणत्वे मयीति प्रमाणम्। संख्यापरिमाणाभ्यां गुणानामानन्त्यमनेनोच्यते। शक्तेः परत्वं प्रागुक्तं, तदस्पष्टमित्यतो—विज्ञानेति। ज्ञानस्यापरोक्षरूपताप्रतिपादनाय—तुर्यमिति। ईश्वरो नात्मानं वेत्ति, कर्तृकर्मभावविरोधादित्येतन्निरासाय—आत्मानमिति। ईश्वरे भगवच्छब्दस्यौपचारिकत्वासंभवं दर्शयितुं तदन्यस्य तच्छब्दार्थतानिरासाय—अन्यतम इति

रा॥द्वितीयेऽध्याये प्रोक्ता; तदुक्तं *'नित्यात्मासङ्गकर्मेहागोचरा साङ्ख्ययोगधीः । द्वितीये

---

ता॥ज्ञानयोगस्तु कर्मयोगसाध्यतयानन्तर पृथगेवोपादीयते । स्थितधीलक्षेति । अत्र स्थितधीशब्दो भावप्रधानः; तल्लक्षत्वञ्च तत्साधनत्वम् । स्थितप्रज्ञतायोगेत्यत्र स्थितप्रज्ञताशब्दो योगशब्देन सह विशे-

---

प्र·पा ॥ *गी स. ६ श्लो ॥

---

व ॥ किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येव अवतिष्ठते स ब्रह्मनिर्वा-

---

आ॥मुकुन्दात्को नाम लोके भगवत्पदार्थः'ऐश्वर्यस्य समग्रस्य' 'अतीव परिपूर्णं ते सुखं ज्ञानं च सौभगम्' 'यच्चात्ययुक्तं स्मर्तुं वा शक्तः कर्तुमतः परः' इत्यादिभ्यः । 'तानि सर्वाण्यन्योन्यानन्यरूपाणि' 'विज्ञानमानन्दं ब्रह्म' 'आनन्दो ब्रह्मेति व्यजानात्' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यस्य ज्ञानमयं तपः' 'स मा भग प्रविश स्वाहा' 'न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसंभवा' 'न योगित्वादीश्वरत्वात्सत्यरूपाच्युतो विभुः' 'सदेहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः' 'ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः' इति पैङ्गिखिले । 'देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः । परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम्' इत्यादि ब्रह्मकैवर्ते । तदेव लीलया चासौ परिच्छिन्नादिरूपेण दर्शयति मायया । 'न च गर्भेऽवसद्देव्या नचापि वसुदेवतः । न चापि राघवाज्जातो न चापि जमदग्नितः । नित्यानन्दोऽव्ययोऽप्येवं क्रीडतेऽमोघदर्शनः' इति च पाद्मे । 'न वै स आत्माऽऽत्मवतामधीश्वरो भुङ्क्ते हि दुःखं भगवान्वासुदेवः । स्वर्गादेरीशिताऽजः परमसुखनिधिर्बोधरूपोऽथ बोधं लोकानां दर्शयन्वो मुनिसुतहतात्मप्रियार्थं जगाम । स ब्रह्मवन्द्यचरणो जनमोहनाय स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार । पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयम् । रुद्रवाक्यमृतं कर्तुमजितो जितवत्स्थितः । योऽजितो विजितो भक्त्या गाङ्गेयं न जघान ह । ■ चाम्वा ग्राहयामास करुणः कोऽपरस्ततः' इत्यादि-

---

ज्ञ॥अन्य एवान्यतमः। भगवच्छन्दस्यायमर्थ इत्यत्र—ऐश्वर्येति प्रमाणम् । अत्र षण्णामित्युपलक्षणम्; षाड्गुण्ये सर्वगुणान्तर्भावो वा; तद्वान् भगवानिति सिद्धमेव;भगवत्त्वात्स एव सर्वोत्तम इति । समग्रार्थो वेति। अतीवेति । यदन्येन करिष्यामीति स्मर्तुं बुद्धिस्थीकर्तुं वा अयुक्त तत् त्व कर्तुं शक्तः। मतुपा ज्ञानादीना भगवता भेदः प्रतीतः;षण्णामित्यादिना परस्पर च;तथाऽऽकृतिर्भगवत इत्युक्त्याऽऽकृतेस्तन्निरासार्थमाह—तानीति । तत्र प्रमाणान्याह—विज्ञानमिति । तप आलोचनक्रिया । ज्ञानमयं ज्ञानात्मकमिति धर्माणा परस्परमभेदोक्तिः । प्राकृतेति ङीबभावश्छान्दसः । अणञ्भ्यामन्यो वा प्रत्ययः । मांसमेदोस्थिभिः संभवो यस्याः सा तथोक्ता;एतच्च न योगित्वात्,किं त्वीश्वरत्वात्।अत एव विभुः निर्दोषगुणात्मकविग्रहादच्युतः । 'ज्ञानज्ञानः' इत्यादेरतिशयितज्ञानादिरित्यर्थः । तेन निर्दोषत्वादिना भगवद्रूपस्यैवंभावे कथं परिच्छिन्नत्वगर्भवासादिसंसारिधर्माश्च तत्र दृश्यन्तइत्यत आह—तदेवेति । किमर्थमित्यत उक्तम्—लीलयेति । मायया मोहकशक्त्या । अत्र प्रमाणमाह—नचेति । देव्याः देवक्याः । एवं गर्भवासादिप्रदर्शनेन मोघं दर्शनं यस्मिन्विषये स तथा आत्मवता भागवतानाम् आत्मा निरुपाधिकप्रिय इति यावत् । मुनिसुतो रावणः ब्रह्मवाक्यवत् रुद्रवाक्यमप्यतुलं मत्यस्तीत्यतो रुद्रवाक्यमित्युक्तम् । करुणः करुणावान्; अर्शआदित्वादच् । तदेवेत्याद्युक्तमुपसंहरति—नतत्रेति ।

रा ॥ स्थितधीलक्षा प्रोक्ता तन्मोहशान्तये' इति ॥ ७२ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

श्रीमते रामानुजाय नमः ॥

---

ता॥ पणविशेष्यभावेन द्वन्द्वेन वात्र समस्यते; योगाख्यं फलमित्यपि पूर्वं पृथगुक्तेः। साम्प्रदायिकत्वायाह—तदुक्तमिति ॥ ७२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकाया द्वितीयोऽध्यायः ॥ २ ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

शां ॥ णम् ऋच्छति इति ॥ ७२ ॥

इति श्रीपरमहंस परिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ

श्रीभगवद्गीताभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

---

आ ॥ न्यश्च स्कान्दे। न तत्र संसारधर्मा निरूप्याः, यत्र च परापरभेदोऽवगम्यते, तत्राज्ञबुद्धिमपेक्ष्यावरत्वं विश्वरूपमपेक्ष्य अन्यत्र। तथोक्तम् 'परिपूर्णानि रूपाणि समान्यखिलरूपतः। तथाऽप्यपेक्ष्य मन्दानां दृष्टिं त्वामूपयोऽपि हि। परावरं वदन्त्येव ह्यमक्तानां विमोहनम्' इति गारुडे। न चात्र किंचिदुपचारादिति वाच्यम्, अचिन्त्यशक्तेः पदार्थवैचित्र्याच्चेत्युक्तम्। 'रामकृष्णादिरूपाणि परिपूर्णानि सर्वदा। न चाणुमात्रं भिन्नानि तथाऽप्यस्मान्विमोहसि' इत्यादेश्च नारदीये। तस्मात्सर्वदा सर्वरूपेष्वपरिगणितानन्तगुणगणं नित्यनिरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्मापरोक्षज्ञान्यृच्छतीति च सिद्धम् ॥ ७२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

---

ज॥ अत इत्युपस्कर्तव्यम्। यद्येव तर्हि विश्वरूपं परं तदपेक्षया कृष्णादिरूपाण्यपराणीति कथं ग्रन्थेषूच्यत इत्यत आह—यत्रचेति। यत्र ग्रन्थे। तत्र विश्वरूपमपेक्ष्यान्यत्र कृष्णादावपरत्वमज्ञबुद्धिमपेक्ष्योक्तं ज्ञातव्यमित्यर्थः। कुत एतदित्यत आह—तथेति। अखिलरूपतोऽखिलधर्मैः। विमोहनं कर्तुम्। नन्वयमुपचारो वा स्तुतिर्वा किं न स्यादित्यत आह—नचेति। असंभवे ह्येषा कल्पना, अचिन्त्यशक्त्या चैकस्यैवानेकपरिमाणत्वादिकं संभवति। अन्यत्रादर्शनेन त्वपलापेऽतिप्रसङ्ग इत्यर्थः। अत्रैव प्रमाणमाह—रामकृष्णेति। विमोहसि—विमोहयसि। श्लोकार्थमुपसंहरति—तस्मादिति ॥ ७२ ॥

श्रीवेङ्कटेशो विजयते।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकाया

जयतीर्थमुनिविरचिताया प्रमेयदीपिकायां द्वितीयोऽध्यायः ॥ २ ॥

श्रीः

श्रियै नमः.

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः.

# श्रीमद्गीतार्थसंग्रहः.



नित्यात्मासङ्गकर्मेहागोचरा साङ्ख्ययोगधीः ।
द्वितीये स्थितधीलक्षा प्रोक्ता तन्मोहशान्तये ॥ ६ ॥

---

## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसंग्रहरक्षा ॥

सङ्ख्यया बुद्ध्या अवधारणीयमात्मतत्त्वं साङ्ख्यम्, तद्विषयबुद्धिस्साङ्ख्यधीः; नित्यात्मगोचरेति तद्विवरणम्। एवमत्र असङ्गकर्मेहाशब्देनापि योगशब्दार्थविवरणादपौनरुक्त्यम्। स्थितधीः स्थितप्रज्ञता, ज्ञाननिष्ठेत्यर्थः। सा साध्यत्वेन लक्ष्यं यस्यास्सा तथोक्ता। तन्मोहशान्तये—उक्तप्रकारस्य अर्जुनस्य देहात्मादिभ्रमनिवृत्त्यर्थम्। एवं द्वितीयाध्यायोक्तस्य प्रपञ्चनरूपतया षट्कान्तानां चतुर्णामेकपेटिकात्वम् एकीकरणार्थं तृतीयारम्भे भाषितम्—'तदेव मुमुक्षुभिः प्राप्यतया वेदान्तोदितनिरस्तनिखिलाविद्यादिदोषगन्धानवधिकातिशयासङ्ख्येयकल्याणगुणगणपरब्रह्मपुरुषोत्तमप्राप्त्युपायभूतवेदनोपासनध्यानादिशब्दवाच्यतदैकान्तिकात्यन्तिकभक्तिं वक्तुं तदङ्गभूत 'य आत्मा अपहतपाप्मा' इत्यादिप्रजापतिवाक्योदित प्राप्तुरात्मनो याथात्म्यदर्शनं तन्नित्यताज्ञानपूर्वकासङ्गकर्मनिष्पाद्यज्ञानयोगसाध्यमुक्तम्'—इत्यारभ्य 'अतःपरमध्यायचतुष्टयेन इदमेव प्राप्तु. प्रत्यगात्मनो दर्शनं ससाधनं प्रपञ्च्यते'—इति ॥ ६ ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥



# श्रीमद्भगवद्गीता

## तृतीयोऽध्यायः.

शा॥तदेवं मुमुक्षुभिः प्राप्यतया वेदान्तोदितनिरस्तनिखिलाविद्यादिदोषगन्धानवधिका-

ता॥अथ गङ्गति विरभुस्याक्षान्मोक्षोपाय वक्ष्यमाण च तत्स्वरूप तत्प्राप्य च दर्शयन् द्वितीयाध्यायो-क्तार्थस्य साक्षान्मोक्षोपायत्वाभावेनापवर्गप्रधाने शास्त्रे सङ्गन्यमानशङ्का परिहर्तुमितिकर्तव्यतात्य प्रथयति—तदेवमिति । तत् शङ्करानुक्तप्रकारानिराकरणेन यथावत् द्वितीयाध्यायनिर्वाहादित्यर्थः । एवमिति स्वोक्तौचित्य निर्दिशति । 'ब्रह्मविदाप्नोति परं' 'परं ज्योतिरुपसम्पद्य' "परात्परं पुरुषमुपैति" इति हि

प पा॥१ तै आन १-१॥ † ब्रह्मवित् निरतिशयवृद्ध्याश्रयस्वरूपासक, पर सर्वेभ्य उत्कृष्ट समस्तकल्याणगुणाकर ब्रह्म, प्राप्नोतीत्यर्थं ; आवृत्त्यधिकरण-यायेन वेदनोपासनादिशब्दानामेकार्थत्वात् 'ब्रह्मवित्' इत्यत्र 'वित्' शब्दोऽप्युपासनपर इति द्रष्टव्यम् ॥

२ छा ८-३-४॥ † 'य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' इति॥ अस्यार्थ —सम्प्रसाद पूर्ववाक्यनिर्दिष्ट उपासको ना-म ; अयं शब्दस्सुषुप्तिस्थानवाचीनस्सन् तत्सम्बन्धा ज्जीव लक्षयति । अस्मात् शरीरात् हेयतया परिदृश्यमानात् शरीरात्, उत्थाय उत्क्रम्य, परं ज्योतिरुपसम्पद्य देशविशेषविशिष्ट परमात्मान प्राप्य, स्वेन रूपेण स्वस्यासाधारणापहतपाप्मत्वादिरूपेण अभिनिष्पद्यते । 'एष आत्मा,एतदमृतम्'इत्यनेन च्छन्दो पूर्ववाक्य 'परं ज्योतिरुपसम्पद्य'इति निर्दिष्टपरज्योतिश्शब्दितब्रह्मपरो, प्राप्यतया प्राधान्यात् अन्यत्राद्वितत्वाच्च—इति ॥

३. मुण्ड ३ २-८॥ † 'यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' ॥ यथेति—यथा गङ्गायमुनासरस्वत्यादिनद्यः स्वो पत्तिस्थानस्य प्रसना गङ्गायमुनादीनि नामानि शुक्लकृष्णादीनि च रूपाणि विहाय एकनामिव भजन्ते, तद्वदेव विद्वान् ब्रह्मोपासक, नामरूपाद्विमुक्त देवादिभेदजनामरूपादिविमुक्तस्सन्, परात्परम् 'अक्षरात्परतः परः' इति पूर्वनिर्दिष्ट, पुरुषं परं ब्रह्म, उपैति प्राप्नोतीत्यर्थ । यथा नदीसमुद्रजलयोर्भेदप्राकारप्रहाणमेव, नतु स्वरूपैक्यम्, एवमिहापीति भावम् ॥

४ तै आन. ७. अनु १ ॥ † रस 'रसो वै स' इति पूर्वनिर्दिष्टमानन्दस्वरूप ब्रह्म, अयम् आनन्दमयत्वविशिष्टब्रह्मोपासक, लब्ध्वा प्राप्य, आनन्दी भवति तदनुभवजनितानन्दवान् भवतीत्यर्थ । ततश्च तस्यानन्दस्य उपास्यत्वप्राप्यत्व युक्ते इति भाव । को ह्येवान्यात्क प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति' इत्यन्तो वाक्यशेषो विवक्षित, अस्यापि प्राप्यत्वोपास्यत्वोपपादकत्वात् । तदयमर्थ —यत् यदि, एष परमात्मा, आकाश अपरिच्छिन्न, आनन्द, न स्यात् न भवेत्, को ह्येवान्यात् क सांसारिकसुख प्राप्नुयात्, क प्राण्यात् को वा पुरुष प्रकृष्टमापवर्गिक सुख प्राप्नुयात्, हि अत, एष एव परमात्मैव आनन्दयाति सुख प्रापयतीत्यर्थ, अतस्तस्य सुखविधानहेतुत्वात्प्राप्यत्वमस्तीति भाव ॥

शा॥शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे, साङ्ख्ये बुद्धिः योगे

ता॥रयं लब्ध्वानन्दी भवति' 'परमं साम्यमुपैति' इत्यादिश्रुतिशतं 'कर्मकर्तृव्यपदेशाच्च' इत्यादिसूत्रगणं चाभिप्रेत्योक्तम्—**मुमुक्षुभिः प्राप्यतयेति।** मुमुक्षुभिरिति बहुवचनेन सर्वब्रह्मविद्यानिष्ठानां प्राप्यमेक-

**प्र-पा॥**१ मुण्ड. ३. १ ३॥ †'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' ॥ यदा यस्मिन् काले, उपासनकाल इति यावत्; पश्यः ब्रह्मदर्शी, उपासक इत्यर्थः; रुक्मवर्णं देदीप्यमानदिव्यमङ्गलविग्रहयुक्तम् 'आदित्यवर्णम्' इत्यादिश्रुतेः, कर्तारं जगत्कर्तारम्, ईशं जगदीशितारं, पुरुषं सर्वकल्पकं वासुदेवं, 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने' इति पाद्मोक्तेः, ब्रह्मयोनिं 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति निर्दिष्टाव्याकृतब्रह्मोपादानभूतम्, योनिशब्दस्योपादानपरत्वे 'यच्च योनिं हि गीयते' इति भूतं मानम्; यदा पश्यतीत्यन्वयः; तदा तस्मिन् काले विद्वान् उपासकः, पुण्यपापे, विधूय निरस्य, निरञ्जनः निरस्तप्रकृतिलेपः सन्, परमं साम्यमुपैतीत्यर्थः, अत्र साम्यशब्दः सादृश्यमभिधत्ते, न त्वैक्यम्, साम्यं तु समानगुणयोगित्वमेव, तथा वक्ष्यते—'मम साधर्म्यमागताः' इति ॥

२. शारी. १. २. ४॥ †अस्यार्थः—'एतमितः प्रेत्याभिसंभवितास्मि' इति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः; अतः प्राप्ता जीव उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति विज्ञायते—इति॥

**सं॥बुद्धिः इति च। तत्र 'प्रजहाति यदा कामान्' इति आरभ्य आ अध्यायपरिसमाप्तेः सा-ङ्ख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यम् उक्त्वा तन्निष्ठतयैव च कृतार्थता उक्ता 'एषा ब्राह्मी स्थितिः' इति। अर्जुनाय च 'कर्मण्येवाधिकारस्ते...मा ते सङ्गोऽस्त्वकर्मणि' इति कर्मैव कर्तव्यम् उक्तवान् योगबुद्धिम् आश्रित्य, न तत एव श्रेयःप्राप्तिम् उक्तवान्। तदेतत् आलक्ष्य पर्याकुलीकृतबुद्धिः अर्जुनः उवाच। कथं भक्ताय श्रेयोर्थिने यत् साक्षात् श्रेयःप्राप्तिसाधनं साङ्ख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारम्पर्येणापि अनैकान्तिकश्रेयःप्राप्तिफले नियुञ्ज्यात् इति युक्तः पर्याकुलीभावः अर्जुनस्य, तद्-नुरूपश्च प्रश्नः 'ज्यायसी चेत्' इत्यादिः, प्रश्नापाकरणवाक्यं च भगवतः युक्तं यथोक्त-विषये शास्त्रे ॥**

**केचित्तु—अर्जुनस्य प्रश्नार्थम् अन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं**

आ॥आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र।ज्ञानसाधनत्वेनाकर्म विनिन्द्य कर्म विधीयत उत्तराध्याये। कर्मणो ज्ञानमत्युत्तममित्यभिहितं भगवता 'दूरेण ह्यवरं कर्म' इत्यादौ।एवं

ज॥पूर्वोत्तराध्यायेभ्योऽस्य भेदं स्वस्मिन्नेकतां च दर्शयन्नेतदध्यायप्रतिपाद्यमर्थं पूर्वाध्यायार्थसङ्गतत्वेन विवक्षुस्तत्प्रतिपाद्यं तावदाह—**आत्मेति।** जीवेश्वरस्वरूपं साङ्ख्याख्यमित्यर्थः। **ज्ञानसाधनम्** आत्मज्ञानसाधनं योगाख्यम्। **पूर्वत्र** पूर्वस्मिन्नध्याये। नचैवं द्वितीयस्याध्यायस्यैक्यानुपपत्तिः, साधनस्यैव प्राचुर्यात्, प्रचुरेण च व्यपदेशात्। तथा च सप्तमादौ वक्ष्यति—साधनं प्राधान्येनोक्तमतीतैरध्यायैः—इति। आत्मस्वरूपमित्यादि तु प्रकरणभेदप्रदर्शनायोक्तमिति। एतत्सङ्गतत्वेन तृतीयाध्यायार्थमाह—**ज्ञानेति।** योगो द्विविधः कर्मसमाधिभेदात्। तत्र तावज्ज्ञानसाधनत्वेन **कर्म विधीयते** कर्तव्यमेवेति शाप्यते कैश्चन वाक्यैः, अकर्म कर्माकरणं विनिन्द्य। अस्मिन्नध्याये अकर्मनिन्दापि कर्मविध्यर्थत्वेनार्थना। तथाऽपि प्रकरणभेदार्थमेवमुक्तम्। ज्ञानसाधनत्वेनेति वदता मोक्षसाधनता निरस्ता। तेन प्रश्नप्रतिवचनापव्याख्यानमप्यपहस्तितम्। आनन्दवृद्ध्यर्थता त्वनुज्ञायत एव। बीजं प्रदर्शयन्प्रश्नवाक्यतात्पर्यमाह—**कर्मण इति।** आदि-

ता॥मिति द्योतयति।उपबृंहणीयानुरोधेन तदुपबृंहणार्थवर्णनाय वेदान्तोदितेत्युक्तम्।प्राप्त्युपयुक्त प्रकृतिपुरुषवैलक्षण्य सगुणनिर्गुणादिश्रुतिविषयव्यवस्थाम्, 'आनन्दादय. प्रधानस्य' 'अक्षरधियान्त्ववरोधः' इत्यादिसूत्रोक्तसर्वविद्योपास्यसाधारणाकार चाभिप्रेत्य निरस्तेत्यादिरुक्तम्। कारणबोधकवाक्यैकार्थ्ये सामान्यशब्दाना विशेषोपसहार, तत एव निमूर्तैक्यमात्यातिरेकव्यक्तयन्तरत्वनिरासम्, एक

प्र दा॥ * शा री ३ ३ ११ ॥ † 'सर्वाभेदादन्यत्रेमे' इति सूत्र त् 'अभेदात्' इत्यनुवर्तने; आनन्दादयो गुणा सर्वासु ब्रह्मविद्यासूपसहर्तव्या, प्रधानस्य गुणिनो ब्रह्मण सर्वासु विद्यास्वभेदात् सर्वासु परविद्यासु ब्रह्मैकमेवानुसन्धेय तेन—तैर्गुणैर्विना ब्रह्मस्वरूपानुसन्धानसंभवात्, ते च गुणास्तदयोऽनुसन्धेया —इति सूत्रार्थ ॥

७. शारी ३. ३ ३३ ॥ † 'अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्'॥ अक्षरधियाम् अक्षरमधिपनानामस्थूलत्वादिधियाम् 'एतद्वैतदक्षर गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घम्' इति श्रुति, सर्वासु विद्यासु, अवरोध सङ्ग्रहणम्, कुत ? सामान्यतद्भावाभ्या सर्वास्वक्षरस्य समानत्वात् ब्रह्मानुसन्धानान्तर्भावाच्च तासाम्, गुणाना प्रधाना नुवर्तित्व स्वभाव; औपसदवत् जामदग्न्यचतुरात्रपुरोडाशोपसद्गुणभूत 'अग्निर्हौत्र वेतु' इति मन्त्र सामवेदपठितत्वेन सामवेदस्वरनियतोऽपि प्रधानभूतोपसदनुगामित्वात् याजुर्वेदिकस्वरेणोपसद, याजुर्वेदिकोपासुत्वसम्बन्धी; तद्वदक्षरविद्यासम्बन्धितया अधीतत्वेन तद्विद्यानियता अपि प्रधानानुवर्तित्वस्वाभाव्यात् सर्वविद्यान्वयिन। तदुक्त प्रथमकाण्डे 'गुणमुख्यव्यतिक्रमे तदर्थत्वात्' (३. ३ ९) इत्यादिना ॥

दी॥वर्णयन्ति, यथा च आत्मना संबन्धग्रन्थे गीतार्थः निरूपितः तत्प्रतिकूलं च इह पुनः प्रश्नप्रतिवचनयोः अर्थं निरूपयन्ति। कथं? तत्र संबन्धग्रन्थे तावत्—सर्वेषाम् आश्रमिणां ज्ञानकर्मणोः समुच्चयः गीताशास्त्रे निश्चितः अर्थः इत्युक्तम्, पुनः विशेषितश्च यावज्जीवश्रुतिचोदितानि कर्माणि परित्यज्य केवलात् एव ज्ञानात् मोक्षः प्राप्यते इत्येतत् एकान्तेनैव प्रतिषिद्धम् इति।इह तु आश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानाम् एव कर्मणां परित्याग उक्तः। तत् कथम् ईदृशं विरुद्धम् अर्थम् अर्जुनाय ब्रूयात् भगवान्, श्रोता वा कथं विरुद्धम् अर्थं अवधारयेत् ॥

तत्र एतत् स्यात्—गृहस्थानामेव श्रौतस्मार्तकर्मपरित्यागेन केवलात् एव ज्ञानात् मोक्षः प्रतिषिध्यते न तु आश्रमान्तराणाम् इति एतदपि पूर्वोत्तरविरुद्धमेव। कथं? सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितः अर्थः इति प्रतिज्ञाय इह कथं तद्विरुद्धं केवलादेव ज्ञानात् मोक्षं ब्रूयात् आश्रमान्तराणाम् ॥

अथ मतं—श्रौतकर्मापेक्षया एतद्वचनं केवलादेव ज्ञानात् श्रौतकर्मरहितात् गृहस्थानां मोक्षः प्रतिषिध्यते इति, तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्म अविद्यमानवत् अनपेक्ष्य ज्ञानादेव केवलात् इति उच्यते इति। एतदपि विरुद्धम्। कथं? गृहस्थस्यैव स्मार्तकर्मणा समुच्चितात् ज्ञानात् मोक्षः प्रतिषिध्यते न तु आश्रमान्तराणाम् इति कथं विवेकिभिः शक्यम् अवधारयितुम्। किञ्च—यदि मोक्षसाधनत्वेन स्मार्तानि

आ॥ चेत्किमिति कर्मणि घोरे युद्धाख्ये नियोजयसि निवृत्तधर्मान्विनेत्याह—

जा॥पदेन'कृपणाः फलहेतवः'इत्यादेर्ग्रहणम्।घोरे रागद्वेषाद्युपेते। अलोभयन कर्मशब्देन काम्यकर्माभिप्रेतम्।निवृत्तधर्मान्—निष्कामधर्मान् यत्याश्रमविहिताच्छमदमादीन्।अत्र कर्मणि किमिति नियोजयसी-

रा॥ तिशयासंख्येयकल्याणगुणगणपरब्रह्मपुरुषोत्तमप्राप्त्युपायभूतवेदनोपासनध्यानादिश-

ता॥स्यैव जगदुपादाननिमित्तत्वम्,उदाहरिष्यमाणश्रुतौ'स उत्तमः पुरुषः'इत्युक्तिम्'उत्तमः पुरुषस्त्व-न्यः' इति वक्ष्यमाणप्रकरणार्थं च दर्शयितुं समाख्याद्वयमाह—परब्रह्मपुरुषोत्तमेति । ज्ञानकर्मसमु-च्चयान्यतरानुगृहीतान्यतरैकैकमात्रपक्षाणां निराकरणाय 'नान्यः पन्थाः' 'नायमात्मा' इत्यादिनिषेधता-त्पर्यं वेदनादिसामान्यशब्दानां भक्तिलक्षणचरमविशेषे पर्यवसानं चाभिप्रेत्योक्तम्—उपायभूतेत्यादि । तदैकान्तिकेत्यत्र तत्क्रतुन्यायसिद्धोपास्यप्राप्यैक्यद्योतनाय तच्छब्दः । एकत्रान्तो निश्चय एकान्तः ; तन्निबन्धना भक्तिरैकान्तिकी ; ऐकान्तिकत्वं नाम देवतान्तरफलान्तरपरित्यागेन प्राप्यप्रापकभूतैकनिष्ठ-त्वम् । उक्तं च मोक्षधर्मे—'ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः। प्रतिबुद्धा न सेवन्ते य-स्मात्परिमितं फलम्' इत्यादि। स्मरन्ति च—'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इति । वक्ष्यति चात्रैव 'भक्त्या त्वनन्यया' 'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी' इत्यादि । विनाशाभावोऽ-त्यन्तशब्देन विवक्षितः । अतोऽत्र फलदशायामप्यनिवर्त्यत्वमात्यन्तिकत्वम् । एकैव भक्तिर्बहुल-बहुलतरबहुलतमादिभावेनोपायदशामारभ्य फलदशापर्यन्तं प्रचीयमाना निरतिशयतामापद्यते । तद्य-

प्र-पा॥ १. छा. ८. १२. ३ ॥ स. उपसंपादनी-यत्वेन पूर्वप्रस्तुत., उत्तम. पुरुष इत्यर्थ ॥

२. गी १६. १७ ॥

३. पुरुषम् ॥ अयनाय मोक्षाय, अन्यः भक्तिमत्पुरुषवेदनव्यतिरिक्तः, पन्था. उपायः न विद्यत इत्यर्थ ॥

४. कठ. १. २. २३ ॥

५. भा.मो.३४२-३६॥ याश्चान्या देवताःस्मृताः, ताश्च, प्रतिबुद्धा 'प्रतिबुद्धस्तु मोक्षभाक्' इत्यादिना प्रतिपादिता मुमुक्षवः, यस्मात् कारणात्, तेभ्यः प्राप्यं फल परिमितम्, तत एवेत्यर्थ. ॥

६. नारदपरिव्राजकोपनिषदि. ३. उपदेशे ॥

७. गी. ११. ५४ ॥

८. गी. १३. १० ॥

शां॥कर्माणि ऊर्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापि इष्यतां स्मार्तैरेव समुच्चयो न श्रौतैः ॥

अथ श्रौतैः स्मार्तैश्च गृहस्थस्यैव समुच्चयः मोक्षाय, ऊर्ध्वरेतसां तु स्मार्तकर्म-मात्रसमुच्चितात् ज्ञानात् मोक्ष इति । तत्र एवं सति गृहस्थस्य आयासबाहुल्यं, श्रौतं स्मार्तं च बहुदुःखरूपं कर्म शिरसि आरोपितं स्यात् ॥

अथ गृहस्थस्यैव आयासबाहुल्यकरणात् मोक्षः स्यात् न आश्रमान्तराणां श्रौतनि-त्यकर्मरहितत्वात् इति । तदपि असत् , सर्वोपनिषत्सु इतिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसंन्यासविधानात् , आश्रमविकल्पसमुच्चयविधानाच्च श्रुति-स्मृत्योः ॥

सिद्धः तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयः—न, मुमुक्षोः सर्वकर्मसंन्यास-विधानात् । 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति'

आ॥त्येकः प्रश्नः,घोरइति द्वितीय इत्यवधेयम्।इदमुक्तं भवति—आश्रमत्रयविहितानि यज्ञादीनि। युद्धा-दीनिच कर्माणि काम्यान्येव,फलश्रवणात् सर्वे एते पुण्यलोका भवन्तीत्यादि।तथाऽत्रापि'हतो वा प्राप्स्य-सि स्वर्गम्' इत्यादि। चतुर्थाश्रमविहितानि शमादीन्यकाम्यानि फलाश्रवणात्, 'शान्तो दान्तः' इत्युप-क्रम्य आत्मानं पश्येत्' इति ज्ञानार्थत्वश्रवणाच्च । ज्ञानं च काम्यात्कर्मणोऽत्युत्तममित्यभिहितम् । ततश्च

या॥न्द्वयाच्यतदैकान्तिकात्यन्तिकभक्तिं यत्तु तदङ्गभूत*'य आत्माऽपहतपाप्मा'इत्यादिप्रजापतिवाक्योदितं प्राप्तुरात्मनो याथात्म्यदर्शनं तन्नित्यताज्ञानपूर्वकासङ्गकर्मनिष्पाद्यज्ञानयोगसाध्यमुक्तम्।प्रजापतिवाक्ये हि दहरवाक्योदितपरविद्याशेषतया प्राप्तुरात्मनस्स्वरूपदर्शनं *'यस्तमात्मानमनुविद्य विजानाति' इत्युक्त्वा जागरितस्वप्नसुषुप्त्यतीतं प्रत्यगात्मस्वरूपमशरीरं प्रतिपाद्य†'एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंप

ता॥ था शारीरकेऽपीतिकर्तव्यताचिन्तनात्तस्माद्भक्तिरङ्गिनी स्वरूपतो विशोधिता, तद्वदङ्गमपीत्यभिप्रायेणाह —भक्तिं यत्तु तदङ्गभूतमित्यादि । अङ्गताया प्रमाणमाह—यआत्मेति । प्राप्तुरिति परव्यावृत्त्यर्थम् । आत्मदर्शनस्य परविद्याङ्गताया प्रमाणं प्रपञ्चयति—प्रजापतीति । फलवत्सन्निधानफलं तदङ्गम् । तत्र सन्निधिस्तावदुच्यते—दहरेति । प्रत्यगात्मविषयत्वव्यक्त्यर्थं तत्प्रकरणोदितप्रत्यगात्मपरिशोधनप्रकारमाह—जागरितेति । प्रजापतिर्हि क्रमाज्जागरिताद्यवस्थात्रयविशिष्टं प्रत्यगात्मानमुपदिदेश। इन्द्रस्तु 'नाहमत्र भोग्यं पश्यामि'इति तत्रतत्र निर्गुण पुनः पुनः पप्रच्छ, ततश्च शुश्रूषोर्योग्यतां विज्ञाय प्रजापतिः 'अशरीरं वाव सन्तम्' इति परिशुद्धं स्वरूपमुक्तवान् । अनङ्गत्वसिद्ध्यर्थं दहरविद्यातः पृथक्फलाभावं तदेकफलत्वं चाह—एवमेवेति । एतदुक्तं भवति—प्रजापतिवाक्यं हि दहरविद्याप्रकरणगतम्, न च प्रजापतिवाक्योदितप्रत्यगात्मदर्शनस्य निःश्रेयसातिरिक्तं फलमुक्तम्, न च केवलप्रत्यगात्मदर्शनं निःश्रेयससाधनं 'नान्यः पन्था.' इत्यादिविरोधात् , तत्क्रतुन्यायाच, नचात्र जीवप्राप्तिरेव फलमुच्यते, 'परं ज्योतिः' इति विशेषणात् 'नारायण परो ज्योतिः' इत्यादिना च पर-

प्र पा॥* छा ८-७ १॥ †'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति इति ह प्रजापतिरुवाच '॥ पूर्वोक्तदहरविद्याङ्गभूता प्रत्यगात्मविद्या प्रस्तौति—यआत्मेति॥ आत्मा जीवात्मा, अपहतपाप्मा पापरहित , शुद्धस्वभाव इति यावत् , विजरः जरारहित , विजिघत्सः बुभुक्षारहित , एतादृशं जीवात्मानमनुविद्येति वा यथार्थज्ञानमुच्यते 'विजानाति' इति ध्यानम् इति श्रुतिसिद्धान्ते भाषितम् ॥

‡छा ८ १२ २ ॥

१ छा ८ ९ २ ॥ † अत्र प्रतिबिम्बात्मनि, भोग्यम् अमृतत्वाभयत्वादिकं भोग्यम् , न पश्यामि , एतच्छरीरविनाशान्धत्वादिदोषप्रयुक्तान्धत्वादिदोषाश्रयत्वात् ॥

२ छा ८ १२ १ ॥ † वावशब्दः प्रसिद्धौ, 'नप्रियाप्रिये स्पृशतः' इति वाक्यशेषः , कर्मारब्धदेहवियुक्तं तिष्ठन्तं प्रियाप्रिये कर्मफलभूते सुखदुःखे, न स्पृशतः न प्राप्नुतः ॥

३ पुण्यम् ॥

४. पुरुषम् ॥

श॥ 'तस्मात् न्यासम् एषां तपसाम् अतिरिक्तम् आहुः'"न्यास एवात्यरेचयत्' इति 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति च 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्याद्याः श्रुतयः ॥

'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज। उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज॥ संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रि-

ज॥क्राम्ये कर्मणि युद्धे'युद्ध्यस्व भारत'इति नियोजनमयुक्तम्,किन्तु चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेति नियोक्तव्यम् । ननु युद्धमपि कर्मबन्धं प्रहास्यसीत्युक्तत्वाज्ज्ञानार्थं भवतीति मतम् , तदा व्यामिश्रेण

रा॥द्य स्वेन रूपेणाभिनिष्पद्यते' इति दहरविद्याफलेनोपसंहनम् । अन्यत्रापि *'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इत्येवमादिषु देवं मत्वेति विधीयमानपरविद्याङ्गतया 'अध्यात्मयोगाधिगमेन' इति प्रत्यगात्मज्ञानमपि विधाय। 'न जायते म्रियते

ता॥ज्योतिश्शब्दस्य परमात्मविषयत्वप्रसिद्धेः दहरविद्यायां पूर्वत्रापि तस्यैव परंज्योतिश्शब्देनोक्तेः उपसंपत्तुरुसंपत्तव्याद्भेदस्य च स्वरससिद्धेः प्रत्युगात्मनः परब्रह्मसाम्यापन्नपुरुषलभ्यनिरतिशयस्वच्छन्दभोगनिर्दुःखताद्यभिधानाच्च । अतः प्रधानफलस्यैवात्र तदङ्गेऽपि निर्देशात्परविद्याङ्ग प्रत्यगात्मदर्शनम्—इति । अथ 'न जायते म्रियते' इत्यादिभिः कतिपयपदावापोद्वापभेदितैः श्लोकैः प्रत्यभिज्ञातार्थतया भगवद्गीताप्रबन्धममानाकारां भक्तिशब्दकण्ठोक्तिमतीं कठवल्लीमुपनिषदमुक्तस्यार्थस्य निर्विशङ्कं विशदीकरणायोदाहरति —अन्यत्रापीति । साङ्गफलप्रधानविधिवाक्ये प्रधानांशमङ्गांशं च विभजते—देवं मत्वेति।अध्यात्मयोगाधिगमेनेत्यत्र साक्षात्परविषययोगपरत्वे मत्वेत्यस्य साध्यत्वायोगात्, शास्त्रजन्यज्ञाने योगशब्दस्यावाचकत्वात्, मत्वेत्यत्र शास्त्रेणेत्यध्याहृत्य तद्युक्तमान्वयानौचित्याज्जीवस्यापि परवत्तत्रैव विवरिष्यमाणत्वाच्च जीवात्मज्ञानयोगपरत्वं युक्तम् । अङ्गतया विहितस्य ज्ञानस्य ज्ञेयैकनिरूपणीयस्वरूपस्यापेक्षितज्ञेयस्वरूपशोधनोपदेशमाह—नजायत इति। एवं प्रथमषट्कोपबृंहणीयाद्य उक्तः। यथा सङ्ग्-

प्र·पा॥*कठ १-२ १२॥ †''तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्म. जहाति'' । दुर्दर्शं दुःखेन द्रष्टुं शक्यं, गूढं गुणमयतिरोहितस्वभावं, अनुप्रविष्टं शरीरानुप्रविष्टं,तथापि गुहाहितं हृदयगुहागतं, गह्वरेष्ठं तदन्तर्गते वस्तुनि स्थितं, जीवान्तः स्थितमित्यर्थः, पुराणम् अनादिम्, अध्यात्मयोगाधिगमेन—विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समवधानमध्यात्मयोगः, तेन योऽयमधिगमः जीवात्मज्ञानं तेन हेतुना, देवं परमात्मानं मत्वेत्यर्थः, जीवात्मज्ञानस्य परमात्मज्ञानहेतुत्वादिति भावः, हर्षशोकौ जहाति विषयलाभालाभप्रयुक्तहर्षशोकौ जहातीत्यर्थः ॥

†. कठ. १. २. १८ ॥

ता॥ता' इति बृहस्पतिः *'कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः' इति शुकानुशासनम् । इहापि च 'सर्वकर्माणि मनसा संन्यस्य' इत्यादि ॥

मोक्षस्य च अकार्यत्वात् मुमुक्षोः कर्मानर्थक्यम् । नित्यानि प्रत्यवायपरिहारार्थानि इति चेत्—न, असंन्यासिविषयत्वात् प्रत्यवायप्राप्तेः । न हि अग्निकार्याद्यकरणात् संन्यासिनः प्रत्यवायः कल्पयितुं शक्यः यथा ब्रह्मचारिणाम् असंन्यासिनामपि । न तावत् नित्यानाम् अकरणात् अभावादेव भावरूपस्य प्रत्यवायस्य उत्पत्तिः कल्पयितुं शक्या, 'कथम् असतः सत् जायेत' इति असतः सज्जन्मासंभवश्रुतेः। यदि विहिताकरणात् असंभाव्यमपि प्रत्यवायं ब्रूयात् वेदः, तदा अनर्थकरः वेदः अप्रमाणम् इत्युक्तं स्यात्, विहितस्य करणाकरणयोः दुःखमात्रफलत्वात् । तथा च कारकं शास्त्रं न ज्ञापकम् इति अनुपपन्नार्थं कल्पितं स्यात् । न च एतत् इष्टम् । तस्मात् न संन्यासिनां कर्माणि । अतो ज्ञानकर्मणोः समुच्चयानुपपत्तिः ॥

ज॥वाक्येन बुद्धिमोहनमित्यापद्यते। अथैवं मतम् युद्धादीनि कर्माणि काम्यान्यकाम्यानि च,तत्र यः सकामस्तं प्रति'हतो वा'इत्याद्युक्तम्;यःपुनर्ज्ञानार्थी तमुद्दिश्य'कर्मण्येवाधिकारः' इत्युक्तम्।तत्र का व्यामिश्र-

*' परमात्मनियो रक्तो विरक्तोऽपरमात्मनि। सर्वेषणाविनिर्मुक्तस्स भैक्षं भोक्तुमर्हति' इत्यधिकः पाठः॥

रा॥ या विपश्चित्'इत्यादिना प्रत्यगात्मस्वरूपं विशोध्य*'अणोरणीयान्'इत्यारभ्य'महान्तं

---

ता॥इति 'ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते। आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते'इति। अथ द्वितीयतृतीयषट्कोपक्षेपणीयार्थमुदाहरति—अणोरणीयानित्यादिना । इदमपि सङ्गृहीतम्—'मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये । ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः । प्रधानपुरुषव्यक्तसर्वेश्वरविवेचनम् । कर्मधीर्भक्तिरित्यादिः पूर्वशेषोऽन्तिमोदित 'इति।अणोरणीयानित्यादेरर्थमाह पर-

---

प्र पा॥ *कठ १-२-२०॥ †'अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥२०॥ आसीनो दूरं व्रजति शयानो याति सर्वतः । कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥ अशरीरं शरीरेषु अनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति' ॥ २२ ॥ प्रत्यगात्मान्तर्यामिणं परमात्मनः स्वरूपमाह—अणोरणीयानित्यादिना ॥ अणोः सर्वचेतनापेक्षया सूक्ष्मात् चेतनात् अणुतरः ततोऽपि सूक्ष्मः, तदन्तःप्रवेशयोग्य इत्यर्थः; महतो महीयान् आकाशादेरपि महत्तरः, स्वाव्याप्तवस्तुरहित इत्यर्थः; अस्य जन्तोः 'न जायते' इति मन्त्रद्वयनिर्दिष्टस्य प्रत्यगात्मनः आत्मा अन्तः प्रविश्य नियन्तेत्यर्थः; गुहायां हृदये, निहितः स्थित इत्यर्थः; तं तादृशं परमात्मानम्, अक्रतुः काम्यकर्मादिरहितः सन्, धातुः धारकस्य परमात्मनः प्रसादात् आत्मनो महिमानं महत्त्वमपादकं स्वसार्वज्ञ्यादिगुणाविर्भावहेतुभूतं परमात्मानं, यदा पश्यति, तदा वीतशोको भवतीत्यर्थः ॥ २० ॥ 'धातुः प्रसादात्' इति प्रसादशब्दितभगवदनुग्रहं विना यस्य परमात्मनस्त्वमन्यैर्नालौकिकतया दुरधिगममिति दर्शयति—आसीन इति ॥ सर्वात्मकत्वेन इतरत्र विरुद्धतया प्रतीयमाना अपि आसीनत्वदूरगन्तृत्वादिधर्मा अवतारा तत्र सन्तीति भावः; मदामदं देवं हर्षाहर्षविरुद्धधर्मसंयुतं तम्, मदन्यः परमात्मप्रसादानुगृहीतमादृशजनाद्न्यः को वा ज्ञातेत्यर्थः ॥ २१ ॥ अशरीरं कर्मकृतशरीररहितम्, अनवस्थेषु अस्थिरेषु शरीरेषु, नित्यत्वेन तत्र स्थितम्, महान्तं विभुं महावैभवशालिनम्, आत्मानं परमात्मानं मत्वा धीरो न शोचतीत्यर्थः ॥ २२ ॥

१ गी म २ ॥

२ गी म. ३४ ॥

---

शा॥ 'ज्यायसी चेत् कर्मणस्ते मता बुद्धिः' इति अर्जुनस्य प्रश्नानुपपत्तेश्च । यदि हि भगवता द्वितीये अध्याये ज्ञानं कर्म च समुच्चित्य त्वया एकेन अनुष्ठेयम् इति उक्तं स्यात्, ततः अर्जुनस्य प्रश्नः अनुपपन्नः 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिः' इति । अर्जुनाय चेत् बुद्धिकर्मणी त्वया अनुष्ठेये इत्युक्ते या च कर्मणो ज्यायसी बुद्धिः सापि उक्तैव इति 'तत् किं कर्मणि घोरे मां नियोजयसि केशव' इति उपालम्भो वा प्रश्नो वा न कथंचन उपपद्यते । न च अर्जुनस्यैव ज्यायसी बुद्धिः न अनुष्ठेया इति भगवता उक्तं पूर्वम् इति कल्पयितुं युक्तम्, येन 'ज्यायसी चेत्' इति विवेकतः प्रश्नः स्यात् । यदि पुनः एकस्य पुरुषस्य ज्ञानकर्मणोः विरोधात् युगपत् अनुष्ठानं न सम्भवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वम् उक्तं स्यात्, ततः अयं प्रश्नः उपपन्नः 'ज्यायसी चेत्' इत्यादिः । अविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोः भगवतः प्रतिवचनं न उपपद्यते । न च अज्ञाननिमित्तं भगवत्प्रतिवचनं कल्पनीयम् । अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्म-

---

ज॥तेति तथाऽपि युद्धेषु निवृत्तिलक्षणेषु यत्याश्रमधर्मेषु सत्सु वैकल्पिकेषु नियोजनमयुक्तमेव,तत्र मनोविक्षेपाभावात् अत्र तद्भावादिति । किं च कामक्रोधादीनां नरकफलत्वमुक्तम्; युद्धे च कामादयोऽवर्ज-

रा॥विभुमात्मानं मत्वा धीरो न शोचति'*'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यादिभिः परस्वरूपं तदुपासनमुपासनस्य च भक्तिरूपतां प्रतिपाद्य †'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इतिपरविद्याफलेनोपसंहृतम् । अतः परमध्यायचतुष्टयेनेदमेव प्राप्तुः प्रत्यगात्मनो दर्शनं ससाधनं प्रपञ्चयति—

ता॥स्वरूपमिति । महान्तं विभुमित्याद्युक्तमाह—तदुपासनमिति। नायमात्मेत्यस्याभिप्रेतमाह—उपासनस्येति । केवलमनननिदिध्यासनश्रवणनिषेधमुखेन भक्त्याख्यवरणीयताहेतुगुणविशेषविधिपरमिदं वाक्यमिति शारीरकभाष्यादिषु विशदं व्याख्यानम् । 'मत्वा धीरो हर्षशोकौ जहाति' 'मत्वा धीरो न शोचति' इत्युक्तस्यैव परविद्याफलस्योपसंहारेऽपि विशदोपदेशं प्रत्यगात्मज्ञानस्यैतदेकान्तत्वप्रदर्शनायाह—विज्ञानेति । एवमुपक्रमोपसंहारादिभिः परविद्यामयेऽस्मिन् प्रकरणे 'अध्यात्मयोगाधिगमेन देवं मत्वा' इति परमात्मज्ञानकारणतया निर्दिष्टं पृथक्फलरहितं च प्रत्यगात्मज्ञानं परविद्याङ्गतया सिद्धमिति तदुपबृंहणतया प्रतीयमानेऽस्मिन्नपि प्रकरणे तथात्वमध्यवसानव्यमित्युक्तं भवति । एवं सङ्क्षेपोक्ति-पर्यवसाने प्रतिपत्तिसौकर्याय कुमतिमतभङ्गाय चात्मज्ञानस्य वक्ष्यमाणपरविद्याङ्गतामुपपाद्योक्तविस्तररूपस्य प्रथमषट्कशेषस्योक्तादेन सङ्गतिमाह—अतःपरमिति । एकस्मिन्नेव षट्के सङ्ग्रहविस्तररूपेण पेटिकाभेदप्रवृत्तिः । इदमेवेत्यवधारणेनाध्यायचतुष्टये परमात्मप्रसक्ततद्ध्यानादेः 'युक्त आसीत मत्परः' इति पूर्ववदेवात्मदर्शनशेषत्वमवगमयति । पुनरुक्तिपरिहाराय प्रपञ्चयतीत्युक्तम् । सप्रयोजनत्वाय प्रपञ्चनप्रकारमाह—ससाधनमिति ॥

प्र·पा॰*कठ १-२-२३॥†ईदृशात्मप्राप्त्युपायमाह—नायमात्मेति॥ अयमात्मा पूर्ववाक्यनिर्दिष्ट परमात्मा, प्रवचनेन प्रवचनफलमननेन, न लभ्यः; बहुना श्रुतेन बहुना श्रवणेन,न लभ्य ; न मेधया केवलभक्त्या च, न लभ्य', एष, परमात्मा, यं जीवात्मानं, वृणुते, तेन जीवात्मना, लभ्य., एष परमात्मा, तस्य भगवत्प्रियस्य जीवात्मन , स्वां स्वीया, तनूम् अप्राकृतदिव्यमङ्गलविग्रहं, विवृणुते प्रकाशयति ॥

कठ. १-३-९ ॥ †'स तु तत्पदमाप्नोति' इत्युक्तं पदं किमित्यत्राह—विज्ञानेति ॥ विज्ञानसारथि., समीचीनज्ञानसारथि , मन.प्रग्रहवान् प्रगृहीतमना. समाहितचित्तस्सन् शुचि नर. विद्वान् य', स , अध्वन: पारं संसाराध्वपारभूतं तत् विष्णोः व्यापनशीलस्य परमं पदम् उत्कृष्टं स्थानं वैकुण्ठमिति यावत्, वेदान्तसारे (१-२-१२,) स्थानपरत्वेनापि व्याख्यातत्वात्, अस्य स्वरूपपरत्वमप्यन्यत्र व्याख्यातम्, आप्नोति प्राप्नोतीत्यर्थं ॥

१. कठ १-२-१२ ॥
२. कठ. १-२-२२ ॥
३. गी. २-६१ ॥

श॥निष्ठयोः भगवतः प्रतिवचनदर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः ॥

तस्मात् केवलादेव ज्ञानात् मोक्षः इत्येषः अर्थः निश्चितः गीतासु सर्वोपनिषत्सु च॥

ज्ञानकर्मणोः 'एकं वद निश्चित्य' इति च एकविषयैव प्रार्थना अनुपपन्ना उभयोः संभवे । 'कुरु कर्मैव तस्मात्त्वम्' इति च ज्ञाननिष्ठासंभवम् अर्जुनस्य अवधारणेन दर्शयिष्यति ॥

ज॥ नीयाः; ततोऽपि तत्र नियोजनमयुक्तम्। नन्वस्योत्तर 'सुखदुःखे समे कृत्वा' इत्युक्तम्;सत्यं तथाऽपि रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्स्वशक्यानुष्ठाने युद्धे नियोजनमयुक्तमेवेति ॥

अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १

व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २

रा॥यदि कर्मणो बुद्धिरेव ज्यायसीति ते मता, किमर्थं तर्हि घोरे कर्मणि मां नियोजयसि । एतदुक्तं भवति—ज्ञाननिष्ठैवात्मावलोकनसाधनम्; कर्मनिष्ठा तु तस्याः निष्पादिका; आत्मावलोकनसाधनभूता च ज्ञाननिष्ठा सकलेन्द्रियमनसां शब्दादिविषयव्यापारोपरतिनिष्पाद्येत्यभिहिता । इन्द्रियव्यापारोपरतिनिष्पाद्यमात्मावलोकनं चेत्सिषाधयिषितं सकलकर्मनिवृत्तिपूर्वकज्ञाननिष्ठायामेवाहं नियोजयितव्यः; किमर्थं घोरे कर्मणि सर्वेन्द्रि-

ता॥अत्रार्जुनः प्रागेव समरव्यापारविरतियाम्नायन्नितः कर्मयोगज्ञानयोगाख्यप्रवृत्तिनिवृत्त्यात्मकसाधनोपदेशे निवृत्त्युपदेशाशासिकश्चोत्रमुखेन पृच्छति—ज्यायसीति । प्रथमश्लोकस्यान्वयं तावदाह—यदीति । कर्मणो बुद्धिर्ज्यायसीति कुत्रोपदिष्टम्? 'दूरेण ह्यवरं कर्म बुद्धियोगात्' इत्यादि तु बुद्धिविशेषविशिष्टकर्मयोगपरमिति व्याख्यातम्; ज्यायस्त्वं च किंरूपमिहाभिमतम्? । बुद्धेर्ज्यायस्त्वे च कर्मणि यथाधिकारं नियोगस्य को दोषः । घोरशब्दश्च भयङ्करपर्यायः । न च कर्मयोगो भयङ्करः । किंशब्दश्चात्र प्रश्नपरो वा प्रतिक्षेपपरो वेत्यादिकमाशङ्क्याह—एतदुक्तमिति । तत्र बुद्धेर्ज्यायस्त्वप्रकारं पूर्वं तदुक्तिप्रकारं चाह—ज्ञाननिष्ठैवेति । स्थितप्रज्ञताप्रकरणे कर्मणो ज्ञाननिष्ठाहेतुत्वमुक्तम् । ज्ञाननिष्ठाया एवचात्मावलोकनहेतुत्वम् । ततश्च अव्यवधानाद्बुद्धिर्ज्यायसीति यथाधिकारं नियोगानर्हत्वाय ज्ञाननिष्ठानिष्पादनस्य कर्मप्रत्यनीकरूपत्वमुक्तं प्रकटयति—आत्मेति । 'यदा संहरते' इत्याद्युक्तं स्मारयति—सकलेन्द्रियेत्यादिना । किंशब्दस्य प्रतिक्षेपपरत्वं ज्यायसीचेदित्यत्र चेच्छब्दस्य निश्चितविषयत्वं चाभिप्रेत्य फलितमाह—इन्द्रियव्यापारेति । सकलकर्मेत्यसङ्गकर्मसङ्ग्रहणपरम् । किमर्थमिति । न तावत् स्वप्रयोजनार्थं, परिपूर्णत्वात्, न च सांसारिकफलप्रदानार्थम्, जनार्दनस्य जनिनिरासकस्य तत्र तन्निवर्तनस्वाभाव्यात्; नापि भूभारभूतधार्तराष्ट्रादिवधनिमित्तकृतमद्विप्रलम्भार्थम्, प्रपन्नं मां प्रति केशवस्य ब्रह्मरुद्रादिपितुस्ते तदनौचित्यात्; नापि फलशैघ्र्यार्थं, पारम्पर्यस्य पूर्वमुपदिष्टत्वात् । नच सौकर्यार्थम्, अकरणनिमित्तप्रत्यवायपरिहारार्थं वा, सकलेन्द्रियव्यापाररूपत्वेन तदुपरतिनिष्पाद्यात्मावलोकनविरोधितया मुमुक्षोर्घोरत्वात्; नच लोकसङ्ग्रहार्थं, लोकस्यापि यथावस्थिताकारोपदेशस्यैवोचितत्वात् । अतो भवतः प्राणसमतया भवतैवोद्बोधितं मा भवदनभिमते कर्मणि

शा॥ज्यायसी चेत् इति ॥ ज्यायसी श्रेयसी चेत् यदि कर्मणः सकाशात् ते तव मता अभिप्रेता बुद्धिः ज्ञानं हे जनार्दन । यदि बुद्धिकर्मणी समुच्चिते इष्टे तदा एकं श्रेयःसाधनम् इति कर्मणो ज्यायसी बुद्धिः इति कर्मणः अतिरिक्तकरणं बुद्धेः अनुपपन्नम् अर्जुनेन कृतं स्यात्; न हि तदेव तस्मात् फलतः अतिरिक्तं स्यात् । तथा च, कर्मणः श्रेयस्करी भगवता उक्ता बुद्धिः, अश्रेयस्करं च कर्म कुरु इति मां प्रतिपादयति, तत् किं कारणम् इति भगवत उपालम्भमिव कुर्वन् तत् किं कस्मात् कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशव इति च यत् आह तच्च न उपपद्यते । अथ स्मार्तेनैव कर्मणा समु-

रा॥विभुमात्मानं मत्वा धीरो न शोचति'*'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यादिभिः परस्वरूपं तदुपासनमुपासनस्य च भक्तिरूपतां प्रतिपाद्य †'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इतिपराविद्याफलेनोपसंहृतम्। अतः परमध्यायचतुष्टयेनेदमेव प्राप्तुः प्रत्यगात्मनो दर्शनं ससाधनं प्रपञ्चयति—

ता॥स्वरूपमिति। महान्तं विभुमित्याद्युक्तमाह—तदुपासनमिति। नायमात्मेत्यस्याभिप्रेतमाह—उपासनस्येति। केवलमनननिदिध्यासनश्रवणनिषेधमुखेन मन्तव्याद्यावरणीयतादिहेतुगुणविशेषविधिपरमिदं वाक्यमिति शारीरकभाष्यादिषु विशदं व्याख्यातम्। 'मत्वा धीरो हर्षशोकौ जहाति' 'मत्वा धीरो न शोचति' इत्युक्तस्यैव परविद्याफलस्योपसंहारेऽपि विशदोपदेशः प्रत्यगात्मज्ञानस्यैतदेकफलत्वप्रदर्शनायाह—विज्ञानेति। एवमुपक्रमोपसंहारादिभिः परविद्यामयेऽस्मिन् प्रकरणे 'अध्यात्मयोगाधिगमेन देवं मत्वा' इति परमात्मज्ञानकारणतया निर्दिष्टं पृथक्फलरहितं च प्रत्यगात्मज्ञानं परविद्याङ्गतया सिद्धमिति तदुपबृंहणतया प्रतीयमानेऽस्मिन्नपि प्रकरणे तथात्वमध्यवसातव्यमित्युक्तं भवति। एवं सङ्क्षेपोक्तिपर्यवसाने प्रतिपत्तिसौकर्याय कुमतिमतभङ्गाय चात्मज्ञानस्य वक्ष्यमाणपरविद्याङ्गतामुपपाद्योक्तविस्तररूपस्य प्रथमषट्कशेषस्योक्ताद्येन सङ्गतिमाह—अतःपरमिति। एकस्मिन्नेव षट्के सङ्क्षेपविस्तररूपेण पेटिकाभेदप्रवृत्तिः। इदमेवेत्यवधारणेनाध्यायचतुष्टये परमात्मप्रसङ्गतद्ध्यानादेः 'युक्त आसीत मत्परः' इति पूर्ववदेवात्मदर्शनशेषत्वमवगमयति। पुनरुक्तिपरिहाराय प्रपञ्चयतीत्युक्तम्। सप्रयोजनत्वाय प्रपञ्चनप्रकारमाह—ससाधनमिति॥

प्र॰पा॰*कठ १-२-२३॥†ईदृशात्मप्राप्त्युपायमाह—नायमात्मेति॥ अयमात्मा पूर्ववाक्यनिर्दिष्ट परमात्मा, प्रवचनेन मननफलमननेन, न लभ्यः; बहुना श्रुतेन बहुना श्रवणेन, न लभ्यः; न मेधया केवलभक्त्या च, न लभ्य, एष परमात्मा, यं जीवात्मानं, वृणुते, तेन जीवात्मना, लभ्य, एष परमात्मा, तस्य भगवत्प्रियस्य जीवात्मनः, स्वां स्वीयां, तनूं असाधारणदिव्यमङ्गलविग्रहं, विवृणुते प्रकाशयति॥

कठ. १-३-९॥ †'स तु तत्पदमाप्नोति' इत्युक्त पदं किमित्यत्राह—विज्ञानेति॥ विज्ञानसारथि, समीचीनज्ञानसारथि, मन प्रग्रहवान् प्रगृहीतमना मनःप्रभृतिनियन्ता शुचिः नरः विद्वान् सः, सः, अध्वनः पारं संसाराध्वपारभूतं तत् विष्णोः व्यापनशीलस्य परमं पदम् उत्कृष्टं स्थानं वैकुण्ठमिति यावत्, वेदान्तसारे (१-२-१२,) स्थानपरत्वेनापि व्याख्यातत्वात्, अस्य स्वरूपपरत्वमप्यन्यत्र व्याख्यातम्, आप्नोति प्राप्नोतीत्यर्थः॥

१. कठ. १-२-२२॥
२. कठ. १-२-२२॥
३. गी. २-६१॥

दे॥निष्ठयोः भगवतः प्रतिवचनदर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः॥

तस्मात् केवलादेव ज्ञानात् मोक्षः इत्येषः अर्थः निश्चितः गीतासु सर्वोपनिषत्सु च॥

ज्ञानकर्मणोः 'एकं वद निश्चित्य' इति च एकविषयैव प्रार्थना अनुपपन्ना उभयोः संभवे। 'कुरु कर्मैव तस्मात्त्वम्' इति च ज्ञाननिष्ठासंभवम् अर्जुनस्य अवधारणेन दर्शयिष्यति॥

ज॥ नीयाः; ततोऽपि तत्र नियोजनमयुक्तम्। नन्वस्योत्तरं 'सुखदुःखे समे कृत्वा' इत्युक्तम्; सत्यं तथाऽपि रागादिप्रमक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्स्वशक्यानुष्ठाने युद्धे नियोजनमयुक्तमेवेति॥

अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १

व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २

रा॥यदि कर्मणो बुद्धिरेव ज्यायसीति ते मता, किमर्थं तर्हि घोरे कर्मणि मां नियोजयसि । एतदुक्तं भवति—ज्ञाननिष्ठैवात्मावलोकनसाधनम्, कर्मनिष्ठा तु तस्याः निष्पादिका; आत्मावलोकनसाधनभूता च ज्ञाननिष्ठा सकलेन्द्रियमनसां शब्दादिविषयव्यापारोपरतिनिष्पाद्येत्यभिहिता । इन्द्रियव्यापारोपरतिनिष्पाद्यमात्मावलोकनं चेत्सिषाधयिषितं सकलकर्मनिवृत्तिपूर्वकज्ञाननिष्ठायामेवाहं नियोजयितव्यः, किमर्थं घोरे कर्मणि सर्वेन्द्रि-

ता॥अत्रार्जुनः प्रागेव समरव्यापारविरतिवासनावासितः कर्मयोगज्ञानयोगाख्यप्रवृत्तिनिवृत्त्यात्मकसाधनोपदेशे निवृत्त्युपदेशाशयरसिकश्चोद्यमुखेन पृच्छति—ज्यायसीति । प्रथमश्लोकस्यान्वयं तावदाह—यदीति । कर्मणो बुद्धिर्ज्यायसीति कुत्रोपदिष्टम् ? 'दूरेण ह्यवरं कर्म बुद्धियोगात्' इत्यादि तु बुद्धिविशेषविशिष्टकर्मयोगपरमिति व्याख्यातम्, ज्यायस्त्वं च किंरूपमिहाभिमतम् ? । बुद्धेर्ज्यायस्त्वे च कर्मणि यथाधिकारं नियोगस्य को दोषः । घोरशब्दश्च भयङ्करपर्यायः । न च कर्मयोगो भयङ्करः । किंशब्दश्चात्र प्रश्नपरो वा प्रतिक्षेपपरो वेत्यादिकमाशङ्क्याह—एतदुक्तमिति । तत्र बुद्धेर्ज्यायस्त्वप्रकारं पूर्वं तदुक्तिप्रकारं चाह—ज्ञाननिष्ठैवेति । स्थितप्रज्ञताप्रकरणे कर्मणो ज्ञाननिष्ठाहेतुत्वमुक्तम् । ज्ञाननिष्ठाया एव चात्मावलोकनहेतुत्वम् । ततश्च अव्यवधानाद्बुद्धिर्ज्यायसीति यथाधिकारं नियोगानर्हत्वाय ज्ञाननिष्ठानिष्पादनस्य कर्मप्रत्यनीकरूपत्वमुक्तं प्रकटयति—आत्मेति । 'यदा संहरते' इत्याद्युक्तं स्मारयति—सकलेन्द्रियेत्यादिना । किंशब्दस्य प्रतिक्षेपपरत्वं ज्यायसीचेदित्यत्र चेच्छब्दस्य निश्चितविषयत्वं चाभिप्रेत्य फलितमाह—इन्द्रियव्यापारेति । सकलकर्मेत्यसङ्कुचितकर्मसङ्ग्रहणपरम् । किमर्थमिति । न तावत् स्वप्रयोजनार्थं, परिपूर्णत्वात्, न च सांसारिकफलप्रदानार्थम्, जनार्दनस्य जनिनिरासकस्य तत्र तन्निवर्तनस्वाभाव्यात्, नापि भूभारभूतधार्तराष्ट्रादिवधनिमित्तकृतमदिष्टलम्भार्थम्, प्रपन्नं मां प्रति केशवस्य ब्रह्मरुद्रादिपितुस्ते तदनौचित्यात्, नापि फलशोधयार्थं, पारम्पर्यस्य पूर्वमुपदिष्टत्वात् । न च लौकिकार्थम्, अकरणनिमित्तप्रत्यवायपरिहारार्थं वा, सकलेन्द्रियव्यापाररूपत्वेन तदुपरतिनिष्पाद्यात्मावलोकनविरोधितया मुमुक्षोघोरत्वात्, न च लोकसंग्रहार्थं, लोकस्यापि यथावस्थिताकारोपदेशस्यैवोचितत्वात् । अतो भवत प्राणसमतया भवतैवोद्दीपितं मां भवदनभिमते कर्मणि

श्री॥ज्यायसी चेत् इति ॥ज्यायसी श्रेयसी चेत् यदि कर्मणः सकाशात् ते तव मता अभिप्रेता बुद्धिः ज्ञानं हे जनार्दन । यदि बुद्धिकर्मणी समुच्चिते इष्टे तदा एकं श्रेयःसाधनम् इति कर्मणो ज्यायसी बुद्धिः इति कर्मणः अतिरिक्तकरणं बुद्धेः अनुपपन्नम् अर्जुनेन कृतं स्यात्; न हि तदेव तस्मात् फलतः अतिरिक्तं स्यात् । तथा च, कर्मणः श्रेयस्करी भगवता उक्ता बुद्धिः, अश्रेयस्करं च कर्म कुरु इति मां प्रतिपादयति, तत् किं कारणम् इति भगवत उपालम्भमिव कुर्वन् तत् किं कस्मात् कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशव इति च यत् आह तच्च न उपपद्यते । अथ स्मार्तेनैव कर्मणा समु-

रा॥यव्यापाररूपे आत्मावलोकनविरोधिनि कर्मणि मां नियोजयसीति। अतो मिश्रवाक्येन मां मोहयसीव प्रतिभाति। तथा ह्यात्मावलोकनसाधनभूतायाः सर्वेन्द्रियव्यापारोपरतिरूपाया ज्ञाननिष्ठायास्तद्विपर्ययरूपं कर्म साधनं तदेव कुर्विति वाक्यं विरुद्धं व्यामिश्रमेव; तस्मादेकमिश्ररूपं वाक्यं वद ; येन वाक्येनाहमनुष्ठेयरूपं निश्चित्य श्रेयः प्राप्नुयाम् ॥

---

त॥न नियोजयितुमर्हसीति भावः। घोरशब्दस्यात्र आत्मीयप्राणिपीडनपरतयायोगात्प्रकृतोपयुक्तमभिप्रेतमाह— **सर्वेन्द्रियव्यापाररूप** इति। तथापि कथं घोरत्वमित्यत्राह— **आत्मावलोकनविरोधिनी**ति। उक्तमर्थं हेतूकुर्वन् द्वितीयश्लोकार्थमाह— **अत** इति। अचेतनाया बुद्धेर्मोहनस्यौपचारिकत्वान्मामित्युक्तम्। इवशब्दद्योतितमाह— **प्रतिभाती**ति। एतेन कारुणिकत्वात् त्वं तावन्न मोहयसि, अहं तु मन्दो मुह्यामीत्युक्तं भवति। व्यामिश्रशब्दाभिप्रेतं व्याघातं तत्प्रकारं चोपपादयति— **तथाही**ति। तद्विपर्ययरूपं कर्म तस्याः कथं साधनं, तद्विरुद्धं च कथं तदर्थिना कर्तव्यमिति व्याहतिद्वयमिहाभिप्रेतम्। एकमित्येतत्र ज्ञानकर्मणोरन्यतरविषयं, तयोरेकस्यैव कर्मण उपदिष्टत्वात्। तत्र च स्वस्यानुपपन्नताप्रतिभासे तथा भ्रमनिवृत्तेश्चानन्तरमपेक्षणीयत्वात्तस्याश्च व्यामिश्रत्वनिवृत्तिसाध्यत्वाद्वाक्यशब्दस्य चैतच्छ्लोकगतस्य विशेष्यसमर्पकत्वौचित्यादित्यभिप्रेत्योक्तम्— **अमिश्ररूपं वाक्यमि**ति। पूर्वेणान्वयभ्रमव्युदासाय निश्चित्येत्यादेरर्थमाह— **येने**ति। निश्चित्येत्यस्य न तावद्वदेत्यनेनान्वयः, सर्वज्ञस्य तस्य प्रागप्यनिश्चयायोगात्, व्यामिश्रवाक्येनापि परव्यामोहनमात्रस्य शङ्कितत्वात्। अतोऽर्जुनस्यैव निश्चयाकाङ्क्षा ; ततश्च निश्चित्य श्रेयः प्राप्नुयामित्येवान्वयः। निश्चयसापेक्षं सन्दिग्धविषयमाह— **अनुष्ठेयरूपमि**ति ॥ १ ॥ २ ॥

---

शां॥द्वयः सर्वेषां भगवता उक्तः अर्जुनेन च अवधारितश्चेत् 'तत् किं कर्मणि घोरे मां नियोजयसि' इत्यादि कथं युक्तं वचनम् ॥ १ ॥

किञ्च व्यामिश्रेण इति ॥ व्यामिश्रेणेव यद्यपि विविक्ताभिधायी भगवान्, तथापि मम मन्दबुद्धेः व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति। तेन मम बुद्धिं मोहयसि इव, मम मन्दबुद्धेः व्यामोहापनयाय हि प्रवृत्तः त्वं तु कथं मोहयसि? अतः ब्रवीमि बुद्धिं मोहयसि इव मे इति। त्वं तु भिन्नकर्तृकयोः ज्ञानकर्मणोः एकपुरुषानुष्ठानासंभवं यदि मन्यसे, तत्रैवं सति तत् तयोः एकं बुद्धिं कर्म वा इदमेव अर्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि, येन ज्ञानेन कर्मणा वा अन्यतरेण श्रेयः अहम् आप्नुयाम् इति ॥

*यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं* भगवता उक्तं स्यात् तत् कथं 'तयोः एकं वद' इति एकविषयैव अर्जुनस्य शुश्रूषा स्यात्। न हि भगवता पूर्वम् उक्तम् 'अन्यतरदेव ज्ञानकर्मणोः वक्ष्यामि, नैव द्वयम्' इति, येन उभयप्राप्त्यसंभवम् आत्मनो मन्यमान एकमेव प्रार्थयेत् ॥ २ ॥

---

आ॥ज्यायसीति॥ कर्मणः सकाशाद्बुद्धिर्ज्यायसी चेत्ते तव मता तत् तर्हि ॥ १ ॥ २ ॥

---

ज॥प्रथमश्लोके पदानां व्यवहितत्वादन्वयं दर्शयन्किंचिद्व्याचष्टे— **कर्मण** इति। षष्ठीभ्रान्तिनिरासाय सकाशादित्युक्तम्। बुद्धिः आत्मज्ञानम्। ज्यायसी प्रशस्ततरा ॥ १ ॥ २ ॥

श्रीभगवानुवाच—

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ३

रा॥पूर्वोक्तं न सम्यगवधृतं त्वया, पुरा ह्यस्मिन् लोके विचित्राधिकारिपूर्णे, द्विविधा निष्ठा ज्ञानकर्मविषया यथाधिकारमसङ्कीर्णैव मयोक्ता, नहि सर्वो लौकिकः पुरुषस्स ञ्जातमोक्षाभिलाषस्तदानीमेव ज्ञानयोगाधिकारे प्रभवति अपि त्वनभिसंहितफलेन केवल

ता॥ एवमसङ्कीर्णरूपे वाक्ये बुभुत्सिते पूर्वोक्तस्यैवासङ्कीर्णरूपतां प्रकटयन् श्रीभगवानुवाच—लोकेऽस्मिन्निति । मया प्रोक्तेति निर्देशाकाङ्क्षा च फलितमाह—पूर्वोक्तमिति । 'अस्मिन् लोके' इत्यस्य प्रकृतोपयोगितात्पर्यमाह—विचित्राधिकारिपूर्णे इति । तेन ज्ञानयोगकर्मयोगयोरधिकारिभेदसम्भवः, परस्परविरुद्धानामपि धर्माणां प्रतिनियताधिकारिविषयत्वव्यवस्थापकवर्णाश्रमदेशकालकामनानिमित्तादिदृष्टान्तश्च सूचितः । अनघशब्देनाप्येतदेवाभिप्रेतम् । यथास्मिन् लोकेऽनघतया त्वमपवर्गसाधनेऽधिकृतोऽसि, इतरे तु काम्यादौ, तद्वदनघमात्रस्य कर्मयोगेऽधिकारः, अनघतराणां तु ज्ञानयोग इति गभीरदाहज्वरचिकित्सकस्य सर्वज्ञस्य भिषजस्तत्तदवस्थोचितोऽयमुपदेशः । प्रोक्तेत्यस्य सोपसर्गस्याभिप्रेतमाह—यथाधिकारमिति । अधिकारानतिलङ्घनमत्र प्रकर्षः । द्वैविध्यमात्रस्य ज्ञातत्वात्तदुक्त्यभिप्रेतमाह—असङ्कीर्णैवेति । मयेति । तत्तदधिकारिभेदवेदिना तत्तद्धितकामेनास्पृष्टभ्रमविप्रलम्भप्रमादाशक्तिगन्धेनेत्यर्थः । ज्यायसि ज्ञानयोगे तिष्ठति कर्मयोगः कथमाद्रियेतेत्यत्राह—नहीति । मोक्षाभिलाषे जातेऽपि जन्मान्तरशतसुकृतमृदितकषायाणां केषाञ्चिदेव तदानीमेव ज्ञानयोगाधिकारः, तथा दर्शनात्, तत्तद्दशाशक्तविषयतया ज्ञानकर्मयोगव्यवस्थेति भावः । नन्वशक्तानां कदाचिदपि ज्ञानयोगाधिकारो न स्यात्तच्छक्तिहेतुतयोक्तस्य कर्मयोगानुष्ठानस्य तत्प्राप्तिरूपत्वेनाप्रसिद्धेरित्यत्राह—अनभिसंहितेति । सर्वज्ञसर्वशक्तिकारुण्यादिविशिष्टभगवदनुग्रहरूपादृष्टद्वारा ज्ञानहेतुत्वाय परमपुरुषाराधनरूपतोक्तिः । व्याकुलेन्द्रियत्वं हि ज्ञाननिष्ठाविरोधि, तच्च स्वान्तमलमूलम्, तद् यागादिपुण्यपापरूपदुष्कर्ममूलकं तमोमयम्, तच्च सत्त्वोन्मेषहेतुभूतैर्विधिकर्मभिर्निवर्हणीयम्, ततो ज्ञाननिष्ठाहेतुभूतशान्तिहेतुत्वात्तदनुष्ठ

शा॥प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवान् उवाच—लोके अस्मिन् इति ॥ लोके अस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिः अनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासाम् अभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसम्प्रदायम् आविष्कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण हे अनघ अपाप। तत्र का सा निष्ठा

आ॥ज्यायस्त्वेऽपि बुद्धेराधिकारिकत्वात् त्वं कर्मण्यधिकृत इति तत्र नियोक्ष्यामीत्या

आ॥एवं चेत्प्रश्नस्तर्हि कथं परिहारवाक्यं सङ्गच्छते तत्र निष्ठाद्वैविध्यकथनादित्याशङ्क्याभिप्रायं वदन्नवतारयति—ज्यायस्त्वेऽपीति। बुद्धेः काम्यकर्मणो ज्यायसीति यदुक्तं तत्तथैव, तथाऽपि त्वां तत्र नैष्कल्पिके युद्धादिकर्मणि प्रेरयामि। कुतः? आधिकारिकत्वात्। त्वं कर्मण्यपि विक्षेपकारिण्यपि नैष्कल्पिकेऽधिकृत इति कृत्वा । अयमत्रोत्तरक्रमः—आश्रमधर्मविहितानि यज्ञादीनि युद्धादीनि च न शुद्धकाम्यानि, किं तु कर्तुरिच्छया स्वर्गाद्यर्थानि ज्ञानाद्यर्थानि च भवन्ति, अतो बुद्धेः काम्यकर्मणो ज्यायस्त्वेऽपि युद्धस्य बुद्ध्यर्थत्वसम्भवात्तत्र नियोगो नानुपपन्नः, यतिधर्मान्विना क्षत्रियेण नियोगेनेति चेत्—अनधिकारिणामेव यत्याश्रमस्वीकाराधिकारो नाधिकारिणाम्, तैरवस्थान्तराश्रमपरित्यक्तैव तद्विहि

रा॥परमपुरुषाराधनवेषेणानुष्ठितेन कर्मणा विध्वस्तस्वान्तमलोऽव्याकुलेन्द्रियो ज्ञाननिष्ठायामधिकरोति; *'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति परमपुरुषाराधनैकवेषता कर्मणां वक्ष्यते, इहापि †'कर्मण्येवाधिकारस्ते' इत्यादिना अनभिसंहितफलं कर्मानुष्ठेयं विधाय तेन विषयव्याकुलतारूपमोहादुत्तीर्णबुद्धेः ‡'प्रजहाति यदा कामान्' इत्यादिना ज्ञानयोग उदितः। अतस्साङ्ख्यानामेव ज्ञान-

ता॥ल एव कर्मयोग इत्युक्तं भवति। 'धर्मेण पापमपनुदति' इत्यादिकमिहाभिप्रेतम्, अनभिसंहितफलत्वं पूर्वमेवोक्तमिति कृत्वा केवलपरमपुरुषाराधनवेषतायां कर्मणैव सिद्धिप्राप्तौ च वक्ष्यमाणं दर्शयति—यत इति। प्रोक्तशब्दनिर्दिष्टमव्यामिश्राभिधानमनभिसंहितफलत्वोक्तिं च व्यनक्ति—इहापीति। 'यदा ते मोहकलिलं' 'श्रुतिविप्रतिपन्ना ते' इत्यादार्थं स्मारयति—विषयेति। आभिप्रायिकमवधारणं व्यञ्जयन्नुत्तरार्धं व्याचष्टे—अतस्साङ्ख्यानामेवेति। साङ्ख्यशब्दस्यात्र सिद्धान्तविशेषनिष्ठपरत्वं व्युदस्य-

प्र-पा॥ *गी. १८-४६॥ †गी. २-४७॥ ‡गी. २-५५॥ १. तै. नारायण. ६. प्रश्न. ५०-अनु॥ धर्मेण अनुष्ठितेन शास्त्रविहितेन अनभिसंहितफलेन धर्मेण, पापम् उपायविरोधि दुष्कृतम्, अपनुदति - व्यपोहति ॥ अस्या. श्रुतेरर्थो विस्तरेण श्रुतप्रकाशिकाया लघुसिद्धान्ते द्रष्टव्यः॥

शं॥द्विविधा इति। आह—ज्ञानेति। तत्र ज्ञानयोगेन ज्ञानमेव योगः तेन साङ्ख्यानाम् आत्मानात्मविषयविवेकविज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येव अवस्थितानां निष्ठा प्रोक्ता। कर्मयोगेन कर्मैव योगः कर्मयोगः तेन कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्ता इत्यर्थः। यदि च एकेन पुरुषेण एकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्य अनुष्ठेयं भगवता इष्टम् उक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तम्, कथम् इह अर्जुनाय उपसन्नाय प्रियाय विशिष्टभिन्नपुरुषक-

आ॥शयवान्भगवानाह—लोक इति॥द्विविधा अपि जनाः सन्ति गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः, सनकादिवत्। तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत्। मद्धर्मस्था एवेत्यर्थः। सांख्यानां ज्ञानिनां सनकादीनाम्। योगिनामुपायिनां जनकादीनाम्। ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसंग्रहार्थत्वाच्च ये कर्मयोग्या भवन्ति तेऽपि योगिनः। निष्ठा

ज॥तानि कर्माणि निष्कामतयानुष्ठेयानीतीश्वरनियमात्, तत्र चाधिकारिकत्वादिति। 'स्वराद्यन्तोपसृष्टाच्च' इति कात्यायनवचनमनित्यम्। अतएव न पाणिनिरभाणीत्। अयमाशयः श्लोकात्कथं लभ्यत इत्यतो व्याचष्टे—द्विविधा अपीति। निष्ठा द्विविधेति व्याख्याने क्रमेणैकस्यैव पुरुषस्य तल्लम्भवाग्रोक्तोऽभिप्रायो लभ्यत इत्येवं व्याख्यातम्। न केवलमेकविधाः साङ्ख्या एवेत्यपेरर्थः। द्वैविध्यमेव सोदाहरणमाह—गृहस्थादीति। यत्याश्रमपरिग्रहेणेत्यपि ग्राह्यम्। ज्ञाननिष्ठाः यत्याश्रमविहितैरेव कर्मभिर्ज्ञानसाधनैर्युक्ताः। सनकादिभिस्तुल्यं वर्तन्त इति सनकादिवत्। एवं जनकादिवदित्यपि। तत्स्था एव गृहस्थाद्याश्रमस्था एव। तद्धर्मैः युद्धादिभिर्ज्ञानसाधनैर्युक्ताः। द्विविधा अपि जनाः सन्तीत्युक्ते कर्ममार्गस्था ज्ञानमार्गस्थाश्चेति द्वैविध्यं प्रतीयते; तन्निवृत्त्यर्थमाह—मद्धर्मेति। ज्ञानमार्गस्था एव। ततश्च मद्धर्मस्था एव जना द्विविधा अपि सन्तीत्यन्वयः। तत्कथमित्याकाङ्क्षायामुत्तरं वाक्यद्वयम्। 'साङ्ख्याना योगिनाम्' इति पदद्वयमन्यथाप्रतीतिनिरासाय व्याचष्टे—सांख्यानामिति। सम्यक् ख्यातिर्ज्ञानं संख्या; तत्र भवाः साख्याः; तेषां ज्ञानिनाम्। ज्ञाननिष्ठास्तत्कथं योगिन इत्यत आह—ज्ञाननिष्ठाअपीति। कर्मयोग्याः गृहस्थादिकर्मयोग्याः। साख्ययोगशब्दौ प्रसिद्धार्थौ किं न स्यातामित्यतो मुक्तिवचनादिति

रा॥योगेन स्थितिरुक्ता । योगिनां तु कर्मयोगेन । सङ्ख्या बुद्धिः, तद्युक्तास्साङ्ख्याः—आत्मैकविषयया बुद्ध्या सम्बन्धिनस्साङ्ख्याः; अतदर्हाः कर्मयोगाधिकारिणो योगिनः विषयव्याकुलबुद्धियुक्तानां कर्मयोगेऽधिकारः; अव्याकुलबुद्धीनां तु ज्ञानयोगेऽधिकार उक्त इति न किञ्चिदिह विरुद्धं व्यामिश्रमभिहितम् ॥ ३ ॥

सर्वस्य लौकिकस्य पुरुषस्य मोक्षेच्छायां जातायां सहसैव ज्ञानयोगो दुष्कर इत्याह—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४

---

ता॥ति—सङ्ख्याबुद्धिरित्यादिना। अतदर्हा इत्यशक्तिविषयत्वं सूचितम्। **कर्मयोगाधिकारिण** इति । योगिशब्दस्थो योगो ह्यत्र कर्मयोगः; प्रत्ययार्थस्सम्बन्धश्चात्र तद्योग्यतारूप इत्यर्थः । अतदर्हत्व तदर्हत्व च विशदयन्विरोधशङ्कापरिहारस्य फलितत्वेनाव्यामिश्राभिधानमुपसंहरति—**विषयेति** ॥ ३ ॥

ननु मोक्षेच्छैव हि कर्मयोगेऽपि पुरुषं प्रवर्तयति ; सा यदि जाता, ततः किमव्यवहिते ज्ञानयोगे न प्रवर्तयतीति शङ्का 'न कर्मणाम्' इति श्लोकेन निराक्रियत इत्याह—**सर्वस्येति**। लौकिकस्येत्यनेन संसारलोकान्तर्गततया विषयव्याकुलेन्द्रियत्वमभिप्रेतम् । **सहसैवेति** । कर्मयोगमकृत्वेत्यर्थः । निषेधस्यान्यविषयत्वज्ञापनाय शास्त्रीयशब्दः । नैष्कर्म्यशब्दस्याननुष्ठानादिपरत्वे साध्याविशेषादिदोषस्स्यात् ,अतो

---

शा॥र्तुके एव ज्ञानकर्मनिष्ठे ब्रूयात् ? यदि पुनः अर्जुनः ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेव अनुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामि इति मतं भगवतः कल्प्येत, तदा रागद्वेषवान् अप्रमाणभूतो भगवान् कल्पितः स्यात् । तच्च अयुक्तम् । तस्मात् कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः ॥ ३ ॥

यत् अर्जुनेन उक्तं कर्मणो ज्यायस्त्वं बुद्धेः, तच्च स्थितम्, अनिराकरणात् । तस्याश्च ज्ञाननिष्ठायाः संन्यासिभिरेवानुष्ठेयत्वं, भिन्नपुरुषानुष्ठेयत्ववचनात् । भगवतः एवमेव अनु-

---

आ॥स्थितिः । त्वं तु जनकादिवत्सकर्मैव ज्ञानयोग्यः । न तु सनकादिवत्तत्त्यागेनेत्यर्थः । सन्ति हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयोऽपि ज्ञानिन एव । तथा ह्युक्तम्—'ईश्वरेच्छया विनिवेशितकर्माधिकारः' इति ॥ ३ ॥

इतश्च नियोक्ष्यामीत्याह—न कर्मणामिति ॥ कर्मणां युद्धादीनामनारम्भेण नैष्कर्म्य

---

ज॥भावेनाह—निष्ठेति । स्थितिः स्वरूपेणेति शेषः । अस्त्वेवं श्लोकार्थस्तथाप्याधिकारित्वादिल्यादिकम् अत्र न श्रूयत इत्यतोऽध्याहृत्याह—त्वं त्विति। सकर्मा गृहस्थादिकर्मवान्। भवेदिदं व्याख्यानं यदि ते जनाः प्रमिताः स्युः, येषां ज्ञाननिष्ठानामपि गृहस्थादिकर्मस्वेवाधिकारो न यत्याश्रमकर्मसु ; जनकादयस्तु यत्याश्रमं नानुष्ठितवन्त इत्येव प्रमितम् ; न तु तत्रानधिकार इति तत्राह—**सन्तिहीति**। विनिवेशितः कर्माधिकारो गृहस्थकर्माधिकारो यस्मिन्स तथोक्तः । प्रियव्रतो हि यत्याश्रमं स्वीचिकीर्षुराधिकारिकत्वयुक्त्या हिरण्यगर्भेण निवारित इत्यनेनोच्यते ॥ ३ ॥

'न कर्मणाम्' इति मोक्षस्य कर्मसाध्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह—**इतश्चेति** । स्ववर्णाश्रमोचिते युद्धादाविति शेषः । प्रागाधिकारिकत्वात्त्वया कर्म कर्तव्यमित्युक्तम् । इदानीं कोऽपरो हेतुरुच्यत इत्यतो व्याचष्टे—**कर्मणामिति** । अयमभिप्रायः—कर्माणि न कार्याणीति वदन्प्रष्टव्यः;

रा॥न शास्त्रीयाणां कर्मणामनारम्भादेव, पुरुषो नैष्कर्म्य-ज्ञाननिष्ठां प्राप्नोति ; न चार-

न॥निष्कर्मा निष्क्रान्तकर्मयोगः पर्यवसितकर्मयोगः ज्ञाननिष्ठ इत्यर्थः ; तस्य भावो नैष्कर्म्यमित्यभिप्रायेणाह—*ज्ञाननिष्ठामिति* । *सन्न्यसनशब्दस्याप्यत्र कर्मणामित्यनेनैवान्वयं सन्न्यसनस्वभावादारब्धविषयत्वं तत एव सन्न्यासिनः समरजिहासावृत्तान्तं चाभिप्रेत्याह*—**नचारब्धस्येति** । नैष्कर्म्यशब्दानु-

प्र-पा ॥ १. प्रेत्याह. पा ॥

शं॥मतमिति गम्यते मां च बन्धकारणे कर्मण्येव नियोजयसि इति विषण्णमनसम् अर्जुनं कर्म नारभे इत्येवं सन्धानम् आलक्ष्य आह भगवान्—न कर्मणाम् अनारम्भात् इति । अथवा—ज्ञानकर्मनिष्ठयोः परस्परविरोधात् एकेन पुरुषेण युगपत् अनुष्ठातुम् अशक्यत्वे सति इतरेतरानपेक्षयोः एव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं, न स्वातन्त्र्येण ; ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुः अन्यानपेक्षा; इत्येतम् अर्थं प्रदर्शयिष्यन् आह भगवान्—न

आ॥निष्कर्मता काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं न तु कर्माकरणमित्यर्थः । कुतः ? पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो मनुजीवः ; यदि कर्माकरणेन मुक्तिः, स्यात् स्थावराणाम् । न चाकरणे कर्माभावान्मुक्तिर्भवति प्रतिजन्मकृतानामनन्तकर्मणां भावात् । न च सर्वाणि भुक्तानि एकस्मिञ्छरीरे बहूनि हि कर्माणि करोति । तानि चैकैकानि बहुजन्मफलानि कानिचित् तत्र चैकैकानि कर्माणि भुञ्जन्प्राप्नोत्येव शेषेण मानुष्यम् । ततश्च बहुशरीरफलकर्माणीत्यसमाप्तिः । तथोक्तं

श्री॥किं ज्ञानं न मोक्षसाधनम् ; अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यज्यन्ते, उत ज्ञानं मोक्षसाधनं भवत्येव, किं तु 'कर्मणा बध्यते जन्तुः' इत्यादेः *कर्माणि तत्प्रतिबन्धकानीति मत्वा* । आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्येदमुच्यते, अथवा क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम् ; अकरणे च बीजाभावात्संसारो न भविष्यतीति युक्तिमाश्रित्य? आद्यस्येदं दूषणम्—न कर्मणामिति । नैष्कर्म्यशब्दस्यान्यथापि *व्याख्यानात्* इत्यर्थः । ततः किमित्यत आह—**ज्ञानमेवेति** । उक्तमाक्षिप्य समाधत्ते—कुत इति । नैष्कर्म्यशब्दस्यान्यार्थतामङ्गीकृत्य कर्माकरणस्य मोक्षसाधनत्वनिराकरणे को हेतुरित्यर्थः । कथमस्य हेतुत्वमित्यतो व्याचष्टे—**सर्वदेति** । प्रलयेऽपि सम्भवार्थं स्थूलेन सूक्ष्मेण वेत्युक्तम् । *तथाऽपि कथं हेतुत्वमित्यत* आह—**यदीति** । स्यादित्यस्य पूर्वोत्तराभ्यां सम्बन्धः । स्थावराणामित्यनधिकृतोपलक्षणम् । ततश्चानादौ संसारेऽनधिकृतदेहस्य संभवेन मुक्तिप्रसङ्गादधुनापि दृश्यमानस्य पुरुषत्वं न स्यादिति भावः । द्वितीयनिरासेऽप्यस्यैवार्थस्य तात्पर्यमाह—**नचेति** । कर्माभावात्—संसारबीजाभावात् । अत्र नैष्कर्म्यमिति मुक्तिनामैव, न परप्रमाणानुवादः । कुतो न भवतीत्यतोऽत्रापि पुरुषत्वादिति हेतुमभिप्रेत्याह—**प्रतीति** । जन्मनिजन्मनि कृतानामित्यर्थः । पुरुषत्वेनानादौ संसारेऽधिकृतानन्तजन्मसंभवात्तत्र *कृतानामनन्तकर्मणा* भावात्कियताकरणमात्रेण भवतीत्यर्थः । ननु पूर्वपूर्वशरीरकृतानि कर्माण्युत्तरोत्तरशरीरे भुक्तानि, तत्कुतोऽनन्तकर्मणां भाव इत्यत आह—**नचेति** । कुतो नेत्यतः—**एकस्मिन्निति** । हिशब्दो हेतौ । बहून्यपि भुज्यन्तां को दोष इत्यत आह । तानिच कानिचिदिति संबन्धः । **एकैकानीति** प्रत्येकमित्यर्थः । ननु तथाविधान्यप्यनधिकृतजन्मभिर्भुक्तानीत्यत आह—**तत्रचेति** । तेषु कर्मसु भुञ्जन्भुञ्जानः । शेषेण कर्मशेषेण । मानुष्ये चाकरणमसंभावितमित्याह—**ततश्चेति** । असमाप्तिर्भोगेन कर्मणामिति शेषः ।

रा॥न्धस्य शास्त्रीयस्य त्यागात्; यतोऽनभिसंहितफलस्य परमपुरुषाराधनवेषस्य कर्मण-

---

ता॥पक्षेऽपि सम्भवति पुनस्सिद्धिशब्देनाभिधानस्य तात्पर्यं व्यञ्जयति—यत इति। अनारम्भ सन्न्यसन च सङ्कलय्याह—अतस्तेनविनेति। कारणभूतकर्माभावे कथं कार्यं स्यादिति भावः। पञ्चम्या हेतुपरत्व निषेधान्वयेन तत्तन्निषेध्यान्वयेन वा योज्यम्। पूर्वत्र कर्मयोगानारम्भे ज्ञानयोगासिद्धिस्स्यादिति वाक्यार्थः; उत्तरत्र ॥ यत्कर्मयोगत्यागादेव ज्ञानयोगसिद्धिरित्यभिप्रेतम्, तदयुक्तम्, सा हि तेनैव जन्येति तात्पर्यम्। तदिमामुभयीमपि वाक्यवृत्तिमभिप्रेत्य श्लोकाभिप्रेतमर्थमाह—अनभिसंहितेति। कर्मभिरित्यस्यानाराधि-

---

शा॥कर्मणाम् इति ॥ कर्मणां क्रियाणां यज्ञादीनाम् इह जन्मनि जन्मान्तरे वा अनुष्ठितानाम् उपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनां 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः। यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' इत्यादिस्मरणात्, अनारम्भात् अननुष्ठानात् नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैव अवस्थानम् इति यावत्। पुरुषः न अश्नुते न प्राप्नोति इत्यर्थः। 'न कर्मणाम् अनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते' इति वचनात् तद्विपर्ययात् तेषाम् आरम्भात् नैष्कर्म्यम् अश्नुते इति गम्यते। कस्मात् पुनः कारणात् कर्मणाम् अनारम्भात् नैष्कर्म्यं न अश्नुते इति? उच्यते, नैष्कर्म्योपायत्वात् कर्मारम्भस्य। न हि उपायमन्तरेण उपेयप्राप्तिः अस्ति। कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञान-

---

आ॥—'जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु। स्त्री वाप्यनूनदशक देहं मानुषमार्जते। चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः। अतोऽचिन्त्या परं देवं मोक्षाशा का महामुने' इति ब्राह्मे। यदि सादिः स्यात्संसारः, पूर्वकर्माभावादतत्प्राप्तिः। अबन्धकत्वं त्वकामेनैव भवति। तच्च वक्ष्यते अनिष्टमिष्टमिति। ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः। 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते। निवृत्त सेवमानस्तु ब्रह्माभ्येति सनातनम्'

---

ज॥मभावनामात्रेणेदमुक्तं न तु प्रमितमित्यत आह—तच्चोक्तमिति। चतुर्दशवर्षात् अनूनो दृशको यस्येति विग्रहः। ह्रस्वदीर्घव्यत्ययेन चतुर्दशोर्ध्वजीविनीति क्रिया विशेषणम्। संसारश्चेति कर्मणामनन्तत्वोपपादनम्। अतो भोगेन क्षयासम्भवात्। अचिन्त्या अविदित्वा। पुरुषशब्देनानादिदेहसम्बन्ध उक्तः, सोऽसिद्ध इत्यत आह—यदीति। अतत्प्राप्तिराकस्मिकस्य संसारस्याप्राप्तिः स्यात्। अतः पुरुषत्व सिद्धमिति। ननु सन्तु प्राग्भवीयान्यनन्तकर्माणि, तथाऽपि बन्धकानि कथं प्रेक्षावता क्रियेरन्; न ह्यनन्तानि पापानि प्राक्तनानि सन्तीत्येतावताद्य क्रियन्त इत्यत आह—अबन्धकत्वं त्विति। कर्मणां बन्धहेतुत्व स्वकामनादिनैव भवति, नत्वकरणेन, प्रत्यवायस्यैव प्राप्तेरित्यर्थः। अकामेनाबन्धकत्व भगवत्संमतमिति भावेनाह—तच्चेति। सकरस्तु—अकरणमसच्च सन्तं प्रत्यवायं जनयति 'कथमसतः सज्जायेत' इति श्रुतेः—इत्यवादीत्। तद्भास्करः प्रत्यषेधीत्—द्रव्यविषया श्रुतिः, गुणस्त्वसतोऽपि जायते—इति। उभावपि स्थूलदृश्वानौ—न ह्यकरणमसत्, तथा सति करणप्रसङ्गात्, किं त्वभावः, स च भाववत्तत्त्वमेवेति कथमकारणम्, गुणं प्रति कारणत्वे च द्रव्यकारणत्वं कुतो न भवेत्। ननु चात्रोपादानत्वस्य विवक्षितत्वादकरणस्य चाभावरूपतया सत्त्वेऽप्यत्र विवक्षितोपादानत्वानुपपत्तेर्न प्रत्यवायजनकत्वमित्यभिप्राय इत्यत आह—नहीति। नह्यत्रोपादानत्वं विवक्षितम्; किं तु निमित्तत्वमेवेत्युक्तम्। न च सन्न्यसनादेवेति पुनरुक्तम्, अत्रापि कर्मसन्न्यसनस्य मोक्षासाधनत्वोक्तेरित्यत आह—नन्विति। 'निष्कामं ज्ञानपूर्वं च' इति मानवे वाक्ये तावन्निष्कामकर्मणा मोक्षः स्मृतः। स चोपपत्त्यन्तरादर्शनान्निष्का-

रा॥न शास्त्रीयाणां कर्मणामनारम्भादेव, पुरुषो नैष्कर्म्य-ज्ञाननिष्ठां प्राप्नोति ; न चार-

ला॥निष्कर्मा निष्क्रान्तकर्मयोगः पर्यवसितकर्मयोगः ज्ञाननिष्ठ इत्यर्थः ; तस्य भावो नैष्कर्म्यमित्यभिप्रायेणाह—ज्ञाननिष्ठामिति । सन्न्यसनशब्दस्याप्यत्र कर्मणामित्यनेनैवान्वयं सन्न्यसनस्वभावादारब्धविषयत्वं तत एव सव्यसाचिनः समरजिहासावृत्तान्तं चाभिप्रेत्याह—नचारब्धस्येति । नैष्कर्म्यशब्दानु-

प्र-पा ॥ १. प्रेत्याह. पा ॥

शं॥मतमिति गम्यते मां न बन्धकारणे कर्मण्येव नियोजयसि इति विषण्णमनसम् अर्जुनं कर्म नारभे इत्येवं मन्वानम् आलक्ष्य आह भगवान्—न कर्मणाम् अनारम्भात् इति । अथवा—ज्ञानकर्मनिष्ठयोः परस्परविरोधात् एकेन पुरुषेण युगपत् अनुष्ठातुम् अशक्यत्वे सति इतरेतरानपेक्षयोः एव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं, न स्वातन्त्र्येण ; ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुः अन्यानपेक्षा, इत्येतम् अर्थं प्रदर्शयिष्यन् आह भगवान्—न

आ॥निष्कर्मतां काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं न तु कर्माकरणमित्यर्थः । कुतः ? पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः ; यदि कर्माकरणेन मुक्तिः, स्यात् स्थावराणाम् । न चाकरणे कर्माभावान्मुक्तिर्भवति प्रतिजन्मकृतानामनन्तकर्मणां भावात् । न च सर्वाणि भुक्तानि एकस्मिञ्छरीरे बहूनि हि कर्माणि करोति । तानि चैकैकानि बहुजन्मफलानि कानिचित् तत्र चैकैकानि कर्माणि भुञ्जन्प्राप्नोत्येव शेषेण मानुष्यम् । ततश्च बहुशरीरफलकर्माणीत्यसमाप्तिः । तथोक्तं

जा॥किं ज्ञानं न मोक्षसाधनम् ; अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यज्यन्ते, उत ज्ञानं मोक्षसाधनं भवत्येव, किं तु 'कर्मणा बध्यते जन्तुः' इत्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा । आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्येदमुच्यते, अथवा क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम् ; अकरणे च बीजाभावात्संसारो न भविष्यतीति युक्तिमाश्रित्य? आद्यस्येदं दूषणम्—न कर्मणामिति । नैष्कर्म्यशब्दस्यान्यथापि व्याख्यानात्पाय इत्यर्थः । ततः किमित्यत आह—ज्ञानमेवेति । उक्तमाक्षिप्य समाधत्ते—कुत इति । नैष्कर्म्यशब्दस्यान्यार्थतामङ्गीकृत्य कर्माकरणस्य मोक्षसाधनत्वनिराकरणे को हेतुरित्यर्थः । कथमस्य हेतुत्वमित्यतो व्याचष्टे—सर्वदेति । प्रलयेऽपि सम्भवार्थं स्थूलेन सूक्ष्मेण वेत्युक्तम् । तथाऽपि कथं हेतुत्वमित्यत आह—यदीति । स्यादित्यस्य पूर्वोत्तराभ्यां सम्बन्धः । स्थावराणामित्यनधिकृतोपलक्षणम् । ततश्चानादौ संसारेऽनधिकृतदेहस्य संभवेन मुक्तिप्रसङ्गादधुनापि दृश्यमानस्य पुरुषत्वं न स्यादिति भावः । द्वितीयनिरासेऽप्यस्यैवार्थस्य तात्पर्यमाह—नचेति । कर्माभावात्—संसारबीजाभावात् । अत्र नैष्कर्म्यमिति मुक्तिनामैव, न तु परप्रमाणानुवादः । कुतो न भवतीत्यतोऽत्रापि पुरुषत्वादिति हेतुमभिप्रेत्याह—प्रतीति । जन्मनिजन्मनि कृतानामित्यर्थः । पुरुषत्वेनानादौ संसारेऽधिकृतानन्तजन्मसम्भवात्तत्र कृतानामनन्तकर्मणां भावात्किमप्याकरणमात्रेण भवतीत्यर्थः । ननु पूर्वपूर्वशरीरकृतानि कर्माण्युत्तरोत्तरशरीरे भुक्तानि, तत्कुतोऽनन्तकर्मणां भाव इत्यत आह—नचेति । कुतो नेत्यतः—एकस्मिन्निति । हिशब्दो हेतौ । बहून्यपि भुज्यन्तां को दोष इत्यत आह । तानिच कानिचिदिति संबन्धः । एकैकानीति-प्रत्येकमित्यर्थः । ननु तथाविधान्यप्यनधिकृतजन्मभिर्भुक्तानीत्यत आह—तत्रचेति । तेषु कर्मसु भुञ्जन्भुञ्जानः । शेषेण कर्मशेषेण । मानुष्ये चाकरणमसंभावितमित्याह—ततश्चेति । असमाप्तिर्भोगेन कर्मणामिति शेषः ।

रा॥न्धस्य शास्त्रीयस्य त्यागात्; यतोऽनभिसंहितफलस्य परमपुरुषाराधनवेषस्य कर्मण-

ता॥पक्षेऽपि सम्भवति पुनस्सिद्धिशब्देनाभिधानस्य तात्पर्यं व्यञ्जयति—यत इति। अनारम्भं सन्न्यसनं च सङ्कलय्याह—अतस्तेनैवेनेति। कारणभूतकर्माभावे कथं कार्यं स्यादिति भावः। पञ्चम्या हेतुपरत्व निषेधान्वयेन तत्तन्निषेध्यान्वयेन वा योज्यम्। पूर्वत्र कर्मयोगानारम्भे ज्ञानयोगासिद्धिस्स्यादिति वाक्यार्थः; उत्तरत्र तु यत्कर्मयोगत्यागादेव ज्ञानयोगसिद्धिरित्यभिप्रेतम्, तदयुक्तम्, सा हि तेनैव जन्येति तात्पर्यम्। तदिमामुभयीमपि वाक्यवृत्तिमभिप्रेत्य श्लोकाभिप्रेतमर्थमाह—अनभिसंहितेति। कर्मभिरित्यस्यानाराधि-

श॥कर्मणाम् इति॥ कर्मणां क्रियाणां यज्ञादीनाम् इह जन्मनि जन्मान्तरे वा अनुष्ठितानाम् उपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनां 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः। यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' इत्यादिस्मरणात्, अनारम्भात् अननुष्ठानात् नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैव अवस्थानम् इति यावत्। पुरुषः न अश्नुते न प्राप्नोति इत्यर्थः। 'न कर्मणाम् अनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते' इति वचनात् तद्विपर्ययात् तेषाम् आरम्भात् नैष्कर्म्यम् अश्नुते इति गम्यते। कस्मात् पुनः कारणात् कर्मणाम् अनारम्भात् नैष्कर्म्यं न अश्नुते इति? उच्यते, नैष्कर्म्योपायत्वात् कर्मारम्भस्य। न हि उपायमन्तरेण उपेयप्राप्तिः अस्ति। कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञान-

भा॥—'जीवेंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु। स्त्री वाप्यनूनदशक देहं मानुषमार्जते। चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः। अतोऽवित्वा परं देवं मोक्षाशा का महामुने' इति ब्राह्मे। यदि सादिः स्यात्संसारः, पूर्वकर्माभावादतत्प्राप्तिः। अबन्धकत्वं त्वकामेनैव भवति। तच्च वक्ष्यते अनिष्टमिष्टमिति। ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः। 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते। निवृत्त सेवमानस्तु ब्रह्माभ्येति सनातनम्'

ज॥सम्भावनामात्रेणेदमुक्तं न तु प्रमितमित्यत आह—तच्चोक्तमिति। चतुर्दशवर्षाद् अनूनो दशको यस्येति विग्रहः। ह्रस्वदीर्घव्यत्ययेन चतुर्दशोर्ध्वजीविनीति स्त्रिया विशेषणम्। संसारश्चेति कर्मणामनन्तत्वोपपादनम्। अतो भोगेन क्षयासम्भवात्। अविदित्वा अविदित्वा। पुरुषशब्देनानादिदेहसम्बन्ध उक्तः, सोऽसिद्ध इत्यत आह—यदीति। अतत्प्राप्तिराकस्मिकस्य संसारस्याप्राप्तिः स्यात्। अतः पुरुषत्वं सिद्धमिति। ननु सन्तु प्राग्भवीयान्यनन्तकर्माणि, तथाऽपि बन्धकानि कथं प्रेक्षावता क्रियेरन्; न ह्यनन्तानि पापानि प्राक्तनानि सन्तीत्येतानतावत् क्रियन्त इत्यत आह—अबन्धकत्वं त्विति। कर्मणो बन्धाहेतुत्वं त्वकामनादिनैव भवति, नत्वकरणेन, प्रत्यवायस्यैव प्राप्तेरित्यर्थः। अकामेनाबन्धकत्वं भगवत्सम्मतमिति भावेनाह—तच्चेति। शङ्करस्तु—अकरणमसच्च सन्न प्रत्यवायं जनयति 'कथमसतः सज्जायेत' इति श्रुतेः—इत्यवादीत्। तद्भास्करः प्रत्यषेधीत्—द्रव्यविषया श्रुतिः, गुणस्त्वसतोऽपि जायते—इति। उभावपि स्थूलदृष्टानौ—न ह्यकरणमसत्, तथा सति करणप्रसङ्गात्, किं स्वभावः, स च भावतत्त्वमेवेति कथमकारणम्, गुणं प्रति कारणत्वे च द्रव्यकारणत्वे कुतो न भवेत्। ननु चात्रोपादानत्वस्य विवक्षितत्वादकरणस्य चाभावरूपतया सत्त्वेऽप्यत्र विवक्षितापादानत्वानुपपत्तेर्न प्रत्यवायजनकत्वमित्यभिप्राय इत्यत आह—नहीति। नह्युपादानत्वं विवक्षितम्; किं तु निमित्तत्वमेवेत्युक्तम्। न च सन्न्यसनादेवेति पुनरुक्तम्, अत्रापि कर्मसन्न्यसनस्य मोक्षसाधनत्वोक्तेरित्यत आह—नन्विति। 'निष्काम ज्ञानपूर्वं च' इति मानवे वाक्ये तावन्निष्कामकर्मणा मोक्षः स्मृतः। स चोपपत्त्यन्तरादर्शनान्निष्का-

रा॥स्सिद्धिस्स्यात्; अतस्तेन विना तां न प्राप्नोति;अनभिसंहितफलैः कर्मभिरनाराधित-

ता॥नेत्यनेनान्वयः। एतेन 'अनाराधितगोविन्दा ये नरा दुःखभागिनः' इत्यादिकं स्मारितम्। अनभिसंहितफलकर्माभावे निःश्रेयसौपयिकपरमपुरुषप्रीत्यभावः,तदभावाच्च पापसञ्चयानुपरमः, तेन च रजस्-

प्र-पा॥ १.

शो॥योगस्य,श्रुतौ इह च प्रतिपादनात्। श्रुतौ तावत् प्रकृतस्य आत्मलोकस्य वेद्यस्य वेदनोपायत्वेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम्। इहापि च—संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः। योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्। इत्यादि प्रतिपादयिष्यति। ननु च—'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्'

आ॥इति मानवे। अतस्तत्साम्यादकरणेऽपि भवतीत्यत आह—नचेति। संन्यासः काम्यकर्मपरित्यागः। काम्यानां कर्मणामिति वक्ष्यमाणत्वात्। अकामकर्मणामन्तःकरणशुद्ध्या ज्ञानान्मोक्षो भवति। तथोक्तं 'कर्मभिः शुद्धसत्त्वस्य वैराग्यं जायते हृदि' इति भागवते। विरक्तानामेव च ज्ञानमुक्तम् 'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन्। स्वप्ने निरुक्तया गृहमेधसौख्यं न यस्य हेयानुमितं स्वयं स्यात्' इति। न तु फलाभावात् कर्माभावात्। अतो नकर्मत्याग एव मोक्षसाधनम्। यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषणार्थश्च। अप्रयतत्वमेव हि प्रायो गृहस्थादीनाम्, इतरकर्मयोगात्। अप्रयतानां च न

अ॥मकर्मणः फलाभावादित्येव तत्रोपपत्तिरङ्गीकार्या;यत एवं फलाभावस्यैव प्राधान्यम्,अतोऽकरणेऽपि फलाभावस्य साम्यान्मोक्षो भवत्येव। यत्प्राग्भवीयकर्मफलमुक्तम्, निष्कामकरणपक्षेऽपि तत्समानम्। न च विनिगमने कारणाभावः, आयासाभावस्य सत्त्वात्। न च प्रत्यवायप्राप्तिः, अमुमुक्षुविषयत्वसंभवात्। अतो न कर्माणि करोमीति भावः। अनेन कथमस्य परिहार इत्यत आह—संन्यासः इति। तेन च निष्कामकर्मकरणमुपलक्ष्यत इति भावः। निष्कामकर्मकरणान्मोक्षं न प्राप्नोतीति; अतो न तत्प्रतिबन्दीग्रहणं युक्तमित्यनेनोक्तम्। तथा स्मृतिविरोध इत्यतः स्मृतेरभिप्रायमाह—अकामेति। सत्त्वाशादिति शेषः पुंसामिति वा। अकामकर्मभिरन्तःकरणशुद्धिद्वारा ज्ञानं जायत इत्येतत्कुत इत्यत आह—तथोक्तमिति। नन्वत्र वैराग्यं जायत इत्युच्यते, न तु ज्ञानमिति तत्राह—विरक्तानामेवेति। प्रागपि वैराग्यद्वारेत्यभिमतमिति भावः। तथाऽपि कथं विरोधपरिहारः। गीतायामकामकर्मणां मोक्षसाधनत्वाभावावधारणादित्यतस्तदभिप्रायमाह—नत्विति। फलाभावोपपत्तिकं कर्मणां मोक्षसाधनत्वं निषिद्ध्यते, न तु सर्वथाऽपीत्यर्थः। प्रतिबन्दीं मोचयति—कर्माभावादिति। अतः कर्माभावान्न मोक्ष इत्यर्थः; श्लोकतात्पर्यमुपसंहरति—अत इति। ननु यत्याश्रमो मोक्षसाधनत्वेन श्रुत्यादिप्रसिद्धः, तत्र चेयमेवोपपत्तिः— यत्तत्कर्मणां फलाभावः, अतस्तत्साम्यादकरणेऽपि मोक्षो भवतीत्येतच्छङ्कानिरासार्थंचोक्तं—न च सन्न्यसनादेवेति। एवं तर्हि श्रुत्यादिविरोध इत्यत आह—यत्याश्रमस्त्विति। प्रायत्यं प्रयतत्वमीश्वरे मनस्समाधानम्। एतद्द्वारद्वयेन मोक्षसाधनत्वं श्रुत्यादेरभिप्रेतम्। फलाभावोपपत्तिकं तु गीतायां निवारितम्। अतो न विरोध इति भावः। आश्रमान्तरेऽपि प्रायत्यसंभवात्किं तदर्थं यत्याश्रमेणेत्यत आह—अप्रयतत्वमेवेति। इतरकर्मसु यजनादिषु। प्रायत्यं कथं मोक्षसाधनमित्यतो व्यतिरेकमुखेनोपपादयति—अप्रयतानां चेति। 'प्रज्ञानेनैनमाप्नुयात्' इति श्रुतिशेषः। अशान्तोऽभगवन्निष्ठः। असमाहितस्तत्र चित्तसमाधानरहितः। भगवत्तोषणस्याश्रमान्तरेऽपि

रा॥नह्यस्मिन् लोके वर्तमान. पुरुष कश्चित्कदाचिदपि कर्माकुर्वाणस्तिष्ठति, न किंचित्करोमीति व्यवसितोऽपि सर्वे पुरुष. प्रकृतिसम्भवैस्सत्त्वरजस्तमोभि. प्राचीनकर्मानुगुण प्रवृद्धैर्गुणे स्वोचित कर्म प्रत्यवश. कार्यते प्रवर्त्यते। अत उक्तलक्षणेन कर्मयोगेन प्राचीन पापसचय नाशयित्वा गुणाश्च सत्त्वादीन् वशे कृत्वा निर्मलान्त करणेन सपाद्यो ज्ञानयोग ॥ ५ ॥

ता॥इत्याभ्यामभिप्रेतमिति ज्ञापनाय—अस्मिन् लोके इत्युक्तम्। जातुशब्दो दिवसादिस्थूलकालपर । क्षणशब्दस्त्वत्र 'क्षणो व्यापारवेकस्य कालभेदाल्पकालयो 'इत्यनेकार्थपाठात्तदन्तर्गताल्पकालविषय इत्य वैनतेयम्। तदुभयसङ्ग्रहेण कदाचिदपीत्युक्तम्। प्रन्यादिदशाव्यतिरिक्ते सर्वस्मिन् काल इत्यर्थ । स्वपतोऽपि हि स्वापाख्य कर्म, अत एव हि तत्र देशकालादिनियमनानुज्ञाप्रतिषेधौ भवत । 'अकर्मकृत्'इत्यत्राकर्मण कर्ता न विवक्षित ,किन्तु कर्मणोऽकर्तेति व्यञ्जनाय—कर्माकुर्वाण इत्युक्तम्। सर्वशब्दाभिप्रेतमाह—नकिञ्चित्करोमीति व्यवसितोऽपीति।अत्र चार्थ 'कर्मेन्द्रियाणि सयम्य इत्युत्तरश्लोक व्यक्तो भविष्यति। प्रकृतिसत्त्वेन विशेषणात्सत्त्वरजस्तमोभिरिति विशेषलाभ । प्रकृतौ नित्य विद्यमानाना कथ प्रकृतिसत्त्वमित्यत्रोक्त—प्राचीनेत्यादि। तथाचाहु — 'कर्मवश्या गुणा ह्येत सत्त्वाद्या पृथिवीपते' इति । एतेन कर्मयोगतन्नकृतगुणकज्ञाननिवृत्त्यवच्छेद । स्वोचितशब्देन तृतीयपदके व क्ष्यमाण प्रकारो दर्शित । स्व शब्दोऽत्र गुणपर , 'अवशस्सन्' इत्युद्देश्यविशेषणत्वभ्रमव्युदासाय—अवश कार्यत इत्युक्तम्। 'कार्यते' इत्यस्य प्रयोज्यकर्मत्वव्युदासेन प्रयोज्यकर्तृविषयत्वव्यक्त्यर्थ—प्रवर्त्यत इत्युक्तम्। व्याख्यातश्लोकद्वयतात्पर्यमाह—अत इति । अत —गुणपरतन्त्रतया कर्मयोगमन्तरेण ज्ञानयोगस्य दुस्सम्पादत्वादित्यर्थ । पापनाशाद्गुणवशीकरणम्, तच्च मोक्षाद्यप्रवृत्त्यनुकूलत्वम्। रजस्तम प्राचुर्यनिवृत्तिर्वा तत्कार्यरागद्वेषाद्यभावो वा निर्मलत्वमिहाभिप्रेतम् ॥ ५ ॥

प्र पा॥ १ २ । ७ पु २ १३ ७०। † 'आत्मानमिव कर्म तत्त्वाशयं तु ज गुणु' इत्युत्तरार्धम् ॥ गुणाश्च प्राचीनकर्माजन्यप्रवृत्तय इत्याह—कर्मवशया इति ॥

कर्म च अविद्यामूलमित्याह—अविद्येति । अनात्मसु देहादिष्वात्मबुद्धिरविद्या, तन्मूलं कर्म सत्त्वादिस्त्वज्ञानाधारणमित्याह—तन्वानि । एवमात्मनो हृदयस्य वाहकत्वं च नास्तीत्युक्तम् ॥

शा॥विचाल्यते' इति । साङ्ख्याना पृथक्करणात् अज्ञानामेव हि कर्मयोग , न ज्ञानिनाम् । ज्ञानिना तु गुणैरचाल्यमानाना स्वत. चलनाभावात् कर्मयोगो न उपपद्यते । तथाच व्याख्यात 'वेदाविनाशिनम्' इत्यत्र ॥ ५ ॥

यस्तु अनात्मज्ञ चोदित कर्म नारभत इति तत् असत् इति आह—कर्मेन्द्रियाणि इति,कर्मेन्द्रियाणि हस्तादीनि सयम्य सहृत्य य आस्ते तिष्ठति मनसा स्मरन् इन्द्रियार्थान्

रा॥गोविन्दैरविनष्टानादिकालप्रवृत्तानन्तपापसंचयैरव्याकुलेन्द्रियतापूर्विकात्मनिष्ठा दुस्संपादा ॥ ४ ॥

एतदेवोपपादयति—

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५

---

ता॥सोमयमनोमलानपायः, ततश्च रागद्वेषादिदोषाणां दीर्घायुष्यम्, तेषु च जीवत्सु नेन्द्रियव्याकुलताशान्तिः, बहिर्विषयव्याकुलेषु च तेषु न प्रत्यगर्थनिष्ठेति तादृशकर्मपरित्यागेन ज्ञाननिष्ठामनुतिष्ठासुस्सप्तभूमस्य गोपुरस्य सप्तमं तलं प्रथम चिकीर्षतीत्युपहास्यमिति भावः ॥ ४ ॥

अनन्वयशङ्कां परिहरन्ननन्तरश्लोकमवतारयति—एतदेवेति । परमपुरुषाराधनवेषस्य कर्मणस्त्यागे ज्ञाननिष्ठाया दुस्सम्पादत्वमेवेत्यर्थः । प्रथमो हिशब्दः पूर्वश्लोकार्थोपपादनद्योतकः । द्वितीयस्त्वेतच्छ्लोकपूर्वार्धोक्तोपपादनार्थः।प्रकरणारम्भे 'लोकेऽस्मिन्' इत्युक्ताधिकारिवैचित्र्यमपि'कश्चित्' 'सर्वः'

---

शं॥इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति । लोके च कर्मणाम् अनारम्भान्नैष्कर्म्यम् इति प्रसिद्धतरम् । अतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेण? इति प्राप्तम् । अत आह—न च संन्यसनादेव इति । नापि संन्यसनादेव केवलात् कर्मपरित्यागमात्रादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति ॥

कस्मात् पुनः कारणात् कर्मसंन्यासमात्रादेव केवलात् ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां पुरुषो न अधिगच्छति? इति हेत्वाकाङ्क्षायाम् आह—न हि इति । न हि यस्मात् क्षणमपि कश्चित् कालं जातु कदाचित् कश्चित् तिष्ठति अकर्मकृत् सन्। कस्मात्? कार्यते प्रवर्त्यते हि यस्मात् अवश एव अस्वतन्त्र एव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्त्वरजस्तमोभिः गुणैः । अज्ञ इति वाक्यशेषः, यतः वक्ष्यति 'गुणैर्यो न

---

आ॥ज्ञानम्,तथा हि श्रुतिः'नाशान्तो नासमाहितः'इति। महांश्च यत्याश्रमे भगवत्तोषः। तथाह्याह—'यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषिणीम्' इति नारायणाष्टाक्षरकल्पे । आधिकारिकास्तु तथा एव प्रायत्ये समर्थाः । स एव च महान्भगवत्तोषः । तथोक्तम् 'देवादीनामाद्दिराज्ञां महोद्योगोऽपि भोगिनः । विष्णोश्चलनि तद्भोगोऽस्यतीव हरितोषणम्' इति पाद्मे ॥ ४ ॥

न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह—न हीति ॥ ५ ॥

---

ज॥संभवात्किं यत्याश्रमेणेत्यत आह—महांश्चेति। तुरीय परमहंसाख्यम् । वाक्यशेषेणान्वयः। यत्याश्रम एव चेत्प्रायत्यं महान्भगवत्तोषश्च,तर्हि तद्रहितानामाधिकारिकाणा तदुभयाभावप्रसङ्ग इत्यत आह—आधिकारिकास्त्विति । तस्या अधिकारस्थाः। स एव अधिकार एव । तुष्यत्यनेनेति तोषः । समासान्तविधेरनित्यत्वादादिराज्ञामित्युक्तम्, यथोक्त महाभाष्ये 'शुच्यापि तटाकानि' इति ॥ ४ ॥

ज्ञानरहितात्कर्मत्यागरूपाद्यत्याश्रमात्सिद्धिं न समधिगच्छतीति किल पूर्वमुक्तम्; तत्र हेत्वाकाङ्क्षायां 'न हि कश्चित्' इत्युच्यत इति व्याख्यानमसदिति भावेन श्लोकतात्पर्यमाह—नत्विति । न ह्यत्र ज्ञानस्यावश्यकत्वे किंचिदुच्यते, नापि यज्ञादिकर्माकरणस्यासंभवोऽभिधीयते, येन प्रकृतसंगतिः स्यात्, किं तु शरीरयात्राद्यर्थानां कर्मणामपरिहार्यत्वम्; अतो नेदं व्याख्यानम्, अपि तर्हि 'कर्मणा

पा॥नह्यस्मिन् लोके वर्तमानः पुरुषः कश्चित्कदाचिदपि कर्माकुर्वाणस्तिष्ठति, न किंचित्करोमीति व्यवसितोऽपि सर्वः पुरुषः प्रकृतिसंभवैस्सत्त्वरजस्तमोभिः प्राचीनकर्मानुगुणं प्रवृद्धैर्गुणैः स्वोचितं कर्म प्रत्यवशः कार्यते प्रवर्त्यते। अत उक्तलक्षणेन कर्मयोगेन प्राचीनं पापसंचयं नाशयित्वा गुणांश्च सत्त्वादीन् वशे कृत्वा निर्मलान्तःकरणेन संपाद्यो ज्ञानयोगः ॥ ५ ॥

ता॥इत्यास्यामभिप्रेतमिति ज्ञापनाय—अस्मिन् लोके इत्युक्तम्। आतुशब्दो दिवसादिस्थूलकालपरः। क्षणशब्दस्त्वत्र 'क्षणो व्यापारवैकल्ये कालभेदाल्पकालयोः' इत्यनेकार्थपाठात्तदन्तर्गताल्पकालविषय इत्यपौनरुक्त्यम्। तदुभयसङ्ग्रहेण कदाचिदपीत्युक्तम्। प्रलयादिदशाव्यतिरिक्ते सर्वस्मिन् काल इत्यर्थः। स्वपतोऽपि हि स्वापाख्यं कर्म, अत एव हि तत्र देशकालादिनियमेनानुज्ञाप्रतिषेधौ भवतः। 'अकर्मकृत्'इत्यत्राकर्मणः कर्ता न विवक्षितः,किन्तु कर्मणोऽकर्तेति व्यञ्जनाय—कर्माकुर्वाण इत्युक्तम्। सर्वशब्दाभिप्रेतमाह—नकिंचित्करोमीति व्यवसितोऽपीति। अयं चार्थः 'कर्मेन्द्रियाणि संयम्य' इत्युत्तरश्लोके व्यक्तो भविष्यति। प्रकृतिजत्वेन विशेषणात्सत्त्वरजस्तमोभिरिति विशेषलाभः। प्रकृतौ नित्यविद्यमानानां कथं प्रकृतिजत्वमित्यत्रोक्तं—प्राचीनेत्यादि। तथाचाहुः—'कर्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते' इति। एतेन कर्मयोगतन्मूलगुणकज्ञाननिष्ठव्यवच्छेदः। स्वोचितशब्देन तृतीयषट्के वक्ष्यमाणः प्रकारो दर्शितः। स्वशब्दोऽत्र गुणपरः, 'अवशस्सर्वः' इत्युद्देश्यविशेषणत्वभ्रमव्युदासाय—अवशः कार्यते इत्युक्तम्। 'कार्यते' इत्यस्य प्रयोज्यकर्मपरत्वव्युदासेन प्रयोज्यकर्तृविषयत्वव्यक्त्यर्थं—प्रवर्त्यते इत्युक्तम्। व्याख्यातश्लोकद्वयतात्पर्यमाह—अत इति। अतः—गुणपरतन्त्रतया कर्मयोगमन्तरेण ज्ञानयोगस्य दुस्सम्पादत्वादित्यर्थः। पापनाशाद्गुणवशीकरणम्, तच्च मोक्षार्थप्रवृत्त्यनुकूलत्वम्। रजस्तमःप्राचुर्यनिवृत्तिर्वा तत्कार्यरागद्वेषाद्यभावो वा निर्मलत्वमिहाभिप्रेतम् ॥ ५ ॥

प्र पा॥ १ २ ।व पु २ १२ ७०। † 'आ यामाचित कर्म तन्नाशयतु जन्तुषु' इत्युत्तरार्धम् ॥ गुणाश्च प्राचीनकर्मोचितप्रवृत्तय इत्याह—कर्मवश्या इति ॥ कर्म च अविद्यामूलमित्याह—अविद्येति। अनात्मसु देवादिदेहेषु आत्मबुद्धिरविद्या, तच्चाविद्यामूलं कर्म अज्ञादिसर्वजन्तुसाधारणमित्याह—सर्वेति। एवमात्मनो द्रष्टत्वं वाहकत्वं च नास्तीत्युक्तम् ॥

श॥विचाल्यते' इति। साङ्ख्यानां पृथक्करणात् अज्ञानामेव हि कर्मयोगः, न ज्ञानिनाम्। ज्ञानिनां तु गुणैरचाल्यमानानां स्वतः चलनाभावात् कर्मयोगो न उपपद्यते। तथाच व्याख्यातं 'वेदाविनाशिनम्' इत्यत्र ॥ ५ ॥

यस्तु अनात्मज्ञः चोदितं कर्म नारभत इति तत् असत् इति आह—कर्मेन्द्रियाणि इति।कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य यः आस्ते तिष्ठति मनसा स्मरन् इन्द्रियार्थान्

ज॥गम्यते जन्तु 'इति स्मृतिमाश्रित्य यस्तृतीयः पक्षस्तमाशङ्क्य 'यज्ञार्थात्'इति स्मृतेरर्थसंकोचं वक्ष्यति। तत्र कुतः स्मृतेरर्थसंकोच इत्याकाङ्क्षा स्यात्। तामपाकर्तुमुपोद्घातन्यायेन कर्मशब्दस्तावदसंकुचितार्थः परेणाप्यङ्गीकर्तुमनार्य इति प्रतिपादयितुं कर्माणि सर्वात्मना त्यक्तुं नैव शक्यानीत्यनेनाहेति भावः ॥ ५ ॥

तथाऽपि कर्मेन्द्रियाणीत्यसंगतम्। तृतीयपक्षस्थेन मनसेन्द्रियार्थस्मरणस्यानुक्तत्वादित्यत

रा ॥ अन्यथा ज्ञानयोगाय प्रवृत्तो मिथ्याचारो भवतीत्याह—

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६

अविनष्टपापतया अजितत्वाद्धान्तःकरणः आत्मज्ञानाय प्रवृत्तो विषयप्रवणतया आत्मनि विमुखीकृतमनाः विषयानेव स्मरन् य आस्ते,अन्यथा संकल्प्य अन्यथा चरतीति स मिथ्याचार उच्यते; आत्मज्ञानायोद्युक्तो विपरीतो विनष्टो भवतीत्यर्थः ॥ ६ ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तस्स विशिष्यते ॥ ७

अतः पूर्वाभ्यस्तविषयसजातीये शास्त्रीये कर्मणि इन्द्रियाण्यात्मावलोकनप्रवृत्तेन

ता॥अकरणे बाधं वदतीत्याह—अन्यथेति। कर्मयोगमकृत्वेत्यर्थः।‘मनसा स्मरन्’इत्यनेनार्थसिद्धं हेतुमाह—अविनष्टेति।आत्मविमुखीकृतमना इति। ‘विमूढात्मा’ इत्यत्रात्मशब्दो मनोविषयः। मूढत्वमात्मवैमुख्यम्। येभ्य एवेन्द्रियाणि निरोद्धुमिष्टानि तानेवेत्येवकारार्थः। मिथ्याचारप्रकारमाह—अन्यथासङ्कल्प्येति। अन्यथाभाव एव ह्यन्ततः सर्वत्र मिथ्यात्वम्; तथापि सङ्कल्पितज्ञानयोगविपरीताचारतया ज्ञानयोगाभिमतस्तस्याचारो मिथ्येत्युक्तं भवति। मिथ्याचारसंज्ञामात्रव्युदासेन दोषपर्यवसानमाह—आत्मेति। विपरीतविनष्टशब्दाभ्यामुपायवैपरीत्यात्फलवैपरीत्यमिति दर्शितम्।, द्वितीयेऽध्याये ‘ध्यायतो विषयान्’ इत्यारभ्य ‘बुद्धिनाशात्प्रणश्यति’ इत्यन्तेनास्यैवार्थस्य प्रपञ्चनं कृतमिति विनष्टशब्देन स्मारितम् ॥६॥

प्रथममेव ज्ञानयोगमारुरुक्षुमपोह्य कर्मयोगिनं प्रशंसति—यस्त्विति श्लोकेन । प्रकृतेन सगमयन् व्याख्याति—अत इति । इन्द्रियाणां निरोधनियमनस्य कर्मयोगारम्भस्य च मिथो विरुद्धत्वादविरोधसिद्ध्यर्थमुक्तं—शास्त्रीये कर्मणि नियम्येति । नहि कश्चिदित्यादिना ज्ञानयोगस्य दुष्करत्वे यो हेतुरुक्तः, तस्यैव कर्मयोगं प्रत्युपकारकत्वेन सौकर्यप्रतिपादनार्थं—पूर्वाभ्यस्तविषयसजातीये इत्युक्तम्।यदि पूर्वाभ्यास उपकारकत्वेन स्वीक्रियते,तर्हि निषिद्धेभ्यो नियमनमशक्यं,तेष्वेव वासनायाः प्राचुर्यादिति शङ्का-

प्र-पा ॥ १,२ गी. २. ६२,६३ ॥ ३ प्रदर्शनार्थ. ग. क. पा ॥

शं॥विषयान् विमूढात्मा विमूढान्तःकरणः मिथ्याचारो मृषाचारः पापाचारः स उच्यते॥

यस्तु इति । यस्तु पुनः कर्मणि अधिकृतः अज्ञः बुद्धीन्द्रियाणि मनसा नियम्य आरभते अर्जुन कर्मेन्द्रियैः वाक्पाण्यादिभिः। किम् आरभते? इत्याह—कर्मयोगम् अस-

आ ॥ तथापि शक्तितः त्यागः कार्य इत्याह—कर्मेन्द्रियाणीति । मन एव प्रयोजकमिति दर्शयितुम् अन्वयव्यतिरेकावाह—मनसा स्मरन् मनसा नियम्येति । कर्मयोगं स्ववर्णा-

ज॥तथापीति।यद्यपि शरीरयात्राद्यर्थानि कर्माणि त्यक्तुमशक्यानि, तथाऽपि शक्तितः शक्यत्वाद्यज्ञादिकर्मणां त्यागः कार्यः । एतदुक्तं भवति—नाशक्यविषये शास्त्रप्रवृत्तिरित्यतस्तदतिरिक्तकर्मार्थः स्मृतौ कर्मशब्दो भविष्यति—इति। एतच्छङ्कापरिहारः श्लोके न दृश्यते,द्वितीयश्लोकश्च व्यर्थ इत्यत आह—मनएवेति । मन एव बन्धमोक्षयोः प्रयोजकं न कर्मकरणाकरणे। अतस्तन्निग्रह एव कार्यो न कर्मत्याग इति ज्ञापयितुमित्यर्थः । अनिगृहीतत्वे मनसो बन्धापेक्षयाऽयोऽन्वयो द्वितीयो व्यतिरेकः । मोक्षापेक्षया तु व्यत्यास इति । एतेन स्मरणस्य मानसत्वाव्यभिचारान्मनसेति व्यर्थमित्यपि परास्तम् । ‘कर्मयोगेन योगिनाम्’इत्यत्र कर्मयोगशब्दस्य गृहस्थादिकर्मविषयत्वेन प्रकृतत्वादत्रापि तद्विषयत्वप्रतीतिः स्यात् ।

रा॥मनसा नियम्य तैरेव एव कर्मप्रवणैरिन्द्रियैरसङ्गपूर्वकं यः कर्मयोगमारभते; सोऽसम्भाव्यमानप्रमादत्वेन ज्ञाननिष्ठादपि पुरुषाद्विशिष्यते ॥ ७ ॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८

नियत व्याप्तं प्रकृतिसंसृष्टेन हि व्याप्तं कर्म, प्रकृतिसंसृष्टत्वमनादिवासनया । नियतत्वेन सुशकत्वादसंभावितप्रमादत्वाच्च कर्मणः कर्मैव कुरु; अकर्मणो ज्ञाननिष्ठाया अपि कर्मैव ज्यायः ।†'नैष्कर्म्यं पुरुषोऽश्नुते' इति प्रक्रमादकर्मशब्देन ज्ञाननिष्ठैवोच्यते; ज्ञाननिष्ठाधिकारिणोऽप्यनभ्यस्तपूर्वतया ह्यनियतत्वेन दुष्करत्वात्सप्रमादत्वाच्च ज्ञाननिष्ठा-

ता॥निरासाय, कर्मणः फलान्तरपरित्यागाय चोक्तम्—आत्मावलोकने प्रवृत्तेनेति। निषिद्धानामात्मावलोकनविरोधित्वाद्व्यवसायात्तेषु स्थितापि वासना निर्धार्यत इति भावः । 'कर्मेन्द्रियैः' इत्यनेनाभिप्रेतं सौकर्यं विशदयति—स्वत एव कर्मप्रवणैरिन्द्रियैरिति। असङ्गस्य कर्मयोगारम्भापेक्षितत्वादसक्तपदस्य यद्वृत्तवाक्यादावन्वयमाह—असङ्गपूर्वकमिति । वैशिष्ट्यप्रकारं विशेषस्यावधिं दर्शयति—असंभाव्यमानप्रमादत्वेन ज्ञाननिष्ठादपीति ॥ ७ ॥

अथ सौकर्यनिष्प्रमादत्वदुस्त्यजत्वादिहेतुभिः कर्मयोगस्यैव ज्यायस्त्वं दर्शयन्'ज्यायसी चेत्कर्मणः' इत्यादेस्साक्षादुत्तरमाह—नियतमित्यादिना। नियतशब्दस्य मन्दप्रयोजनात्क्रियाविशेषणत्वादपि प्रभूतप्रयोजनसमानाधिकरणकर्मविशेषणत्वमेवोचितम्। ततश्च कर्मणो नियतत्वं स्वभावतश्शास्त्रतो वा स्यादुभयतो वा । तत्रैकस्मिन्नुभयविवक्षाकृतिस्तावद्गरीयसी।'शरीरयात्रा'इत्यत्र तु शास्त्रीयकर्मणि नियमाभिप्रायो व्याख्यास्यते। अतोऽत्र स्वभावतो नियतत्वं विवक्षितम्।ज्ञाननिष्ठाया दुष्करत्वे प्रस्तुते कर्मनिष्ठायाः सौकर्यमेव चानन्तरं वक्तुमुचितमित्येतदखिलमभिप्रेत्याह—नियतं व्याप्तमित्यादि। केन किंनिबन्धना व्याप्तिरित्यत्राह—प्रकृतिसंसृष्टेनेति।'अकर्मणः'इतिपदे नञस्तदन्यविषयत्वं विभक्तेश्च पञ्चमीत्वेनावधिविषयत्वं व्यञ्जयति—ज्ञाननिष्ठाया अपीति।अत्राकर्मशब्दस्य ज्ञाननिष्ठाविषयत्वं कथम्?'मा ते सङ्गोऽस्त्वकर्मणि'इत्यत्र हि स एव कर्माभावविषयतया व्याख्यातः; तद्वदत्राप्यनुष्ठानत्यागे प्रसक्ते तस्मादनुष्ठानमेव ज्याय इति वक्तुमुचितमित्यत्राह—नैष्कर्म्येति । अत उपक्रमे कर्मयोगज्ञानयोगयोः तारतम्यमनुयुक्तम्; तस्यैव चोत्तरमिह विवक्षितम्।मुमुक्षुप्राप्यत्वेन निर्दिष्टस्य नैष्कर्म्यस्य सुप्तत्वादिसुलभकर्माभावत्वञ्चायुक्तम्, कर्मानारम्भान्नैष्कर्म्यमित्यत्र साध्याविशेषप्रसङ्गाच्च । अतो ज्ञाननिष्ठैवात्राकर्मशब्देनाभिधीयत इत्यर्थः ।

प्र-पा॥ † गी. ३-४ ॥ १. तिरस्क्रियते. न. ङ. पा ॥ २ गी. २-४७ ॥

श॥कः सन् फलाभिसन्धिवर्जितः स विशिष्यते इतरस्मात् मिथ्याचारात् ॥ ७ ॥

यत एवम् अतः—नियतम् इति। नियतं नित्यं,यो यस्मिन् कर्मणि अधिकृतः फलाय च अश्रुतं तत् नियतं कर्म, तत् कुरु त्वं हे अर्जुन यतः कर्म ज्यायः अधिकतरं फलतः

आ॥श्रमोचितम्। न तु गृहस्थकर्मैवेति नियमः, सन्यासादिविधानात्, सामान्यवचनाच्च ॥

ज॥तन्निरसार्थमाह—कर्मयोगमिति । गृहस्थकर्मैव वनस्थकर्मैव ब्रह्मचारिकर्मैवेति नियमो न विवक्षित इत्यर्थः । सन्यासादीत्यादिपदेन यो नियम्यते, तद्व्यतिरिक्तग्रहण, कर्मयोगशब्दस्य सामान्यवाचित्वाच्च । पूर्वं 'ज्ञानयोगेन सांख्यानाम्'इति यत्याश्रमकर्मणः पृथगुक्तत्वात्सामान्यशब्दोऽपि विशेषे व्यवस्थापितः। न चात्र तथाविधं किंचिदस्तीति भावः ॥ ६ ॥ ७ ॥

रा॥याः कर्मनिष्ठैव ज्यायसी; कर्मणि क्रियमाणे चात्मयाथात्म्यज्ञानेनात्मनोऽकर्तृत्वानुसंधानमनन्तरमेव वक्ष्यते. अत आत्मज्ञानस्यापि कर्मयोगान्तर्गतत्वात्स एव ज्यायानित्यर्थः; कर्मणो ज्ञाननिष्ठाया ज्यायस्त्ववचनं ज्ञाननिष्ठायामधिकारे सत्येवोपपद्यते; यदि सर्वं कर्म परित्यज्य केवलं ज्ञाननिष्ठायामधिकरोषि, तर्ह्यकर्मणस्ते ज्ञाननिष्ठस्य ज्ञाननिष्ठोपकारिणी शरीरयात्रापि न सेत्स्यति;यावत्साधनसमाप्ति शरीरधारणं चावश्यं कार्यम्; न्यायार्जितधनेन महायज्ञादिकं कृत्वा तच्छिष्टाशनेनैव शरीरधारणं कार्यम्,*"आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः'इत्यादिश्रुतेः;†"ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात्' इति वक्ष्यते । अतो ज्ञाननिष्ठस्यापि कर्माकुर्वतो देहयात्रापि न सेत्स्यति; यतो ज्ञाननिष्ठस्यापि ध्रियमाणशरीरस्य यावत्साधनसमाप्ति महायज्ञादि नित्यनैमित्तिकं कर्मावश्यं क-

ता॥कर्मनिष्ठाया ज्यायस्त्वे वक्ष्यमाणं हेत्वन्तरमाह—कर्मणि क्रियमाणे चेत्यादिना। अनन्तरमेवेत्यासन्नस्याभिधानेन तस्येहाभिप्रेतत्वं दर्शितम् । ज्ञानयोगशक्तस्यापि कर्मयोगानुष्ठानाद्याभिप्रायिकमर्थमाह—कर्मण इति । इह ज्ञाननिष्ठाया इति पञ्चमी अप्रसक्तप्रतियोगिकं ज्यायस्त्ववचनमयुक्तमिति भावः । उत्तरार्धस्यावतारमाह—यदीति।अत्र त्वकर्मण इति बहुव्रीहिः। ते इत्यनेन सामानाधिकरण्यादिति व्यञ्जनाय अकर्मणस्ते ज्ञाननिष्ठस्येत्युक्तम्।ननु सर्वकर्मपरित्यागिनो यदि शरीरयात्रापि न स्यात्ततो लब्धोपायस्य स्वरसतः प्रतिबन्धनिवृत्तेरयत्नलभ्यैव मुक्तिस्स्यादित्याशङ्क्याह –यावदिति । नहि साधनानुप्रवेशमात्रात्फलसिद्धिः, किन्तु साधनसम्पूर्तेरेव, सा च न त्रिचतुरदिवसलभ्या; येन शरीरमुपेक्षेमहि। चिरकालसाध्यायां च साधनसम्पूर्तौ तावन्तं कालं शरीरमप्यवश्यं रक्षणीयम् । अनिष्पन्नोपायस्यौदासीन्यात्तत्परित्यागे प्रत्यवायोऽपि स्यादिति भावः । अस्तु शरीरधारणमपेक्षितम् , तथापि तत्र स्वेच्छया चिरकालं कर्तुं शक्यम्, नाप्यौदासीन्यमात्रान्निवृत्तिः, आरम्भककर्मविशेषेण शरीरस्य नियतावधिकत्वात् ,स्मरन्ति च कर्मणा प्रतिनियतानि'विवाहो जन्म मरणम्'इत्यादीनि। अस्तु वा स्वेच्छया शरीरधारणम्, तथापि यत्किञ्चिल्लौकिककर्मणैव तत्सुशकमित्यत्राह—न्यायार्जितेति । अयमभिप्रायः—द्विविधानि कर्मफलानि, नियतानि, अनियतानिच—इति । प्रबलशापादिसम्भवानि नियतानि; इतराण्यनियतानि । अनियतत्वं च तेषां देशकालाद्यपेक्षया, न तु स्वरूपतः; येन कर्मणां निष्फलत्वप्रसङ्गस्स्यात् । ततश्च यान्यत्रानियतानि तत्र स्वव्यापारनियतता, यान्यधिकृत्य प्रायश्चित्तमन्त्रौषधनीतिशास्त्रादीनि । अन्यथा विजिगीषुभिरुपायपरिपन्थिभिरपि न चतुरङ्गादिकमङ्गीक्रियेत, आतुरैरपि न भेषजमुपभुज्येत; स्वेच्छया किञ्चित्करणाभावे स्वाभाविककर्तृत्वाभावाच्छास्त्रस्याप्यनुदयः; अत एव ज्ञानयोगमारुरुक्षता त्वया कर्मवश्यत्वमेव जगतो निवर्तितमिति सम्यगयत्नसिद्धो मोक्षस्समर्थित इति भावः । एवं शरीरधारणाभावे स्वारसिकं विशरारुत्वं द्योतयति शरीरशब्दः। एवकारेण न्यायार्जनयज्ञशिष्टाशनादेर्नियमविधित्वं द्योतितम् । एवंविधा च शरीरयात्रा ज्ञानयोगसाध्यभक्तियोगदशायामप्यविच्छेद्येत्यभिप्रायेणाहारशुद्धिश्रुत्युपादानम् । श्रौतस्यार्थस्यात्रापि विवक्षितत्वज्ञापनाय वक्ष्यमाणतामाह—ते त्वघमिति । पूर्वोपपादितान् हेतून्बुद्धिस्थक्रमेण विविच्योद्भूतनाभिप्रायिकं शब्दं चाखिलमर्थं सुखग्रहणाय

प्र-पा॥*छा.७-२६-२.वा॥मोक्षसाधनभूतोपासनविपरतौ अन्तःकरणस्योपासनोत्पत्तिप्रतिबन्धकपापराहित्यमपेक्षितम् , तच्च राजसतामसाहारमेविना न भवति, अपि तु तद्विविक्तसात्त्विकाहारमेविना भवेदित्युपदिशति— आहारशुद्धौ.. स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः इति । सत्त्वशब्दः—अन्तःकरणपरः; ध्रुवस्मृतिलम्भे दुर्मोचतया ग्रन्थिशब्दवाच्यानामविद्यादीनां मोक्षो भवतीत्यर्थः ॥ † गी ३-१३ ॥

शा॥हि यस्मात् अकर्मणः अकरणात् अनारम्भात् । कथं ? शरीरयात्रा शरीरस्थितिः अपि

रा॥तैव्यम्; यतश्च कर्मयोगेऽप्यात्मनोऽकर्तृत्वभावनयात्मयाथात्म्यानुसन्धानमन्तर्भूतम्; यतश्च प्रकृतिसंसृष्टस्य कर्मयोगस्सुशकोऽप्रमादश्च; अतो ज्ञाननिष्ठायोग्यस्यापि ज्ञानयोगात्कर्मयोगो ज्यायान्। तस्मात्त्वं कर्मयोगमेव कुर्वित्यभिप्रायः ॥ ८॥

एवं तर्हि द्रव्यार्जनादेः कर्मणोऽहंकारममकारादिसर्वेन्द्रियव्याकुलतागर्भत्वेनास्य पुरुषस्य कर्मवासनया बन्धनं भविष्यतीत्यत्राह—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ॥ ९

यज्ञादिशास्त्रीयकर्मशेषभूताद्द्रव्यार्जनादेः कर्मणोऽन्यत्रात्मीयप्रयोजनशेषभूते कर्मणि

---

ता॥नङ्गत्वय दर्शयति—यत्त इति। ज्ञाननिष्ठायोग्यस्यापि कर्मयोगो ज्यायान्,तस्मात्त्वं ज्ञानयोगयोग्योऽपि कर्मयोगमधिकुर्विति वा, न त्वमिदानीं ज्ञानयोगयोग्यः, अतः कैमुत्यात्कर्मयोगमेव कुर्विति वा त्वंशब्दाभिप्रायः ॥ ८ ॥

'यज्ञार्थात्'इतिश्लोकः कर्मविधिनिषेधयोर्विषयव्यवस्थापक इति ज्ञापयितुं शङ्कते—एवं तर्हीति। द्रव्यार्जनादेरित्यत्रादिशब्देन सहायम्रादिग्रहणम्। ममकारादीत्यत्र तु रागद्वेषाभिनिवेशवचनादानविहरणादिग्रहः। अहङ्कारममकारादेर्मनोवृत्तिविशेषत्वादिन्द्रियव्याकुलतारूपत्वोक्तिः।अस्य पुरुषस्येति मुमुक्षोरपीति भावः। कर्मवासनयेति। प्राचीनयानुवर्तमानयाद्यतनव्यापाराभ्यासोपबृंहितया चेति भावः। बन्धनं भविष्यतीति। उत्तरोत्तरशरीरबन्धादिना संसारानुवृत्तिप्रसङ्ग इत्यर्थः। अत्र'यज्ञो वै विष्णुः'इति श्रुते.'यज्ञ ईश्वरः'इति परैर्व्याख्यातम्;तच्चाविरुद्धमस्माकम्,तथापि समनन्तरश्लोकपठितयज्ञशब्देनास्यानुचितमित्यभिप्रायेणाह—यज्ञादिशास्त्रीयकर्मेति। यज्ञादीत्यादिशब्देन यज्ञशब्दस्योपलक्षणपरत्वं ज्ञाप्यते। शास्त्रीयकर्मशब्देनोपलक्षणोपलक्ष्याणां सामान्यतस्सङ्ग्राहकाकारं तदर्थकर्मणो निर्दोषत्वहेतुं च दर्शयति। यज्ञार्थात् यज्ञप्रयोजनात्। तदिदं दर्शितं—शेषभूतादिति। कर्मैव बन्धनं कर्मणा वा बन्धनं यस्य स

---

प्र पा॥ १ शतपथब्रा. १ काण्ड १ प्रपा. १ अ. २. ब्रा १३. वा ॥

---

श॥च ते तव न प्रसिद्ध्येत् प्रसिद्धिं न गच्छेत् अकर्मणः अकरणात्। अतः दृष्टः कर्माकर्मणोः *विशेषः लोके ॥ ८॥

यच्च मन्यसे बन्धार्थत्वात् कर्म न कर्तव्यम् इति तदपि असत्, कथम्—यज्ञार्थात्

---

आ॥ अतो नियतं वर्णाश्रमोचितं कर्म कुरु ॥ ८॥

'कर्मणा बध्यते जन्तुः' इति कर्म बन्धकं स्मृतमित्यत आह—यज्ञार्थादिति। कर्म बन्धनं यस्य लोकस्य स कर्मबन्धनः। यज्ञो विष्णुः यज्ञार्थं सङ्गरहितं कर्म [illegible] बन्धकमित्यर्थः।

---

ज॥उत्तरश्लोकपर्यालोचनया चैवमेवेति भावेन सगतिं सूचयन्व्याचष्टे—अत इति। अतःशब्दपरामर्श्यं कर्म ज्याय इत्यादिनैवोच्यते ॥ ८ ॥

इदानीं तृतीयं पक्षमाशङ्क्य तत्परिहाराय श्लोकमवतारयति कर्मणेति।बन्धकं मोक्षस्य प्रतिबन्धकम्। अतो न करोमीति शेषः। तत्पुरुषत्वभ्रान्तिनिरासायाह—कर्मेति। तत्पुरुषत्वेऽसगतिः स्यादिति भावः। यज्ञशब्दस्य त्यागार्थत्वप्रतीतिमपाकर्तुमाह—यज्ञ इति।अवैष्णवयागस्यापि बन्धकत्वादिति भावः।तदर्थमित्युत्तरवाक्यस्यासंगतिपरिहारायार्थासिद्धं पूर्ववाक्यार्थमाह —यज्ञार्थमिति।सङ्गरहितमित्यनुक्तं कस्मादुक्त-

---

पा॥ *अर्थविशेष ॥

**य॥ क्रियमाणेऽयं लोकः कर्मबन्धनो भवति। अतस्त्वं यज्ञार्थं द्रव्यार्जनादिकं कर्म समाचर। तत्रात्मप्रयोजनसाधनतया यस्सङ्गः,तस्मात्सङ्गान्मुक्तस्तत्समाचर। एवं मुक्तसङ्गेन यज्ञाद्यर्थतया कर्मणि क्रियमाणे यज्ञादिभिः कर्मभिराराधितः परमपुरुषोऽस्यानादिकालप्रवृत्तकर्मवासनामुच्छिद्याव्याकुलात्मावलोकनं ददातीत्यर्थः ॥ ९॥**

ता॥कर्मबन्धनः;तस्य च बन्धकत्वं स्ववासनाद्वारा;न पुनः पापतया अविहितप्रतिषिद्धविषयत्वादस्य कर्मबन्धनशब्दस्य।'अस्य पुरुषस्य कर्मवासनया बन्धनं भविष्यति'इति शङ्काग्रन्थेनायमर्थो दर्शितः। लोकोऽत्र संसारिचेतनवर्गः। अतइति। यज्ञार्थस्य कर्मणो बन्धहेतुत्वाभावादित्यर्थः। द्रव्यादिलाभहेतुभूतयुद्धप्रोत्साहनव्युत्पत्त्यर्थं द्रव्यार्जनादिकमित्युक्तम्। तादर्थ्यं सङ्गत्यागश्चेत्युभयमपि विधेयमिति ज्ञापनाय पृथग्वाक्यकरणम्।कर्तृत्वफलत्यागयोर्विलक्षणं सङ्गत्यागस्य स्वरूपं दर्शयति—तत्रेति। यत्किञ्चित् 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'इतिचेत्सत्य प्रयोजनसाधनत्वबुद्ध्यभावेऽपि सुहृदुपचारवद्भगवत्समाराधनरूपतया स्वरूपेण प्रयोजनत्वबुद्ध्या प्रवृत्त्युपपत्तिः। **मुक्तसङ्ग**इत्यत्र सङ्गस्य बन्धकत्वविवक्षया **सङ्गान्मुक्त** इत्युक्तम्। प्रकृतचोद्यस्यादृष्टद्वारा फलप्रदत्वेन परिहारं वदंस्तदर्थस्य बन्धहेतुत्वोक्त्या फलितं तदर्थस्य मोक्षहेतुत्वप्रकारं दर्शयति—**एवमिति**। एतेन कर्मणामप्रामाणिकापूर्वद्वारा फलप्रदत्वमिति कुदृष्टिमतं निरस्तम्, आर्थवादिकापेक्षितदेवताप्रीतिद्वारैव फलप्रदत्वोपपत्तौ 'स एनं प्रीतः प्रीणाति' इत्यादिश्रुतहानाश्रुतकल्पनाद्यनुपपत्तेः। **कर्मभिराराधित** इत्यनेन हविर्ग्रहणं प्रीतिश्चाभिप्रेते, **परमपुरुष** इति। तदविनाभूतादित्यवर्णादिश्रुतिसिद्धविग्रहविशेषवत्त्वं, सर्वब्रह्माण्डयुगपत्कर्मसन्निधिशक्तिश्च, ददातीति वरप्रदत्वमिति विग्रहादिपञ्चकप्रदर्शनम्। **कर्मवासनामुच्छिद्येति** विपरीतवासनाचोद्यं परिहृतम् ॥ ९ ॥

प्र-पा॥ यजुषि-का. ५-प्र-५-अनु-१०-प-४८॥ पचारे' प्रीतः एनं यजमानपुरुषम् प्रीणातीत्यर्थः॥ सः अन्यन्तर्यामी परमात्मा नारायणः प्रीत. सत्कृतो-

**शं॥इति। 'यज्ञो वै विष्णुः' इति श्रुतेः यज्ञः ईश्वरः,तदर्थं यत् क्रियते तत् यज्ञार्थं कर्म।**

**आ॥मुक्तसङ्गइति विशेषणात्,'कामान्यः कामयते'इति श्रुतेश्च,अनिष्टमिष्टमिति वक्ष्यमाणत्वाच्च'एतान्यपि तु कर्माणि' इति च 'तस्मान्नेष्टियाजकः स्यात्' इति च विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते ॥ ९॥**

ज्ञा॥मित्यत आह—मुक्तेति। इष्टियाजकः फलेच्छया यष्टा। ननु'कर्मणा बध्यते जन्तुः'इत्यपि विशेषवचनम्,अविद्यादीनामनेकेषां बन्धकत्वेनाविद्यादिभिरिति सामान्यस्यानुपात्तत्वात्।गीतावाक्यं कर्म न बन्धकमितीदमपि विशेषवचनम्;तत्कथं तत्परिहारायावतार्य व्याख्यातमित्यत आह—विशेषेति। यद्युक्तविधया द्वयोर्विशेषवचनत्वं सम तथापि गीतावाक्ये यज्ञार्थादित्यादिविशेषणमुच्यते, अतस्तदपेक्षया तत्सामान्यवचनमेव;अतो युक्तमेतद्व्याख्यानमिति भावः।अयमत्र प्रत्युत्तरक्रमः—'कर्मणा बध्यते'इतिवाक्यमाश्रित्य न युद्धादिकर्मत्यागः कार्यः,तस्यावैष्णवकाम्यकर्मविषयत्वात्।कुतः सङ्कोच इति चेत्—परेणापि परिस्पन्दमात्रस्य त्यक्तुमशक्यत्वेनासङ्कुचितार्थतायाः स्वीकर्तुमशक्यत्वात्। तर्हि तत एव बाधकाच्छरीरयात्रार्थकर्मव्यतिरिक्तविषयत्वं कल्प्यत इति चेत्—न,वैयर्थ्यात्;एवमपि मनोव्यापारस्याल्पकत्वेन प्रतिबन्धकाभावो न सिध्यति,तस्यैवान्वयव्यतिरेकाभ्यां प्रयोजकत्वावधारणात्; बाधकात्सङ्कोचमङ्गीकुर्वता चायमपि सङ्कोचोऽङ्गीकार्यः; विधानसामर्थ्याद्युद्धादीनामपि तत्तद्वर्णाश्रमोचितत्वात्।नच विधानस्यामुमुक्षुविषयत्वं, कल्पकाभावात्; नचेदमेव वाक्यं कल्पकं तस्यावैष्णवादिधर्मत्यागेन चरितार्थत्वात्; धर्मिपरित्यागाद्धर्ममात्रपरित्यागस्य ज्यायस्त्वात्; अतो न कर्मस्वरूपं त्याज्यम्—इति ॥ ९ ॥

रा॥यज्ञशिष्टेनैव सर्वपुरुषार्थसाधननिष्ठानां शरीरधारणकर्तव्यतामयज्ञशिष्टेन शरीरधारणं कुर्वतां दोष चाह—

सह यज्ञैः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १०

*"पतिं विश्वस्य' इत्यादिश्रुतेर्निरुपाधिकः प्रजापतिशब्दः सर्वेश्वरं विश्वस्य स्रष्टार विश्वात्मान परायण नारायणमाह । पुरा सर्गकाले स भगवान् प्रजापतिरनादिकालप्रवृत्ताचित्संसर्गविवशा उपसंहृतनामरूपविभागाः स्वस्मिन्प्रलीनाः सकलपुरुषार्थानर्हाश्चेत-

ता॥उक्तमर्थद्वय'सह यज्ञै.' इत्यारभ्य 'मोघं पार्थ स जीवति' इत्यन्तेन निन्दाप्रशसादिभिर्द्रढयतीत्याह — यज्ञशिष्टेनैवेति। सर्वपुरुषार्थसाधननिष्ठानामित्यनेन 'प्रजास्सृष्ट्वा' इति सामान्यनिर्देशफलितमुक्तम् । अत्र प्रजापतिशब्दस्य हिरण्यगर्भादिविषयत्वव्युदासायाह—पतिविश्वस्येतीति । हिरण्यगर्भादेरपि, ननु हिरण्यगर्भादिवदण्डाद्यवच्छिन्नस्येत्यर्थ.। तत एवोक्त — निरुपाधिक इति । श्रुतार्थस्वभावादपि ■ एव सर्वप्रजापतिरिति प्रदर्शनाय सर्वेश्वरमित्यादिविशेषणोक्ति.। नारायणम् एतदखिल नारायणशब्दवाच्यस्यैव हि नारायणानुवाकादिषु प्रतिपाद्यत इति भावः । उक्तञ्च जगत्पतित्व स्रष्टृत्वादिकञ्च समुच्चित्य भगवता पराशरेण 'जग्मो जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम्' इति । 'अनुमानात्तदुद्धार स्रष्टुकामः प्रजापतिः' इति च वराहरूपे भगवति प्रजापतिशब्द' तेन 'प्रजापति.' इत्यादिश्रुत्यनुसारात्प्रयुक्त' । किञ्च स्वतन्त्रस्य धर्मपरतन्त्रान्प्रति नियोगो ह्ययम् । अतोऽत्र 'प्रजास्सृष्ट्वा' इति प्रजाशब्दस्सर्वान् ब्रह्मपर्यन्तान् जगदन्तर्व्यवस्थितान् कर्मजनितससारवशवर्तिनो यज्ञाद्यधिकारिणः प्राणिनः सगृह्णाति । अतोऽत्र प्रजापतिशब्द उपरमस्थप्रजाशब्दानुरोधात्सकोचेन तद्वैरूप्यायोगाच्च परित्यक्तरूढिरकर्मवश्य नियोक्तार सर्वेश्वर नारायणमाह । तथा सृज्यसमभिव्याहृतविषयो ह्ययमनवच्छिन्नः प्रजाशब्दः। पुरेति प्रलयानन्तरकालाभिधानात्ततश्च'सदेव सोम्येदमग्र आसीत् तदैक्षत बहु स्यां प्रजायेयेति' सन्मूलास्सोम्येमास्सर्वाः प्रजा-

प्र पा॥ *तै नारा ११ अनु ३ वा. पतिशब्द रक्षिवाची, तत्रैव रूढत्वात्। 'पा रक्षणे' इति धातोर्निष्पन्नत्वात् रक्षकवाचीति न वाच्यम्, 'पते डौः' इति डौप्रत्ययान्तगमिधातोर्निष्पन्नत्वात् गायत्र्यादि... मनुष्यादिवाचकत्वप्रसङ्गात् । तस्मात् पतिशब्द ... विनिरूढ इति ह्ययम् ॥

१ वि पु ६ अ १ ... १० श्लो मत्स्यपु. च १२०. अ. ४५ श्लो 'नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः' इत्युक्तम् ॥

२ वि.पु १ ४ ७ 'तोयान्तः स महीं ज्ञात्वा जगत्येकार्णवे प्रभुः' इत्युक्तम् ॥ तोयन्त ... नारा यत्नास्तास्म्। अनुमानात् —'सोऽपश्यत्पुष्करपर्णम्' इति पुष्करपर्णलिङ्गदर्शनात् ॥ ३ तै ना १-१॥४.छा ६. २ १॥ ५ छा ६.८.४. अत्र प्रजाशब्देन सर्वान् प्रजाभिदिश्यते, 'सन्मूला सत्प्रतिष्ठाः' इति पदद्वय मध्यस्थत्वात्यव्यवधानोपस्थितपरम् । प्रतिष्ठा निष्ठा पर्यवसान लय इति यावत् । सदायतना सदाधारत्व-मुच्यते। अनेन जगत् ... फलितम्। तत्केवमिति ... त्वेन, उत्पत्तिस्थितिलयहेतुवाचिपदद्वयमध्यगतेन स्थितिहेतुत्ववाचिना 'सदायतना' इतिपदेन स्थितिहेतुधारकत्व सिध्यति ॥

शा॥तस्मात् कर्मणः अन्यत्र अन्येन कर्मणा लोक. अयम् अधिकृतः कर्मकृत् कर्मबन्धनः कर्म बन्धनं यस्य सः अयं लोक.,न तु यज्ञार्थात्। अतः तदर्थं यज्ञार्थं कर्म कौन्तेय मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन् समाचर निर्वर्तय ॥ ९ ॥

ता॥सर्वदायतनाः' 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यारभ्य 'तत्र ब्रह्मा चतुर्मुखोऽजायत बुद्बुदात्त्र्यक्षश्शूलपाणिः पुरुषोऽजायत' 'सिसृक्षुर्विविधाः प्रजाः'इत्यादिषु हिरण्यगर्भादेरपि प्रजात्वावगमान्नारायणस्य च तज्जनकत्वावगतेः 'प्रजास्सृष्ट्वे' त्यनवच्छेदेन निर्दिष्टो विश्वस्य स्रष्टा नारायण एवेति सएवात्र प्रजापतिः। किञ्च 'तस्माद्यज्ञात्सर्वहुतः। ऋचस्सामानि जज्ञिरे''सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाभिवदन्यदास्ते'इति यज्ञैस्सह सर्वप्रजानां स्रष्टृतया निर्दिष्टोऽप्यधिकारपुरुषस्यापि स्रष्टा सहस्रशीर्षत्वादिविशिष्टः परमपुरुष एव । अतोऽपि 'सह यज्ञैः प्रजाः सृष्ट्वा' इति निर्दिष्टः प्रजापतिः विश्वस्य स्रष्टा स एव । तथा 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' इत्यादिवचनबलाद्धिरण्यगर्भाख्यप्रजापतिमुखेनापि विश्वस्रष्टा 'सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इति श्रुतस्स एव विश्वात्मा । किञ्चात्र निर्दिश्यमान देवानां भावनादिकं परमात्मात्मकानामेवेति 'अहं हि सर्वयज्ञानाम्' इत्यादौ व्यक्तं भविष्यति ; 'यस्मिन्निदं सं च वि चैति' 'प्रजापतिश्चरति गर्भे अन्तः' इत्यादिकं—विश्वस्य स्रष्टारं विश्वात्मानमिति विशेषणाभ्यां सूचितम् । अतोऽप्यत्र विश्वात्मानं तमेवाह।तथा 'प्रजापतेस्सभां वेश्म प्रपद्ये'इत्यत्र परमप्राप्यतया च प्रजापतिशब्दनिर्दिष्टोऽपि परमात्मैवेति

प्र-पा॥१.महोप.१.१॥ †'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमाः स एकाकी न रमेत तस्य ध्यानान्तःस्थस्य यज्ञस्तोममुच्यते तस्मिन् पुरुषाश्चतुर्दश जायन्ते एका कन्या दशेन्द्रियाणि मन एकादशं तेजो द्वादशमहङ्कारस्त्रयोदशः प्राणश्चतुर्दश आत्मा पञ्चदशो बुद्धिर्भूतानि पञ्चतन्मात्राणि पञ्च महाभूतानि च स एकः पञ्चविंशतिः पुरुषस्तत्पुरुषं पुरुषो निवेश्य नास्य प्रधानात्संवत्सरा जायन्ते संवत्सराद्धिजायन्ते ॥ १ ॥ अथ पुनरेव नारायणस्सोऽन्यत्कामो मनसाध्यायत तस्य ध्यानान्तःस्थस्य ललाटाद्बुद्बुदमभवत् बुद्बुदात्त्र्यक्षश्शूलपाणिः पुरुषो जायते ॥ अत्र 'एकाकन्या'मन उच्यते, 'कन-दीप्ता'विति धातुः मनसः प्रकाशकत्वात् ॥

२. मनु. १-८ ॥ †'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु बीजमपासृजत् ॥ ८ ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः.' ॥ ९ ॥

३, ४. पुरुषसू. ॥ ५ विष्णुधर्मे. ६८-५१ ॥ † चतुर्मुखं प्रति भगवान् । 'उद्धृत्य पृथिवीं सम्यक् स्थापयित्वा यथा पुरा' इत्युत्तरार्धम् ॥

६. सुबाल ७ ॥ ७. गी. ९-२४.

८. ९. तै. नारा. ६-प्र. १-अनु २-१ वा ॥

† 'अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् । शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः ॥ १ ॥ यस्मिन्निदं सञ्च विचैति सर्वं यस्मिन् देवा अधि विश्वे निषेदुः । तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्' ॥ २ ॥ अपारे अम्भसि समुद्रे, भुवनस्य मध्ये अन्तरिक्षे, भानुमण्डल इति यावत्, नाकस्य दुःखासम्भिन्नस्य भगवल्लोकस्य वैकुण्ठस्य, पृष्ठे उपरिप्रदेशे, त्रिषु धामसु भक्तानुग्रहाय विशेषेणाभिव्यक्तः महतोऽपि आकाशादेरपि, महीयान्, शुक्रेण स्वतेजसा, ज्योतींषि आदित्यादिज्योतींषि, सम्यगनुप्रविष्टः, प्रजापतिः प्रजानां पतिः नारायणः, सर्वेषां गर्भे हृदये अन्तः चरति-परिवर्तत इत्यर्थः ॥ १ ॥ यस्मिन् परमात्मनि, इदं जगत्, महाप्रलये समेति, समित्येकीकारे ; सृष्टिकाले विचैति विभक्तनामरूपं भवति, यस्मिंश्च सर्वे देवा अधिनिषेदुः आश्रिता इत्यर्थः, तदेव भूतभविष्यत्प्रपञ्चशरीरि सर्वात्मभूतं परमव्योमशब्दिते क्षरणशून्ये परमपदे वर्तत इत्यर्थः, 'आ इदम्' इत्यत्र 'आ' इत्यस्य स्मरणार्थत्वात् 'निपात एकाजनाङ्' इति प्रगृह्यत्वात्प्रकृतिभावः, 'व्योमन्' इति छान्दसम् ॥

१०. छा. ८. १४. १॥ †प्रजापतेः परमात्मनः सभां स्थानं वेश्म प्रपद्ये—'प्रभुविमितं हिरण्मयम्' इति दहरविद्यायां निर्दिष्टं वेश्म प्रपद्य इत्यर्थः ॥

शा॥इतश्च अधिकृतेन कर्म कर्तव्यम्—सह इति । सहयज्ञाः यज्ञसहिताः प्रजाः प्रयः

ता॥स्सदायतनाः' 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यारभ्य 'तत्र ब्रह्मा चतुर्मुखोऽजायत बुद्बुदात्र्यक्षश्शूलपाणिः पुरुषोऽजायत' 'सिसृक्षुर्विविधाः प्रजाः'इत्यादिषु हिरण्यगर्भादेरपि प्रजात्वाव-गमान्नारायणस्य च तज्जनकत्वावगतेः 'प्रजास्सृष्ट्वे' त्यनवच्छेदेन निर्दिष्टो विश्वस्य स्रष्टा नारायण एवेति सएवात्र प्रजापतिः। किञ्च 'तस्माद्यज्ञात्सर्वहुतः। ऋचस्सामानि जज्ञिरे''सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाभिवदन्यदास्ते'इति यज्ञैस्सह सर्वप्रजानां स्रष्टृतया निर्दिष्टोऽप्यधिकारपुरुषस्यापि स्रष्टा स-हस्रशीर्षत्वादिविशिष्टः परमपुरुष एव। अतोऽपि 'सह यज्ञैः प्रजाः सृष्ट्वा' इति निर्दिष्टः प्रजापतिः विश्वस्य स्रष्टा स एव। तथा 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' इत्यादिवचनबलाद्धिरण्यग-र्भाख्यप्रजापतिमुखेनापि विश्वस्रष्टा 'सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इति श्रुतस्स एव विश्वात्मा। किञ्चात्र निर्दिश्यमानं देवानां भावनादिकं परमात्मात्मकानामेवेति 'अहं हि सर्वयज्ञानाम्' इत्यादौ व्यक्तं भविष्यति; 'यस्मिन्निदं सं च वि चैति' 'प्रजापतिश्चरति गर्भे अन्तः' इत्यादिकं—विश्वस्य स्रष्टारं विश्वात्मानमिति विशेषणाभ्यां सूचितम्। अतोऽप्यत्र विश्वात्मानं तमेवाह।तथा 'प्रजापतेस्सभां वेश्म प्रपद्ये'इत्यत्र परमप्राप्यतया च प्रजापतिशब्दनिर्दिष्टोऽपि परमात्मैवेति

प्र-पा॥१.महोप.१.१॥ †'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमा. स एकाकी न रमेत तस्य ध्यानान्तस्थस्य यज्ञस्तोममुच्यते तस्मिन् पुरुषाश्चतुर्दश जायन्ते एका कन्या दशेन्द्रियाणि मन एकादशं तेजो द्वादशमहङ्कारस्त्रयोदश. प्राणश्चतुर्दश आत्मा पञ्चदशो बुद्धिर्भूतानि पञ्चतन्मात्राणि पञ्च महाभूतानि च स एक पञ्चविंशति पुरुषस्तत्पुरुष पुरुषो निवेश्य नास्यप्रधानास्संवत्सरा जायन्ते संवत्सरादधिजायन्ते॥ १ ॥ अथ पुनरेव नारायणस्सोऽन्यत्कामो मनसाध्यायत तस्य ध्यानान्तस्थस्य ललाटात् बुद्बुदमभवत् बुद्बुदात्र्यक्षश्शूलपाणि पुरुषो जायते ॥ अत्र 'एकाकन्या'मन उच्यते, 'कन-दीप्ता'विति धातु. मनस. प्रकाशकत्वात् ॥

२. मनु १-८ ॥ †'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ ८ ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' ॥ ९ ॥

३, ४. पुरुषसू ॥ ५ विष्णुधर्मे. ६८-५१ ॥ † चतुर्मुखं प्रति भगवान्। 'उद्धाय पृथिवीं सम्यक् स्थापयित्वा यथा पुरा' इत्युत्तरार्धम् ॥

६. सुबाल. ७ ॥ ७. गी. ९-२४.

८. ९. तै. नारा. ६-प्र. १-अनु २-१-वा ॥

† 'अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्। शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः ॥ १ ॥ यस्मिन्निदं सञ्च विचैति सर्वं यस्मिन् देवा अधिविश्वे निषेदुः। तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्' ॥ २ ॥ अपारे अम्भसि समुद्रे, भुवनस्य मध्ये अन्तरिक्षे, भानुमण्डल इति यावत्, नाकस्य दुःखासंभिन्नस्य भगवल्लोकस्य वैकुण्ठस्य, पृष्ठे उपरिप्रदेशे, त्रिषु धामसु भक्तानुग्रहाय विशेषेणाभिव्यक्तः महतोऽपि आकाशादेरपि, महीयान्, शुक्रेण स्वतेजसा, ज्योतींषि आदित्यादिज्योतींषि, सम्यगनुप्रविष्टः, प्रजापतिः प्रजानां पतिः नारायणः, सर्वेषां गर्भे हृदये अन्तः चरति-परिवर्तत इत्यर्थः ॥ १ ॥ यस्मिन् परमात्मनि, इदं जगत्, संहारकाले समेति, समिल्लेकीकारे; सृष्टिकाले विचैति विभक्तनामरूपं भवति, यस्मिंश्च सर्वे देवा अधिनिषेदुः, आश्रिता इत्यर्थः, तदेव भूतभविष्यत्प्रपञ्चशरीरि सर्वात्मभूतं परमव्योमशब्दिते क्षरणशून्ये परमपदे वर्तत इत्यर्थः, 'आ इदम्' इत्यत्र 'आ' इत्यस्य स्मरणार्थत्वात् 'निपात एकाजनाङ्' इति प्रगृह्यत्वात्प्रकृतिभाव, 'व्योमन्' इति च छान्दसः ॥

१०. छा. ८. १४. १॥ †प्रजापतेः परमात्मनः सभा स्थान वेश्म प्रपद्ये—'प्रभुविमितं हिरण्मयम्' इति दहरविद्यायां निर्दिष्टं वेश्म प्रपद्य इत्यर्थः ॥

र्थं॥इतश्च अधिकृतेन कर्म कर्तव्यम्—सह इति। सहयज्ञाः यज्ञसहिताः प्रजाः त्रयः

ता॥'न च कार्ये प्रत्यभिसन्धिः'इति सूत्रे प्रत्यपादि अतोऽपि परायणत्वमेवाह।एवं—**सर्वेश्वरमित्या**दि-विशेषणैस्तत्तत्प्रमाणसूचनं कृतम्। एवं स्वामिकरूपसत्वदशायातयामाज्यदैवतानिःश्रुविषयप्रजापतिशब्दश्रु-तिरप्यनुसन्धेया। पुराशब्दस्य वचनान्वयप्रतीतिव्युदासेन ब्रह्माद्यगोचरसृष्ट्यन्वयव्यक्त्यर्थमाह—**पुरा सर्गकाले इति**। श्रुतिस्मृत्यादिषु सृष्टिप्रकरणप्रसिद्धिप्रकारमभिप्रैति—**सभगवानिति**। भगवच्छब्देन सृष्ट्यादिपञ्चकृत्योपयुक्तहेयप्रत्यनीककल्याणगुणविशिष्टत्वं दर्शितम्। तथा मानवे धर्मशास्त्रे प्रथमम् 'आसीदिदं तमोभूतम्' इति प्रलयमभिधाय 'ततस्स्वयम्भूर्भगवान्' इति भगवच्छब्देन सर्वस्रष्टा निर्दिष्टः। अनन्तरं च 'ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः''तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यते' इति हिरण्यगर्भाख्यप्रजापतेः स्रष्टा नारायण इत्युक्तम्। 'अत्र प्रजापति रुवाचे'ति परत्वया निर्देशस्तु सारथिभूतस्य स्वस्य प्रजापतिशब्दप्रतिपन्नात् स्वस्मादभेदोपचारेणेति मन्तव्यम्। एवमुत्तरत्रापि सर्वत्र परात्वनिर्देशेषु यथार्हमनुसन्धेयम्। सर्वत्र सृष्टेस्संहारपूर्वकत्वदर्शनादत्रापि तथा विवक्षन्, संहारस्य प्रयोजनं सृष्टेर्हेतुं चाह—**अनादीति**। अनवरतसुखदुःखोपभोगायासपरिश्रान्तानां विश्रमार्थम् अश्रान्तापथप्रवृत्तिवासनाविच्छेदार्थं चोपसंहारः। अतो न संहारे नैर्घृण्यदोषः। तादृशानां खलु स्वोपभोगप्रदाने च परमात्मनित्यसङ्कल्पसिद्धजीवस्वातन्त्र्यनिबन्धनानादिकर्मप्रवाहहेतुकाचित्ससर्ग-एव हेतुरिति न तत्र वैषम्यनैर्घृण्ये। सूत्रितं च 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति' 'न कर्मा

प्र पा॥ १ शारी ४ ३-१३ ॥ †'प्रजापतस्सभाम्' इति प्रत्यभिमभिधस्य न कार्ये—न हिरण्यगर्भे, अपि तु परस्मिन्नेव ब्रह्मणि। वाक्यशेषे 'यशोऽहं भवामि ब्राह्मणानाम्' इति तस्याभिसन्धातुः सर्वविद्यार्थिमोकपूर्वकसर्वात्मभावाभिसन्धानात् 'धूत्वा शरीरमकृतं कृतात्मा' इति अकृतं ब्रह्मलोकमिति विशेषितत्वाच्च परमेव ब्रह्मापासीनम् अर्चिरादिरातिवाहिको नयतीति जैमिनेर्मतमिति सूत्रार्थः॥

२ मनु १ अ †'आसीदिदं तमोभूतमप्रज्ञात-मलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥५॥ ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्। महाभूता-दिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥ ६ ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ १० ॥ यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्। तद्विसृष्टः ..कीर्त्यते ॥ 'आसीत्' इत्यादि श्लोकाः (२-१ १) श्रुतप्रकाशिकाया विस्तरेण व्याख्याताः। तत्र श्लोकार्थो द्रष्टव्यः॥

३. शारी २-१-३४ ॥ † देवमनुष्यादिविषम-सृष्ट्या पक्षपातप्रसङ्गात् दुर्विषहदुःखगर्भसृष्ट्येन नैर्घृण्य-प्रसङ्गाच्च परमकारणिकस्य परमपुरुषस्य परिपूर्णस्य लीलार्थमपि जगत्सर्गो न सम्भवतीत्याशङ्क्याह—वैषम्यति॥ वैषम्यनैर्घृण्ये ईश्वरस्य जगत्सृष्टौ देवादि-वैषम्यप्रयुक्तपक्षपातः दुःखप्रदजगत्सर्गनैर्घृण्यं च न सम्भवतः; सापेक्षत्वात्—परस्य क्षेत्रज्ञकर्मसापेक्षत्वा-द्विषमसृष्टेः, क्षेत्रज्ञानां पूर्वकर्म पर्यालोच्य तत्तत्कर्मा-नुगुणं विषमं जगत्सृजतीति तत्तत्कर्मैव वैषम्यादिहेतु-रित्यर्थः। तथाहि दर्शयति, श्रुतिरिति शेषः, 'साधु-कारी साधुर्भवति पापकारी पापो भवति' इति॥

५ शारी २-१ ३५ ॥ † न कर्मेति॥ सद-वेत्यकत्वावधारणात् तदानीं क्षेत्रज्ञाभावात् कर्म न सम्भवतीति चेत्—न, अनादित्वात् क्षेत्रज्ञानां तत्कर्म-प्रवाहाणां च। उपपद्यते च क्षेत्रज्ञस्वरूपानादित्वेऽपि नामरूपविभागाभावादविभागश्रुतिः, अन्यथाऽकृताभ्या-गमकृतविप्रणाशप्रसङ्गात्। उपलभ्यते च श्रुतिस्मृतिषु क्षे-त्रज्ञानामनादित्वम् 'ज्ञाज्ञौ द्वावजावीशनीशौ''नित्यो नि-त्यानाम्''प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति॥

श॥वर्णाः ताः सृष्ट्वा उत्पाद्य पुरा पूर्वं सर्गादौ उवाच उक्तवान् प्रजापतिः प्रजानां स्रष्टा अनेन यज्ञेन प्रसविष्यध्वं प्रसवः वृद्धिः उत्पत्तिः तां कुरुध्वम्। एष यज्ञः वः युष्माकं अस्तु भवतु इष्टकामधुक् इष्टान् अभिप्रेतान् कामान् फलविशेषान् दोग्धीति इष्टकामधुक्॥

रा॥नेतरकल्पाः प्रजास्समीक्ष्य परमकारुणिकस्तदुज्जिजीवयिषया स्वाराधनभूतयज्ञनिर्वृत्त-
ये यज्ञैस्सह तास्सृष्ट्वैवमुवाच—अनेन यज्ञेन प्रसविष्यध्वं,आत्मनो वृद्धिं कुरुध्वम् एष वो

ता॥विभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च'' 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धाऽवैयर्थ्या-
दिभ्यः' इति । उपसंहृतनामरूपविभागाः स्वस्मिन् प्रलीना इति । असद्व्यपदेश एकत्वव्यपदे-
शादिश्च निर्व्यूढः । नामरूपप्रहाणं स्वस्मिन् प्रलयश्च मोक्षवत्पुरुषार्थ एव स्यादित्याशङ्क्याह—
सकलेति । त्रिवर्गेऽप्यनर्हाः, किं पुनरपवर्ग इति भावः । तत्र हेतुमाह—चेतनेतरकल्पा इ-
ति । स्वप्रकाशत्वेऽप्यत्यन्तज्ञानसङ्कोचात्तत्कल्पत्वम्; नतु ज्ञानविनाशात् । प्रजाः हिरण्यगर्भादि-
काः; समीक्ष्य-सम्यगवलोक्य; एतेन 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः' 'नावेक्षसे यदि'
इत्यादिकमभिप्रेतम् । 'स एकाकी न रमेत' इति श्रुतेः 'परमकारुणिकः किल त्वम्' इत्यादिस्मृति-
सिद्धगुणविशेषे तात्पर्यमाह—परमकारुणिकइति । अवाप्तसमस्तकामस्य जगद्व्यापारानुपपत्तिं परि-
हरति—तदुज्जिजीवयिषयेति । कारुणिका हि स्वार्थनिरपेक्षा एव परोज्जिजीवयिषया प्रवर्तन्ते,
सैव प्रवृत्तिरस्य लीलापीति न दोष इति भावः । यज्ञैस्सहेति निर्देश उज्जीवनोपायविशेषनिष्पत्त्यर्थ इत्य-
भिप्रायेणाह—स्वाराधनेति । यज्ञैरिति वैविध्यसूचनाय बहुवचननिर्देशे पूर्वं कृतेऽपि अनेनेत्येकवचनेन
परामर्शो जात्येकत्वपर इत्यभिप्रायेणाह—अनेनयज्ञेनेति । 'सहयज्ञाः' इति शंकरयादवप्रकाशीयपाठः
स्वप्रसिद्धेरनादृतः।'प्रसविष्यध्वम्'इत्यत्र 'षूञ् प्राणिप्रसवे' 'षूङ् गर्भविमोचने'इतिधातुद्वयेऽपि प्रजनन-
मात्रप्रतीतिस्स्यात्; न च द्वादशाहादिवत्सर्वेषां यज्ञादीनां प्रजामात्रं फलम्।अतस्सन्तत्युपलक्षिता स्वनि-
ष्पाद्या समृद्धिरत्र विवक्षितेत्यभिप्रायेणाह—आत्मनो वृद्धिं कुरुध्वमिति।यज्ञसाध्यः कामो निषिद्धेतर-
धर्माविरुद्धसमस्तकाम्यवर्गः;तत्रापि मोक्षतत्साधनोपकारिषु तात्पर्यंभूयस्त्वमित्यभिप्रायेण मोक्षतदनुगुणो-
पादानम् । रुचिवैचित्र्यज्ञापनायेष्टशब्देन विशेषणम्। मोक्षस्येष्टकामशब्देन सङ्ग्रहाय—परमपुरुषार्थल-

प्र·पा॥१. शारी. २-३-४९॥†'परात्तु तच्छ्रुतेः' इति जीवस्य कर्तृत्वं परात्मायत्तमित्युक्तम्; तर्हि विधिनिषेधशास्त्रानर्थक्यं प्रसज्येतेति तत्राह—कृतेति ॥ कृतप्रयत्नापेक्षस्तु सर्वासु क्रियासु कृतं प्रयत्नम् उद्योगमपेक्ष्य अन्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयति; परमात्मानुमतिमन्तरेण अस्य प्रवृत्तिर्नोपपद्यत इत्यर्थः । कुत एतत्, विहितप्रतिषिद्धावैयर्थ्यादिभ्य अवगम्यते; आदिशब्देन अनुग्रहनिग्रहादयो गृह्यन्ते । यथा गुरुतरदार्वादिभरणमबलः प्रबलसहकृतः कुर्वन्नपि स्वीयप्रयत्नेन विधिनिषेधयोग्यो भवति; एवमेव जीवः परपुरुषानुमतिसहकृतः प्रवर्तमानोऽपि विधिनिषेधयोग्य इति न कश्चिद्विरोध इति भावः ॥

२. भारतं. शान्तिप. मोक्षध. ३४८. ७२ ॥ †'सात्त्विकस्स तु विज्ञेयस्सवै मोक्षार्थचिन्तकः'इत्युत्तरार्धम् । अत्र 'पुरुषम्' इति पदं 'पुरुषावात्ममानवौ' इति कोशानुरोधेनात्मपरम्, एकवचनं दौर्लभ्याभिप्रायकम्; सत्त्वं शीलमस्य सात्त्विकः, सत्त्वेन जयतीति वा, 'शीलम्' इति वा, 'तेन दीव्यति खनति जयति इति वा ठक्। मोक्षार्थं चिन्तकः मोक्षरूपप्रयोजनचिन्तकः, 'चिति स्मृत्याम्' 'ध्यै आध्याने' इति धातुपाठात् चिन्तनस्मरणाध्यानशब्दाः पर्यायवाचकाः; आध्यानमुत्कण्ठापूर्वकस्मरणम्; उत्कण्ठा तु 'सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते । तत्प्राप्तीच्छा समङ्कल्पामुत्कण्ठा कवयो विदुः' इत्युक्तेरिच्छारूपत्वात् अभिप्रीतिरूपरुचिः; एतावता मोक्षरूपप्रयोजनरुचियुक्ता इति लभ्यते ॥

३. स्तोत्ररत्ने. १०. श्लो ॥†'नावेक्षसे यदि ततो भुवनान्यमूनि नालं प्रभो भवितुमेव कुतः प्रवृत्तिः । एवं निसर्गसुहृदि त्वयि सर्वजन्तोः स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम्' ॥ अस्यार्थो भाष्ये द्रष्टव्यः.

४. महोप. १ अ ॥

५.

६. अत्र प्रथम आदादिकः, द्वितीयो दैवादिकः, उभावपि ङित्वादात्मनेपदिनौ ॥

रा॥ यज्ञः परमपुरुषार्थलक्षणमोक्षाख्यस्य कामस्य तदनुगुणानां च कामानां प्रपूरयिता भवतु ॥ १० ॥

देवान् भावयताऽनेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११

कथम्; अनेन देवताराधनभूतेन देवान् मच्छरीरभूतान् मदात्मकानाराधयत †'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति हि वक्ष्यते । यज्ञेनाराधितास्ते देवा मदात्मकाः

ता॥क्षणेत्युक्तम् । अवधीरितस्वर्गाय अर्जुनायोपदेशात् 'मा फलेषु' 'श्रेयः परम्' इति पूर्वापरानुगुण्याच्चात्र मोक्षार्थतोक्तिर्युक्ता। प्रपूरयितेति'दुह प्रपूरणे'इति हि धातुः।ननु प्रपूरण हि पूरणाभावेऽनुशिष्ट, प्रस्थानप्रस्मरणादिष्विवात्रापि प्रशब्दस्याभावविषयत्वात्। अत एव हि 'गा दोग्धि'इत्यादिप्रयोगः । सत्यम्, तथापि 'गा दोग्धि'इत्यत्रापि गोरेव पयोरेचन, न तु पयसः स्वरूपवैकल्यम्; तद्वदत्रापि गोस्थानीयाद्यज्ञतः क्षीरस्थानीयाः कामा लभ्यन्ते, तैस्तस्य रेचन स्यात्; फलदातुस्सकाशात्फलमादाय युष्मभ्य ददातीत्यर्थः; तेन यज्ञाराधितोऽहं युष्मभ्य कामान् ददामीत्युक्त भवति ॥ १० ॥

यज्ञेनात्मनो वृद्धिः कथम्, क्षणिकक्रियारूपश्च यज्ञः कथ कालान्तरभाविफलसाधनम्, 'नान्यः पन्थाः' इत्यादिना ज्ञानस्यैव मोक्षप्रदत्वे सिद्धे कथ स्वर्गादिसाधनतया निर्दिष्टो यज्ञो मोक्षसाधनम्, स्मरन्ति च'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' इति। तथा'नैवं धर्मी नचाधर्मी' 'ज्ञान सन्न्यासलक्षणम्' इति च; कथ च मोक्षबहिर्भूताना विचित्रसांसारिककामाना तदनुगुणत्वमिति शङ्कानन्तकमभिप्रेत्याह—कथमिति । तत्र 'देवान् भावयत' इति प्रथमस्योत्तरम्, देवताराधन ह्याराधकस्यातिशय एव, अतस्स एवात्मनो वृद्धिः; 'यज देवपूजायाम्' इति यज्ञपदप्रकृतिं धातु स्मारयति—देवताराधनभूतेनेति । यज्ञस्य मोक्षहेतुत्वानुपपत्तिपरिहारायाह—मदात्मकानिति । परमात्मसमाराधनतया कृत कर्मैव मोक्षसाधनज्ञानाङ्गतया स्थित्वा मोक्ष साधयतीति प्रागेवोक्तम् । मदात्मकानित्यस्यान्तर्यामिब्राह्मणादिसिद्धत्वसूचनाय—मच्छरीरभूतानित्युक्तम् । यज्ञेन देवाना भावन हि सन्तोषणतया भावनमित्यभिप्रायेणोक्तम्—आराधयतेति । तदभिप्रायेण च ब्राह्मणे 'तैस्माद्वितः प्रदानं देवा उपजीवन्ति' इति । मदात्मकानित्यस्यात्रानुक्तस्य कथमुपादानमित्यत्राह—अहं हीति । क्षणिकस्य फलप्रदानानुपपत्तिपरिहाररूप द्वितीय पाद व्याख्याति—यज्ञेनेत्यादिना पुष्णन्त्वित्यन्तेन। प्रस्तुताकारपरामर्शितच्छब्दार्थः—यज्ञेनाराधिता इति । देवानां फलप्रदानशक्ति-

प्र-पा॥ †गी - ९ - २४॥

१. नादाद्विव, स्वरितेत्त्वादुभयपदी ॥

२. पुरुषः ॥

३. भारते. शान्तिप. मोक्ष २४७. ७ मध्या-सोपनिषदिव ॥ ४.

५. नारदपरिव्राजकोप. ३. उपदेशे ॥

६. भौवादिक स्वरितेत् ॥

७. यजु ३-का, २-प्रश्न, ९-अनु, ७ पा॥

श्री॥कथम्—देवान् इति । देवान् इन्द्रादीन् भावयत वर्धयत अनेन यज्ञेन । ते देवा भावयन्तु वृष्ट्यादिना आप्याययन्तु वः युष्मान् । एवं परस्परं अन्योन्य भावयन्तः श्रेयः

आ॥अत्रार्थवादमाह—सहयज्ञा इति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

ज॥'सह यज्ञाः' इत्यादेर्न प्रकृते सङ्गतिर्दर्शने, अत आह—अनेनेति । वर्णाश्रमोचितस्य कर्मणः सर्वथा कर्तव्यत्वे । स्तुतिर्निन्दा परकृतिः पुराकल्पोऽर्थवादः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

रा॥स्वाराधनापेक्षितान्नपानादिकैर्युष्मान् पुष्णन्तु । एवं परस्परं भावयन्तः परं श्रेयो मोक्षाख्यमवाप्स्यथ ॥ ११ ॥

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२

यज्ञभाविताः यज्ञेनाराधिताः मदात्मका देवाः इष्टान्भोगान् वो दास्यन्ते उत्तमपुरुषार्थलक्षणं मोक्षं साधयतां ये इष्टा भोगास्तान्भोगान् पूर्वपूर्वयज्ञभाविता देवा दास्यन्ते, उत्तरोत्तराराधनापेक्षितान् सर्वान्भोगान् वो दास्यन्ते इत्यर्थः । स्वाराधनार्थतया तैर्दत्तान् भोगान् तेभ्योऽप्रदाय यो भुङ्क्ते चोर एव सः? चौर्यं हि नाम-अन्यदीये तत्प्रयोजनायैव परिक्लृप्ते वस्तुनि स्वकीयताबुद्धिं कृत्वा तेन स्वात्मपोषणं । अतोस्य न पर-

ता॥सिद्ध्यर्थं पुनः—मदात्मका इत्युक्तम्।एव च क्षणिकस्यापि देवताप्रीतिरूपापूर्वद्वारा फलसाधनत्वम्; महाप्रलये त्विन्द्रादिलयेऽपि परदेवताप्रीतिद्वारा पुनः फलप्रदत्वमुपपन्नमित्युक्तं भवति । चतुर्थशङ्कापरिहारमभिप्रेत्याह—स्वाराधनेति। देवैराराधकानां भावनं नामापेक्षितैः पोषणमित्यभिप्रायेणोक्तम्—पुष्णन्त्विति । उत्तरार्धमुक्तस्यैवार्थस्य मोक्षोपयोगित्वज्ञापकमित्यभिप्रायेणाह—एवमिति । स्वर्गादिरूपश्रेयोव्यावृत्त्यर्थं परत्वविशेषणमित्यभिप्रायेणोक्तम्—मोक्षाख्यमिति ॥ ११ ॥

'ते देवा भावयन्तु वः'इत्युक्तस्य पोषणस्य प्रकारो 'देवान् भावयत'इत्यस्य व्यतिरेके प्रत्यवायश्चोच्यते—इष्टानितिश्लोकेन । इष्टानित्यस्यार्थः—उत्तरोत्तराराधनापेक्षितानिति । न हि मुमुक्षुभिरुदरपूरणाद्यर्थं भोगा इष्यन्त इति भावः । बहुवचनासङ्कोचमभिप्रेत्योक्तम्—सर्वानिति । दास्यन्त इति कर्त्रभिप्रायक्रियाफलात्मनेपदस्वभावानुरोधेनात्मार्थपाचकानां चोरत्वसिद्ध्यर्थं—स्वाराधनार्थतयेत्युक्तम् । ननु किमत्र चोरत्वम्; न हि देवानां भोगानसौ गूढं प्रसह्य वा हरति ; न च तैर्दत्तस्य स्वहस्तागतस्य भोगश्चौर्यम् ; न हि राजादिसेवकास्तद्दत्तभोगजीविनश्चोरा इति शूलमारोप्यन्ते; एवं च सति सर्वेषां यज्ञादिफलभुजामविशेषेण चोरत्वं प्रसज्यत इत्याशङ्क्याह—चौर्यं हीति । परबुद्ध्या परप्रयोजनत्वेन कल्पितस्य स्वकीयस्य परानुमत्या स्वप्रयोजनतया परिकल्पितस्यान्यदीयस्य च व्यवच्छेदाय अन्यदीय इत्यादिविशेषणद्वयम् । तेन स्वात्मपोषणमिति चौर्यस्य फलम्;अन्यदीये स्वकीयताबुद्धिकरणमित्येव लक्षणम् । तत्प्रयोजनतयेत्यन्यदीयत्वफलम्, तेन स्वात्मपोषणानौचित्यद्योतनम् । वस्तुशब्देन चोरयितव्यावान्तरभेदाविवक्षा द्योतयति । बुद्धिं कृत्वेत्यनेन चौर्यस्य नाधिकव्यापारोऽवश्यापेक्षित इति सूचितम् । बुद्धिपूर्वत्वं च द्योतितम् । एवं च सति 'योऽन्यथा सन्तम्' इत्याद्युक्तात्मचौर्यमपि लक्षितं भवति । भगवदीये तद्गतातिशयाधानेच्छयैव परिकल्पिते प्रत्यगात्मनि स्वातिशयावहस्वतन्त्रत्वाभिमानरूपत्वात्तस्य । नन्वेवमप्यत्रोदाहरणे कथं चोरत्वम्? उच्यते—देवा हि कर्मभिराराधिता

प्र-पा॥१. नकाधिक. ग-ङ-पा ॥
२. भारते. उद्योगप. ४२. ३५ ॥ † 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा' ॥

शं॥परं ब्रह्मविज्ञानप्राप्तिं क्रमेण अवाप्स्यथ । स्वर्गं वा परं श्रेयः अवाप्स्यथ ॥ ११ ॥

किञ्च—इष्टान् भोगान् इति । इष्टान् अभिप्रेतान् भोगान् हि वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रादीन् यज्ञभाविताः यज्ञैः वर्धिताः तोषिताः इत्यर्थः । तैः देवैः दत्तान् भोगान् अप्रदाय अदत्त्वा आनृण्यं अकृत्वा इत्यर्थः, एभ्यः देवेभ्यः, यः

रा॥मपुरुषार्थानर्हतामात्रं अपितु निरयगामित्वं च भविष्यतीत्यभिप्रायः ॥ १२ ॥

तदेव विवृणोति—

यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात् ॥ १३

इन्द्राद्यात्मनावस्थितपरमपुरुषाराधनार्थतयैव द्रव्याण्युपादाय विपच्य तैर्यथावस्थितं परमपुरुषमाराध्य तच्छिष्टाशनेन ये शरीरयात्रां कुर्वते, ते त्वनादिकालोपार्जितैः किल्बिषैरात्मयाथात्म्यावलोकनविरोधिभिस्सर्वैर्मुच्यन्ते ये तु परमपुरुषेणेन्द्राद्यात्मना स्वाराधनाय दत्तानात्मार्थतयोपादाय विपच्याश्नन्ति ते पापात्मानोऽघमेव

---

ता॥अपि हविर्ग्रहणार्थमेव फलं प्रयच्छन्ति, यथा राजानष्षड्भागसङ्ग्रहाय स्वाराधकेभ्यः क्षेत्रादिकम्, तत्र करप्रदानविमुखाः पुरुषा इव हविरादिकमप्रयच्छन्तो दण्ड्या एव—इति। चोरत्वनिदर्शनफलितं व्यनक्ति—अत इति। चोरत्वादित्यर्थः। पुरुषार्थानर्हेत्यनेन विहितकर्माकरणस्याधिकारित्वनिवृत्तिहेतुत्वमपि ख्यापितम्। भविष्यतीत्यनेन प्रत्यवायस्य देहान्तरभावितया योग्यानुपलम्भबाधाभावस्सूचितः॥

पुनरुक्तिपरिहारायार्थान्तरपरत्वव्युदासाय चाह—तदेव विवृणोति इति। तत्र पूर्वार्धं 'श्रेयः परमवाप्स्यथ' इत्यस्य प्रकारकथनम्; उत्तरार्धं तु 'तैर्दत्तान्' इत्याद्युक्तचोरत्वप्रपञ्चनरूपम्। यज्ञाङ्गस्य द्रव्याद्याकारविशेषकथनम्—इन्द्राद्यात्मनेत्यादि। अवधारणेन केवलेन्द्राद्यर्थत्वस्वार्थत्वयोर्व्यवच्छेदः। द्रव्योपादानपचनदशयोरपि परमपुरुषाराधनार्थत्वबुद्धिः कार्येति ज्ञापनाय—द्रव्याण्युपादायेत्याद्युक्तम्। एतच्च 'ये पचन्ति' इत्येतद्व्यतिरेकलभ्यम्। केवलेन्द्राद्याराधनस्यापि वस्तुतः परमपुरुषाराधनरूपत्वादत्र तद्व्यवच्छेदाय तत्तद्देवतायजनस्य परमपुरुषपर्यन्तत्वसिद्धये च—यथावस्थितमित्युक्तम्। यज्ञशिष्टममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः। यागप्राप्तशरीरयात्रा यज्ञशिष्टेनैव कार्येति नियमः। सन्तः यज्ञशिष्टाशिन एव वर्तमाना इत्यर्थः। तदेतदुच्यते—शरीरयात्रां कुर्वते इति। यद्वा सन्त इति पदमुत्तरार्धस्थपापशब्दप्रतिस्थानीयत्वात्साधुविषयम्। उत्तरार्धवदत्रापि साध्यसाधनांशविभागद्योतनाय यत्तच्छब्दाभ्यां वाक्यभेदकरणम्। तुशब्देन सद्भ्यः पापानां विशेषे बोधिते तेभ्योऽपि सतां निर्णयोऽर्थात्सिद्ध इति द्योतनायाह—ते त्वनादीति। अत्र चुल्ल्यादिपञ्चसूनाकृतपापमात्रस्य व्यवच्छेदार्थं सर्वशब्दबहुवचनाभ्यां प्रदर्शितं किल्बिषानन्त्यं समर्थयितुम्—अनादिकालोपार्जितैरित्युक्तम्। द्विविधानि किल्बिषाणि प्राप्तिविरोधीन्युपायविरोधीनि चेति। तत्र प्राप्तिविरोधीनि भक्तियोगैकनिवर्त्यानि। तेभ्योऽत्र सर्वशब्दसङ्कोचमभिप्रेत्योक्तम्—आत्मयाथात्म्यावलोकनविरोधिभिरिति। स्मरन्ति च 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः। यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' इति। एतेन विरोधित्वाविशेषात्सांसारिकपुण्यान्यप्यत्र किल्बिषशब्देनोच्यन्ते इत्यपि सूचितम्। पूर्वोत्तरार्धविघातिनो भक्तियोगाद्विशेषसूचनाय—उपार्जितैरित्युक्तम्। 'आत्मकारणादि' त्यत्र कारणशब्दः प्रयोजनरूपहेतुपर इति ज्ञापनायोक्तम्—आत्मार्थतयेति। पचनमात्रस्याघभोजनत्वेन निन्दानुपपत्तेः 'आत्मकारणात्पचन्ति' त्यनेनार्थसिद्धमुक्तम्—अश्नन्तीति। पुल्लिङ्गोऽत्र पापशब्दस्तद्गुणसारत्वात्पापनिर्दिष्टविषय इत्यभिप्रायेणोक्तम्—पापात्मान इति पापस्वभावा इत्यर्थः। अघशब्दस्य भोज्यनिन्दार्थमौपचारिकत्वद्योतनाय-

---

श॥भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव स देवादिस्वापहारी ॥ १२ ॥

ये पुनः—यज्ञ इति। देवयज्ञादीन् निर्वर्त्य तच्छिष्टं अशनम् अमृताख्यम् अशितुं

रा॥भुञ्जते अघपरिणामित्वादघमित्युच्यते आत्मावलोकनविमुखाः नरकायैव पचन्ते॥१३॥

पुनरपि लोकदृष्ट्या शास्त्रदृष्ट्या च सर्वस्य यज्ञमूलत्वं दर्शयित्वा यज्ञानुवर्तनस्यावश्यकार्यतामननुवर्तने दोषं चाह—

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६

अन्नात्सर्वाणि भूतानि भवन्ति पर्जन्याच्चान्नसम्भव इति सर्वलोकसाक्षिकं यज्ञात्पर्जन्यो भवति इति च *शास्त्रेणावगम्यते 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते ।

ता॥घमेवेत्येवकार उक्तः । उपचारनिमित्तं सम्बन्धमाह—अघ परिणामित्वादिति । अघहेतुत्वादित्यर्थः । फलितमनिष्टद्वयमाह—आत्मावलोकनविमुखा इति । आत्मार्थं पचमानस्य पूर्वकिल्बिषनिवृत्त्यभावादात्मावलोकनवैमुख्यम्; उत्तरोत्तरकिल्बिषहेतुत्वाच्च पुनर्नरकप्राप्तिरिति 'केवलाघो भवति केवलादी' इति वचनाभिप्रेतमाह—नरकायैवेति । न पुनरैहिकायामुष्मिकाय वा सुखायेति भावः ॥

उक्तस्यैवार्थस्य प्रमाणप्रदर्शनपूर्वकमुपबृंहणम् 'अन्नाद्भवन्ति' इत्यादिना क्रियत इत्यादरार्थत्वादपौनरुक्त्यमित्यभिप्रायेणाह—पुनरपीति । यद्यपि लोकदृष्ट्या साक्षाद्यज्ञमूलत्वं दर्शयितुमशक्यम्, तथापि शास्त्रदृष्टिसमुचितवेषेणैतदुच्यत इत्यदोषः। विभजिष्यते च लोकशास्त्रदृष्ट्योर्विषयाद्यः। पर्जन्यशब्देनात्र पर्जन्यकार्यं वर्षं लक्ष्यते। अन्नादित्यादौ 'वृष्टेरन्नं ततः प्रजाः' इत्ययमंशो लोकसिद्धत्वादनुपात्तः । 'कर्मसमुद्भवः' इत्युक्ते पुण्यपापरूपकर्मसमुद्भव इतिधीस्स्यात्, तद्व्युदासाय—द्रव्यार्जनेत्याद्युक्तम् । अत्र

प्र॰पा॥* ब्रह्मपुराणे-२९-अ. ४-श्लो.मनुभारतादिषु च द्रष्टव्यम् ॥ | १. तै-अष्ट०२० प्रश्न०८०ऋग्वे-च.८-६-२३-१०-१०-११७-६ ॥

शा॥शीलं येषान्ते यज्ञशिष्टाशिनः सन्तः मुच्यन्ते सर्वकिल्बिषैः सर्वैः पापैश्च चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्च । अन्ये तु आत्मम्भरयो भुञ्जते ते तु अघं पापं स्वयमपि पापाः ये पचन्ति पाकं निर्वर्तयन्ति आत्मकारणात् आत्महेतोः ॥ १३ ॥

इतश्च अधिकृतेन कर्म कर्तव्यं, जगच्चक्रप्रवृत्तिहेतुः हि कर्म । कथं इति ? उच्यते—

आ॥हेत्वन्तरमाह—अन्नादिति । यज्ञः पर्जन्यान्नत्वात्तत्कारणमुच्यते। पूर्वयज्ञविवक्षायां

ज॥अन्नादित्यादेः सङ्गतिमाह—हेत्वन्तरमिति । अन्नेत्यनुवर्तते । अत्र पर्जन्यो मेघ आदित्यश्च विवक्षितौ । तत्रादित्यस्य पूर्वसिद्धस्य कथं 'यज्ञाद्भवति पर्जन्यः' इति यज्ञः कारणत्वेनोच्यते इत्यत आह—यज्ञ इति। यद्यपि यज्ञो देवतामुद्दिश्यद्रव्यपरित्याग इति वक्ष्यति;तथाप्यत्र परित्यज्यमानं द्रव्यं गृह्यते। तस्य पर्जन्यान्नत्वात् पर्जन्योपभोग्यत्वात् उपभुक्तेन च तस्य बलाद्युपचयाद्यज्ञस्तस्य पर्जन्यस्य कारणमुच्यते । ननु पर्जन्यो देवतात्मा यज्ञेन पर्जन्यत्वं प्राप्तः,सः यज्ञो विवक्षितोऽत्रास्तु;तथा सति यज्ञात्पर्जन्योद्भवो मुख्य एव सेपत्स्यत इति; नेत्याह—पूर्वेति। तस्य पर्जन्यपदप्राप्तिहेतोः, यज्ञस्येतिशेषः । ननु तदा

रा॥ आदित्याज्जायते वृष्टिः' इत्यादिना यज्ञश्च द्रव्यार्जनादिकर्तृव्यापाररूपकर्मसमुद्भवः कर्म च ब्रह्मोद्भवं । अत्र च ब्रह्मशब्दनिर्दिष्टं प्रकृतिपरिणामरूपं शरीरं ।

ता॥मुख्यार्थसम्भवाच्चब्रह्मशब्देनापूर्वलक्षणा वदन्तो निरस्ता इति भावः।आदिशब्देन द्रव्यस्यार्जितस्य पचनादि गृह्यते।ननु कर्तृव्यापाररूपस्य कर्मणः कथं ब्रह्मोद्भवत्वम्, तर्हि प्रत्यगात्मजन्य शरीरेन्द्रियादिजन्यमिति वा निर्देष्टुं युक्तम्; न च सर्वसाधारणं ब्रह्मणो हेतुत्वमिह विशिष्य निर्देष्टव्यम् ; ब्रह्मणश्चाक्षरसमुद्भवत्वमनुपपन्नम् ब्रह्मशब्दस्य परमात्मविषयत्वे जीवविषयत्वे वा द्वयोरपि नित्यत्वात् कारणभूतस्य कस्यचिदक्षरस्याभावात् । ब्रह्माक्षरशब्दयोर्वेदपरमात्मविषयतया शङ्करव्याख्यापि चक्रत्वासङ्गता। यादवप्रकाशाद्युक्त, ब्रह्मशब्दस्य स्फोटादिपरत्वमक्षराणां तद्व्यञ्जकत्वादिकं च तत्तत्प्रक्रियादूषणादेव निरस्तम्। 'स्फोटस्तु वर्णसभ्रम.' इति तु वर्णानां स्वार्थस्फुटीकरणशक्तिपरमित्याशयाद्‌ 'याह—अत्रचेति । चशब्दाद्विनिवृत्तौ । अनेनेन ब्रह्मशब्दस्य साक्षात्परमपुरुषे मुख्यत्वेऽपि प्रकरणादिबलात्तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकोऽयमित्यभिप्रेतम् । द्रव्यार्जनादिकर्मणश्शरीरिणा साध्यत्वात्तत्र शरीरशब्दस्याक्षरशब्देन विविच्य वक्ष्यमाणत्वात् शरीरशब्दस्य विवक्षयायं ब्रह्मशब्द इति प्रकृतिपरिणामरूपं शरीरमित्युक्तम् । प्रकृतिपरिणामरूपे शरीरे तद्रूपत्वेन ब्रह्मशब्दनिर्देशाय प्रकृतौ तत्प्रयोगं तावदाह—

प्र-पा॥ १. शरीराश्च विपर्यायम्. पा ॥

श॥अन्नात् इति। अन्नात् भुक्तात् लोहितरेतः परिणतात् प्रत्यक्षं भवन्ति जायन्ते भूतानि। पर्जन्यात् वृष्टेः अन्नस्य सम्भवः अन्नसम्भवः । यज्ञात् भवति पर्जन्यः,'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः । यज्ञः अपूर्वम् । स च यज्ञः कर्मसमुद्भवः ऋत्विग्यजमानयोश्च व्यापारः कर्म, ततः समुद्भवः यस्य यज्ञस्य अपूर्वस्य स यज्ञः कर्मसमुद्भवः ॥ १४ ॥

*तच्च कर्म ब्रह्मोद्भवं ब्रह्म वेदः स उद्भवः प्रकाशको यस्य तत् कर्म ब्रह्मोद्भवं विद्धि

आ॥तस्य चक्रप्रवेशो न भवति,तद्व्यापाद्यम् कर्मविधये । न तु साम्यमात्रेणेदानीं कार्यम्। मेघचक्राभिमानी पर्जन्यः। तच्च यज्ञाद्भवति । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति।

ज॥चक्रं प्रवृत्तमेव;अतः कथं पूर्वयज्ञस्य चक्राप्रवेश इत्यत आह—तद्धीति । तत् चक्रमापाद्य इत्त विवक्षितम्। न तु प्रागापादितम्; कुतः? कर्मविधये हेतुदुच्यते। यदि विहितं कर्म करिष्यसि, तर्हि जगच्चक्रप्रवृत्तिर्भविष्यति; अन्यथा तद्विघातः अतस्त्वया कर्म कर्तव्यमिति । कर्मविध्युपयोगिता चापाद्यस्यैव न त्वापादितस्य । आपाद्ये च यज्ञव्यक्तिविशेषस्य पर्जन्यपदप्राप्तिहेतोर्न प्रवेश इत्यर्थः । प्राक् पर्जन्येन कर्म कृतम्, तेन च यज्ञादिद्वारा चक्रं प्रवृत्तम्; अतस्त्वयाऽपि कर्म कर्तव्यमित्येवं प्रागापादितचक्रोक्तिरपि कर्मविध्युपयोगिनी भवतीति चेत्—मैवम्; अत इति कोऽर्थः? त्वत्कर्मणाऽपि चक्रप्रवृत्तिसम्भवादिति वा, कर्मत्वादिति वा, नाद्यः, इदानीन्तनपुरुषकर्मजेन यज्ञेन पर्जन्योत्पत्त्यसम्भवेन चक्राप्रवृत्तेः; नहि सर्वेऽपि कर्मकारिणः पर्जन्यत्वं प्राप्नुवन्ति । द्वितीयं दूषयति—नास्तीति । फलरहितेन कर्मत्वसामान्येनेदानीं कर्म कार्यं न भवति, स्वयं क्लेशरूपत्वादिति । प्रकारान्तरेणापि 'यज्ञाद्भवति पर्जन्यः' इत्येतद्दर्शयितुमाह—मेघेति । चक्रं समूहः । ततः किमित्यत आह—तच्चेति । मेघचक्रं कुत इत्यत आह—अग्नाविति।ननु स्वकीयमुदकं नद्यः इति समुद्राद्वृष्टिरुच्यते,अत आदित्याद्वृष्टयङ्गीकारे नद्विरोधः

*तच्च एवंविधं कर्म कुतो ज तमित्याह—कर्मेति ॥ इत्यधिकः पाठो दृश्यते ॥

रा॥*'तस्मादेतद्ब्रह्म नामरूपमन्नंच जायते' इति हि ब्रह्मशब्देन प्रकृतिर्निर्दिष्टा;इहापि 'मम योनिर्महद्ब्रह्म'इतिहि वक्ष्यते । अतः 'कर्म ब्रह्मोद्भवम्' इति प्रकृतिपरिणामरूपशरीरोद्भवं कर्मेत्युक्तं भवति । 'ब्रह्माक्षरसमुद्भवम्'इत्यत्राक्षरशब्दनिर्दिष्टो जीवात्मा,अन्नपाना-

ता॥तस्मादेतदिति । एतत् प्रधानाख्यं ब्रह्म कार्याकारेण नामरूपविभागविभक्तं चेतनभोग्य च जायते इति हि श्रुत्यर्थः । न च तत्र ब्रह्मशब्दः परमात्मविषयः 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म' इति परमात्मनः पृथङ्निर्दिष्टत्वात् । नापि प्रत्यगात्मविषयः, 'नामरूपमन्नंच' इत्यनेन साक्षात्संबन्धायोगात् ; अन्नत्वं चात्यन्तामुख्यं स्यात्—इति भावः । योनिशब्दनिर्देशान्ममेति परमात्मनः पृथङ्निर्देशाच्च 'मम योनिर्महद्ब्रह्म'इत्यत्र ब्रह्मशब्दस्य प्रकृतिविषयत्वं सिद्धम्। अत इति—ब्रह्मशब्दस्य प्रकृतौ प्रयोगाच्छरीरस्य च तत्परिणामरूपत्वाद्द्रव्यार्जनादेश्शरीरसाध्यत्वात्परमात्मनश्च जन्यत्वायोगाच्चेत्यर्थः । एवमत्रत्यब्रह्मशब्दस्य शरीरविषयत्वे सिद्धे तदासन्ने प्रत्यगात्मनि अक्षरशब्दो युक्त इत्यभिप्रायेणाह—ब्रह्माक्षरसमुद्भवमित्यत्रेति । जीवस्य चाक्षरशब्दवाच्यत्वं 'क्षरं प्रधानममृताक्षरं हरः' 'कूटस्थोऽक्षरः' इत्यादिसिद्धम्। नन्वेवमपि 'ब्रह्माक्षरसमुद्भवम्' इत्ययुक्तम्, सशरीरस्य सर्वस्य स्वबुद्धिपूर्वत्वाभावात्। न चात्र चक्रत्व दृश्यते, अन्नप्रभृतिशरीरपर्यन्तस्य कार्यकारणभावेऽपि शरीरहेतोरक्षरस्य अन्नादिजन्यत्वाभावात् । नच 'अन्नाद्भवन्ति भूतानि' इति जीवो निर्दिष्टः, तत्र भूतशब्दस्यान्नविकारशरीरमात्रविषयत्वात्; तत्राह—अन्नपानादिनेति । अयमभिप्रायः—न तावदिह शरीरमात्र-

प्र-पा॥*मुण्ड १. मु. १ ख. ९. वा॥ †'तस्मात् संकल्पेन सृष्ट्युन्मुखाद्ब्रह्मण, 'ततोऽन्नमभिजायते' इत्यत्र अन्नशब्दनिर्दिष्टम्, एतत्—अव्याकृताख्यं ब्रह्म साक्षात् जायते । तद्द्वारा नामरूपवत्—'अन्नतेऽत्ति च भूतानि' इत्यन्नशब्दनिर्दिष्टभोग्यभोक्तृरूप च जायत इत्यर्थ. ॥

१. मु. १-९॥ २ गी-१४ ३.॥ ३.सशरीर पा॥
४. श्वेता. १. अ. १० वा॥ †'क्षरात्मानावीशते देव एक' इतिवाक्यशेष. । 'प्रधान प्रकृतिः स्त्रियाम्' इति प्रधानशब्दिता प्रकृतिः क्षरमित्युच्यते । अमृताक्षर हर.—अमृतत्वात्—मरणधर्मशून्यत्वात्, अक्षरमित्यर्थ ,भोग्यमचेतनमात्मनो भोगार्थं हरतीति-हरो जीव क्षराऽक्षरशब्दितचेतनाचेतनवर्गेशिता अपहतपाप्मा दिव्यो देव एको नारायण'' इति देवत्वेन निर्दिष्टो नारायण एवाऽत्र देवशब्दवाच्य. इति ॥

५. गी-१५-१६ ॥

शं॥विजानीहि । ब्रह्म पुनः वेदाख्यम् अक्षरसमुद्भवम् अक्षरः परमात्मा समुद्भवो यस्य अक्षरसमुद्भवम् । ब्रह्म वेद इत्यर्थः । यस्मात् साक्षात् परमात्माख्यात् अक्षरात् पुरुषात्

आ॥आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'इति स्मृतेश्च। उभयवचनाच्चादित्यात्समुद्राद्यविरोधः । अतश्च यज्ञात्पर्जन्योद्भवः संभवति । यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः । कर्म—इतरक्रिया ॥ १४ ॥

ज॥स्यादित्यत आह—उभयेति । वृष्ट्यङ्गीकारादिति शेषः । वार्षिका मेघा इह वृष्टिशब्देनोच्यन्ते । ततोऽपि किमित्यत आह—अतश्चेति । प्राक्पर्जन्यस्य भवनं गौणमङ्गीकृत्य व्याख्यातम् । इदानीं त्वभिमन्यमानगतस्य भवनस्याभिमानिनि लक्षणामाश्रित्येति भेदः । यद्वा अभिमानिगतस्य पर्जन्यशब्दस्य अभिमन्यमाने लक्षणामाश्रित्य द्वितीयं व्याख्यानम् । तात्पर्यनिर्णये तु मेघसन्ततौ पर्जन्यशब्दो यौगिकोऽङ्गीकृतः । ननु यज्ञः कर्मात्मकः तत्कथमुच्यते 'यज्ञः कर्मसमुद्भवः'; इति, तत्राह—यज्ञः इति । इतरक्रिया यज्ञाङ्गभूता । अपूर्वाङ्गीकारे रूढित्यागेन लक्षणाश्रयणं स्यात् ॥ '१४ ॥

ता॥मक्षरजन्यतया निर्दिष्टम्, किन्तु 'कर्म ब्रह्मोद्भवम्' इत्यनेन कर्मसाधनभूतम्; तत्साधनत्वं च शरीरस्य प्रत्यगात्माधिष्ठितस्यैव, तस्य चाधिष्ठातृत्वशक्तिरन्नपानादिजनिततृप्तिनिबन्धना। एवञ्च सति कर्मसाधनत्वविशिष्टं शरीरं प्रत्यगात्माधिष्ठानहेतुकत्वादक्षरसमुद्भवमिति युक्तमेव; चक्रत्वं चोपपन्नम्, अक्षरस्यापि शरीराधिष्ठाने अन्नपानादिसापेक्षत्वात्, नह्यवश्यमुत्पत्तावेवापेक्षा चक्रत्वहेतुः; यद्वा कर्म जीवाधिष्ठितशरीरजन्यम्, जीवाधिष्ठितं शरीरं चान्नजन्यम्, 'अन्नाद्भवन्ति भूतानि' इति वचनात्। भूतशब्दश्चात्र 'भ्रामयन् सर्वभूतानि' इत्यादाविव सजीवशरीरपरः। अतोऽत्र चक्रत्वमुपपन्नम्—इति। इमं च प्रकारमनन्तरं च वक्ष्यति। एवमस्मिन् चक्रेऽनुवर्तनीये पुरुषस्य शास्त्रवश्यस्य कर्तव्याशनिष्कर्षायोच्यते—

शा॥नि श्वासवत् समुद्भूतं ब्रह्म तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतम् अपि सत् नित्यं सदा यज्ञविधिप्रधानत्वात् यज्ञे प्रतिष्ठितम् ॥ १५ ॥

आ॥कर्म ब्रह्मणो जायते 'एष ह्येव साधु कर्म कारयति' 'बुद्धिर्ज्ञानम्' इत्यादिभ्यः। न च मुख्ये संभाव्यमाने पारंपर्येणौपचारिकं कल्प्यम्। न च जडानां स्वतः प्रवृत्तिः संभवति; 'एतस्य वा अक्षरस्य' इति सर्वनियमनश्रुतेश्च, 'द्रव्यं कर्म च कालश्च' इत्यादेश्च। अचिन्त्यशक्तिश्चोक्ता। जीवस्य च प्रतिबिम्बस्य बिम्बपूर्वैव चेष्टा, 'न कर्तृत्वम्' इत्यादिनिषेधाच्च। अक्षराणि प्रसिद्धानि, तेभ्यो ह्यभिव्यज्यते परं ब्रह्म, अन्यथाऽनादिनिधनमचिन्त्यं

त॥ कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्यमिति परेषां व्याख्यानमसदिति भावेनाह—कर्मेति। ब्रह्मणः परब्रह्मणः। कुत इत्यत आह—एष हीति। अपव्याख्यानं प्रत्याख्याति—न चेति। उद्भवशब्दस्य मुख्येऽभिधेये जन्मनि सम्भाव्यमाने तस्यौपचारिकः प्रकाशनमर्थतया न कल्प्यम्। तथा ब्रह्मशब्दस्य मुख्येऽभिधेये परब्रह्मणि सम्भाव्यमाने सत्यौपचारिकममुख्यं वेदाख्यं ब्रह्मशब्दार्थतया न कल्प्यम्। किंचैवं व्याचक्षाणेनापि वेदस्य कर्मप्रकाशकत्वमन्तर्यामिद्वारा परंपरयाऽङ्गीकार्यम्। तथाचान्ततोऽपि परब्रह्मण्यङ्गीकार्ये शब्दत एव प्राप्तस्य तस्य परित्यागोऽनुपपन्नः। ननु वेदः स्वयमेव कर्मप्रकाशक इति किं परब्रह्मणा; अतो न परपेरेत्यत आह—नचेति। न केवलं जडत्वाद्वेदस्यान्याधीनत्वम्, किन्त्वागमादिष्वप्यधीनत्वं च प्रसिद्धमित्याह—एतस्येति। विष्णोरिति शेषः। ननु शब्दस्यार्थप्रकाशनं स्वभावः, न त्वागन्तुको व्यापारः, यथाग्नेरौष्ण्यम्। ततो जडत्वेऽपि न परापेक्षेत्यतः स्वभावस्यापि भगवदधीनत्वे प्रमाणमाह—द्रव्यमिति। प्रमाणसिद्धमपि स्वभावनियमनं विष्णोरसम्भावितमित्यत आह—अचिन्त्येति। यदि जडस्य न स्वतः प्रवृत्तिस्तर्हि अभिमानिदेवताद्वाराऽस्तु; तथाच नान्ततोऽपि परब्रह्माङ्गीकार इत्यत आह—जीवस्य चेति। तत्राधिक्येन परपरेति भावः। न केवलं प्रतिबिम्बत्वाज्जीवस्य स्वतः प्रवृत्त्यभावः, किन्त्वागमाच्चेत्याह—नेति। 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्म वेदः, अक्षरात्परब्रह्मणो जायत इति परेषां व्याख्यानमसदिति भावेनाह—अक्षराणीति। प्रसिद्धान्यकारादीनि। नियतानुपूर्वीविशिष्टानि वेद इति यावत्। ननु समुद्भवशब्दस्य मुख्यार्थाङ्गीकारे किं बाधकं, येनाभिव्यज्यत इत्यमुख्योऽर्थः स्वीक्रियते। किंच प्रमाणान्तरेणापि ब्रह्माभिव्यक्तिसम्भवात्तेभ्य इति किमर्थमुक्तमित्यत आह—अन्यथेति। व्यक्त्यर्थत्वानङ्गीकारेऽनादिनिधनं ब्रह्म कथं जायते इति शेषः। तथा वेदस्य तदभिव्यञ्जकत्वानङ्गीकारे परिपूर्णत्वादचिन्त्यं ब्रह्म को जानाति। वाक्यार्थद्वयसमुच्चयेऽपिशब्दः। समुद्भवशब्दस्य मुख्यार्थताभावात्परोक्तोऽर्थः किं न स्यादित्यत आह—नचेति। ब्रह्मशब्दो हि परब्रह्मणि रूढः; वेदे तु बृहत्त्वयोगेन प्रवृत्तः। तथाऽक्षरशब्दो वर्णेषु रूढः; परब्रह्मणि त्वक्षरणयोगेन प्रवृत्तः। तथाचान्यथा व्याकुर्वता रूढिं परित्यज्य योगोऽङ्गीकृतः स्यात्; तच्च न्यायबाह्यमित्यर्थः।

य ॥ दिना तृप्ताक्षराधिष्ठितं शरीरं कर्मणे प्रभवतीति कर्मसाधनभूतं शरीरमक्षरसमुद्भवम्; तस्मात् सर्वगतं ब्रह्म सर्वाधिकारिगतं शरीरं नित्यं यज्ञे प्रतिष्ठितं यज्ञमूलमित्यर्थः।

ता॥तस्मादिति। सङ्कुचितस्य शरीरस्य सर्वव्याप्तत्वायोगादक्षरस्य च तदाधारस्य निर्दिष्टत्वात्तदवान्तरभेदसङ्ग्रहपरस्सर्वशब्द इत्यभिप्रायेणोक्तम्- सर्वाधिकारिगतमिति । न केवलं कर्मयोगाधिकारिणः शरीरं यज्ञसापेक्षम्, किन्तु ज्ञानयोगाधिकारिणोऽपीत्यर्थः। यज्ञे प्रतिष्ठितमित्यत्राधिकरणत्वायोगादाह—यज्ञमूलमित्यर्थ इति । प्रवर्तितमित्यस्य प्रवर्तकापेक्षाया 'सह यज्ञैः' इत्यादिना प्रकृतो 'देवान् भावयत' इत्यादिना यज्ञेषु प्रजाः प्रवर्तयन् प्रजापतिरेवासौ भवितुमर्हतीत्यभिप्रायेणोक्तम्—परमपुरुषेणेति। लोकदृष्टिशास्त्रदृष्टिभ्यां सिद्धमन्यायशक्यत्वमपरोक्षयतोक्तम् —इदमिति । अन्नादित्यादिना पुनरप्यन्नादित्यन्तेन चक्रत्वं व्यज्यते;न तावदत्र भूतशब्देन भवनक्रियायोगिमात्रं निर्दिश्यते,महदादेः कार्यस्यान-

प्र·पा ॥ अपरोक्षनयेति. पा ॥

श॥एवम् इति। एवम् ईश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं न अनुवर्तयति इह लोके यः कर्मणि अधिकृतस्सन् अघायुः अघं पापम् आयुः जीवनं यस्य सः अघायुः,पापजी-

आ॥परिपूर्णमपि ब्रह्म को जानाति।न च रूढिं विना योगाङ्गीकारो युक्तः;परामर्शाच्च।तस्मात्सर्वगतं ब्रह्मेति । नहोकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं क्वचिदुच्यते । तानि चाक्षराणि नित्यानि, 'वाचा विरूपनित्यया' 'वृष्णे चोदस्व सुष्टुतिम्' 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' 'अत एव च नित्यत्वम्' इत्यादिश्रुतिस्मृतिभगवद्वचनेभ्यः । दोषश्चोक्तः सकर्तृत्वे । नचाबुद्धिपूर्वमुत्पन्नानि, तत्प्रमाणाभावात् । निःश्वसितशब्दस्त्व-

ज॥इतश्च ब्रह्मशब्दः परब्रह्मवाचीत्याह—परामर्शाच्चेति।उत्तरवाक्ये ब्रह्मशब्देन परब्रह्मणः परामर्शाच्च पूर्ववाक्यस्थो ब्रह्मशब्दः परब्रह्मार्थो गम्यते। तथा चाक्षरशब्दोऽप्यर्थाद्वेदवचनो भविष्यतीति शेषः।प्रागक्षरशब्दोक्तं परं ब्रह्मेदानीं ब्रह्मशब्देन परामृश्यते। अतः पूर्वोक्तो ब्रह्मशब्दो वेदार्थ एवेत्यत आह—न हीति। एकस्मिन्नेव प्रकरण इति शेषः। 'अन्नात्पुरुषः' 'स वा एष पुरुषोऽन्नरसमयः'इत्यादिव्यावृत्त्यर्थं भेदश्रुतिं विनेत्युक्तम्। श्रुतिशब्दश्च प्रमाणोपलक्षणार्थः।अत्रापि सर्वगतमिति विशेषणमस्तीति चेत्—न, वर्णानामपि सर्वगतत्वात्। विकारत्वाच्चेति चेत् —न, अनन्तरमेव निराकरणात्। इद च भास्करं मत्याभिहितम्,मायावादिना तु प्राग्ब्रह्मशब्दोक्तस्य वेदस्यैवायं परामर्श इत्यङ्गीकृतत्वात्। यदप्यन्यथा व्याख्याने समुद्भवशब्दस्य मुख्यार्थतालाभ इत्यभिप्रेतं,तदपि दुराशामात्रमित्याह—तानि चेति। यान्यस्माभिः प्रसिद्धानि व्याख्यातानि अनेनाभिधानादिबलाद्ब्रह्माक्षरशब्दौ द्वावप्युभयत्र योगरूढाविति प्रत्यवस्थानमपि परास्तम् , परामर्शस्य वर्णनित्यत्वस्य चापरिहार्यत्वात्। न केवलं श्रुत्यादिभ्यो वेदस्य नित्यत्वं, किं तर्हि? विपक्षे बाधकाच्चेत्याह—दोषश्चेति । रचितत्वे च धर्मप्रमाणस्येत्यन । ननु वेदाक्षराणि ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नानि, अतो न विपर्ययादिमूलत्वशङ्केत्यत आह—न चेति। 'निश्श्वसितमेतद्यदृग्वेदो यजुर्वेदः' इति श्रुतिर्वेदानां ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नत्वे प्रमाणमिति चेत्किमयं निःश्वसितशब्दोऽबुद्धिपूर्वमुत्पन्नत्वस्य वाचकः?उत निःश्वसितमिव निश्श्वसितम्,इवार्थश्चाबुद्धिपूर्वमुत्पन्नत्वमिति गौण्या वृत्त्या तदभिप्रायः?नाद्यः, प्रमाणाभावात्। द्वितीयं दूषयति—निःश्वसितेति। अक्लेशेन निःसरणस्यापीवार्थस्य संभवेन निःश्वसितशब्दस्य तदभिप्रायतोपपत्तौ नाबुद्धिपूर्वोत्पत्त्यभिप्रायत्वनिश्चय इत्यर्थः । न च परस्येवास्माकमपि निश्चयायोग इति भावेनाह—स इति । 'सोऽकामयत' 'स इदं सर्वमसृजत' इति ब्रह्मणः सर्वस्य सृष्टेरिच्छापूर्वकत्वमुच्यते । इच्छा च बुद्ध्याऽविनाभूता । अतो न किंचिद्ब्रह्मणोऽबुद्धिपूर्वमुत्पन्नमिति ।

रा॥एवं परमपुरुषेण प्रवर्तितमिदं चक्रम्—अन्नात् भूतशब्दनिर्दिष्टानि सजीवानि शरीराणि, पर्जन्यादन्नम्, यज्ञात्पर्जन्यः, यज्ञश्च कर्तृव्यापाररूपात्कर्मणः, कर्म च सजीवाच्छ-

ता॥जन्यत्वाभावात्; अत एव न महाभूतानि, नापि वेतालादिसहपठितभूतजातिः, तत्कथनस्यात्रानुपयुक्तत्वात्, अन्नजन्यत्वे विशेषाभावाच्च; नापि शरीरमात्रं, केवलस्य शरीरस्यानुत्पत्तेः, शरीरलक्षणाक्रान्तस्य सर्वस्यान्नजन्यत्वाभावाच्च; नापि केवलजीवः, तत्स्वरूपनित्यत्वादेरुक्तत्वात्। अतः परिशेषाद्भूतशब्दोऽत्र जीवविशिष्टाचित्परिणामविशेषपर इत्यभिप्रायेणोक्तम्—सजीवानि शरीराणीति। 'कर्म ब्रह्मोद्भवं' 'ब्रह्माक्षरसमुद्भवम्' इत्याभ्यां फलितं समुच्चित्य चक्रत्वसिद्ध्यर्थं निर्दिशति—कर्म च सजीवाच्छरीरादिति।

प्र पा॥ अन्नजन्यत्वे पा॥

शां॥वन्तः इति यावत्, इन्द्रियारामः इन्द्रियैः आरमणम् आक्रीडा विषयेषु यस्य सः इन्द्रियारामः मोघं वृथा हे पार्थ स जीवति। तस्मात् अज्ञेन अधिकृतेन कर्तव्यमेव कर्म इति

आ॥क्लेशाभिप्रायः, नाबुद्धिपूर्वाभिप्रायः; 'सोऽकामयत' इत्यादेश्च, 'इष्टं हुतम्' इत्यादिरूपप्रपञ्चेन सहाभिधानाच्च, महातात्पर्यविरोधाच्च। तच्चोक्तं पुरस्तात्। न ह्यस्वातन्त्र्येण चोत्पत्तिकर्तुः प्राधान्यम्। अस्वातन्त्र्यं च तदमतिपूर्वकत्वेन भवति। यथा रोगादीनां पुरुषस्य तज्जत्वेऽपि। उत्पत्तिवचनान्यभिव्यक्त्यर्थानि, अभिमानिदेवताविषयाणि च। नित्यत्युक्तवोत्सृष्टेति वचनात्, अभिव्यञ्जके कर्तृवचनं चास्ति 'कृत्स्नं शतपथं चक्रे' इति। कथमादित्यस्था वेदास्तेनैव क्रियन्ते। वचनमात्राच्च निर्णयात्मकशारीरकोक्तं

ज॥ननु निश्श्वसितमेतदिति श्रुतिर्नामप्रपञ्चस्याबुद्धिपूर्वमुत्पत्तिं वक्ति, 'सोऽकामयत' इति च रूपप्रपञ्चस्येच्छापूर्वमित्यतो न विरोध इत्यत आह—इष्टमिति। एवं सति निःश्वसितमिति श्रुतौ 'इष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः' इति नामप्रपञ्चस्य रूपप्रपञ्चेन सहाभिधानात्। रूपप्रपञ्चस्यापि निःश्वसितशब्देनाबुद्धिपूर्वोत्पन्नत्वप्राप्तौ 'सोऽकामयत' इति श्रुतिर्निर्विषयैवापद्येतेति भावः। इतोऽपि नाबुद्धिपूर्वा ब्रह्मणः सृष्टिरित्याह—महातात्पर्येति। परब्रह्मणः सर्वोत्तमत्वे यत्सर्ववेदानां महातात्पर्यं तद्विरोधाच्चेत्यर्थः। तदेव कुत इत्यत आह—तच्चेति। उक्तं साधितम्, कथं तद्विरोध इत्यत आह—नहीति। प्राधान्यं सर्वोत्तमत्वम्। अस्वातन्त्र्येणोत्पत्तिकर्तृत्वस्य प्राधान्यविरोधित्वेऽपि अबुद्धिपूर्वमुत्पादकत्वस्य किमायातमित्यत आह—अस्वातन्त्र्यं चेति। कार्यस्य पुरुषमतिपूर्वकत्वाभावे तत्र तस्य पुरुषस्यास्वातन्त्र्यं भवति। तत्र दृष्टान्तमाह—यथेति। रोगादीनां पुरुषजन्यत्वेऽपि बुद्धिपूर्वकत्वाभावात्, तत्र पुरुषस्यास्वातन्त्र्यं तथेत्यर्थः। ततश्चाबुद्धिपूर्वमुत्पादकत्वादस्वातन्त्र्यम्। अस्वातन्त्र्याच्चाप्राधान्यं प्रसज्येतेति। तथा च महातात्पर्यविरोध इत्युक्तं भवति। साक्षात्प्रसङ्गसम्भवेऽपि व्युत्पादनार्थमेवमुक्तम्। ननु वेदनित्यत्ववदुत्पत्तावपि 'ऋचस्सामानि जज्ञिरे' इत्यादिवचनानि सन्ति। तत्कथं निर्णय इत्यतो विरुद्धे वाक्ययोर्नित्यत्ववाक्यानां प्राबल्यादुत्पत्तिवचनान्यन्यथा व्याख्येयानीत्याह—उत्पत्तीति। उत्पत्तिवाची शब्दोऽभिव्यक्तौ क्व दृष्ट इत्यत आह—नित्येति। अनादिनिधनतया नित्या, न तूपचारेणेति मुख्यं नित्यत्वमुक्त्वा पुनरुत्सृष्टेत्युच्यते; तत्र गत्यन्तराभावादभिव्यक्तिरेव ग्राह्येत्यर्थः। अन्यत्रापि प्रयोगं दर्शयति—अभिव्यञ्जक इति। शतपथाभिव्यञ्जकतया निश्चिते याज्ञवल्क्ये कर्तृशब्दोऽस्तीत्यर्थः। याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यादित्यत आह—कथमिति। प्रागादित्ये स्थिताः, ततो याज्ञवल्क्येनाधीता इत्येतत्प्रमितमित्यर्थः। इतोऽपि नित्यत्वपक्ष एव बलवानित्याह—वचनेति। 'ऋचः सामानि' इत्यादिकं वचनमात्रम्, 'अत एव च नित्यत्वम्' इति शारीरकोक्तं वाक्यं निर्णयात्मकम्। वचनं च श्रुत्यन्तरे-

या॥रीरात्, सजीवं शरीरं पुनरप्यन्नात्—इत्यन्योन्यकार्यकारणभावेन चक्रवत्परिवर्तमानम्। इह साधने वर्तमानो यः कर्मयोगाधिकारी ज्ञानयोगाधिकारी वा नानुवर्तयति - न प्रवर्तयति, यज्ञशिष्टेन देहधारणमकुर्वन् सोऽघायुर्भवति ; अघारम्भायैव यस्यायुरघपरिणतं वोभयरूपं वा सोऽघायुः; अत एवेन्द्रियारामो भवति, नात्मारामः; इन्द्रियाण्येवास्योद्या-

ता॥अन्योन्यकार्यकारणभावेनेति यथासम्भवं साक्षात्परम्परया च सिद्धमुक्तम्, नहि साक्षात्सर्वेषामन्योन्यकार्यत्वं कारणत्वं वा, अन्योन्याश्रयप्रसक्तत्वात्; यद्वा कस्यचित्कार्यत्वं कस्यचित्कारणत्वं च सङ्कल्य्यान्योन्यकार्यकारणभाव उक्तः। चक्रशब्दोपचारनिमित्तं व्यनक्ति—चक्रवत्परिवर्तमानमिति। इह लोके वर्तमानो यः पुरुष इति अधिकरणाधिकर्तव्ययोस्सामान्यनिर्देशादपि इह साधने वर्तमानो योऽधिकारिविशेष इति विशेषपरामर्श एवोचितः, इद शब्दादेस्सन्निहितपरामर्शप्रावण्यात्, अनपेक्षिताभिधानादपि अपेक्षिताभिधानौचित्याच्च—इति साधने वर्तमान इत्यादेर्भावः। अनुवर्तयतीत्यत्रानुमन्तृत्वादिमात्रव्यवच्छेदार्थं पुरुषव्यापारप्राधान्यद्योतनार्थं च प्रवर्तयतीति व्याख्यातम्। श्लोके चानुशब्दप्रयोगः परमपुरुषप्रवर्तितानुप्रवर्तनरूपत्वात्पराहरूपत्वाद्वा। अघायुरित्यादीनां त्रयाणां पृथक्पृथग्दोषत्वव्यक्त्यर्थं पूर्वपूर्वस्योत्तरोत्तरहेतुत्वज्ञापनार्थं च भवतीति पृथग्वाक्यकरणम्। अघकारणत्वादघकार्यत्वादुभयसङ्ग्राहकाघसम्बन्धित्वमात्राद्वात्राघशब्देनायुषो लक्षणेत्यभिप्रायेण—अघारम्भायैवेत्यादि निर्वाहत्रयमुक्तम्—अत एवेति। उक्तप्रकारेणाघायुष्ट्वादेवेत्यर्थः। इन्द्रियाराम इत्यस्याभिप्रेतं व्यवच्छेद्यमाह—नात्माराम इति। विशेषणत्वादिसिद्धव्यवच्छेदाभिप्रायसिद्ध्यर्थं समासतदश्यायोरर्थमाह—इन्द्रियाण्येवेति।

प्र·पा॥ १. व्यक्त्यर्थं. ग. ज पा॥

---

श॥प्रकरणार्थः। प्राक् आत्मज्ञाननिष्ठायोग्यताप्राप्तेः तादर्थ्येन कर्मयोगानुष्ठानम् अधिकृतेन

---

आ॥बलवत्। शास्त्रं योनिर्यस्य तत्शास्त्रयोनित्वम्। जन्माद्यस्येत्युक्ते प्रमाणं हि तत्रापेक्षितम्; न तु तस्य जातत्वं वेदकारणत्वं वा; नहि वेदकारणत्वं जगत्कारणत्वे हेतुः। न हि विचित्रजगत्स्रष्टुर्वेदसृष्टिरशक्या सृज्यत्वे; न च सर्वज्ञत्वे, यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा सर्वज्ञः। तस्माद्वेदप्रमाणकत्वमेवात्र विवक्षितम्। अतो नित्यान्यक्षराणि।

जा॥णापि सम्भवतीति न तूपचरितो वाक्यार्थावधारणात्मको निर्णयः। अतस्तस्मादिदं बलवदित्यर्थः। ननु शारीरके 'शास्त्रयोनित्वात्' इति ब्रह्मणो वेदकारणत्वमुच्यत इत्यत आह—शास्त्रमिति। ननु तत्पुरुषं परित्यज्य कुतो बहुव्रीहिरङ्गीक्रियते। तथात्वे च ब्रह्मणो वेदाज्ञातत्वं प्रसज्येत—इत्यत आह—जन्मादीति। लक्षणप्रमाणाभ्यां हि वस्तुनिर्णयः। तत्र 'जन्माद्यस्य' इति सूत्रेण लक्षणेऽभिहिते कुतः प्रमाणादेव प्रतिपत्तव्यमिति ब्रह्मणो जगज्जन्मादिकारणत्वे प्रमाणाकाङ्क्षा स्यात्, ननु तस्य वेदाज्ञातत्व वेदकारणत्व वाऽऽकाङ्क्षितम्; आकाङ्क्षादिवशाच्च वाक्यार्थोऽवसेयः। ततो योनिशब्दं प्रमाणवाचिनमङ्गीकृत्य बहुव्रीहिरेवायं प्रतिपत्तव्यो न तु तत्पुरुषः; वेदकारणत्वं च जगत्कारणत्वे हेतुत्वेनात्रोच्यते; अतो नानाकाङ्क्षिताभिधानमेतदित्यत आह—न हीति, अन्वयाभावात्, एकदेशकारणत्वेन समुदायकारणत्वानुमानेऽतिप्रसङ्गाच्चेति हेत्वर्थः। मा भूदयं निश्चयहेतुः, तथाप्यशक्यसृष्टेर्वेदस्य कर्तुर्ब्रह्मणो जगत्सृष्टिकर्तृत्वं सम्भवतीति सम्भावनाहेतुरयं स्यादित्यत आह—न हीति। सम्भावना ह्यधिकेनाल्पस्य भवति; यथा—सहस्रेण शतस्य। नच समुदायसृष्टेस्तदेकदेशसृष्टिरधिकेति भावः। सृज्यत्वे वेदस्य कार्यत्वपक्ष इत्यर्थः। जगत्कारणत्वोक्त्या ब्रह्मणः सर्वज्ञत्वं प्रतीतम्, तत्स्फुटीकर्तुं तत्र वेदकारणत्वं हेतुत्वेनोच्यते; अतो नासङ्गतिरित्यत आह—न चेति। वेदकारणत्वं हेतुरित्यनुवर्तते। अबुद्धिपूर्वमुत्पन्नत्वाङ्गीकारादिति भावः। किं च यदि जगदेकदेशस्य

रा॥नानि भवन्ति; अयज्ञशिष्टवर्धितदेहमनस्त्वेनोद्रिक्तरजस्तमस्क आत्मावलोकनविमुखतया विषयभोगैकरतिर्भवति । अतो ज्ञानयोगादौ यतमानोऽपि निष्फलप्रयत्नतया मोघं पार्थ स जीवति ॥ १६ ॥

असाधनायत्तात्मदर्शनस्य मुक्तस्यैव महायज्ञादिवर्णाश्रमोचितकर्मानारम्भ इत्याह—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टः तस्य कार्यं न विद्यते ॥ १७
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८

ता॥ इन्द्रियाणां कथमारामत्वमिति शङ्कायाम् 'एवं प्रवर्तितम्' इत्यादिना 'इन्द्रियारामः' इत्यन्तेन फलितमाह—अयज्ञशिष्टेति। अत इति—विषयभोगैकरतित्वादित्यर्थः । स इति निर्देशस्य पूर्वव्याख्यातप्रकारयच्छब्दार्थविषयत्वात् । मोघशब्दस्य निष्फलप्रयत्नताविषयस्य प्रतिहन्तव्यप्रसक्त्याकाङ्क्षत्वाचाह—ज्ञानयोगादौ यतमानोऽपीति ॥ १६ ॥

एवं ज्ञानयोगाद्यधिकारिणोऽपि कर्मकर्तव्यताया उक्तत्वात्, 'तस्मादसक्तः' इत्यादिना वक्ष्यमाणत्वाच्च तन्मध्ये 'यस्त्वात्मरतिः' इत्यादिश्लोकौ न ज्ञानयोगाद्यधिकारिविषयौ, किन्तु फलदशाविषयावित्यभिप्रायेणाह—असाधनायत्तेति । एतेन 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्याद्युक्तसन्न्यासाश्रमपरत्वेन परव्याख्यानं निरस्तम्, तस्यापि हि स्वाश्रमधर्मनिष्ठस्य सर्वकर्मनिवृत्त्यभा-

शा॥अनात्मज्ञेन कर्तव्यम् इत्येतत् 'न कर्मणामनारम्भात्' इत्यत आरभ्य 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः' इत्येवमन्तेन प्रतिपाद्य 'यज्ञार्थात् कर्मणोऽन्यत्र' इत्यादिना 'मोघं पार्थ स जीवति' इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकम् अधिकृतस्य अनात्मविदः कर्मानुष्ठाने बहु कारणम् उक्तम् । तदकरणे च दोषसंकीर्तनं कृतम् ॥ १६ ॥

एवं स्थिते किं एवम् प्रवर्तितं चक्रं सर्वेण अनुवर्तनीयम् आहोस्वित् पूर्वोक्तकर्मयोगानु-

आ॥यत एवं परंपरया यज्ञाभिव्यङ्ग्यं ब्रह्म । तस्माच्चन्नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

तानि चाक्षराणि भूताभिव्यङ्ग्यानीति चक्रम् । तदेतज्जगच्चक्रं यो नानुवर्तयति, स तद्विनाशकत्वादघायुः; पापनिमित्तमेव यस्यायुः, सोऽघायुः ॥ १६ ॥

ज॥वेदस्य स्रष्टा परमेश्वरः सर्वज्ञः सिद्ध्येत्, तदन्तर्भावितवेदस्य जगतः स्रष्टा सुतरां सर्वज्ञः सिद्ध्येदेव; तथा चार्थादपि जन्मादिसूत्रेणैव सार्वज्ञ्यस्य स्फुटं प्रतीतत्वात् पुनरुक्त्याकाङ्क्षाभावेनासंगतिस्तादवस्थ्येति भावेनाह—यद्वेति । सूत्रार्थमुपसंहरति—तस्मादिति । ब्रह्मण इति शेषः । तानिचेत्यादिनोक्तमुपसंहरति—अत इति।तथा च न समुद्भवशब्दस्य मुख्यार्थत्वलाभाय ब्रह्माक्षरशब्दार्थप्रत्ययः कार्यइति। तस्मादिति परामर्शविषयाप्रतीतेस्त दर्शयन्वाक्यं व्याख्याति—यत इति । प्रतिष्ठितमित्युच्यत इति शेषः ॥ १५ ॥

नन्वत्र कार्यकारणपरम्परैवोक्ता न चक्रं तत्कथम् उच्यते एवं प्रवर्तितं चक्रमिति । तत्राह—तानिचेति। तानि वेदाख्यानि। चक्राप्रवृत्तौ कथमघायुष्ट्वादिकमित्यतो व्याचष्टे—तदेतदिति। आयुषोऽघत्वाभावात्कथमघायुरित्यत आह—पापेति । तादर्थ्यात्ताच्छब्द्यमित्यर्थः ॥ १६ ॥

एवमज्ञानिनः कर्म कर्तव्यमित्युक्तम्, इदानीं ज्ञानिनः कर्तव्याभावमाहेति परव्याख्यानमसदिति

तस्मादसक्तस्सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९

रा॥यस्तु ज्ञानयोगकर्मयोगसाधननिरपेक्षः स्वत एवात्मरतिरात्माभिमुखः, आत्मनैव तृप्तो नान्नपानादिभिरात्मव्यतिरिक्तैः, आत्मन्येव च संतुष्टो नोद्यानस्रक्चन्दनगीतवादित्रनृत्तादौ, धारणपोषणभोग्यादिकं सर्वमात्मैव यस्य, तस्यात्मदर्शनाय कर्तव्यं न विद्यते, स्वत एव सर्वदा दृष्टात्मस्वरूपत्वात् । अत एव तस्यात्मदर्शनाय कृतेन तत्साधनेन नार्थः

ता॥वात्। वर्णाश्रमविशिष्टस्यैव हि वर्णाश्रमधर्मा[illegible]ः,न पुनर्वर्णाश्रमाधीननामरूपविनिर्मुक्तस्येति मुक्तशब्दस्य भावः । यस्त्विति तुशब्दः साधननिष्ठव्यावृत्त्यर्थं इत्यभिप्रायेण ज्ञानयोगकर्मयोगसाधननिरपेक्ष इत्युक्तम्।कथं तर्हि साधनाभावे साध्यसिद्धिरित्यत्राह—स्वत एवेति।प्रतिबन्धक हि तन्निवर्त्यम्; आत्माभिमुखत्वं तु स्वतः प्राप्तमिति भावः । रतिशब्दोऽत्राभिमुख्यविषयः, तृप्त्यादेः पृथङ्निर्देशात् । 'आत्मरतिरेव' 'आत्मन्येव' इति पूर्वापरवत् 'आत्मतृप्तः' इत्यत्राप्यवधारणं विवक्षितमित्यभिप्रायेणाह—आत्मनैवेति । तृप्तितुष्टिशब्दौ हि पोषकभोग्यजन्यप्रीतिविषयतया प्रसिद्धावित्यभिप्रेत्य तत्तदुचितं व्यवच्छेद्यमाह—नान्नपानादिभिरिति, नोद्यानेत्यादि च । 'आत्मरतिः'इत्यादेर्व्यवच्छेद्यत्रयं सङ्कलय्य सूत्रयन्वाक्यार्थमाह—धारणेति। आदिश-देन भोगस्थानादि विवक्षितम्, यस्य तु ज्ञानयोगनिष्ठस्यापि धारणादिकमन्नपानादिभिरेव तस्य, कर्तव्यं विद्यत एवेति भावः । ननु 'तस्य कार्यं न विद्यते' इत्ययुक्तं, मुक्तस्यापि 'जक्षत् क्रीडन्' इत्यादिकार्यश्रवणात् । नचात्र कार्यमिति 'न तस्य कार्यम्'इतिवच्छरीरादिनिर्दिश्यते,तन्निषेधस्येदानीमनुपयुक्तत्वात्, तदत्यन्तनिषेधस्य च 'द्वादशाहवत्' इत्यादिसूत्रतद्विषयश्रुतिभिर्विरुद्धत्वादित्याशङ्क्योक्तम्—आत्मदर्शनाय कर्तव्यं न विद्यते इति । 'यस्त्वात्मरतिः' इत्यादिनाभिप्रेतं हेतुं व्यनक्ति—स्वत एवेति । 'स्वत एव सर्वदा' इत्युभाभ्याम् उत्पत्त्यर्थं विनाशपरिहारार्थं च साधनापेक्षा नास्तीति ज्ञापितम्। अर्थशब्दस्यात्र प्रयोजनविषयतां वदन्

प्र·पा॥१ वर्णाश्रमादिनाम. पा ॥ २.मद्भाव . पा॥

३. आत्माभिमुखयन्तु. पा ॥

४. छा-८-१२-३ ॥

५ श्वे·६·८॥† 'न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाऽभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' अस्यार्थ —कार्यं शरीरम्, करणम् इन्द्रियादि, 'कार्यकारणकर्तृत्वे' गी. ४३-२१ इति प्रयोगात् । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यनेन समाभ्यधिकनिषेधः । 'परास्ये'ति ज्ञानशक्त्यादीनां स्वाभाविकत्वमुच्यते । क्रिया नियमनम् । इति ॥

६. शा-४-३-१२ ॥ † 'द्वादशाहवत् उभयविधं बादरायणोऽतः' इति सूत्रम् । अस्यार्थः—मुक्तस्य देहेन्द्रियाद्युपकरणाभावं बादर्याचार्यमतम्, 'नह्यै सशरीरस्य' इत्यादि हि तदाभावमाहेति ; जैमिनेस्तु 'स एकधा भवति' इत्यादिना देहेन्द्रियादिभिर्विविधाश्रुते ,देहाद्युपकरणसद्भावस्मतम् । अथ स्वमतमाह द्वादशाहवदिति अस्मिन्सूत्रेऽत्र शब्देन सङ्कल्पादेव'इत्येतत् परामृश्यते। अत एव सङ्कल्पात्, उभयविधम् सशरीरमशरीरञ्च मुक्तं भगवान् बादरायणो मन्यते । एवंचोभयश्रुतिरुपपद्यते । द्वादशाहवत् यथा 'द्वादशाहेन प्रजाकामं याजयेत्''द्वादशाहमृद्धिकामा उपेयु 'रिति यजत्युपैति चोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनं च भवति, तद्वत् । सत्रत्वे अहीनत्वे च प्रामाणिके सति तत्तत्प्रयोगविशेषेषु सङ्कल्पभेदो नियामक इत्यर्थः । बहुयजमानसङ्कल्पात् सत्रम् । एकस्य सङ्कल्पात् अहीनम्—इति ॥

रा॥ न किञ्चित्प्रयोजनम्; अकृतेनात्मदर्शनसाधनेन न कश्चिदनर्थः; असाधनायत्तात्मदर्शनत्वात् । स्वत एवात्मव्यतिरिक्तसकलाचिद्वस्तुविमुखस्यास्य सर्वेषु प्रकृतिपरिणामविशेषेष्वाकाशादिभूतेषु सकार्येषु न कश्चित्प्रयोजनतया व्यपाश्रयः; यतस्तद्विमुखीकर-

ता॥'तस्य कार्यं न विद्यते' इत्यनेन पौनरुक्त्यं परिहरति—न किञ्चित्प्रयोजनमिति । प्रयोजनाभावात्कर्तव्यं नास्तीत्युक्तं भवति । नाकृतेनेत्यनाथो न निषेध्यः, किन्त्वकरणे प्रत्यवाय इत्यभिप्रायेणाह—न कश्चिदनर्थ इति । अर्थानर्थौ ह्यात्मदर्शनतदभावौ; तत्र पूर्वस्य सिद्धत्वात् न साध्यत्वम्, उत्तरस्य चात्यन्तनिवृत्तत्वान्न निवर्तनीयत्वमित्यभिप्रायेणाह—असाधनायत्तात्मदर्शनत्वादिति । 'न चास्य' इत्यादिना प्रतिबन्धनिवृत्त्यर्थमपेक्षा नास्तीत्युच्यत इत्यभिप्रायेणाह—स्वत एवेत्यादि । अस्येतिशब्द आत्मरतिरित्यादिनिर्दिष्टप्रकारपरामर्शीत्यभिप्रायेणोक्तम्—सकलाचिद्वस्तुविमुखस्येति । सर्वशब्दस्यासङ्कोचेन सावान्तरभेदसमस्तप्राकृतभोग्यविषयतामाह—प्रकृतीत्यादिना सकार्येष्वित्यन्तेन । परिणामशब्देनात्र भूतशब्दस्य भवनक्रियायोगित्वं दर्शितम् । 'अर्थव्यपाश्रयः' इत्यत्रार्थशब्दो भावप्रधान इति व्यनक्ति—प्रयोजनतया व्यपाश्रय इति । व्यपाश्रयः स्वीकरणम् । अर्थ एव व्यपाश्रयः स्वीकरणीयमिति वाभिप्रेतम् । एतेन प्रयोजननिमित्तो व्यपाश्रय इति परव्याख्या निरस्ता । न चा

शा॥'प्रष्ठेनैव' इत्येवमर्थम् अर्जुनस्य प्रश्नं आशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थं 'एवं वा एतमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तः ब्राह्मणाः मिथ्याज्ञानवद्भिः अवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चर-

आ॥तर्ह्यनीव मनस्समाधानमपि ॥ कार्यमित्यत आह—यस्त्विति । रमणं परदर्शनादिनिमित्तं सुखम् । तृप्तिरन्यत्रालंबुद्धिः । सन्तोषस्तज्जनकं सुखम्, 'सन्तोषस्तृप्तिकारणम्' इत्यभिधानात् । परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः । अन्यत्र सर्वात्मनालंबुद्धिः । महच्च तत्सुखं च तेनैवान्यत्रालंबुद्धिरिति दर्शयति । आत्मन्येव च सन्तुष्ट इति ।

ज॥ भावेन सङ्गतिमाह—नहीति । यद्यत्र कर्माकरणे हानिस्तत्करणे च लाभस्तर्हीत्यर्थः । परमेश्वरेऽतीव मनस्समाधानमसम्प्रज्ञातसमाधिरित्यर्थः । न कार्यं प्रसज्येतेति शेषः; तत्र कर्मलोपस्यावश्यम्भावादिति भावः । अत्र रतितृप्तिसन्तोषशब्दास्तान्व्याचष्टे—रमणमिति । परेतिस्वरूपकथनं, न शब्दार्थान्तर्भूतम् । तथा च पञ्चमेऽभिधानं वक्ष्यते । तथात्वे जीवनिराकरणं च व्यर्थं स्यात् । यद्दर्शनादिनिमित्तं सुखं ततोऽन्यत्र । तज्जनकं तृप्तेर्जनकं तृप्तिकारणं सुखमिति शेषः । इदानीमात्मशब्दस्य जीवविषयत्वप्रतीतिनिरासार्थमात्मरतिरितिसमस्तं पदं व्याख्याति—परमात्मेति । प्राप्तः आत्मरतिरिति शेषः । अनेनात्मनि रतिर्यस्येति विग्रहः सूचितः; आत्मनो रतिर्यस्येति वा । एवमुत्तरत्राप्यात्मशब्दौ परमात्मार्थौ ज्ञातव्यौ । न चैवं सति तृप्तशब्दस्य परमात्मनोऽन्यत्रालम्बुद्धिरर्थः स्यात्, तत्तु वेद न वक्तव्यम्, आत्मरतिरेवेत्यवधारणेनान्येरतिनिरासेन पौनरुक्त्यप्रसङ्गादित्यत आह—अन्यत्रेति । अलम्बुद्धित्वं प्राप्तस्तृप्तशब्देनोक्त इति शेषः । अलम्बुद्धीरिति पाठे तृप्तशब्दार्थ इति शेषः । अवधारणेनैवान्यत्र रत्यभावे लब्धेऽपि सर्वात्मनाऽन्यत्रालम्बुद्धिं वक्तुं तृप्त इति पुनर्वचनम् । अवधारणस्यान्यत्रालम्बुद्धिमात्रद्योतनेन चरितार्थस्य सर्वात्मनेत्यत्राप्रवृत्तेरिति भावः । ननु सन्तुष्ट इत्यनेनालम्बुद्धिजनकं सुखं प्राप्त इत्युच्यत इत्युक्तम्; तत्किं विषयजन्यम्? उतात्मरत्याख्यम्? नाद्यः, विरोधात्; न द्वितीयः, तस्यात्मरतिशब्देनोक्ततया पुनरुक्तिप्रसङ्गात् । कथं च तस्यान्यत्रालम्बुद्धिजनकत्वमित्यत आह—महच्चेति । चशब्दो हेतौ । तदात्मरत्याख्यं प्रागुक्तमेव सुखं पुनरन्यत्रालम्बुद्धिकारणत्वेनोच्यतेऽत्र, अतो न दोषः । तस्य च महत्त्वं सशब्देनोक्तम्, अतस्तत्कारणत्वं चोपपन्नमित्यर्थः । आत्मरतिः सन्तो[illegible]

रा॥णाय साधनारम्भः;स हि मुक्त एव। यस्मादसाधनायत्तात्मदर्शनस्यैव साधनाप्रवृत्तिः, यस्माच्च साधने प्रवृत्तस्यापि सुशकत्वादप्रमादत्वादन्तर्गतात्मयाथात्म्यानुसन्धानत्वाच्च ज्ञानयोगिनोऽपि मात्रया कर्मानुवृत्त्यपेक्षत्वाच्च कर्मयोग एवात्मदर्शननिर्वृत्तौ श्रेयान्, तस्मादसङ्गपूर्वकं कार्यमित्येव सततं यावदात्मप्राप्ति कर्मैव समाचर। 'असक्तः' 'कार्यम्'

ता॥स्यैत्यादेर्द्वैतभिप्रायेण वा मुक्त एव हि साधननिरपेक्ष इति श्लोकद्वयार्थनिगमनाभिप्रायेण वोच्यते —सहि मुक्तएवेति ॥ १७ ॥ १८ ॥

तस्मादित्येतत्कर्मणः कर्तव्यतायां पूर्वोक्तसमस्तहेतुपरामर्शीत्यभिप्रायेणाह—यस्मादिति ' असक्तः कार्यम्' इत्युभयमपि कर्मणोऽनुष्ठानप्रकारपरमित्यभिप्रायेणोक्तम्—असङ्गपूर्वकं कार्यमित्येवेति। कार्यमित्येव, न तु तत्कार्यस्वर्गाद्यपेक्षयेत्यर्थः । सततमित्यत्र ज्ञानयोगाधिकारे सत्यपि कर्मयोगस्यैवानुष्ठेयत्वायाह—यावदात्मप्राप्तीति । ज्ञानयोगव्यवधानमन्तरेणापि कर्मयोग एवात्मप्राप्तिं साधयतीति ' अ-

दा॥न्ति न तेषाम् आत्मज्ञाननिष्ठाव्यतिरेकेण अन्यत् कार्यं अस्ति" इत्येवं श्रुत्यर्थं इह गीताशास्त्रे प्रतिपिपादयिषितम् आविष्कुर्वन् आह भगवान्—यस्तु इति। यस्तु साङ्ख्यः आत्मज्ञाननिष्ठः आत्मरतिः आत्मनि एव रतिः न विषयेषु यस्य स आत्मरतिरेव स्यात् भवेत् आत्मतृप्तः च आत्मनैव तृप्तो न अन्नरसादिना स मानवः मनुष्यः सन्न्यासी आत्मन्येव च सन्तुष्टः संतोषो हि बाह्यार्थलाभे सर्वस्य भवति, तम् अनपेक्ष्य आत्मन्येव च संतुष्टः सर्वतो वीततृष्ण इत्येतत् । य ईदृश आत्मवित् तस्य कार्यं करणीयं न विद्यते नास्ति इत्यर्थः ॥ १७ ॥

आ॥तस्य एव सन्सन्तुष्ट इत्यर्थः । नान्यत्किमपि सन्तोषकारणमित्यवधारणम्;आत्मना तृप्तः । न ह्यात्मन्यलंबुद्धिर्युक्ता। तद्वाचित्वं च 'वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः' इतिप्रयोगात्सिद्धम् । अध्याहारस्त्वगमनिका गतिः । आत्मरतिरेवेत्यवधारणादसंप्रज्ञात-

जा॥रात्मेति व्यर्थमित्यत आह—तस्य एवेति। सन्तोषाख्यात्मरतिः केनास्य जातेत्यपेक्षायामसम्प्रज्ञातसमाधिलक्षणया परमात्मनि स्थित्येति ज्ञापयितुम् आत्मनीत्युक्तमित्यर्थः । अवधारणस्य प्रयोजनमाह—नान्यदिति । अन्यदसम्प्रज्ञातसमाधिरूपात्तस्याभावात्। एतेनात्मरतिरेवेत्यवधारणेनास्य पुनरुक्तता परिहृता। नन्वात्मतृप्त इति कोऽयं समास इत्यत आह—आत्मनेति। न केवलमात्मरत्याख्येन सुखेन, किं तु प्रसन्नेन परमात्मनैवेत्यर्थः। पञ्चमीसमासः कथं न स्यादिति चेत्—न,असामर्थ्यात्। अन्यत्रेत्यनेन ह्यस्य सामर्थ्यं न तु तृप्तशब्दार्थेन; तृप्तशब्दार्थ एवान्यकार्थान्तर्भूतोऽस्तीति चेत्—न, तस्य प्रकरणलब्धस्य तदन्तर्भावाभावात् । अन्यथा 'वय तु न वितृप्यामः' इत्यत्र ततोऽन्यत्रालंबुद्धि न प्राप्नुम इत्यर्थप्रसङ्गात् । अस्तु तर्हि सप्तमीसमास इति,नेत्याह—न हीति। पूर्वविशेषणविरोधात्, प्रमाणान्तरविरोधाच्चेति भावः। स्यादयं दोषो यदि तृप्तशब्दस्यालंबुद्धिवाचित्वं स्यात् , तदेव कुत इत्यत आह—तद्वाचित्वं चेति । नन्वत्र तृप्तिशब्दः प्रीत्यर्थः । नचैव सत्यर्थानुपपत्तिः, उत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैरन्यत्र प्रीतिं न प्राप्नुम इत्यध्याहारेणोपपत्तेरित्यत आह—अध्याहारस्त्विति । गत्यन्तररहिता गमनिका । अध्याहारो ह्यश्रुतशब्दकल्पनम् । तच्च कल्पकसद्भावे न 'दोषोऽन्यथा तु दोष एव कल्पकं च गत्यन्तररहितम् । अन्यथाऽनुपपत्तिरिति यावत् अत्र त्वलंबुद्ध्यर्थत्वे गृहीते विनाप्यध्याहारेण वाक्यार्थोपपत्तेरयुक्तोऽसाविति भावः। षष्ठीसमासस्तु 'पूरणगुणसुहितार्थ'इति प्रतिषिद्धः। अपव्याख्यानं निराचष्टे—आत्मरतिरेवेति । न ज्ञानिमात्रस्येत्येवार्थः । इतोऽपि न ज्ञानिमात्रस्य कार्याभाव इत्याह—स्थितप्रज्ञस्यापीति । स्वधर्मः

रा॥ इति वक्ष्यमाणाकर्तृत्वानुसन्धानपूर्वकं च कर्माचरन् पुरुषः

ता॥सक्ताः हि ' इत्यादिनाच्यत इत्यभिप्रायेणाह—असक्त इति। कर्माचरन् परमाप्नोतीति। न पुनः कर्माचरणानन्तरमेव यत्कृत्यमित्यर्थः । कर्माचरन् परमाप्नोतीत्युक्ते अथासक्तकर्मणस्साधनत्वं व्यनक्ति—

शा॥किञ्च—नैव इति। नैव तस्य परमात्मरतेः कृतेन कर्मणा अर्थः प्रयोजनम् अस्ति। *तर्हि अकृतेन अकरणेन प्रत्यवायाख्यः अनर्थः ? न अकृतेन इह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूप आत्महानिलक्षणो वा नैव अस्ति न च अस्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चित् अर्थव्यपाश्रयः प्रयोजननिमित्तक्रियासाध्यो व्यपाश्रयः व्यपाश्रयणं †कञ्चित् भूतविशेषम् आश्रित्य न साध्यः कश्चित् अर्थः अस्ति, येन तदर्था

आ॥समाधिस्थस्यैव कार्यं न विद्यते, स्थितप्रज्ञस्यापि कार्यों देहादिर्दृश्यते । यद्वा 'स्वधर्मो मम तुष्ट्यर्थं स हि सर्वापेक्षितः' इति वचनाच्च पक्षपातः। अन्यदाऽन्यगतिरपीयत्सर्वस्य भवति । न च तत्रालम्बुद्धिमात्रमुक्तम् , आत्मतृप्त इति पृथगभिधानात् । कर्तृशब्दः कालावच्छेदेऽपि चायं प्रसिद्धः 'यो भुङ्क्ते स तु न ब्रूयात्' इत्यादौ । अतोऽसम्प्रज्ञातसमाधावेवैतत् । मानव इति ज्ञानिन एवासम्प्रज्ञातसमाधिर्भवतीति दर्शयति । 'मनु

ज॥कार्यं इति मरन्य आत्मरतिरेवेत्यवधारणेऽपि कुतो न ज्ञानिमात्रविषयमेतदित्यत आह—अन्यदेति। अवधारणेन ह्यनात्मरतिर्व्यावर्त्यते । असम्प्रज्ञातसमाधिकालादन्यदा सर्वस्य ज्ञानिनोऽप्यपदन्यरतेर्भवत्त्वमुपपादितम्। अतोऽसम्प्रज्ञातसमाधिस्थव्यतिरिक्तानां ज्ञानिनामप्यवधारणेन व्यावर्तितत्वात्तद्विषयमेवेदमिति भावः । ननु ज्ञानिनामन्यरतौ विद्यमानायामपि तत्रालम्बुद्धिरप्यस्तीत्यात्मरतिरेवेत्यवधारणमुपपद्यत इत्यत आह—न चेति । तत्र श्लोके तत्र कार्याभावप्रतिपादकत्वेनात्मनोऽन्यत्रालम्बुद्धिमात्रमलम्बुद्धिः, रतिसहचरितालम्बुद्धिरिति यावत् नोक्ता, किं तर्हि सर्वात्मनालम्बुद्धिः, कुत इत्यत आह—आत्मेति। अवधारणेनान्यत्रालम्बुद्धौ लब्धायामपि यत्पृथगात्मतृप्त इत्यभिधत्ते, तेन सर्वात्मनाऽलम्बुद्धिरवधारणेनाभिप्रेतेति ज्ञायत इति प्रागुक्तम्, अतो ज्ञानिमात्रे नेदमुपपद्यत इत्यर्थः । यस्त्वात्मरतिरेवेत्येतदसम्प्रज्ञातसमाधिस्थ एव सम्भवति , तथाऽपि यस्तत्तदीति तद्व्युत्पत्तिः यत् य एवंविधः कदाचित्तस्य सर्वदा कार्यं न विद्यत इतीदं व्याख्यानं ज्ञानिमात्रस्य कार्याभावं सत्स्यति । न ह्यत्र यदैव तदैवेति कालावच्छेदकशब्दोऽस्ति , आत्मरतिरिति समासस्तु स्वे कर्तरि समाचष्ट इत्यत आह—कर्तृशब्द इति । अयं च यदा तदेति शब्दतोऽपीत्यर्थः । आदिग्रहणेन यो दारान्परिगृह्णाति, स गृहस्थ्यादौ परिग्रहः । अयं भावः । तस्य कार्यं न विद्यत इत्युक्तेऽतिप्रसक्तौ सत्यामन्यव्यावर्तकं यस्त्वात्मरतिरेव स्यादित्यनेनोक्तम्। व्यावर्तकं च द्विविधं भवति, विशेषणमुपलक्षणं चेति । तत्र व्यावर्त्यसमानकालं विशेषणम् , यथा सिद्धान्तमुदाहृतं भोजनम्, अन्यथा तूपलक्षणम्, यथा पूर्वमुदाहृतं पतनम्, तत्र विशेषणं मुख्यम्, विशेषज्ञानहेतुत्वात्, अन्यदमुख्यं वैपरीत्यात्, मुख्यामुख्ययोश्च मुख्ये कार्यसम्प्रत्ययः । न चात्र विशेषणत्वग्रहणे बाधकमस्ति, येनोपलक्षणमेतदिति प्रतीम इति । कर्तृशब्द इत्युक्तस्य फलमाह—अत इति। एतत्कार्यराहित्यम् । समाधावेवेत्युक्त्या समानकालतां सूचयति । न चासम्प्रज्ञातसमाधिस्थस्य कार्याभावे व्याख्यायमाने कदाचिदपरोक्षज्ञानरहितस्याप्यसम्प्रज्ञातसमाधिसम्भवात्कार्याभावप्रसङ्ग इति चेत्—न, अपरोक्षज्ञानिन एवासम्प्रज्ञातसमाधिर्भवति नान्यस्येत्यस्यार्थस्य मानव इति पदेन भगवतैव दर्शितत्वादित्याह—मानव इति । मानव इति कथं ज्ञानिनो वाचकमित्यत आह—मनिरिति । धातो

पा॥ *अस्तु इत्यधिक पाठ ॥ † आलम्बनं इत्यधिक पाठ ॥

रा॥कर्मयोगेनैव परमाप्नोति आत्मानं प्राप्नोतीत्यर्थः ॥ १९ ॥

ता॥कर्मयोगेनैवेति । अत्र प्राप्यतया निर्दिष्टः परो देहातिरिक्तात्मप्रकरणत्वात्प्रकृतेःपरो जीव इत्यभिप्रायेणाह—आत्मानं प्राप्नोतीत्यर्थः इति ॥ १९ ॥

म॥क्रिया अनुष्ठेया स्यात् ॥ १८ ॥

न त्वम् एतस्मिन् सर्वतः संप्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे । यतः एवं—तस्मात् इति । तस्मात् असक्तः सङ्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय । असक्तो हि यस्मात् समाचरन् ईश्वरार्थं कर्म कुर्वन् परम् आप्नोति पूरुषः मोक्षम् आप्नोति पुरुषः सत्त्वशुद्धिद्वारेण इत्यर्थः ॥ १९ ॥

आ॥अवबोधने'इति धातोः । परमात्मरतिश्चात्र विवक्षिता । 'विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि' इति वचनात् ॥ १७ ॥

तस्य कर्मकाले वक्तव्योऽहमिति कश्चित्प्रत्युक्त्वा तत्कृतावात्मरत्यधिकः समो वार्थो नास्ति । न च तस्याप्यकृतौ कश्चिद्दोषोऽस्ति । न चैतदपहाय सर्वभूतेषु कश्चित्प्रयोजनाश्रयः अर्थो येन दर्शनादिना भवति, सोऽर्थव्यपाश्रयः । ध्यानमात्रेण यद्यपि

ज॥व्याख्यानादिति शेषः। अस्माद्धातोर्भावे उप्रत्ययः।ततो मनुरवबोधोऽस्यास्तीत्यस्मिन्नर्थे मनोरथमाश्रय इत्यर्थे वाऽण्प्रत्ययः । यद्वा धातोरेवाण्प्रत्ययः । मनुष्य इति व्याख्यायामुष्यादिव्यावृत्तिर्वैयर्थ्यं चापद्येत । आत्मशब्दस्याप्यन्यथा व्याख्या निराकरोति—परमात्मेति । चशब्दोऽवधारणे । न स्वात्मरतिरित्यर्थः । तस्यैवेत्यवधारणादिति ॥ १७ ॥

यदीय कार्याभावोक्तिर्न ज्ञानिमात्रस्य किंत्वसम्प्रज्ञातसमाधिस्थस्यैव। तर्हि नैव तस्य कृतेनार्थ इत्युत्तर वाक्यं न सम्बध्यते, असम्प्रज्ञातसमाधेः करणस्यैवाभावेन तत्प्रयोजनाभावकथनस्यैवायोगात् । ज्ञानिनस्तु करणसंभवेन तत्प्रयोजनप्रतिषेधोपपत्तिरिति चेन्न, तर्ह्यतीव मनःसमाधानमपि न कार्यमित्याक्षेपस्य 'तस्य कार्यं न विद्यते'इत्युत्तर कस्मादुक्तम् । कर्मकृतिकाले त्वयाऽहमुद्बोधनीय इति कञ्चित्प्रत्युक्त्वा समाहितस्तेन योगशास्त्रोदितोपायैरुद्बोधितः कर्म करोतीति कुतो नोक्तमित्याशङ्कानिरासायेदमेवमुच्यत इत्यभिप्रेत्य व्याचष्टे—तस्येति । तस्यासम्प्रज्ञातसमाधिस्थास्यार्थो नास्तीति सम्बन्धः । उक्तोद्बुद्धस्येति शेषः । एवं तर्हि तस्यैव महत्सुप्तत्वादित्याद्युक्तिविरोध इत्यत उक्तम्—आत्मेति । समो वाऽऽत्मरत्या । समप्रतिषेधः कैमुत्यार्थः । न तु समव्ययफलं कर्मानुष्ठीयते । नन्वत्र कश्चनेत्यस्य विशेष्याकाङ्क्षायां सन्निधानादर्थ इति मवप्यते । तथा चेदमयुक्तम् । न हि कर्माकरणेऽर्थप्राप्तिरस्ति, येन प्रतिषेधः सङ्गच्छते अर्थसंनिधानादपि योग्यताया बलवत्त्वात्कश्चन दोष इत्यध्याह्रियते । तथाऽप्यश्वमेधाद्यकृतौ प्रत्यवाया प्राप्तेः प्रतिषेधोऽसंगत एवेत्यतो नाकृतेनेत्येतत् व्याचष्टे नचेति । माभूद्यज्ञादिकरणार्थमुत्थानं नित्यनैमित्तिकाकरणे प्रत्यवायप्राप्तेस्तदर्थं तु स्यादित्याशङ्कानिरासार्थमेतत्। सन्ध्येति तत्कालेऽनुष्ठेय कर्मोच्यते । माभूदल्पस्य यज्ञादेरनुष्ठाने प्रयोजनाभावः, सन्ध्याद्यकृतौ प्रत्यवायश्च; तथाऽपि गुरुदेवतादिपूजाकरणाकरणयोरर्थप्रत्यवायौ स्यातामेव । अतस्तत्सन्निधिप्राप्ताद्युत्थानमावश्यकमेवेत्याशङ्कानिरासार्थं न चास्येत्युक्तम् । तदयुक्तम् , उक्तविरोधादेवेत्यतो व्याचष्टे—न चैतदिति । एतदसम्प्रज्ञातसमाधानम् , अपहायोत्थितस्येति शेषः । अपहायेत्यनेन गुर्वादिपूजाया अपि आधिक्यं निषेधति, आधिक्यस्यैव पूर्वत्यागोपयोगित्वात्। सर्वभूतेषु गुर्वादिषु। नन्वर्थव्यपाश्रयो नामार्थप्राप्तिः। तथा च सर्वभूतेभ्य इति स्यादित्यत आह । अर्थ इति । अनेनार्थस्य व्यपाश्रयः प्राप्तिर्येन दर्शनादिना व्यापारेण भवतीति व्यधिक-

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**

रा॥यतो ज्ञानयोगाधिकारिणोऽपि कर्मयोग एवात्मदर्शने श्रेयान्; अत एव हि जनकादयो राजर्षयो ज्ञानिनामग्रेसराः कर्मयोगेनैव संसिद्धिमास्थिताः

ता॥कर्मयोगस्य ज्यायस्त्वं शिष्टानुष्ठानेनोदाहियते—कर्मणैवेति। हिशब्दसूचितं ज्ञानयोगाधिकार दर्शयति—राजर्षयो ज्ञानिनामग्रेसराइति । राजानो हि विस्तीर्णागाधमनसः; तत्रापि ऋषित्वादतीन्द्रियार्थद्रष्टारः, तत्राप्यात्मविदः, तत्रापि निसर्गनिगृहीतेन्द्रियत्वात्प्रकृष्टसत्त्वादिना च तेषामग्रगण्या इत्यर्थः । कर्मणैवेत्येवकारो ज्ञानयोगशक्तस्यापि कर्मयोगानुष्ठानपरः । संसिद्धिशब्दस्य परमा-

श॥यस्माच्च—कर्मणैव इति। कर्मणैव हि पूर्वे क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गन्तुं आस्थिताः प्रवृत्ताः । के ? जनकादयः जनकाश्वपतिप्रभृतयः । यदि ते प्राप्तसम्यग्दर्शनाः, ततः लोकसङ्ग्रहार्थं प्रारब्धकर्मत्वात् कर्मणा सहैव असंन्यस्यैव कर्मसंसिद्धिं आ-

आ॥प्रत्यवायो न भवति; तदर्जुनस्यापि समभिति न तस्य कर्मोपदेशोपपत्तिरित्येतद् द्रवति इंपश्यारब्धानर्थसूचकं च तद्द्रवति । महच्चेद्ब्रह्मत्यादिवत् ॥ १८ ॥

यतोऽसम्प्रज्ञातसमाधेरेव कार्याभावः, तस्मात्कर्म समाचर ॥ १९ ॥

आचारोऽप्यस्तीत्याह – कर्मणैवेति । कर्मणा सह कर्म कुर्वन्त एवेत्यर्थः । कर्म

ज्ञा॥णो बहुव्रीहिरयमित्युक्तं भवति । तथा च दर्शनादेर्विषया गुर्वादय इति सप्तम्युपपत्तिः। अनेनानर्थव्यपाश्रयोऽप्युपलक्ष्यते । स्यादेतत्, किमनेनायासेन ज्ञानिमात्रविषयमेतत्किं न स्यात्, ज्ञानमात्रेण प्रत्यवायाभावात्तत्राप्यस्यार्थस्य सम्भवात्, अवधारणादेश्चोपचरितार्थत्वसम्भवादित्यत आह—ज्ञानेति । तत् ज्ञानमात्रम् । इतिशब्दो हेतौ । एतत्कार्याभाववचनं प्रत्युत विरोधीति हृदयम् । प्रत्यवायो न भवतीत्यह्नीत्युक्तम् । वस्तुतस्तु ज्ञानिनोऽप्यस्ति प्रतिषिद्धकर्मकरणादिनाऽनिष्टप्राप्तिरित्याह—ईपदिति । सूचिते च तदैव चित्तखेद. । उपलक्षणं चैतत् मुक्तावानन्दह्रास इत्यपि द्रष्टव्यम् । तथा विहितकरणेनानन्दवृद्धिरपीति ॥ १८ ॥

तस्मादसक्त इति परामर्शविषयो न प्रतीयते, अतस्तं दर्शयन् व्याख्याति—यत इति । त्वं चेदानीम् असम्प्रज्ञातसमाधिर्न भवसीति शेषः । कर्मणोऽनस्य कर्तव्यत्वेऽसम्प्रज्ञातसमाधिविलोपप्रसङ्गान्नेदमनस्य कर्तव्यमित्यतोऽहमपि न कुर्यामिति परिचोदनायामसम्प्रज्ञातसमाधिस्थविलेपप्रतिबन्दीं मोचयितुं तस्य वैलक्षण्यमुक्त्वा तत्फलमिदमुच्यत इति नासङ्गतिः ॥ १९ ॥

कर्मण एव मुक्तिसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय कर्मणैवहीत्यस्य तात्पर्यं तावदाह—आचारोऽपीति । विहितस्य कर्मणः कर्तव्यताया प्रमाणमिति शेषः । अपिः पूर्वोक्तहेतुसमुच्चये । कर्मण एव मोक्षकारणत्वं तृतीययोच्यत इति प्रतीतिनिरासाय व्याचष्टे—कर्मणेति । नन्वेवं सहयोगे तृतीयाया व्याख्यायमानाया जनकादयः कर्मणा सहैव मुक्तिमास्थिता इति वाक्यार्थः स्यात्, न चायं युक्त., पुत्रेण सहैवागतः पितेत्यत्र यथा पुत्रस्याप्यागमनान्वयः, प्रतीयते तथा कर्मणोऽपि मुक्तिमास्थितत्वस्य प्रसङ्गादित्यत आह—कर्मेति । यद्यपि श्रूयमाणक्रियाया सहयोगो नोपपद्यते, तथाऽप्यध्याहृतावान्तरक्रियायामुपपद्यत एव । ततश्च यथा 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र दशभिः पुत्रैः सहैव वर्तमानाऽप्येवैव भारं वहतीत्यर्थस्तथाऽत्रापि कर्मणा सहैव वर्तमानाः कर्म कुर्वन्त एवेत्यर्थ उपपद्यत इति भावः । द्विधापि सहयोगमभिप्रेत्य समासविधौ पाणिनिरविशेषमभाणीत् । तेन सहेति तुल्ययोगे ' इति । कर्मसाहित्यं च मुक्तावानन्दवृद्ध्यर्थमिति ज्ञातव्यम्; उपपदविभक्तेः कारकविभक्ति-

रा ॥ आत्मानं प्रासयन्तः ॥

एवं प्रथमं मुमुक्षोर्ज्ञानयोगानर्हतया कर्मयोगाधिकारिणः कर्मयोग एव कार्य इत्युक्त्वा ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगात्कर्मयोग एव श्रेयानिति सहेतुकमुक्तम्। इदानीं शिष्टतया व्यपदेश्यस्य सर्वथा कर्मयोग एव कार्य इत्युच्यते—

लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २०

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनु वर्तते ॥ २१

ता॥प्रोतीत्युक्तनिदर्शनपरत्वात्—आत्मानं प्रासयन्त इत्युक्तम्। एवं च सति कर्मणैवेति पूर्वप्रसक्तज्ञानयोगनैरपेक्ष्यपरमवधारणमप्युपपन्नं भवति ॥ २० ॥

उत्तरसङ्गत्यर्थमुक्तं सङ्ग्रहेणोद्गृह्णाति—एवमिति । इदानीमित्यनेन लोकसङ्ग्रहमित्यादिकं 'विद्वान्युक्तस्समाचरन्' इत्यन्तमविच्छिन्नं—सर्वथेति । लोकरक्षार्थं, लोकोपप्लवजनितस्वपापेन ज्ञानयोगादपि प्रच्यावकेनोभयभ्रष्टत्वपरिहारार्थं चेत्यर्थः । लोकसङ्ग्रहमपीत्यन्वये लोकसङ्ग्रहस्याप्रधानता प्रतीयेत, एवय-

श॥स्थिता इत्यर्थः।अथ अप्राप्तसम्यग्दर्शनाः जनकादयः, तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः । अथ मन्यसे पूर्वैरपि अजानद्भिः एव कर्तव्यं कृतं कर्म तावता नावश्यं अन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेन इति;तथापि प्रारब्धकर्मायत्तः त्वं लोकसङ्ग्रहम् एव अपि लोकस्य उन्मार्गप्रवृत्तिनिवारणं लोकसङ्ग्रहः, तमेवापि प्रयोजनं संपश्यन् कर्तुम् अर्हसि ॥ २० ॥

आ॥कृत्वैव ततो ज्ञानं प्राप्य वा। न तु ज्ञानं विना। प्रसिद्धं हि तेषाम् ज्ञानित्वं भारतादिषु। 'तमेवं विद्वानमृत इह भवति' इत्यादिश्रुतिभ्यश्च । अत्रापि कर्मणां ज्ञानसाधनत्वोक्तेश्च बुद्धियुक्ता इति । गत्यन्तरं च ' नान्यः पन्थाः' इत्यस्य नास्ति । इतरेषां ज्ञानद्वाराऽप्यविरोधः । यत्र च तीर्थादेवमुक्तिसाधनमुच्यते 'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा । अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ; इत्यादौ, तत्र पापादिमुक्तिः स्तुतिपरता

ज॥र्बलीयसीति चेत्—सत्यम्, वक्ष्यमाणबाधात्तत्परिग्रहोपपत्तेः; अस्तु वा करणे तृतीया;तथाऽपि'लाङ्गलेन वय जीवामः' इतिवत्पारपर्येण कर्मणो मुक्तौ कारणत्वमित्याह—कर्मेति । सिद्धिमास्थिता इति चेत्यर्थः । *सिद्धिशब्दो ज्ञानार्थो वेत्यस्याप्युपलक्षणमेतत् । यथाप्रतीतार्थः किं न स्यादित्यत आह—*न त्विति । ज्ञानं विना केवलेन कर्मणा जनकादयः सिद्धिं गता इत्यर्थस्तुनेत्यर्थः—प्रसिद्धं हीति । हि शब्दो हेतौ। अस्तु तेषां ज्ञानित्वं मुक्तौ तु कर्मैव कारणमित्यत आह—तमेवमिति। अत्रापि गीतायामपि कर्मजं बुद्धियुक्ता हीत्यादावित्यर्थः । प्राग्ज्ञानात् ज्ञानसाधनं पश्चान्मुक्तिसाधनमिति समुच्चयवादिनां मतं न तु केवलकर्मवादिनाम् । न चात्र प्रमाणमप्यस्ति । ननु यथा मोक्षस्य ज्ञानसाध्यत्वे तमेवमित्याद्यागमाः सन्ति । तथा कर्मसाध्यत्वेऽपि 'अपामसोमम्' इत्यादयो विद्यन्ते; तत्कथं निर्णय इत्यतः सावकाशत्वनिरवकाशत्वबलादित्याह—गत्यन्तरं चेति । ज्ञानद्वारेति व्याख्यानेऽपीत्यर्थः । ननु कर्मवाक्यान्यपि ब्रह्मज्ञानेनवेत्यादीनि निरवकाशानि सन्ति, तत्र ब्रह्मज्ञानसमानकक्ष्यतया तीर्थस्नानादेरुक्तत्वेन उक्तव्याख्यानायोगात् अतः पुनरनिर्णयएवेत्याशङ्क्य तेषामपि सावकाशत्वमाह—यत्रेति । तीर्थादीति । तत्स्नानादीत्यर्थः, पापादिमुक्तिर्मुक्तिशब्दार्थ इत्यर्थः । न च सर्वत्र मुक्तिशब्द एवास्ति, ससारमुक्ति-

रा॥ लोकसङ्ग्रहं पश्यन्नपि कर्मैव कर्तुमर्हसि; श्रेष्ठः कृत्स्नशास्त्रज्ञतयाऽनुष्ठातृतया च प्रथितो यद्यदाचरति ; तत्तदेवाकृत्स्नविज्जनोऽप्याचरति ; अनुष्ठीयमानमपि कर्म श्रेष्ठो

---

त॥त्रपीत्युक्ते कर्मकर्तव्यतायाः पूर्वोक्तहेतुभ्यो लोकसङ्ग्रहस्याधिक्य शंक्येतेत्यसमन्वय उक्तः। एवकारो ज्ञानयोगव्यवच्छेदाय कर्तुमेवार्हसीत्यन्वेतव्य इत्यभिप्रायेणोक्तं—कर्मैव कर्तुमर्हसीति। यद्वा लोकसङ्ग्रहमेवेत्येवकारो लोकसङ्ग्रहस्य नैरपेक्ष्यपरः, कर्मैवेति तु प्रकरणापन्नमुक्तम्। अर्हसीत्यनेन कर्मयोगैकानुष्ठानकारणमर्जुनस्य वैशिष्ट्य द्योत्यते—श्रेष्ठइति। 'प्रशस्यस्य श्रः' इत्यनुशासनात्प्रशस्यतम इत्यर्थः। तत्रास्य प्रशस्ततमत्वमनुष्ठातॄणामनुविधेयानुष्ठानत्वोपयोगीति मत्वा 'तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्' इति वक्ष्यमाण चानुसन्धाय—कृत्स्नशास्त्रज्ञतयानुष्ठातृतया च प्रथित इत्युक्त। अकृत्स्नविदोऽनुष्ठातुः कृत्स्नवित्त्वेऽप्यननुष्ठातुरुभयाकारवत्त्वेऽपि अप्रसिद्धस्यानुविधेयानुष्ठानता नास्तीति तद्व्यवच्छेदाय पदत्रयम्। 'स यत्प्रमाण कुरुते' इत्यत्र 'स यच्छास्त्र प्रमाणीकरोति तदनुवर्तते लोक' इत्यस्मिन्नर्थे तदनुवर्तनस्य तदर्थानुष्ठानरूपत्वादर्थतः पुनरुक्तिस्स्यात्; कुरुत इतिचैतद्बुध्यत इत्यस्मिन्नर्थे नेतव्यम्। 'लोकसङ्ग्रहमेवापि सपश्यन् कर्तुमर्हसि' इति पूर्ववाक्ये च कर्तुमर्हसीत्येतावन्मात्रमुक्तम्, श्रुतिस्मृत्यादिकमपि प्रमाणीकर्तुमर्हसीत्यनुपन्यस्तम्; येन तदर्थमिदमुच्येत 'यद्यदाचरति' इत्यत्रानुष्ठेयस्वरूपे निर्दिष्टे तत्प्रकारे त्वपेक्षिते बुभुत्सा जायते ; अतस्तदभिधानमेवोचितमित्यभिप्रायेण यत्प्रमाण यदङ्गयुक्तमित्युक्तम्। प्रमाणशब्दोऽत्रावधिपरः; अनुष्ठेयकर्मस्वरूपस्यचावधिरङ्गान्येव, अत एव हि निष्पन्नशब्देनेतिकर्तव्यतामुपचरन्ति। यत्प्रमाण यथाभूतमिति यादवप्रकाशभाष्यमप्येतत्परमेव

---

श॥लोकसङ्ग्रहः किमर्थः? उच्यते यद्यत् इति। यद्यत् कर्म आचरति करोति श्रेष्ठः प्रधानः तत्तदेव कर्म आचरति इतरः जनः तदनुगतः। किं च सः श्रेष्ठः यत् प्रमाणं

---

आ॥चा तत्रापि हि कुत्र चिद्ब्रह्मज्ञानसाधनत्वमेवोच्यते,अन्यथा मुक्तिं निषिध्य 'ब्रह्मज्ञान विना मुक्तिर्न कथचिदवाप्यते। प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हि'इत्यादौ। न च तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्त ज्ञाननियम घ्नन्ति। यथा काश्चद्दक्षं भृत्य प्रत्युक्तानि अयमेव हि राजा कि राज्ञा इत्यादीनि। यथाह भगवान् 'यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च। स्तावकान्येव तानि स्युरज्ञानां मोहकानि वा। भवेन्मोक्षस्तु मद्दृष्टेर्नान्यथा तु कथचन' इति नारदीये। अतोऽपरोक्षज्ञानादेव मोक्षः। कर्म तु तत्साधनमेव ॥ २० ॥

---

ज॥रित्यादेरपि सम्भवात्। अतो गत्यन्तरमप्याह—स्तुतीति। प्रशस्तत्वोपलक्षणेत्यर्थः। प्रशस्तत्वसादृश्येन गौणी वा दुष्टजनव्यामोहनार्थत्वस्याप्युपलक्षणमेतत् कुत एतत्कल्प्यत इत्यत आह—तत्रापीति। यत्र तीर्थस्नानादिक मुक्तिसाधनमुच्यते; तत्रैव प्रस्तावे साधनत्व तीर्थस्नानादीनाम्। अन्यथा ज्ञान विना। या मुक्तिर्येन्मुक्तिसाधनत्व। वाक्यताऽविशेषाद्ब्रह्मज्ञानेन वेत्यादिभिरेव ब्रह्मज्ञान विनेत्यादीना बाधः किं न स्यादित्यत आह – नचेति। असाधारणसाधारणप्रसङ्गोक्तत्वादिनेति भावः। अत्र दृष्टान्तमाह—यथेति। इत्यादीनि नाय राजा किंतु भृत्य एवेत्यादीनि तत्प्रस्तावेऽप्युक्तानि न निघ्नन्तीति शेषः। आगमसिद्धा चेय व्यवस्थेत्याह—यथेति। मद्दृष्टेरित्येतदर्थप्रतिपत्त्यर्थ—भगवानित्युक्तम्—तीर्थादिवाक्यानीति तीर्थस्नानक्षेत्रवासादीना मोक्षसाधनत्ववाक्यानीत्यर्थः। कर्मेति यज्ञादेर्ग्रहणम्। आदिपदेन ध्यानादेः सङ्ग्रहः। पूर्ववदर्थः। अज्ञाना सम्यग्ज्ञानायोग्यानाम्। उपसंहरति—अत इति ॥ २० ॥

रा॥यत्प्रमाणं यदङ्गयुक्तमनुतिष्ठति, तदङ्गयुक्तमेवाकृत्स्नविल्लोकोऽप्यनुतिष्ठति अतो लोकरक्षार्थं शिष्टतया प्रथितेन श्रेष्ठेन स्ववर्णाश्रमोचितं कर्म सकलं सर्वदानुष्ठेयं अन्यथा लोकनाश जनितं पापं ज्ञानयोगादप्येनं प्रच्यावयेत् ॥ २१ ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२

न मे सर्वेश्वरस्या*प्तकामस्य सर्वज्ञस्य सत्यसङ्कल्पस्य त्रिषु लोकेषु देवमनुष्यादिरूपेण स्वच्छन्दतो वर्तमानस्य किंचिदपि कर्तव्यमस्ति, यतोऽनवाप्तं कर्मणाऽवाप्तव्यं नकिंचदप्यस्ति अथापि लोकरक्षायै कर्मण्येव वर्ते ॥ २२ ॥

ता॥अस्मिन्नर्थं कुरुते इतिशब्दस्वारस्यप्रदर्शनाय—अनुतिष्ठतीत्युक्तम्।अन्यथार्थान्तरे लक्षणा स्यादिति भावः । यत्प्रमाणमिति निर्दिष्ट विशिष्टसिद्ध्यर्थं तच्छब्दार्थमाह—तदङ्गयुक्तमिति । ननु यच्छब्देनाङ्गे निर्दिष्टे कथ तच्छब्देनाङ्गविशिष्टपरामर्शः? इत्थ, यदङ्गयुक्तमनुतिष्ठति तदाचरतीत्युक्ते तदङ्गमाचरतीत्येव शब्दवृत्तिः अङ्गस्याङ्गिपृथग्भावायोगादर्थतस्तदङ्गविशिष्टमिति सिद्धम् । आभिप्रायिकौ करणाकरणयोरर्थानर्थौ प्रकाशयति अत इति। लोकानुविधेयानुष्ठानत्वादित्यर्थः सर्वदेति। यावदात्मप्राप्तीत्यर्थः ननु स्वयं यदि ज्ञानयोगेन मुक्तो भवति किमस्य लोकेन सङ्गृहीतेनासङ्गृहीतेनवेत्यत्राह —अन्यथेति। ज्ञानयोगाधिकार्यहमिति कृत्वा कर्मयोगपरित्यागे सतीत्यर्थः ज्ञानयोगादपीत्यपिशब्द उभयभ्रष्टतां द्योतयति॥

मयापि हि निरपेक्षेणैव लोकक्षोभे निष्प्रत्यवायेनापि परमकारुणिकतया लोकरक्षार्थं कर्मैव क्रियते त्वया तु सापेक्षेण सप्रत्यवायेन किम्पुनरित्युच्यते 'न मे पार्थ' इत्यादिश्लोकत्रयेण। मे इति पदेन कर्मवश्यचेतनान्तरव्यावृत्तो यथावस्थितो हीश्वर, परामृश्यत इत्यभिप्रायेण विलक्षणनित्यसिद्धविभूतिगुणपौष्कल्यस्य व्यञ्जनानि सर्वेश्वरस्येत्यादिविशेषणान्युक्तानि—सर्वेश्वरस्येति श्रुतिस्मृती हि ममैवाज्ञा, साचान्यैरनुवर्तनीया न हि मे नियन्त्रन्तरमस्ति, यदधीनप्रत्यवायभयात्कुर्यामिति भावः—आप्तकामस्येति । न च मे सङ्कल्पमात्रादसाध्यमितःपूर्वमभिलापदशामात्नापन्न प्रयोजनमस्ति, यदुपायतया कर्मकर्तव्यमिति भावः—सर्वज्ञस्य सत्यसङ्कल्पस्येति । नापि मे कर्मवश्याना देवमनुष्य तिरश्चा सजातीयतयावतीर्णस्यापि तेषामिव ज्ञानसङ्कोच इच्छाप्रतिघातो वास्ति,यन्निवृत्यर्थं कर्मकार्यमित्याशयः त्रिषु लोकेष्वित्यत्रार्थसिद्ध विशेषमध्याहृत्याह—देवमनुष्येति । उक्त च भगवता पराशरेण 'समस्तशक्तिरूपाणि तत्करोति जनेश्वरः । देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ॥ जगतामुपकाराय न सा कर्मनिमित्तजा । चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ' इति । 'नानवाप्तमवाप्तव्यम्' इत्येतत्कर्तव्याभावेऽपेक्षितहेतुपरतया व्याख्याति—यत इति । उत्तरश्लोकपर्यालोचनासिद्ध प्रयोजनमाह—अथापि लोकरक्षायै इति । अथापीति चकारस्यार्थः कर्मणि वर्तएवेत्युक्ते न कदाचिदपि कर्मणो विरम्य ज्ञानयोगमनुतिष्ठामीति फलितम् तद्व्यञ्जनायोक्तम्—कर्मण्येव वर्ते इति । यद्वा प्रकरणौचित्यादेवकारोऽत्र भिन्नक्रमः ॥ २२ ॥

प्र-पा ॥ * अवाप्तसमस्तकामस्य. पा॥ १. अवाप्तसमस्तकामस्येति. पा॥ २ वि. पु. ६-७ ७१-७२.

शं॥कुरुते लौकिकं वैदिकं वा लोकः तत् अनुवर्तते तदेव प्रमाणीकरोति इत्यर्थः ॥ २१ ॥

यदि अत्रापि लोकसङ्ग्रहकर्तव्यतायां ते विप्रतिपत्तिः, मां किंन पश्यसि? न इति ॥ मे मम पार्थ न अस्ति न विद्यते कर्तव्यं त्रिषु अपि लोकेषु किंचन किंचिदपि । कस्मात्? न अनवाप्तं अप्राप्तं अवाप्तव्यं प्रापणीयं, तथापि वर्ते एव च कर्मणि अहम् ॥ २२ ॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४

रा॥अहं सर्वेश्वरस्सत्यसङ्कल्प· स्वसङ्कल्पकृतजगदुदयविभवलयलीलइछन्दतो जगदुपकृतिमर्त्यो जातोपि मनुष्येषु शिष्टजनाग्रेसरवसुदेवगृहेऽवतीर्णस्तत्कुलोचिते कर्मे

त॥कर्तव्यप्रयोजनयारभावे किमर्थं तर्हि कर्मे नियतइति शङ्कायामुच्यते यदिह्यहमिति पूर्व श्लोक' त्रिषु लोकेष्विति निदर्शात्सर्वावतारपरः अयं तु मनुष्याइति दर्शनात्कृष्णावतारासाधारण तस्मादहमिति निदर्शस्येश्वरस्वभावसमुचितकृष्णावतारासाधारणाकारविषयतामाह—सर्वेश्वर इत्यादिभि· । सर्वेश्वरस्सत्यसङ्कल्प इति । पूर्वनदातकामत्वाविरोधायोच्यते—स्वसङ्कल्पकृतेति । स्वसङ्कल्पमात्रेण सर्वं नियन्तु शक्तोऽपि ज्ञानप्रदानादिद्वारा प्रवर्तनार्थं जगदुपकृतिमर्त्यो जातोऽपीत्युक्त अन्यथा भूतावशान्यायेन प्रवर्तिताना शास्त्रवश्यताभावात्तत्तदनुष्ठानाधीन फल न स्यात् 'छन्दतस्सम्प्रवर्तते' इत्याद्यनुसारेणाह —छन्दत इति । न तु कर्मणेत्यर्थ. कर्मफलभोक्तृत्व व्युदस्यता—जगदुपकृतिमर्त्यं इत्यनेन 'जगदुपकृतिमर्त्यं को विजेतु समर्थ' इति पुराणोक्तिस्मारिता । अपिशब्देनाकर्मवश्यावतारोऽपीत्यभिप्रेतम् 'अजायमानो बहुधा विजायते' 'नाकारणात्कारणाद्वा'

प्र पा॥ १ वि पु ५ ३० ८० ।

२ अजायमानो बहुधा विजायते तस्य धीरा परिजानन्ति योनिम्' अजायमान' इति कर्महेतुकमनुष्यादिप्राकृतदहसम्बन्धिरूपजन्मनिषेध । 'विजायते' इति स्वेच्छाहेतुकजगद्रक्षणाथाऽप्राकृतविग्रहाविर्भावरूपजन्मविधि । बहुधा मत्स्यकूर्मवराहादिरूपेण विजायत इत्यर्थ तस्य उपासकानुग्रहशीलस्य भगवत, योनि जन्म, धीरा धामनामग्रसरा, पराशरपाराशर्यपराङ्कुशादय परिजानन्ति स्वस्मादन परिशी ज्ञानन्तीत्यर्थ ॥

३ विष्णुपु ५ अ १ अ ५१. श्लो टीका

कारणात्कारणाद्वा कारणाकारण नच । शरीरग्रहण क्वापि धर्मत्राणाय केवलम्'' कारण प्रयोजन सुखम् अकारण अप्रयोजन दुखम्, कारणाकारण मिश्रम् एतदुक्त भवति न नारकिवत् अधर्मफलानुभवाय तव शरीरग्रहणम्, नच स्वर्गिवद्धर्मफलानुभवार्थम्, नापि मनुष्यादिवत् उभयफलानुभवार्थम्, किन्तु केवल धर्मत्राणायेति । यद्वा कस्य सुखस्य आरम्भत्वात् प्रापकत्वात् कारण धर्म तद्विरुद्धमकारण मधर्म तदुभय कारणाकारणम् एत्य क्रमात् तिर्यग्देवनराणा जन्म तदनुनैव, अकर्मवश्यत्वात् किन्तु केवलमिच्छया धर्मत्राणायेति ॥

शा॥यदि इति॥ यदि हि पुनः अहं न वर्तेय जातु कदाचित् कर्मणि अतन्द्रित· अनलसः सन् मम श्रेष्ठस्य सत· वर्त्म मार्गं अनुवर्तन्ते मनुष्या· हे पार्थ सर्वश· सर्वप्रकारैः ॥ २३ ॥

आ ॥ स यद्वाक्यादिक प्रामाणीकुरुते । यदुक्तप्रकारेण तिष्ठतीत्यर्थ. ॥ २१ २६ ॥

ज॥'स यत्प्रमाण कुरुते' इत्यत्र यच्छब्देन प्रमाणमप्रमाणं वा विवक्षितम् । आद्ये प्रमाण कुरुत इत्ययुक्तम् । क्षितस्य करणाभावात् । द्वितीयेऽप्येवमेव, अशक्यत्वादित्यत आह—स इति । प्रमाणमेव सत् यद्वाक्यादिक लोकेन प्रमाणतयाऽनवगतम् । तत्प्रमाणतया ज्ञापयतीत्यर्थ । यद्वैतमेवेदं पद यत्प्रमाणक लौकिक वैदिक वा कर्म कुरुत इत्यनेनाभिप्रायेण तात्पर्यमाह—यदुक्तेति ॥ २१-२६ ॥

रा॥एयतन्द्रितस्सर्वदा यदि न वर्तेयम्,मम शिष्टजनाग्रेसरवसुदेवसूनोर्वर्त्मकृत्स्नविदःशि-ष्टाः सर्वप्रकारेणायमेव धर्म इत्यनुवर्तन्ते ; ते च स्वकर्तव्याननुष्ठानेनाकरणे प्रत्यवायेन चात्मानमलब्ध्वा निरयगामिनो भवेयुः;अहं कुलोचितं कर्म न चेत्कुर्याम्,एवमेव सर्वे शिष्टलोका मदाचारायत्तधर्मनिश्चयाः अकरणादेवोत्सीदेयुः—नष्टा भवेयुः।शास्त्रीयाचारान-नुपालनात्सर्वेषां शिष्टकुलानां संकरस्य च कर्ता स्याम्। अत एवेमाः प्रजाः उपहन्याम् । एवमेव त्वमपि शिष्टजनाग्रेसरपाण्डुतनयो युधिष्ठिरानुजोऽर्जुनस्सन् यदि ज्ञाननिष्ठाया-

---

ता॥'इच्छागृहीताभिमतोरुदेहः' इत्यादिकमनानुमहितम्।अनुविधेयानुष्ठानत्वसिद्ध्यर्थं हिशब्दद्योतितप्रसि-द्धिप्रकारविवरणार्थं चोक्तं—मनुष्येष्वित्यादि। नन्वयमीश्वरः कस्मिन् कर्मणि वर्तेत,न ह्यस्य परमार्थतो वर्णाश्रमास्सामान्यधर्मयोग्यं मनुष्यत्वादिकं चास्ति,येनाकर्मवश्य इच्छया कर्म कुर्वाणोऽपि तत्तदुचितं कर्मो-पाददीत—इति शङ्कायां 'कुलोचितमिति क्षात्रं धर्मं स्वं बहुमन्यते' इत्याद्यनुसारेणाह—तत्कुलोचित इति । अयम्भावः—सत्यमस्य परमार्थतो वर्णाश्रमादिकं नास्ति, तथापि तत्तदुचितकर्मकरणायाप्राकृतमेव विग्रहं तत्तज्जातीयसन्निवेशं परिणमयति; तत्र तत्तज्जातीयत्वबुद्ध्या पुरुषाणामनुविधेयानुष्ठानत्वं स्यात्—इति। अतन्द्रितः— अनुदासीनः । सर्वदेति जातुशब्दार्थः; जात्वपीति हि तदभिप्रायः। अनुविधेय-स्योपयुक्तप्रकारविवक्षां ममेत्यत्रापि दर्शयति—ममशिष्टेति।'सर्वशः'इति प्रमाणपौष्कल्यपर,सेतिकर्तव्यता-कत्वपरं वेत्यभिप्रायेणाह—सर्वप्रकारेणेति। अनुवर्तन्ते अनुवर्तेरन्नित्यर्थः;प्रसङ्गरूपस्यापि सिद्धवत्का-राभिप्रायेण वर्तमानव्यपदेशः । वक्ष्यमाणप्रसङ्गार्थं मनुष्याणामपूर्वसिद्धस्वानुवृत्तिमात्राभिप्रायेणवाऽनिष्टप्र-सङ्गपरत्वायाह—ते चेति । शास्त्रमेवानुसृत्य तथाकरणं नाद्रियेरन्नित्यत्राह—उत्सीदेयुरिति । लोकश-ब्दस्याचारपरजनविषयतामौचित्यसिद्धामभिप्रेत्योक्तं—शिष्टलोका इति । 'इमे' इतीदंशब्दबहुवचनयो-स्सामर्थ्यात् —सर्वे इत्युक्तम्।सर्वेषां शास्त्रार्थाना मर्वानिश्चेतुमशक्यत्वाच्छिष्टाचारदत्तदृष्टीनामुक्ताया अनु-वृत्तेः प्रकारमालोच्योक्तं—मदाचारेत्यादि । विनश्वरणात्वर्थासम्भवात्पुरुषार्थहानापुरुषार्थप्राप्तिरूपो नाश इहोत्साद इत्याह—नष्टा भवेयुरिति । 'अमन्नेव' इत्यादिवदेतत् । अकरणस्योत्सादहेतुत्वेऽवान्तर-व्यापारस्सङ्करः;स च ब्राह्मणादिधर्मस्य युद्धनिवृत्त्यादेः क्षत्रियादिभिरनुष्ठानम्।उपहतिः पश्चादपि कर्मा-नर्हता। स्वात्मनि दृष्टान्तभूते दर्शितमर्थं दार्ष्टान्तिकेऽभिप्रेत व्यञ्जयति—एवमेव त्वमिति। 'नेमेपार्थ'

---

प्र-पा॥१. वि. पु. ६. अं.५.अ ८४. श्लो ॥ 'स-मस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशादृतभूतवर्गः । इच्छागृहीताभिमतोरुदेह संसाधिताशेषजगद्धितो य ॥' समस्तकल्याणगुण. — कल्याणशब्दो भावप्रधान 'द्व्ये-कयोर्द्विवचनैकवचने' इति सूत्रस्थद्व्येकयोरितिपद द्वि-त्वैकत्वपरमिति यथा व्याख्यातम्, अन्यथा 'द्वयेकेषु' इति वाच्यम्; नतु'द्व्येकयो.'इति। समस्तकल्याणगुण आत्मा धर्मिस्वरूपं यस्य स समस्तकल्याणगुणात्मकः।ब-हुव्रीहिरौपचारिक: शिलापुत्रकस्य शरीरमिति निर्देश-वत् दिव्यात्मस्वरूपमेव स्तौति—स्वशक्तीति । स्वशक्ति-लेशात् स्वाशलेशात् , भूतभूतवर्ग , यद्वा शक्ति सा-मर्थ्यम्, स्वगुणलवभृतभूतजात इत्यर्थ', भूतवर्ग भूत-समूह ; यद्वा सृज्यत इति सर्ग —कार्यवस्तुजातमि-त्यर्थ । अभिप्रायविशेषेण षाड्गुण्य पश्चादृश्यन् प्रथमं दि-व्यविग्रहवत्त्वमाह—इच्छेति । निजेच्छया गृहीता-भिमतपूज्यदेह'; यद्वा जगद्धितायावतारकालेष्विच्छया गृहीततत्तत्कार्योचितानेकदेह: । अवतारद्वारेण साध्य विग्रहप्रयोजनमाह—संसाधितेति ॥ २. वर्तेत.पा॥ ३. ४. तै. आ. ६ ॥ ५. दार्ष्टान्तिकेऽप्यभिप्रेत पा॥ ६. गी.३-२२॥

---

श ॥ तथा च को दोष इति ? आह —उत्सीदेयुः इति ॥ उत्सीदेयुः इमे सर्वे लोकाः लोकस्थितिनिमित्तस्य कर्मणः अभावात् न कुर्यां कर्म चेत् अहम् । किंच—सङ्करस्य च

रा॥मधिकरोषि,ततस्त्वदाचारानुवर्तिनोऽकृत्स्नविदद्दिशाश्च मुमुक्षवः स्वाधिकारमजानन्तः कर्मनिष्ठायां नाधिकुर्वन्तो विनश्येयुः। अतो व्यपदेश्येन विदुषा कर्मैव कर्तव्यम्॥२४॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तस्समाचरन् ॥ २६

अविद्वांसः—आत्मन्यकृत्स्नविदः,कर्मणि सक्ताः कर्मण्यवर्जनीयसम्बन्धाः आत्मन्यकृत्स्नवित्तया तदभ्यासरूपज्ञानयोगेऽनधिकृताः कर्मयोगाधिकारिणः कर्मयोगमेव यथा

ता॥इति पार्थशब्दसम्बुद्ध्याभिप्रेतमनुविधेयत्वोपयोग्याकारत्रयमाह शिष्टेति।युधिष्ठिरशब्दोपादानं युद्धप्रोत्साहनाय रणधुरन्धरस्वधर्मनिष्ठताद्योतनार्थम्, किन्तु पित्रादिप्रतिसम्बन्ध्यन्तरेण, स्वयमेव हि शिष्टजनाग्रेसरत्वेनानुष्ठीयमानवृत्तान्ते. प्रसिद्धस्त्वमित्यभिप्रायेणाह—अर्जुनस्त्वमिति।धर्मो हि शिष्टेनानुष्ठेय ; ज्ञानयोगश्च परमधर्मः ततश्च तदनुवर्तनं लोकस्य मोक्षायैव स्यादिति लोकरक्षैव भवेदिति शङ्कायामुक्त—स्वाधिकारमजानन्त इति । तदनधिकारिणां तत्रानुप्रवेशेनोभयभ्रष्टता स्यादिति भावः । लोकसङ्ग्रहमित्यादिनोक्तमुपसंहरति—अत इति ॥ २३ ॥ २४ ॥

लोकस्य कर्मयोगज्ञानयोगयोरधिकारानधिकारप्रकारो विदुषस्तु स्वाधिकारेतरत्कारेण तदधिकारानुरूपाचरणं लोकसङ्ग्रहप्रकारश्चोच्यते—सक्ता इत्यादिश्लोकद्वयेन।अवेदन प्रस्तुतविषयमिति ज्ञापनायोक्तम्—आत्मन्यकृत्स्नविद इति। एवमुत्तरत्र विद्वानज्ञानामिति शब्दयोरपि द्रष्टव्यम्।अत्यन्तानात्मज्ञताव्युदासायाकृत्स्नशब्दः।पूर्वोक्त प्रकृतिसम्बन्धेन कर्मणोऽवर्जनीयत्वं'सक्ताः'इत्यनेन विवक्षितमित्यभिप्रायेणाह—कर्मण्यवर्जनीयसम्बन्धा इति । अविद्वांसः कर्मणि सक्ता इत्युभयं न सांसारिककर्मतत्परपुरुषविषयम्,तथा सति कर्मयोगमपि परित्यज्य सांसारिककर्माण्येव विदुषाप्यनुष्ठेयानि स्युः,तस्माज्ज्ञानयोगानधिकारः कर्मयोगाधिकारश्च ताभ्यां सूच्यत इत्यभिप्रायेण आत्मन्यकृत्स्नवित्तयेत्यादिकमुक्तम् । एवमुत्तरत्र'अज्ञानां कर्मसङ्गिनाम्'इत्यत्रापि ग्राह्यम्, यथा कुर्वन्ति तथा कुर्यादित्येतदपि न केवलं दृष्टान्तदार्ष्टान्तिकविषयम्,अपि तु येन प्रकारेण स्वानुष्ठानं दृष्ट्वान्ये कर्म कुर्युः,तेन प्रकारेण विद्वानाचरेदित्येतद

प्र-पा॥ १ गी. ३-२२.

षा॥कर्ता स्याम्।तेन कारणेन उपहन्याम् इमाः प्रजाः।प्रजानामनुग्रहाय प्रवृत्तः तदुपहतिं कुर्याम् इति मम ईश्वरस्य अननुरूपम् आपद्येत ॥ २४ ॥

यदि पुनः अहमिव त्वं कृतार्थबुद्धिः, आत्मवित् अन्यो वा, तस्यापि आत्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य. इत्याह—सक्ताः इति ॥ सक्ताः कर्मणि 'अस्य कर्मणः फलं मम भविष्यति' इति । *के ? अविद्वांसः यथा कुर्वन्ति भारत, कुर्यात् विद्वान् आत्मवित् तथा असक्तः सन् । तद्वत् किमर्थं करोति' तत् शृणु—चिकीर्षुः कर्तुम् इच्छुः लोकसङ्ग्रहम् ॥ २५ ॥

एवं लोकसङ्ग्रहं चिकीर्षोः न मम आत्मविदः कर्तव्यम् अस्ति अन्यस्य वा लोकसङ्ग्रहं मुक्त्वा । तस्य आत्मविद इदम् उपदिश्यते—न इति ॥ बुद्धेः भेदः बुद्धिभेदः 'मया इद

पा ॥ *केचित् अविद्वांस ॥

रा॥आत्मदर्शनाय कुर्वते; तथा आत्मनि कृत्स्नवित्तया कर्मण्यसक्तो ज्ञानयोगाधिकारयोग्योऽपि व्यपदेश्यशिष्टो लोकरक्षार्थं स्वाचारेण शिष्टलोकानां धर्मनिश्चयं चिकीर्षुः, कर्मयोगमेव कुर्यात्। अज्ञानामात्मन्यकृत्स्नवित्तया ज्ञानयोगोपादानाशक्तानां मुमुक्षूणां कर्मसङ्गिनामनादिकर्मवासनया कर्मण्येव नियतत्वेन कर्मयोगाधिकारिणां कर्मयोगादन्यदात्मावलोकनसाधनमस्तीति न बुद्धिभेदं जनयेत्। किं तर्हि?; आत्मनि कृत्स्नवित्तया ज्ञानयोगशक्तोऽपि पूर्वोक्तरीत्या कर्मयोग एव ज्ञानयोगनिरपेक्ष आत्मावलोकनसाधनमिति बुद्ध्या युक्तः कर्माचरन् सर्वकर्मस्वकृत्स्नविदां प्रीतिं जनयेत् ॥ २५ ॥ २६ ॥

कर्मयोगमनुतिष्ठतो विदुषोऽविदुषश्च विशेषम्प्रदर्शयन् कर्मयोगापेक्षितमात्मनोऽकर्तृत्वानुसंधानप्रकारमुपदिशति—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ २७
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८

ता॥भिप्रायं;तथासति हि'चिकीर्षुर्लोकसङ्ग्रहम्'इत्यपि सङ्गतं भवतीत्यभिप्रयन्वाक्यार्थमाह—आत्मनीत्यादिना कुर्यादित्यन्तेन।'विद्वान्''असक्तः'इत्युभाभ्यां फलितमुक्तं—ज्ञानयोगाधिकारयोग्योऽपीति। सङ्ग्रहशब्देन लोकरञ्जनादिभ्रमव्युदासायाह— धर्मनिश्चयमिति।लोकस्य सङ्ग्रहणमेकीकृत्य स्वीकरणं स्वानुष्ठाने समानाभिप्रायतया सयूथ्यतापादनमित्यर्थः। कर्मवासना उत्तरोत्तरपुण्यपापारम्भकपूर्वपूर्वपुण्यपापांशविशेषः ; उत्तरोत्तरशरीरप्रेरणसमर्थस्मृतिहेतुः पूर्वपूर्वशरीरप्रेरणानुभवविशेषजनितसंस्कारो वा ; वादिलवादनादिसंस्कारवत् । बुद्धिभेदो बुद्धेरन्यथाकरणम , तच्च प्रकृतविषये दर्शयति—कर्मयोगादन्यदित्यादिना । 'युक्तः' इत्यनेन लोकसङ्ग्रहार्थं कुर्वतः स्वापेक्षितविलम्बाभावाय प्रागुक्तनिरपेक्षत्वबुद्धियोगो विवक्षित इति—बुद्ध्या युक्त इत्युक्तम् । 'जोषयेत्' इत्यस्यार्थः—प्रीतिं जनयेदिति । 'जुषी प्रीतिसेवनयोः' इति धातुः । कर्मसङ्गिनः पुरुषान् सर्वकर्माणि जोषयेदित्यन्वयः ॥२५॥२६॥

'प्रकृतेः' इत्यादिश्लोकचतुष्टयस्यार्थमाह—कर्मयोगमिति । विदुषोऽविदुषश्चेति व्युत्क्रमेण श्लोकद्वयार्थः । तृतीये त्वेतद्विशदीकरणमुखेनाविचालनमुक्तम् । कर्मयोगापेक्षितं कर्मयोगेति-

प्र-पा ॥ १. गी. ३. २५ ॥ | २. तौदादिक , आत्मनेपदी ॥

शं॥कर्तव्यं भोक्तव्यं चास्य कर्मणः फलम्'इति निश्चयरूपाया बुद्धेः भेदनं चालनं बुद्धिभेदः, तं न जनयेत् न उत्पादयेत् अज्ञानाम् अविवेकिनां कर्मसङ्गिनां कर्मणि आसक्तानाम् आसङ्गवताम्। किन्तु कुर्यात्? जोषयेत् कारयेत् सर्वकर्माणि विद्वान् स्वयं तदेव अविदुषां कर्म युक्तः अभियुक्तः समाचरन् ॥ २६ ॥

आ॥विद्वदविदुषोः कर्मभेदमाह—प्रकृतेरिति । प्रकृतेर्गुणैरिन्द्रियादिभिः । प्रकृति-

ज॥प्रकृतेः क्रियमाणानीति श्लोकद्वयस्यास्फुटत्वात्तात्पर्यमाह—विद्वदिति । यथायोगं संबन्धो न यथाक्रमम्। कर्मभेदं कर्मवैलक्षण्यम्, आह प्रपञ्चयतीत्यर्थः। सक्ताः कर्मणीत्यादिनोक्तत्वात् व्यवहितत्वादन्वयं दर्शयन् गुणशब्दस्यानेकार्थत्वात् विवक्षितमर्थमाह—प्रकृतेरिति । आदिपदेन शरीरमनसोर्ग्रहणम् । कथमिन्द्रियादीनां द्रव्याणां प्रकृतिगुणत्वमित्यत आह—प्रकृतिमिति । गुणभूतान्यप्रधानानि ।

रा ॥ प्रकृतेर्गुणैस्सत्त्वादिभिः स्वानुरूपं क्रियमाणानि कर्माणि प्रति अहंकारविमूढात्माऽहं कर्तेति मन्यते ; अहंकारेण विमूढ आत्मा यस्यासावहंकारविमूढात्मा . अहंकारो नाम अनहमर्थे प्रकृतावहमभिमानः ; तेन *अज्ञातस्वरूपो गुणकर्मसु अहं कर्तेति मन्यत इत्यर्थः । गुणकर्मविभागयोः—सत्त्वादिगुणविभागे तत्तत्कर्मविभागे च

त॥कर्तव्यताभूतमित्यर्थः । 'प्रकृतेर्गुणैः' इत्युक्ते प्रसिद्धिप्रकर्षादिसिद्ध निक्षेपप्रस्तुतानुपयुक्तशब्दादिप्राकृतगुणव्यवच्छेदायाह—सत्त्वादिभिरिति । वक्ष्यमाणसात्त्विकादिकर्मविभागं 'सर्वशः' इति प्रकारवाचिपदसूचितमाह—स्वानुरूपमिति । 'कर्ता' इतितृजन्तयोगात् षष्ठीप्राप्तिस्स्यादिति तत्परिहाराय कर्मसु कर्तृत्वाहन्त्वोक्तिभ्रमव्युदासाय च कर्माणि प्रतीत्युक्तम् । तृजन्तरशनिरधाया स्थिय फलितोक्तिः । अहङ्कारविमूढात्मेति—समासाद्यलनस्य बहुर्थपरस्य अनार्थं निवक्षन् विग्रहाति—अहङ्कारेणेति । नात्राहम्भावमात्रमुच्यते, तस्यात्मस्वभावान्तर्गतत्वात् ; नापि अहङ्काराख्यमचिद्द्रव्यं, तस्यापि देहात्मभ्रम द्वारीकृत्य कार्यकरत्वे सति [1]अव्यवहितस्यैव वक्तुमुचितत्वात् ; नापि गर्वः, उत्कृष्टपरिभवादिहेतुत्वेनानिर्देशात्। अतोऽहङ्कार इति देहात्मभ्रम एवात्र विवक्षित इत्यभिप्रायेणाह—अहङ्कारो नाम अनहमर्थे प्रकृतावहमभिमान इति । एतेनाहङ्कारशब्दस्याभूततद्भावे च्विप्रत्ययेन व्युत्पत्तिर्दर्शिता। [2]अज्ञातस्वरूप इति । विमूढः आत्मा स्वरूप यस्य स विमूढात्मा 'दिशो विमुह्येयुः' इतिवद्विमूढशब्दोऽत्र मोहविषयसमानाधिकरण इति भावः । 'गुणकर्मविभागयोः' इत्यत्र उपसर्जनान्वयिषष्ठीत्वादपि विषयसप्तमीत्वमुचितमिति मत्वोक्त—सत्त्वादिगुणविभागे तत्तत्कर्मविभागे चेति । विभागशब्दो द्वन्द्वात्परत्वात्प्रत्येकमन्वित.। गुणाना साक्षाद्गुणेषु वृत्त्यभावात्परोक्तप्रक्रियेयेन्द्रिय-

प्र-पा ॥ १ अव्यवहितस्य तस्यैव. पा ॥ | २. *अज्ञातात्मस्वरूप इति. पा ॥

शं ॥ अविद्वान् अज्ञः कथं कर्मसु सज्जते इति? आह—प्रकृतेः इति ॥ प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेः गुणैः विकारैः कार्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैः अहङ्कारविमूढात्मा कार्यकरणसङ्घातात्मप्रत्ययः अहङ्कारः, तेन *विविधं मूढः आत्मा अन्तःकरणं यस्य सः अयं कार्यकरणधर्मा कार्यकरणाभिमानी अविद्यया कर्माणि आत्मनि मन्यमानः तत्तत्कर्मणाम् अहं कर्ता इति मन्यते ॥ २७ ॥

यः पुनः विद्वान्—तत्त्ववित् इति ॥ तत्त्ववित् तु महाबाहो । कस्य तत्त्ववित्? गुणकर्मविभागयोः गुणविभागस्य कर्मविभागस्य च तत्त्ववित् इत्यर्थः।गुणाः करणात्मकाः

आ॥मपेक्ष्य गुणभूतानि हि तानि, तत्सम्बन्धीनि च । न हि प्रतिबिम्बस्य क्रिया ॥ २७॥

ज॥प्रकारान्तरेण व्याचष्टे तदिति। प्रकृतिकार्याणि चेत्यर्थ.। गुणशब्दः कार्यार्थ इत्युक्त भवति। ननु जीवस्यापि कर्तृत्वात् 'अहंकारविमूढात्मा कर्ताऽहमिति मन्यते' इति कथमुच्यत इत्यत आह—न हीति । स्वातन्त्र्येणेति शेषः ॥ २७ ॥

गुणानां कर्मणा चान्योन्यं यो विभागस्तस्मिन्वक्तव्ये एकवचनेनालं कथं द्विवचनं, केन वाऽस्यान्वय इति शङ्का विभागशब्दस्यार्थं वदन्परिहरति—कर्मेति । जीवेश्वरप्रकृतिलक्षणसन्निधिभेदात्कर्मणा-

पा ॥ *विविधं नानाविधम् ॥

रा॥ तत्त्ववित् गुणाससत्त्वादयः स्वगुणेपु स्वेपु कार्येषु वर्तन्त इति मत्वा गुणकर्मसु अहं कर्तेति न सज्जते ॥ २७ ॥ २८ ॥

प्रकृतेर्गुणसम्मूढास्सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९

अकृत्स्नविदस्त्वात्मदर्शनाय प्रवृत्ताः प्रकृतिसंसृष्टतया प्रकृतेर्गुणैर्यथावस्थितात्मनि सम्मूढाः गुणकर्मसु क्रियास्वेव सज्जन्ते, न तद्विविक्तात्मस्वरूपे; अतस्ते ज्ञानयोगाय न प्रभवन्तीति कर्मयोग एव तेषामधिकारः। एवंभूतांस्तान् मन्दानकृत्स्नविदः कृत्स्नवित्

ता॥तद्विषयादिविवक्षायां पदद्वयोपचारात् सप्तम्यन्तो गुणशब्दो गुणकार्येष्वौपचारिक इत्यभिप्रायेणोक्तं —स्वगुणेषु स्वेषु कार्येष्विति । गुणकार्याणि च विभजिष्यन्ते । यद्वा कारणस्य प्राधान्यात्कार्यस्य च तदपेक्षया गुणत्वादेवमुक्तम् ॥ २७ ॥२८ ॥

'प्रकृतेर्गुण' इति श्लोके तावन्न निषिद्धादिसङ्गो विवक्षितः, तदानीमविचाल्यत्वानुपपत्तेः; अतः पुरुषार्थोपायेषु केषुचित्सङ्गो वक्तव्यः; प्रस्तुतश्च पुरुषार्थोऽत्रात्मदर्शनम्; तत्त्वाकृत्स्नविदधिकारे कस्मिंश्चित्तदुपाये सङ्गो विवक्षित इत्यभिप्रायेण—अकृत्स्नविदस्त्वात्मदर्शनाय प्रवृत्ता इत्याद्युक्तम् । 'अहङ्कारविमूढात्मा' इत्यात्मविषयो हि सम्मोहः प्रकृतः; अतो गुणैस्सम्मूढा इत्येव समासः; उपसर्जनस्यापि च गुणशब्दस्य 'देवदत्तस्य गुरुकुलम्' इत्यादिष्विव प्रकृतेरित्यनेनान्वय एवोपपन्न इत्यभिप्रायेणोक्तं—प्रकृतेर्गुणैर्यथावस्थितात्मनि सम्मूढा इति । 'गुणकर्मसु' इत्यस्य कर्मयोगपर्यवसानायोक्तं —क्रियास्वेवेति । परिसंख्यापरत्वव्यक्त्यर्थमेवकारः । तत्सूचितं व्यवच्छेद्यमाह—नतदिति । गुणकर्मसङ्गोक्तिफलितमविचालनहेतुमाह—अतस्त इति । न प्रभवन्ति न स-

दे॥ गुणेषु विषयात्मकेषु वर्तन्ते न आत्मा इति मत्वा न सज्जते सक्तिं न करोति ॥ २८ ॥
ये पुनः—प्रकृतेः इति ॥ प्रकृतेः गुणैः सम्यक् मूढाः संमोहिताः सन्तः सज्जन्ते गुणानां कर्मसु गुणकर्मसु 'वयं कर्म कुर्मः फलाय' इति । तान् कर्मसङ्गिनः अकृत्स्न-

आ॥कर्मभेदस्य गुणभेदस्य च तत्त्ववित् । गुणा इन्द्रियादीनि गुणेषु विषयेषु ॥ २८ ॥
प्रकृतेर्गुणेषु इन्द्रियादिषु सम्मूढाः । इन्द्रियाद्यभिमानाद्धि विषयादिषु सङ्गः॥गुण-

ज॥मिन्द्रियादीना च भेदोऽत्र विवक्षितो ग्रन्थान्तरादवगन्तव्यः; 'गुणा गुणेषु' इति पदद्वयस्य विवक्षितमर्थमाह —गुणा इति ॥ २८ ॥

'प्रकृतेर्गुणसमूढाः' इत्यत्र गुणशब्दस्य विवक्षितमर्थं वदन् विग्रहं दर्शयति—प्रकृतेरिति । नित्यसापेक्षत्वाद्गुणशब्दस्य नासामर्थ्यमिति प्रदर्शनाय प्रकृतेरित्यनुवादः; देवदत्तस्य गुरुकुलमिति यथा । प्रकृतेर्गुणसमूढत्वात् सज्जन्ते गुणकर्मस्विति हेतुहेतुमद्भावोऽत्र विवक्षितः; अन्यथा वैयर्थ्यापत्तेः; तमुपपादयति—इन्द्रियादीति । अभिमानो ममैवैतानि स्वातन्त्र्येण करणानीति भ्रमः; विषयादीत्युक्त्या गुणशब्दोऽत्र विषयार्थ इति दर्शयति । आदिशब्देन कर्मग्रहणम् । विषयेषु सङ्गः स्नेहादिः कर्मसु स्वातन्त्र्यभ्रमः । गुणाना कर्मस्विति केनचिद्व्याख्यानम्; तदसदिति भावेन द्वन्द्वोऽयमिति दर्शयति—गुणेति । द्वन्द्वपरिग्रहेऽधिकार्थलाभात् । अनेन विषयादीत्येतदपि समर्थितं भवति । गुण-

रा॥ स्वयं ज्ञानयोगावस्थानेन न विचालयेत्। ते किल मन्दाः श्रेष्ठजनाचारानुवर्तिनः कर्मयोगादुत्थितमेनं दृष्ट्वा कर्मयोगात् प्रचलितमनसो भवेयुः ; अतश्श्रेष्ठस्स्वयमपि कर्मयोगे तिष्ठन्नात्मयाथात्म्यज्ञानेनात्मनोऽकर्तृत्वमनुसन्दधानः, कर्मयोग एवात्मावलोकने निरपेक्षसाधनमिति दर्शयित्वा तानकृत्स्नविदो जोषयेदित्यर्थः। ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगादस्यैव ज्यायस्त्वं पूर्वमेवोक्तम्। अतो व्यपदेश्यो लोकसङ्ग्रहायैतमेव कुर्यात्। प्रकृतिविविक्तात्मस्वभावनिरूपणेन गुणेषु कर्तृत्वमारोप्य कर्मानुष्ठानप्रकार उक्तः। गुणेषु कर्तृत्वानुसंधानं चेदम्—आत्मनो न स्वरूपप्रयुक्तमिदंकर्तृत्वम्, अपितु गुणसंपर्ककृतमिति प्राप्ताप्राप्तविवेकेन गुणकृतम्—इत्यनुसन्धानम् ॥ २९ ॥

ता॥मर्थाः इत्यर्थः।तेषामप्रतिषेध्यविचालनप्रसङ्गाय मन्दानित्युक्तमित्यभिप्रायेण विचलनप्रक्रियामाह—ते किल मन्दा इति। स्वयं मन्दत्वाच्छ्रेष्ठजनाचारानुवर्तिनः। मन्दत्वं चात्र स्वयमाचारनिर्णयापाटवं विवक्षितम्, अकृत्स्नवित्त्वफलितं विचालनीयत्वकारणम् अधैर्यलक्षणमल्पत्वं वा। 'मूढाल्पापटुनिर्भाग्या मन्दाः' इति नैघण्टुकाः। न विचालयेत् इत्येतत्पूर्वोक्तजोषणशेषमिति दर्शयति—अत इति। ज्ञानयोगाधिकारिणः कर्मयोगे स्थितिर्निकृष्टाधिकारपरिग्रहस्स्यादित्याशङ्क्याह—ज्ञानयोगाधिकारिणोऽपीति। स्वकार्यमात्रसमीक्षयापि कर्तव्यं किमुत परार्थसमुचिते स्वार्थत्वे इत्यभिप्रायेणाह—अत इति। उत्तरश्लोकमवतारयितुमुक्तमनुद्गृह्णाति—प्रकृतीति। वक्ष्यमाणश्लोकप्रकारेण तु सर्वेश्वरे सर्वकर्मसन्न्यासः कार्यः; मध्ये गुणेषु कर्तृत्वानुसन्धानकथनं तावतापि देहात्मविवेकादिकं सिद्ध्यतीत्यभिप्रायेणेति भावः। आरोप्य अनुसंधायेत्यर्थः। एतां दशामवलम्ब्य पल्लवग्राहिणा कापिलादीनां मतं समुत्थितमिति तन्मतव्यावर्तनायाचेतनानां गुणानां कथं ज्ञानचिकीर्षाप्रयत्नलक्षणं कर्तृत्वमिति शङ्काव्युदासाय चाह—गुणेष्विति। इदमिति वक्ष्यमाणम्। इदंकर्तृत्वमिति—पुण्यपापादिकर्तृत्वमित्यर्थः। स्वाभाविकं हि कर्तृत्वं मुक्तावस्थायामपि नापैति, तस्य गुणसम्पर्ककृतत्वाभावात्। प्राप्ताप्राप्तविवेकेनेति—अन्वयव्यतिरेकाभ्यां युक्तायुक्तनिश्चयेन चेत्यर्थः। अत्राकर्तृत्वोक्तेरकरणशेषत्वं पूर्वापरविरुद्धम्; अनुसन्धानशेषार्थत्वं तु पूर्वापरसङ्गतमित्यभिप्रायेणानुसन्धानोक्तिः। एतेन 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणार्थस्सूचितः ॥ २९ ॥

प्र पा ॥ १. नामलिङ्गानुशासने तृतीयकाण्डे नानार्थवर्गे. २. शारी. २-३-३३॥ दान्तेषु. २५१. था॥

शा॥विदः कर्मफलमात्रदर्शिनः मन्दान् मन्दप्रज्ञान् कृत्स्नवित् आत्मवित् स्वयं न विचालयेत्; बुद्धिभेदकरणम् एव चालनम्, तत् न कुर्यात् इत्यर्थः ॥ २९ ॥

आ॥कर्मसु विषयेषु कर्मसु च 'शब्दाद्या इन्द्रियाद्याश्च सत्त्वाद्याश्च शुभानि च। अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः' इत्यभिधानात्। सत्त्वाद्यङ्गीकारे 'गुणा गुणेषु' इत्य-

ज॥शब्दस्योक्तानेकार्थत्वं कुत इत्यत आह—शब्दाद्या इति। निरुच्यत इति निरुक्तिः शब्दार्थः। निरुक्तिं गच्छन्त्यवगच्छन्तीति निरुक्तिगाः। अस्तु गुणशब्दस्यानेकेष्वर्थेषु शक्तिः, तथापि विवक्षात्रैकस्यैवार्थस्य युक्ता; अन्यथा नेहाकृशब्देनेत्युक्तविरोधात्। शब्दो हि यमर्थमादौ स्मारितवान्, स एवार्थो बुद्धौ सन्निहितः पुनरुच्चारितेन स्मारयितुं युक्तः; तथा चात्र सर्वत्र सत्त्वादय एव ग्राह्याः। तद्ग्रहणे शब्दादीनामपि तदात्मकानां ग्रहणसम्भवादित्यत आह—सत्त्वादीति। कर्तृत्वाधारत्वयो-

रा ॥ इदानीमात्मनां परमपुरुषशरीरतया तन्नियाम्यत्वस्वरूपनिरूपणेन भगवति पुरुषोत्तमे सर्वात्मभूते गुणकृतं च कर्तृत्वमारोप्य कर्मकर्तव्यतोच्यते—

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः॥ ३०

मयि सर्वेश्वरे सर्वभूतान्तरात्मभूते सर्वाणि कर्माण्यध्यात्मचेतसा सन्न्यस्य, निराशीर्निर्ममश्च विगतज्वरो युद्धादिकं सर्वं चोदितं कर्म कुरुष्व । आत्मनि यच्चेतस्तद्ध्यात्मचेतः, आत्मस्वरूपविषयेण श्रुतिशतसिद्धेन ज्ञानेनेत्यर्थः । *"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा......अन्तः प्रविष्टं कर्तारमेतं" ‡"य आत्मनि तिष्ठन्नात्मनोऽन्तरो, यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः"

ता॥ अथ तदनन्तरस्य 'परात्तु तच्छ्रुतेः' इत्यधिकरणस्यार्थे तत्परोऽयमित्यभिप्रायेणोत्तरश्लोकमवतारयति—इदानीमिति । नियाम्यतायाः स्वरूपत्वोक्तिः, स्वरूपनिरूपकत्वात् । भगवतीत्यादिपदलयेण 'मयि' इत्यभिप्रेतस्योक्तिः । भगवतीति नियन्तृत्वोपास्यत्वफलप्रदत्वाद्युपयुक्तकल्याणगुणजातवति हेयप्रत्यनीके चेति भावः । पुरुषोत्तम इति । नियमनार्थानुप्रवेशादिनाप्यस्पृष्टहेयप्रसक्तौ 'उत्तमः पुरुषस्त्वन्यः' इति वक्ष्यमाणप्रकारवैलक्षण्यवतीति भावः । सर्वात्मभूते गुणकृतञ्चेति । त्रिगुणस्याचिद्द्रव्यस्यापि सर्वात्मभूतस्स एव हि नियन्तेति भावः । एतेन 'असत्तया लोकरक्षार्थे गुणेष्वारोप्य कर्तृताम् । सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता' इति तृतीयाध्यायसङ्ग्रहश्लोके तुल्यविकल्पो नाभिमत इत्यपि सूचितं भवति। मयीत्यनेनाभिप्रेते सर्वेश्वरत्वे हेतुतया सर्वभूतान्तरात्मभूतत्वोक्तिः।"ईश्वरस्सर्वभूतानाम्' इत्यादि वक्ष्यमाणं चानेन व्याख्यातम् । सर्वाणि इति । स्वकृतानि गुणकृतानि चेत्यर्थः । 'युद्ध्यस्व 'इत्येतच्छास्त्रीयोपलक्षणमित्यभिप्रायेणोक्तं—युद्धादिकर्मेति । आत्मनीति । 'अध्यात्म' इति सप्तम्यर्थे समास इत्यर्थः । अत्र चेतश्शब्दस्य श्रुतिशतसिद्धत्वानुसन्धानरूपज्ञानगोचरतां व्यनक्ति--आत्मस्वरूपेति । श्रुतिशतसिद्धं प्रकारं दर्शयति— अन्तरिति । अन्तःप्रविष्टश्शास्तृ-

प्र·पा॥ * यजुरि. आरणं. ३-११-२१, २१॥ ‡ बृ. ५-७-२३ ॥ माध्यन्दिनपाठ ॥ १. शारी. २-३-४०॥ २. गी. १५-१७॥ ३. गी. सं. ७॥ ४. गी. १८-६१॥

शा॥कथं पुनः कर्मणि अधिकृतेन अज्ञेन मुमुक्षुणा कर्म कर्तव्यम् इति? उच्यते—मयि

आ ॥ युक्तं स्यात् ॥ २९ ॥

अतः सर्वाणि कर्माणि मय्येव संन्यस्य भ्रान्त्या जीवेऽध्यारोपितानि मय्येव, चि-

ज॥रेकत्र विरोधादिति भावः। तदात्मकानामिन्द्रियादीनामुपलक्षणे सति वृथा प्रयासः। अनयैवानुपपत्त्याऽनेकार्थग्रहणोपपत्तेः ॥ २९ ॥

मयि सर्वाणीत्यस्य सङ्गतिं दर्शयति—अत इति । यतो विद्वत्कर्मैवंविधं त्वं च विद्वानसि,अतः। ननु सन्यासो विसर्गः,स च स्वकीयस्य भवति,न च जीवस्य कर्माणि सन्तीत्युक्तम्,तत्कथं तेषां विसर्गो विधीयत इत्यत आह—भ्रान्त्येति । कर्मणां परमेश्वरे सन्यासो नाम तदात्मकत्वविशानमिति कश्चित् ;

रा॥इत्येवमाद्याः श्रुतयः परमपुरुषप्रवर्त्यं तच्छरीरभूतमेनमात्मानं, परमपुरुषं च प्रवर्तयितारमाचक्षते । स्मृतयश्च *'प्रशासितारं सर्वेषाम्' इत्याद्याः । †'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' ‡'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' इति वक्ष्यते । अतो मच्छरीरतया मत्प्रवर्त्यात्मस्वरूपानुसंधानेन सर्वाणि कर्माणि मयैव क्रियमाणानीति मयि परमपुरुषे सन्न्यस्य तानि च केवलं मदाराधनानीति कृत्वा तत्फले निराशीः तत एव तत्र कर्मणि ममतारहितो भूत्वा विगतज्वरो युद्धादिकं कुरुष्व । स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणै

ता॥त्वाम्या नृपादिगगनादिव्यावर्तकाभ्यां सर्वात्मत्वसिद्धिः। कर्तारमिति—जीवव्यापारेषु प्रयोजककर्तारमित्यर्थः; यद्वा प्रेरणक्रियाकर्तारमित्यर्थः; तदुच्यते—प्रवर्तयितारमिति । उपात्तश्रुतीनामैदंपर्यद्रढीकरणाय मन्वाद्युपबृंहणानुग्रहमाह—स्मृतयश्चेति । एतस्मिन्नपि शास्त्रेऽप्यासलिङ्गानामस्यैनार्थस्य वक्ष्यमाणतामाह—सर्वस्य चेति । 'मयि सर्वाणि' इत्यस्याभिप्रायव्यञ्जनाय पार्थसारथेरीश्वरस्य प्रत्यक्षपरिदृश्यमानदेहयोरीश्वरैकविषयत्वं दर्शयितुं वचनद्वयोपादानम्। एवमर्थस्वरूपमुपपाद्य तज्ज्ञानस्य कर्तृत्वसन्यासहेतुता 'सन्यस्य निराशीः निर्ममः' इति त्रयाणां पदानां कर्तृत्वत्यागफलत्यागस्वकीयतासङ्गत्यागविषयतामुत्तरोत्तरस्य च पूर्वपूर्वहेतुकतां पाठक्रमसूचितां प्रकाशयति—अत इति—अस्यार्थस्य श्रुतिस्मृत्यन्तरादिसिद्धत्वादित्यर्थः। मयैव क्रियमाणानीति— भृत्यप्रवर्तनेन राज्ञेव सद्वारकमद्वारकं चेति भावः । ऋत्विज इव परस्य कर्तृत्वेऽपि स्वस्य फलाभिसन्धिस्स्यादिति तन्निरासाय निराशीरित्युक्तमित्यभिप्रायेणाह—तानि चेति । तत एवेति—फलद्वारा हि कर्मणि ममता, 'मदभिलषितसाधनत्वान्मदर्थमिदं कर्म' इति कर्मण्यैश्वर्यबोधो ह्यधिकार इति भावः । ननु यदीश्वरे कर्तृत्वं सन्यस्तम्; कथं तर्हि युद्ध्यस्वेति जीवः कर्तृतया निर्दिश्यते, यदि चासौ निराशीः, कथं परमपुरुषाराधनरूपेऽपि कर्मणि प्रवर्तेत, यदि च निर्ममः, स कथं 'ममेदं कर्म' इति बुध्यमानः कर्म कुर्यात्, यदिच स्वव्यापारं नानुसन्धत्ते, तदा त्यागरूपव्यापारमपि न मन्येत, ततश्च विगतज्वर इत्यप्यनुपपन्नमित्याशङ्क्याह—स्वकीये-

प्र-पा॥* मनु. १२ अ. १२२॥'प्रशासितारं सर्वेषामणीयांसमणीयसम् । रुक्माभं स्वप्नधीगम्यं विद्यात्पुरुषम्परम्' ॥ सर्वेषां - महादिस्तम्बपर्यन्तचेतनाचेतनानाम् प्रशासितारं-नियन्तारम्, अणीयांसमणीयसः सर्वान्तरत्वात् रुक्माभं-सुवर्णाभम् 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' "आदित्यवर्णम्" इति श्रुते, स्वप्नधीगम्यं - स्वप्नधीसदृशज्ञानग्राह्यम्, परं पुरुषं नारायणम्, अस्य तत्रैव मुख्यवृत्तेः, न क्षुत्त्वादिवासिद्धम् विद्यात्-अनुचिन्तयेदित्यर्थः ।विष्णुध्वजस्य ध्यानपरत्वमावृत्त्यधिकरणसिद्धम् ॥

† गी. १५-१५ ॥

‡ गी. १८. ६१ ॥

श॥इति॥*मयि देवे परमेश्वरे सर्वज्ञे सर्वात्मनि वासुदेवे सर्वाणि कर्माणि सन्यस्य निक्षिप्य

आ॥ ऋज्य भगवानेव सर्वाणि कर्माणि करोतीति । मत्पूजेति च । आत्मानं मामधिकृत्य

ज्ञा॥तदसत्, अशाब्दत्वात्, प्रमाणविरुद्धत्वाच्चेति भावेन स्वपक्षे तदभिप्रायमाह —भगवानिति। इति ज्ञात्वेति शेषः । प्रकारान्तरं चाह—मदिति । इति समर्पणं च कर्मणां मयि सन्यास इति शेषः । कर्माणि परमेश्वरात्मकत्वं प्रतिपद्यन्ते तत्प्राप्तये कल्प्यन्ते इत्यध्यात्मचेतसेति व्याख्यानमशाब्दमिति भावेन व्याचष्टे—आत्मानमिति । अनेनाव्ययीभावगर्भः कर्मधारय इत्युक्तं भवति । अस्य निराशीरित्यनेना-

पा॥ * मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि ॥

गा॥ये मानवाश्शास्त्राधिकारिणोऽयमेव शास्त्रार्थ इत्येतन्मे मतं निश्चित्य तथानुतिष्ठन्ति, येचाननुतिष्ठन्तोऽप्यस्मिन् शास्त्रार्थे श्रद्दधाना भवन्ति, येचाश्रद्दधाना अप्येवं शास्त्रार्थो न संभवतीति नाभ्यसूयन्ति—अस्मिन् महागुणे शास्त्रार्थे दोषमनाविष्कुर्वन्तो भवन्तीत्यर्थः, ते सर्वे बन्धहेतुभिरनादिकालारब्धैस्सर्वैः कर्मभिर्मुच्यन्ते; 'तेऽपि कर्मभिः' इत्यपिशब्दादेषां पृथक्करणम् । इदानीमननुतिष्ठन्तोऽप्यस्मिन् शास्त्रार्थे श्रद्दधाना अनभ्यसूयवश्च श्रद्धयाचानसूयया च क्षीणपापा अचिरेणमेव शास्त्रार्थमनुष्ठाय मुच्यन्त इत्यर्थः ॥ ३१ ॥

ता॥निरपेक्ष इत्यर्थः। सारभूतः प्रधानभूतः 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इति नैघण्टुकाः। प्राधान्यं चात्र मोक्षसाधने ज्यायस्त्वम्। मानवशब्दस्यानधिकृतशूद्रादिसङ्ग्राहकत्वादधिकृतदेवादिप्रतिक्षेपकत्वाच्च तदुभयपरिहाराय य इति प्रमाणसिद्धानुवादेनाधिकारिमात्रोपलक्षकोऽयं शब्द इत्यभिप्रायेणोक्त—ये मानवाश्शास्त्राधिकारिण इति । नित्यमनुतिष्ठन्तीत्युक्तं नित्यमनुष्ठानं निर्णयपूर्वकमेव प्रामाणिकत्वनिश्चयशून्यस्यानुष्ठानं कदाचिद्दृश्येतापीत्यभिप्रायेणोक्तम्—अयमेव शास्त्रार्थ इत्यादि। एतत्—अयमेवेत्युक्तम्; यद्वा एतन्मे मतं शास्त्रार्थ इति निश्चित्येत्यन्वयः, शास्त्रितुर्मतमेव हि शास्त्रार्थ इति भावः। श्रद्धावन्त इति पदमनुष्ठानात्पूर्वावस्थापरमित्याह —ये चाननुतिष्ठन्तोऽपीति । ततोऽप्यर्वाचीनावस्थानसूयेत्याह—ये चाश्रद्दधाना इति। गुणेषु दोषाविष्करणमसूयेत्यसूयालक्षणाभिप्रायेणाह—अस्मिन्निति । अपिशब्दो वर्गत्रयसमुच्चयपर इति ते सर्व इत्युक्तम् । ननु सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते श्रद्धावन्त इत्यादौ च भवन्तीत्यध्याहारश्चानुचित, यच्छब्दस्य चैकस्य प्रयुक्तस्यावृत्तिरनुपपन्नेत्यत्राह—तेपीति। एषामिति—अधिकारिणा, बुद्धिस्थाना वाक्याना वा । अयमभिप्रायः —नात्रैकवाक्यत्वं सम्भवति, अपिशब्दानन्वयात्, अपिशब्दो ह्यत्रानुष्ठातृभिस्सहाधिकार्यन्तरसमुच्चयपरो वा, अनुष्ठातॄणामपकर्षपरो वा स्यात् । तत्र ज्ञानयोगिना समुच्चयस्सम्भवन्नप्यत्रानपेक्षितः; कर्मयोगप्रशंसाप्रकरणानुचितश्च। ज्ञानयोगिभ्यः कर्मयोगिनामपकर्षसूचनं वचनात्यन्तविरुद्धम्; नित्यमनुष्ठातॄणा 'श्रद्धावन्तोऽनसूयन्तः' इति विशेषणाभिधानं च निरर्थकम्, न हि नित्यमनुतिष्ठन्तोऽश्रद्दधाना असूयन्तश्च भवेयुः। अवस्थात्रयविषयत्वे तु समुच्चयपरतया वा अर्वाचीनावस्थापकर्षपरतया वा शक्यमपिशब्दो नेतुमिति अनुष्ठातॄणा श्रद्धानसूयामात्रवता च तुल्यफलत्वेऽनुष्ठानविधायकशास्त्रवैयर्थ्यं स्यादित्याशङ्क्याह —इदानीमिति । श्रद्धानसूययोः पापनिर्हरणहेतुत्वं च 'धर्मश्श्रुतो वा दृष्टो वा स्मृतो वा कथितोऽपि वा । अनुमोदितो वा राजेन्द्र पुनाति पुरुषं सदा' इत्यादिसिद्धम् ॥ ३१ ॥

प्र पा॥१. नामलिङ्गानुशासने. ३. काण्ड नानार्थवर्ग रान्तेषु. ३२६ ॥ | २ भारते. आश्वमेधिके ९४. २९ ॥

शा॥नाः अनसूयन्त. असूयां च मयि परमगुरौ वासुदेवे अकुर्वन्तः मुच्यन्ते तेऽपि एवंभूताः कर्मभिः धर्माधर्माख्यैः ॥ ३१ ॥

आ॥फलमाह—ये म इति । ये त्वेवं निवृत्तकर्मिणः, तेऽपि मुच्यन्ते ज्ञानद्वारा । कि-

ज॥अन्यथाप्रतीतिं निराकर्तुं तावदुत्तरश्लोकद्वयतात्पर्यमाह—फलमिति। केचिद्विद्वांसः कुर्वन्तीत्येतावता मया कार्यं न वेत्याशङ्क्य स्वोक्तकरणाकरणयोः फलमाहेत्यर्थः—'मुच्यन्ते तेऽपि कर्मभिः' इत्यपिशब्देन ज्ञानमिव निवृत्तं कर्मापि मोक्षसाधनमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे—ये त्विति

रा ॥ भगवदभिमतमौपनिषदमर्थमननुतिष्ठतामश्रद्दधानानामभ्यसूयतां च दोषमाह—

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२

ये त्वेतत्सर्वमात्मवस्तु मच्छरीरतया मदाधारं मच्छेषभूतं मदेकप्रवर्त्यमिति मे मतं नानुतिष्ठन्ति—नैवमनुसन्धाय सर्वाणि कर्माणि कुर्वते, ये च न श्रद्दधते, ये चाभ्यसूयन्तो वर्तन्ते; तान् सर्वेषु ज्ञानेषु विशेषेण मूढांस्तत एव नष्टानचेतसो विद्धि; चेतःकार्यं हि वस्तुयाथात्म्यनिश्चयः; तदभावादचेतसो विपरीतज्ञानास्सर्वत्र विमूढाश्च ॥ ३२ ॥

एवं प्रकृतिसंसर्गिणस्तद्गुणोद्रेककृतं कर्तृत्वं तच्च परमपुरुषायत्तमित्यनुसन्धाय

ता॥व्यतिरेकानिन्दयाप्युक्तार्थप्राशस्त्यातिरेक उच्यत इत्यभिप्रायेणाह—भगवदिति। पूर्वोक्तव्यतिरेकरूपत्वादभ्यसूयोक्तिरश्रद्धोपलक्षणतयेत्यभिप्रायेण अश्रद्दधानानामित्युक्तम्। आधेयं शेषभूतं विधेयमपि हि शरीरमित्यभिप्रायेण मदाधारमित्यादि पदत्रयम्, स्वरूपस्थितिप्रवृत्तितादधीन्यपरं च। परबुद्धिवृत्तिविशेषरूपं मतं कथमनुष्ठेयमननुष्ठेयं वा, सिद्धवस्तुनि च कथमनुष्ठानमित्यत्राभिप्रेताध्याहारेणाह—नैवमनुसन्धायेति। सर्वेषु ज्ञानेषु विशेषेण मूढानिति यथावस्थितात्मस्वरूपानभिज्ञतया अहं ममेत्यादिषु सर्वेषु ज्ञानेषु ज्ञातव्यवस्तूनां यथावस्थितस्वरूपप्रकारानभिज्ञानित्यर्थः। नष्टानिति—पुरुषार्थायोग्यानित्यर्थः। किं तत्त्वज्ञानरहितस्यान्तःकरणमपि नास्तीत्यत्राह—चेतःकार्यमिति। कार्यादर्शनात्कारणं नास्तीत्युपचर्यत इति भावः। फलितमाह - विपरीतज्ञानास्सर्वत्रविमूढाश्चेति ॥ ३२ ॥

उत्तरप्रघट्टकसङ्गत्यर्थं प्रतिपत्तिसौकर्यार्थं च पूर्वोक्तं सङ्कलय्य दर्शयति—एवमिति। मुक्तानां कर्तृत्वस्य गुणाधीनत्वाभावात्—प्रकृतिसंसर्गिण इत्युक्तम्। ज्ञानयोगानादरहेतुभूतदुष्करत्वादिसमर्थनपर-

शं॥ये तु इति ॥ ये तु तद्विपरीताः एतत् मे मम मतम् अभ्यसूयन्तः निन्दन्तः न अनुतिष्ठन्ति नानुवर्तन्ते सर्वेषु ज्ञानेषु विविधं मूढाः ते सर्वज्ञानविमूढाः तान् विद्धि जानीहि नष्टान् नाशं गतान् अचेतसः अविवेकिनः ॥ ३२ ॥

कस्मात् पुनः कारणात् त्वदीयं मतं नानुतिष्ठन्तः परधर्मान् अनुतिष्ठन्ति, स्वधर्मं च न अनुवर्तन्ते, त्वत्प्रतिकूलाः कथं न बिभ्यति त्वच्छासनातिक्रमदोषात्? तत्राह—

आ॥त्वपरोक्षज्ञानिनः। न तु साधनान्तरमुच्यते। 'निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये। अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते। सर्वं तदन्तराधाय मुक्तये साधनं भवेत्। न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्' इति ह्युक्तं नारायणाष्टाक्षरकल्पे। अत एव समुच्चयनियमो निराकृतः ॥ ३१ ॥ ३२ ॥

ज॥कैमुत्यद्योतनार्थोऽपिशब्दो न समुच्चयार्थ इत्यर्थः। प्रासङ्गिकं चैतत्। समुच्चये ह्यपिशब्दः, स च द्वेधा- ज्ञानमिव कर्मापि पृथक्साधनं; ज्ञानकर्मसमुच्चय एव—इति। तत्राद्यपक्षं निराकरोति—न त्विति। निष्कामत्वादिनानुष्ठितानि यज्ञादीनि निवृत्तानि । आदिपदेन नित्यनैमित्तिकानां ग्रहणम् । अपरोक्षा च सा ईशदृष्टिश्च; तादर्थ्ये चतुर्थी। मुक्तौ मुक्तिसाधने किञ्चित्सहकारि। कर्मापि मुक्तिसाधनमुच्यत इत्यत उक्तं—सर्वमिति। तत्सर्वं निवृत्तादिकम्। अन्तरा मध्ये। ज्ञानमाधाय। मुक्तये मुक्तेः। अहल्यायै जारेति यथा । साक्षात्साधनत्वेन श्रुतमपि कर्म यथा व्यवहितं जातं; किमपि ज्ञानं तथा नेत्युक्तं—न किञ्चिदिति। द्वितीयमपि प्रकारमतिदेशेन निराचष्टे—अत एवेति। 'अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते' इत्युक्तत्वादेवेत्यर्थः ॥ ३१ ॥ ३२ ॥

रा॥कर्मयोगयोग्येन ज्ञानयोगयोग्येन च कर्मयोगस्य सुशकत्वादप्रमादत्वादन्तर्गतात्मज्ञानतया निरपेक्षत्वादितरस्य दुश्शकत्वात् सप्रमादत्वात् शरीरधारणाद्यर्थतया कर्मापेक्षत्वात्कर्मयोग एव कर्तव्यः,व्यपदेश्यस्य तु विशेषतस्स एव कर्तव्य इतिचोक्तम्, अतःपरमध्यायशेषेण ज्ञानयोगस्य दुश्शकतया सप्रमादतोच्यते—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३

प्रकृतिविविक्तमीदृशमात्मस्वरूपं तदेव सर्वदानुसन्धेयमिति च शास्त्राणि प्रतिपादयन्तीति ज्ञानवानपि स्वस्याः प्रकृतेः प्राचीनवासनायास्सदृशं प्राकृतविषयेष्वेव चेष्टते; कुतः[1],प्रकृतिं यान्ति भूतानि—अचित्संसृष्टा जन्तवोऽनादिकालप्रवृत्तवासनामेव*यान्ति, तानि वासनानुयायीनि भूतानि शास्त्रकृतो निग्रहः किं करिष्यति ॥ ३३ ॥

ता॥ अनन्तरप्रकरणमित्यभिप्रायेणाह—अतः परमिति । नानुतिष्ठन्तीत्यस्य हेतुरपि सदृशमित्यादिनाभिप्रेतः।ज्ञानवानपीत्यत्र न तावल्लौकिकज्ञानमात्रमुच्यते,तस्य प्रकृत्यनुकूलप्रवृत्तिविरोधित्वाभावेनापिशब्दानन्वयात्। नाप्यात्मसाक्षात्कारपर्यन्तं ज्ञानं, तस्यामवस्थायां प्रकृत्यनुवर्तित्वप्रसङ्गाभावात् । अतो यदालम्ब्य ज्ञानयोगे प्रवर्तितुमुत्सहते, तज्ज्ञानमिह विवक्षितम् ; तच्च शास्त्रजन्यं यथावस्थितात्मतत्त्वज्ञानमित्यभिप्रायेणाह—प्रकृतिविविक्तमिति । ईदृशमिति—यथावस्थितपरशेषत्वादिविशिष्टस्वरूपनिर्देशः । तदेवेति विषयान्तरव्यवच्छेदः । सर्वदेति आप्रयाणादित्यर्थः । स्वस्याः प्रातिस्विक्या इत्यर्थः । चेतनप्रवृत्तिरूपचेष्टाया असाधारणकारणं हि रागद्वेषौ,तौ चानन्तरश्लोकेऽभिधीयेते । तन्मूलञ्च प्राचीनवासनैव । अतोऽत्र प्रकृतिशब्देन स्वभावव्यपदेशार्हानादिवासनैव विवक्षितेत्यभिप्रायेणोक्तं—प्राचीनवासनाया इति । सदृशमित्यनेनाभिप्रेतमानुरूप्यमाह—प्राकृतविषयेष्विति । शब्दादिविषयवासनया पुनरपि तत्रैव प्रवर्तत इत्यर्थः । कुत इति । ज्ञानवांश्चेत् ज्ञानानुरूपं चेष्टताम्, कुतः प्रकृत्यनुरूपं चेष्टत इत्यर्थः । अत्रोत्तरं 'प्रकृतिं यान्ति भूतानि' इति । पुनरुक्तिशङ्कां परिहरन्नुत्तरस्य विवृणोति—अचिदिति । अचित्संसृष्टा जन्तव इति भूतशब्दार्थः। अनादिकालप्रवृत्ताचित्संसर्गकृतापरोक्षाभङ्गुरदेहात्मभ्रमजनितामत्यन्तप्रचितां वासनामर्वाचीनपरोक्षशास्त्रजन्यज्ञानं न सहसैव निरोद्धुं क्षममित्यभिप्राय ।तदेव विवृणोति—तानीति। निग्रह इति—नियमनमित्यर्थः। अत्र मम वाऽन्यस्य वेति निग्रहकर्त्रध्याहारो न युक्तः,'अनिच्छन्नपि'इत्यादिप्राकरणिकार्थानुसारेण शास्त्रकृतत्वमेवोचितम्। किङ्करिष्यतीति—न किञ्चिदपि निषेद्धुं शक्यमित्यर्थः ॥ ३३ ॥

प्र पा ॥ अनुयान्ति पा॥ १ श्री ३ ३६ ॥

शा॥सदृशम् इति।सदृशम् अनुरूपं चेष्टते चेष्टां करोति।कस्याः?स्वस्याः स्वकीयायाः प्रकृतेः। प्रकृतिः नाम पूर्वकृतधर्माधर्मादिसंस्कारः वर्तमानजन्मादौ अभिव्यक्तः, सा प्रकृतिः । तस्याः सदृशमेव सर्वः जन्तुः ज्ञानवानपि चेष्टते, किं पुनः मूर्खः । तस्मात् प्रकृतिं या-

आ॥एवं चेत्किमिति ते मतं नानुतिष्ठन्ति लोका इत्यत आह—सदृशमिति । प्रकृतिः पूर्वसंस्कारः ॥ ३३ ॥

ज॥सदृशमिति श्लोकस्य सङ्गतिर्न प्रतीयते,अतस्तामाह—एवं चेदिति। यदि त्वन्मतानुष्ठाने मोक्षोऽन्यथा नाश इत्यर्थः । मूलप्रकृतेरेकत्वात्कथं स्वस्या इति प्रातिस्विकत्वमुच्यत इत्यत आह—प्रकृतिरिति । तत्कार्यौ रागद्वेषौ उपलक्ष्येते ॥ ३३ ॥

रा॥प्रकृत्यनुयायित्वप्रकारमाह—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४

श्रोत्रादिज्ञानेन्द्रियस्यार्थे शब्दादौ वागादिकर्मेन्द्रियस्य चार्थे वचनादौ प्राचीनवासनाजनिततदनुबुभूषारूपो रागोऽवर्जनीयो व्यवस्थितः; तदनुभवे प्रतिहते चावर्जनीयो द्वेषो व्यवस्थितः;तावेवं ज्ञानयोगाय यतमानं नियमितसर्वेन्द्रियं स्ववशे कृत्वा प्रसह्य स्वकार्येषु संयोजयतः, ततश्चायमात्मस्वरूपानुभवविमुखो विनष्टो भवति। ज्ञानयोगारम्भेण

ता॥वासनायास्स्वानुरूपचेष्टाहेतुत्वेऽवान्तरव्यापारोऽनन्तरमुच्यत इत्यभिप्रायेणाह—प्रकृत्यनुयायित्वेति । इन्द्रियस्येन्द्रियस्येतिवीप्सा सर्वेन्द्रियसंग्रहार्थेत्यभिप्रायेण ज्ञानेन्द्रियकर्मेन्द्रियोपादानम् । अर्थशब्दोऽत्र विषयपरः । शब्दस्य च व्यापारविषयत्वाद्वचनादेरप्यत्रार्थशब्दार्थता दर्शिता । व्यवस्थितावित्यत्रोपसर्गार्थविवरणम्—अवर्जनीय इति। वासनाया इच्छाद्वारेणैव प्रवृत्तिहेतुत्ववचनात् ज्ञानवासनैव कर्महेतुत्ववेषेण कर्मवासनेत्युच्यते; ननु वासनान्तरमस्तीत्यपि सूचितं भवति । 'इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ' इत्युक्ते शब्दादिविषयेषु रागवद्द्वेषोऽपि किं स्वरसवाहीति शङ्का स्यात्, तद्व्युदासायाह—तदनुभव इति । ततःकिमिति शङ्कायां 'सदृशं चेष्टते' इत्यनेनैकीकृत्यानुसन्दधानस्तात्पर्यार्थमाह—तावेवमिति । एवमुक्तवासनानुयायित्वप्रकारेणेत्यर्थः । नियमितसर्वेन्द्रियमित्यनेन बलात्क्षणमात्रनिमीलनादिनियमनमुच्यते। स्वकार्येष्विति — विषयानुभवेषु वचनादानादिषु कर्मसु चेत्यर्थः । 'सङ्गात्संजायते' इत्यारभ्य 'बुद्धिनाशात्प्रणश्यति'इत्यन्तं पूर्वप्रपञ्चितमत्र स्मारयति—ततश्चायमिति। 'तयोर्न वशमागच्छेत्' इत्येतच्च तावद्रागद्वेषनिषेधमात्रम्, तदाह्यौचित्यात् ज्ञानयोगाङ्गविधानं स्यात्। तच्च ज्ञानयोगानादरणीयताप्रकरणासङ्गतम्; अतोऽत्र यथा वचनव्यक्त्या ज्ञानयोगानादरणीयता उच्येत, सैव ग्राह्येत्यभिप्रायेणाह—ज्ञानयोगेति । कर्मयोगारम्भे तु चिराभ्यस्तसजातीयविषयेषु प्रवृत्तेर्न राग-

शं॥न्ति अनुगच्छन्ति भूतानि प्राणिनः । निग्रहः निषेधरूपः किं करिष्यति । मम वा अन्यस्य वा [दुर्निग्रहा प्रकृतिः इति वाक्यशेषः] ॥ ३३ ॥

*यदि सर्वे आत्मनः प्रकृतिसदृशमेव चेष्टन्ते—न च प्रकृतिशून्यः कश्चित् अस्ति, ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्तौ इदम् उच्यते—इन्द्रियस्य इति । इन्द्रियस्येन्द्रियस्य अर्थे सर्वेन्द्रियाणाम् अर्थे शब्दादिविषये †इष्टे रागः अनिष्टे द्वेषः इत्येवं प्रतीन्द्रियार्थं रागद्वेषौ अवश्यं भाविनौ । तत्र अयं पुरुषकारस्य शास्त्रार्थस्य विषय उच्यते। शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोः वशं नागच्छेत् । या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरस्सरैव स्वकार्ये प्रवर्तयति; तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च

आ॥तथाऽपि शक्तितो निग्रहः कार्यः । निग्रहात्सद्यःप्रयोजनाभावेऽपि भवत्येवातिप्रयत्नत इत्याशयवानाह—इन्द्रियस्येति । तथाह्युक्तं 'संस्कारो बलवानेष ब्रह्माद्या

ज॥इन्द्रियस्येत्यस्य सङ्गतिमाह—तथापीति। एवं तर्हि 'मयि सर्वाणि कर्माणि' इति विधान फलकथनं च व्यर्थमित्याशङ्क्येति भावः।'यद्यपि प्रकृतिं यान्ति भूतानि' इति निग्रहोऽकिञ्चित्करस्तस्यापि व्याहतमेतदुच्यत इत्यत उक्तं—निग्रहादिति । निग्रहादित्याद्यभिप्रायवांस्तथापीत्याद्याहेति योजना । अत्रागम-

पा॥ []कुण्डलितमन्यः कश्चिन्न दृश्यते॥ *यदि सर्वो जन्तुः आत्मनः प्रकृतिसदृशमेव चेष्टते ॥ †इष्टे शब्दादौ,

रा॥रागद्वेषवशमागम्य न विनश्येत्, तौ रागद्वेषौ ह्यस्य दुर्जयौ शत्रू ज्ञानाभ्यासं वारयतः॥

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५

त॥द्वेषयोर्नेत्याकार इति भावः । आगम्य न विनश्येदिति—विनाशहेतुभूत तद्वशगमनं परिहरेदित्यर्थः।तद्वशगमने कथं विनाश इति शङ्कायां चतुर्थपादमवतारयति—तौ हीति। 'काम एष क्रोध एषः' इत्यादिभिः श्लोकैर्वक्ष्यमाणमाकारमभिप्रेत्य दुर्जयौ शत्रू इत्युक्तम्। परिपन्थित्वप्रकारं विशदं योजयति—ज्ञानाभ्यासं वारयत इति। मुक्तिघण्टापथे लुण्टाकत्वदर्शिताविन्यर्थः ॥

श्रेयानित्यत्र श्लोके स्वधर्मपरधर्मशब्दौ न तावद्वर्णाश्रमाद्यपेक्षया प्रयुज्येते, परवर्णाश्रमादिधर्मानुष्ठानस्य दूरतो निरस्तत्वेन तन्निषेधायोगात्, अत्र च तत्प्रसङ्गाभावात्; परधर्मात्स्वनुष्ठितात्स्वधर्मो विगुणश्श्रेयानिति चोक्ते श्रेयश्शब्दस्य प्रशस्यतरवाचित्वात्स्वनुष्ठितपरधर्मस्य प्रशस्यत्वमात्रं प्रसज्येत, न च तदुपपद्यते, स्वनुष्ठितस्य दुरनुष्ठितस्य वा परधर्मस्याधर्मत्वेन गर्हणीयत्वात् । अथ क्षत्रधर्मभूतयुद्धपरित्यागाभिलाषिणोऽर्जुनस्य स्वधर्मभूतयुद्धप्रशंसा ब्राह्मणादिधर्मभूततत्परित्यागनिन्दा च क्रियत इति चेत्—अस्त्वेतावतापि निषेध्यस्य प्रसङ्गः, तस्य प्रशस्यत्वमात्रप्रसङ्गचोद्य तु न परिहृतम्; न चात्र स्वधर्मं परित्यज्य परधर्मं कुर्यामित्यर्जुनस्याभिसन्धिः; अत एव ह्यस्येदानीं स्वधर्मत्वबुद्धिः; स्वधर्मतया भ्राम्यतः परधर्मत्वमत्र ज्ञाप्यत इति चेत्—न, स्वनुष्ठितात्परधर्मादित्यनुवादरूपत्वानुपपत्तेः; परधर्मतया सम्प्रतिपन्नत्वे ह्येव व्यपदेश उपपद्यते, तत्र च परधर्मत्वज्ञापनं निष्प्रयोजनम्, अधर्मत्वमात्रस्यैव ज्ञाप्यत्वात्; अतोऽत्र स्वधर्मपरधर्मशब्दौ प्रशस्यतयाऽनादरणीयतया च प्रकृतकर्मयोगज्ञानयोगविषयौ; एवं च सति ज्ञानयोगस्य प्रशस्यत्वमात्रप्रसङ्गोऽपि न दूषणम्, पूर्वश्लोकद्वयप्रकृतवासनानुवर्तित्वेन सङ्गतिश्च स्यात्, अथ केनेत्युत्तरश्लोकस्थप्रश्नोऽप्येवमेवोपपद्यते । अत्र ह्यनिच्छतोऽपि पापाचरणहेतुः क इति प्रश्नः, स च ज्ञानयोगदुष्करत्वकथनेनैव सङ्गच्छेत, अनिच्छतोऽपि मे स्वधर्मत्यागः केनेति प्रश्नार्थ इति चेत्—न, तस्यानिच्छत्वाभावात्, 'काम एष क्रोध एषः' इत्याद्युत्तरानुपपत्तेश्च; नहि कामक्रोधाभ्यामर्जुनो युद्धं परित्यजति, किंतु कारुण्यादिनेत्युपक्रमेऽप्युक्तम्; अतस्स्वधर्मपरधर्मशब्दौ स्वशक्य-

श॥भवति।यदा पुनः रागद्वेषौ तत्प्रतिपक्षेण नियमयति, तदा शास्त्रदृष्टिः एव पुरुषः भवति,न प्रकृतिवशः। तस्मात् तयोः रागद्वेषयोः वशं न आगच्छेत्,यतः तौ हि अस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ *तस्करौ इव पथि ॥ ३४ ॥

तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमपि अन्यथा 'परधर्मः अपि धर्मत्वात् अनुष्ठेय एव' इति, तत् असत्—श्रेयान् इति। प्रशस्यतरः †स्वो धर्मः विगुणः अपि विगतगु

आ॥अपि तद्वशाः । तथाऽपि सोऽन्यथा कर्तुं शक्यतेऽतिप्रयत्नतः' इति ॥ ३४ ॥

तथाप्युग्रं युद्धकर्मत्यत आह—श्रेयानिति ॥ ३५ ॥

ज॥सम्मतिमाह—तथाहीति ॥ ३४ ॥

श्रेयानित्यस्य सङ्गतिमाह—तथापीति । 'ज्यायसी चेत्' इत्यत्र द्वावाक्षेपावर्जुनेन कृतौ । तत्राद्यो 'लोकेऽस्मिन्' इत्यादिना परिहृतः। इदानीं 'युध्यस्व विगतज्वरः' 'तयोर्न वशमागच्छेत्' इत्युक्त्या सा-

पा ॥ *तस्करावित्यर्थः ॥ †स्वधर्मः स्वकीयधर्मः ॥

रा॥अतस्सुशकतया स्वधर्मभूतः कर्मयोगो विगुणोऽप्यप्रमादगर्भः प्रकृतिसंसृष्टस्य दुश्शकतया परधर्मभूतात् ज्ञानयोगात्सगुणादपि किञ्चित्कालमनुष्ठितात् सप्रमादाच्छ्रेयान्; स्वेनैवोपादातुं योग्यतया स्वधर्मभूते कर्मयोगे वर्तमानस्यैकस्मिन् जन्मन्यप्राप्तफलतया निधनमपि श्रेयः,अनन्तरायहततयाऽनन्तरजन्मन्यप्यव्याकुलकर्मयोगारम्भसंभवात्। प्रकृतिसंसृष्टस्य स्वेनैवोपादातुमशक्यतया परधर्मभूतो ज्ञानयोगः प्रमादगर्भतयाभयावहः॥

ता॥परशक्यधर्मविषयो;तदेतदखिलमभिप्रेत्याह—अतस्सुशकतयेति । अतः—श्लोकद्वयोक्तवासनानुवर्तित्ववशादित्यर्थः । विगुणोऽपि अङ्गवैकल्ययुक्तोऽपीत्यर्थः । विगुणस्य कथं श्रेयस्त्वमित्यत्रोक्तम्—अप्रमादगर्भ इति । वैगुण्यमात्रं स्वरूपविच्छेदाद्वरमिति भावः । स्वनुष्ठितादित्यस्य वैगुण्यप्रतियोग्याकारपरतया सुशब्दस्साद्गुण्यपर इत्याह—सगुणादपीति । अनुष्ठितशब्दस्य भूतार्थप्रत्ययान्तत्वाद्भूतत्वस्य चातिक्रान्तत्वरूपत्वात्प्रागनुष्ठानं पश्चाद्विच्छेदश्च सूचित इत्यभिप्रायेणोक्तं—किञ्चित्कालमनुष्ठितात्सप्रमादादिति । एवं विच्छेदाविवक्षायां स्वनुष्ठिताज्ज्ञानयोगाद्विगुणः कर्मयोगश्श्रेयानित्येतदसङ्गतं स्यात्, सगुणस्याविच्छिन्नस्य फलाविनाभावादिति भावः । सुशकतयेत्युक्तहेतुविवरणमुखेन स्वधर्मशब्दार्थं च विवृण्वन् विगुणस्य कर्मणः फलाविनाभावात्कथं श्रेयस्त्वमितिशङ्कापरिहारतया तृतीयपादं व्याख्याति—स्वेनैवेति । स्वेनैव प्रकृतिसंसृष्टतया व्याप्रियमाणेन्द्रियेणैवेत्यर्थः । यद्वा स्वेच्छयैवेति भावः । एकस्मिन् जन्मन्यप्राप्तफलतयेति। अयमभिप्रायः—यद्यप्यात्मसाक्षात्कारादिफलार्थतया विहितत्वात्कर्मयोगः काम्यकर्मैव;तथाप्यस्य काम्यकर्मणोऽयं विशेषः,यद्विगुणानुष्ठितमपि जन्मान्तरेऽपि सगुणानुष्ठानद्वारा फलं साधयति—इति । वैगुण्यमस्य फलविलम्बमात्रप्रयोजकम् । काम्यकर्मान्तरवन्न फलाभावप्रयोजकमित्येकस्मिन् जन्मनीत्यभिप्रेतं विवृण्वन् जन्मान्तरेऽपि विगुणस्य कथं फलसाधनत्वमित्यत्राह—अनन्तरायहततयेति । इन्द्रियाणामनुभूतसजातीयविषयसमर्पणेन कर्मयोगस्वरूपस्यात्यन्तविच्छेदाभावादित्यर्थः । अव्याकुलत्वमत्राविकलत्वम् । एतच्च सर्वं 'नेहाभिक्रमनाशोऽस्ति' इति पूर्वं सङ्ग्रहेणोक्तम् । 'पार्थ नैवेह नामुत्र' इत्यादिना प्रपञ्चयिष्यते च । अव्यवहितानन्तरजन्मनि पौष्कल्यनिर्णयाभावेन सम्भवादित्युक्तम्।अनन्तरे ततोऽनन्तरे वा फलं तावत्सिद्धमिति भावः। यदि विगुणस्य कर्मयोगस्य जन्मान्तरस्थं फलमभिप्रेत्य श्रेयस्त्वमुच्यते; तर्हि ज्ञानयोगस्यापि तथा किं न स्यादित्यत्र चतुर्थं पादं व्याख्याति—प्रकृतीति । जन्मान्तरेऽपि फलं न सम्भवतीत्यभिप्रायेण भयावह इत्युच्यते । स्वरूपेण विच्छिन्नस्य कथं जन्मान्तरेऽपि फलम्, अविच्छिन्नस्य विगुणस्य फलं विलम्बितमिति भावः ॥

प्र-प्रा॥ १. गी. २-४०॥ | गी. ६-४०॥

शं॥णोऽपि अनुष्ठीयमानः परधर्मात् स्वनुष्ठितात् साद्गुण्येन सम्पादितादपि। स्वधर्मे स्थितस्य निधनं मरणम् अपि श्रेयः परधर्मे स्थितस्य जीवितात् । कस्मात्? परधर्मः भयावहः नरकादिलक्षणं भयम् आवहति *इति ॥ ३५॥

यद्यपि अनर्थमूलं 'ध्यायतो विषयान्' 'रागद्वेषौ ह्यस्य परिपन्थिनौ' इति च उक्तम्; विक्षिप्तम् अनवधारितं च यत् उक्तं तत् संक्षिप्तं निश्चितं च इदमेव इति ज्ञातुम् इच्छन्

आ॥रितं द्वितीयमाक्षेपमाशङ्क्य परिहरतीत्यर्थः।यद्यपि कर्म कर्तव्यं तथाऽपि उग्रमवर्जनीयरागद्वेषं न कुर्यामिति शेषः ॥ ३५ ॥

पा ॥ *यतः ॥

अर्जुन उवाच—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६

रा॥अथायं ज्ञानयोगाय प्रवृत्तः पुरुषः स्वयं विषयाननुभवितुमनिच्छन्नपि केन प्रयुक्तो विषयानुभवरूपं पापं बलान्नियोजित इव चरति ॥ ३६ ॥

ता॥ननु 'सदृशं चेष्टते' इत्यादिना वासनानुवर्तित्वमुक्तम्; वासना च चेतनस्येच्छाद्वारेण प्रवर्तिका। एवं च सति ज्ञानयोगमिच्छतस्तद्विरोधितया विषयानुभवमनिच्छतोऽपि कथं वासनाविषयानुभवे प्रवृत्तिहेतुरिति पृच्छति—अथ केनेति। अत्र 'अनिच्छमानोऽपि बलादाताडयेव नियोजितः' इति यादवप्रकाशपाठोऽपपाठः। अथशब्दोऽत्र प्रश्नार्थकः, कार्त्स्न्यपरो वा। ज्ञानवानपीति। ज्ञानवत्त्वेन निर्दिष्टपथमर्शनोऽयं शब्द इत्यभिप्रायेणोक्तम्—अयं ज्ञानयोगाय प्रवृत्त इति । नह्यत्र वासनयाप्यनिच्छापूर्वं प्रवर्तते चेतनत्वादिति पुरुषशब्दस्य भावः। अनिच्छन्तोऽपि वायूदकादिप्रेरिताः प्रवर्तन्ते; तद्वदत्रापि केनचित्प्रेरकेण बलवता भवितव्यमिति मत्वोक्तं—बलादित्यादि। 'बलादिव नियोजितः' इत्यस्य केनेत्यादिप्रश्नानिरुद्धानगतार्थता परिहर्तुं क्रमभेदेनान्वय उक्तः । वायूदकादिबलान्नियोजितो यथाऽनिच्छन्नप्याचरति, तथायमप्याचरति; तत्र केन प्रयुक्त इति प्रश्नार्थः ॥ ३६ ॥

श्री॥अर्जुनः उवाच, ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्याम् इति—अथ इति। अथ केन हेतुभूतेन प्रयुक्तः सन् राज्ञा इव भृत्यः अयं पापं कर्म चरति आचरति पूरुषः पुरुषः स्वयम् अनिच्छन् अपि हे वार्ष्णेय वृष्णिकुलप्रसूत बलात् इव नियोजितो राज्ञा इव इति उक्तः दृष्टान्तः ॥ ३६ ॥

*शृणु तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसि इति भगवान् उवाच—'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा ' ऐश्वर्यादि-

आ॥बहुव. कर्मकारणाः सन्ति क्रोधादयः कामश्च । तत्र को बलवानिति पृच्छति—अथेति । अथेत्यर्थान्तरम् । 'तयोर्न वशमागच्छेत्' इति प्रश्नप्रापकम् ॥ ३६ ॥

ज॥अथ केनेत्यर्जुनप्रश्नोऽनुपपन्नः, 'तौ ह्यस्य परिपन्थिनौ' इति रागद्वेषयोः परिपन्थित्वस्योक्तत्वात्; न हि पापप्रयोजकत्वादन्यद्रागादेः पुरुषपरिपन्थित्वमित्यतः प्रश्नाभिप्रायमाह—बहुव इति । कारणशब्दः करोतेर्ण्यन्तात्करणे ल्युडन्तः, स च त्रिलिङ्गः। अयमनुमान इति भाष्ये प्रयोगात्। अथवा 'ण्यासश्रन्थो युच्' इति करणे युच्। अयं च स्त्रीलिङ्गः। बहव इत्यपि स्त्रीलिङ्ग एव, 'वोतो गुणवचनात्' इति विकल्पविधानात् । कर्मेति पापं विवक्षितम् । द्वयोरेवोक्तत्वात् कथं बहव इत्यनुवाद इत्यत आह—क्रोधादय इति । पूर्वं भगवता द्वेषशब्देन मदमत्सरादयोऽप्युपलक्षिताः, अरिषड्वर्गप्रसिद्धेः । तदेतद्विदित्वैवमनुवदतीति भावः । रागशब्देन कामः द्वेषशब्देन क्रोधादयश्च त्वयोक्ता इत्यर्थः । अस्य प्रश्नस्य प्रकृते क उपयोग इत्यत आह—अथेति । नास्य प्रकृतेन हेतुहेतुमद्भावादिलक्षणा सङ्गतिरिति स्वयमेव सूचितमित्यर्थः । अथेति शब्देनार्थान्तरमेतदिति सूच्यते ; तर्ह्यसङ्गतं न प्रष्टव्यमित्यतः सङ्गत्यन्तराभावेऽपि प्रासङ्गिकी सङ्गतिरस्तीत्याशयवान् प्रसङ्गं दर्शयति—तयोरिति । अत्रापि यो बलवांस्तं प्रति महान्तं प्रयत्नं करिष्यामीति भावेन प्रश्नो युक्त एवेति भावः ॥ ३६ ॥

पा॥ * शृणु त्वं तं ॥

श्रीभगवानुवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७

रा॥अस्योद्भवाभिभवरूपेण वर्तमानगुणमयप्रकृतिसंसृष्टस्य ज्ञानायारब्धस्य रजोगुणसमुद्भवः प्राचीनवासनाजनितशब्दादिविषयः कामो महाशनः शत्रुः विषयेष्वेनमाकर्षति,

त॥अथ'इन्द्रियस्य'इत्यादिना सङ्क्षेपेणोक्तमेवार्थं प्रश्नस्योत्तरतया प्रपञ्चयन् भगवानुवाच—काम एष इति। विषयानुभववासनाबीजानां कामक्रोधाद्यङ्कुरोत्पादने रजोगुणसलिलसेकः; कामादिर्ह्यस्मिन्मते ज्ञानविशेषरूप आत्मधर्मः;रजस्तु प्रकृतिगुणः;अन्यधर्मस्य कथमन्यत्र कार्यकरत्वमित्यत्रोक्तं—गुणमयप्रकृतिसंसृष्टस्येति। औष्ण्याश्रयदहनसंयोगाद्यथा करतलादौ स्फोटादिः,तथा गुणाश्रयप्रकृतिसंसर्गादात्मनि कामादिरिति भावः। तर्हि गुणत्रयमयप्रकृतिसंसर्गात्सत्त्वादिकार्यज्ञानादिरपि युगपदेव किन्न स्यादित्यत्रोक्तम्—उद्भवाभिभवरूपेण वर्तमानेति। पूर्वश्लोकोक्तायंशब्दस्यात्रापेक्षयास्येति विपरिणत्यानुषङ्गः। रजोगुणप्रचुरस्यास्य कथं ज्ञानयोगप्रारम्भमात्रमपीति चोद्यमुद्भवाभिभवक्रमेण मालया मध्ये कदाचित्सत्त्वोन्मेषसम्भावनया निरस्तमित्यभिप्रेत्य—ज्ञानायारब्धस्येत्युक्तम्।आरब्ध इति'भुक्ता ब्राह्मणाः' इति वत्कर्तरि क्तः। एष इति पदेन पापाचरणे प्रयोजकः प्रश्नविषयः परामृश्यते।तेनैव'सदृशं चेष्टते''इन्द्रियस्येन्द्रियस्यार्थे'इति श्लोकद्वयोक्तार्थोऽप्यत्र स्मारित इत्यभिप्रेत्य—प्राचीनेत्यादिविशेषणद्वयमुक्तम्। पूर्वोक्तरागद्वेषावस्थान्तरापन्नावत्र कामक्रोधशब्देन व्यपदिश्येते इतिभावः।महाशनत्वविवरण —विषयेष्वेनमाकर्षतीति। महदशनं भोग्यं यस्य स महाशनः।एष इति निर्देशस्यावृत्त्या वाक्यभेदः।तत्र च वाक्यद्वयस्यैकमेव मुखभेदेन प्रतिपाद्यम्।अन्यथा कः पापाचरणे प्रयोजक इतिप्रश्ने'काम एष क्रोधश्च'इत्यादिप्रकारेण निर्देष्टव्यम्।अनन्तरं च'विद्ध्येताविह वैरिणौ'इतिवक्तव्यम्।उत्तरत्र च षट्स्वपि श्लोकेषु'तेन एतेन कामरूपेण अस्य एन यः कामरूपम्'इति सर्वत्रैकवचननिर्देशः काममात्रनिर्देशश्च क्रियते,न तु कामात्क्रोधस्य पृथक्त्वेनाभिधानम्।ततश्च कामस्यावस्थाभेदेन क्रोधतया न विवक्षितः,तदवस्थाद्वयविषयतया च वाक्यभेद

प्र-पा ॥ १. गी. ३-३३ ॥ २. गी. ३-३४ ॥

श॥दिषट्कं यस्मिन् वासुदेवे नित्यम् अप्रतिबन्धेन सामस्त्येन च वर्तते —'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ' उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवः वाच्यः भगवान् इति—काम इति । कामः एषः *सर्वलोकशत्रुः यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम् । स एष कामः प्रतिहतः केनचित्

आ॥यस्तु बलवान्प्रवर्तकः स एष कामः । क्रोधोऽप्येष एव, तज्जन्यत्वात् ; 'कामा-

ज॥बलवद्विषयश्चेत् प्रश्नः, तर्हि परिहारो न सगच्छत इत्यतः परिहारं व्याचष्टे —यस्त्विति । प्रवर्तकः पापेषु पुरुषस्त्वया पृष्ट इति शेषः । एवं योजनाया क्रोधस्यापि कामसाम्यं स्यात्, तथाचोत्तरत्र कामस्यैवानुवृत्तिर्विरुद्ध्येतेत्यतः क्रोध एष इत्येतदन्यथा व्याचष्टे— क्रोधोऽपीति । किं काम एव मुख्यया वृत्त्यैवमुच्यते; नेति ब्रूमः, किं तूपचारेणेति भावेनाह—तदिति । तदेव कुत इत्यत आह—कामादिति । नायमस्ति नियमः,यदा गुरुनिन्दादिश्रवणे निन्दकाय क्रुद्ध्यति, तदा कामाभावेऽपि क्रोधोदय-

पा ॥ * सर्वलोकं वशं कुर्वन् शत्रुः ॥

रा॥एष एव प्रतिहतगतिः प्रतिहतिहेतुभूतचेतनान् प्रति क्रोधरूपेण परिणतो महापाप्मा परहिंसादिषु प्रवर्तयति. एनं रजोगुणसमुद्भवं सहजं ज्ञानयोगविरोधिनं वैरिणं विद्धि ॥

धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८

यथा धूमेन वह्निराव्रियते; यथा आदर्शो मलेन,

---

ता॥उचित.।महाशनो महापाप्मेति पदद्वयमपि बाहुल्यानुसारेणौचित्यात्क्रमेण तदुभयविषयमित्येतदभिल-षमभिप्रेत्याह—एष एवेति। प्रतिहतगतिरिति क्रोधाख्ये परिणामे हेतुरुक्तः । एकस्यैव शब्दादिविषयगा-मावस्थातः क्रोधावस्थाया विषयतो भेदप्रदर्शनार्थमतिप्रसङ्गपरिहारार्थं चोक्तं—प्रतिहतेत्यादि । महापाप्मतां विवृणोति—परहिंसादिषु प्रवर्तयतीति। महान् पाप्मा कार्यतया यस्यास्तीति स महा-पाप्मा। 'क्रुद्धो हन्याद्गुरूनपि' इतिहि प्रसिद्धम्।एतच्छ्लोकोक्तं रजोगुणाख्यं पूर्वोक्तप्रकृतिशब्दव्यपदेश्य-

हं वासनाख्यं कारणञ्चोपस्थाप्य तदुभयकार्यताविशिष्टमेनमित्यन्वादेशः परामृशतीत्यभिप्रायेण— रजोगुणसमुद्भवं सहजमितिपदद्वयमुक्तम् । इह वैरिणमित्यत्र इहशब्दः प्रमादरक्षया बुभुत्सितज्ञा-नयोगविषय इत्यभिप्रायेणोक्तं—ज्ञानयोगविरोधिनमिति ॥ ३७ ॥

वैरित्वप्रकार उच्यते - धूमेनेति। तत्र यथेत्यन्तमेकं वाक्यम्।आदर्शो मलेन चेत्यत्र चकाराद्य थाशब्दोऽनुषक्त इति व्यञ्जनाय यथा धूमेनेत्युक्तम्।पूर्वस्मिन् श्लोके क्रोधस्यापि कामावस्थान्तरत्वव्यप-

---

श॥क्रोधत्वेन परिणमते। अतः क्रोधः अपि एष एव रजोगुणसमुद्भवः रजश्च तत् गुणश्च रजोगुणः तस्मात् समुद्भवः यस्य सः कामः रजोगुणसमुद्भवः । रजोगुणस्य वा समु-द्भवः; कामः हि उद्भूतः रजः प्रवर्तयन् पुरुषं प्रवर्तयति ; 'तृष्णया हि अहं कारितः' इति दुःखिनां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनः महत् अशनं यस्य इति महाशन. अत एव महापाप्मा ; कामेन हि प्रेरितः जन्तुः पापं करोति । अतः विद्धि एनं कामम् इह संसारे वैरिणम् ॥ ३७ ॥

---

आ॥'क्रोधोऽभिजायते' इति ह्युक्तम्। यत्रापि गुरुनिन्दादिनिमित्तः क्रोधः,तत्रापि भक्तिनि-मित्तानिन्दाकामनिमित्त एव। ये त्वन्यथा वदन्ति ते सङ्करात्र सूक्ष्मं जानन्ति । उक्तं च 'ऋते कामं न कोपाद्या जायन्ते च कथं चन' इति । महाशनः—महद्धि कामभोग्यम् , महाब्रह्महत्यादिकारणत्वात् महापाप्मा । सर्वपुरुषार्थविरोधित्वाद्वैरी ॥ ३७ ॥

---

ज॥दर्शनादित्यत आह—यत्रापीति।भक्तिनिमित्तश्चासावनिन्दाकामश्चेति विग्रहः। 'सङ्गात्सञ्जायते का-मः'इत्येतद्दर्शयितुं—भक्तिनिमित्तेत्युक्तम्। काम एव केनचित्प्रतिहत. क्रोधत्वेन परिणमत इति परेषां व्याख्यानं दूषयति —येत्विति । एवमन्तःकरणोपादानत्वलक्षणादानन्तर्यलक्षणाच्च सङ्करात्सूक्ष्मं काम-क्रोधयोरत्यन्तभेदम्। न हि गुणो गुणस्योपादानम्,किं तु निमित्तमेव । प्रागन्वये प्रमाणमुक्तम्, इदानीं व्यतिरेकेऽप्याह—उक्तं चेति । महाशन इति कामे दुर्घटत्वाद्गौणमित्याह—महाशन इति । भोग्य विषयः । यस्मात्कामभोग्यं महत्तस्मादसौ महाशन इत्यर्थः । काम एष इति पापकारणत्वेनोक्त्वा कथं महापाप्मेत्युच्यत इत्यतो न कर्मधारयोऽयम् , किंतु महान्पाप्मा यस्मादिति बहुव्रीहिरिति भावेनाह— महाब्रह्मेति । महच्छब्दात्परतः पापशब्दोऽध्याहार्यः । वधादिकर्तृत्वाभावात्कथं वैरित्वमित्यत आह— सर्वेति । सर्वः सम्पूर्णः पुरुषार्थो मोक्षः ॥ ३७ ॥

रा॥*यथाचोल्वेनावृतो गर्भः; तथा तेन कामेनेदं जन्तुजातमावृतम् ॥ ३८ ॥

आवरणप्रकारमाह—

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९**

अस्य जन्तोः ज्ञानिनो ज्ञानस्वभावस्यात्मविषयं ज्ञानमेतेन कामाकारेण विषयव्यामो-

ता॥देशादुत्तरत्र च—'कामरूपेण कामरूपम्' इति तस्यैवानुवृत्तेरत्रापि तच्छब्देन काम एव परामृश्यत इति व्यञ्जनाय—तेनकामेनेत्युक्तम् । इदमिति सामान्यनिर्देशेऽप्यचिद्ग्रहणासम्भवात्सर्वक्षेत्रज्ञग्रहणौचित्या-दिदशब्दस्य वक्ष्यमाणपरत्वादपि लोकप्रतीतपरत्वस्वारस्याच्च 'यया क्षेत्रज्ञशक्तिस्सा वेष्टिता' इत्यादिवत् क्षेत्रज्ञानामावरणमिहोच्यत इत्यभिप्रायेणोक्तम्—इदञ्जन्तुजातमिति । जन्तुशब्देन शरीरित्वस्य निबन्धितत्वादावरणार्हत्वं दर्शितम्। नपुंसकनिर्देशस्य सामान्यविषयत्वप्रदर्शनाय जातशब्दः । अनादि-वासनानुबन्धित्वेन सहजत्वं, निवृत्तस्यापि पुनःपुनरुपाधिवशादागमं, स्वेच्छया निवर्तयितुमशक्यत्वं च दर्शयितु दृष्टान्तत्रयोपादानम् ॥ ३८ ॥

'आवृतं ज्ञानम्' इत्यादेः पौनरुक्त्यव्युदासायाह—आवरणप्रकारमाहेति । अत्र 'तेनेदमावृतम्' इत्युक्ते किं तदावृतमित्याकाङ्क्षाया अपि कथमित्याकाङ्क्षा युक्तेति भावः । अत्र ज्ञानिशब्दो न तावन्निष्पन्नज्ञानविषयः, तदवस्थस्य कामावृतज्ञानत्वाभावात् । ततश्चानिष्पन्नज्ञानसर्वक्षेत्रज्ञपरत्वमेवो-चितमित्यभिप्रायेण—अस्य जन्तोर्ज्ञानिन इत्युक्तम्। ज्ञानिन इत्यत्र प्रत्ययस्य श्रुतिसिद्धस्वाभाविकसं-बन्धपरत्वप्रदर्शनायावरणस्यौपाधिकत्वद्योतनाय च—ज्ञानस्वभावस्येत्युक्तम्। क्षेत्रज्ञस्यापि कर्मफलभो-क्तुश्शब्दादिविषयज्ञानावरणाभावात्—आत्मविषयं ज्ञानमित्युक्तम्। कामरूपशब्दस्य स्वेच्छागृहीत-

प्र-पा॥*'उल्वंनाम-पटसदृशं गर्भस्यान्तर्वेष्टनम् 'गर्भो-जरायुणावृत उल्वं जहाति जन्मना' (वाज स१९.५६.१.) स उल्वावृतो गर्भो भवति' (छा.५.९.१), इति श्रुतेः ॥ १.वि.पु.६-७-६२॥†'विष्णुशक्तिः परा-प्रोक्ता क्षेत्रज्ञाख्या तथा परा । अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥ यया...नृप सर्वगा । संसा-रतापानखिलानवाप्नोत्यतिसन्ततान् ॥ तया तिरोहित-त्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तार-तम्येन वर्तते ॥' ब्रह्मणोऽविद्यासम्बन्धद्वारभूते जीवा-त्मनि अविद्यान्वयं दर्शयति—विष्णुशक्तिरित्यादिना ॥ सर्वगा —चतुर्मुखादिपिपीलिकान्तसर्वशरीरस्था । जा-तावेकवचनम् । यद्वा धर्मभूतज्ञानेन स्वतः सर्वं व्या-प्तु क्षमा । कर्मणा वेष्टिता —कर्मणा सङ्कुचितज्ञाने-त्यर्थः । नहि सर्वे अज्ञा स्युरित्यनाह—तयेति । कर्मतारतम्यानुगुणं ज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरि-त्यर्थः । सर्वेषां ज्ञाननित्यत्वस्य मुक्तौ सर्वविषयत्व-स्य च प्रामाणिकत्वात् बद्धावस्थायां सङ्कोचविकासौ सिद्धौ । तत्तारतम्यं च 'पुम. शक्त्युपलक्षित.' 'त-च्छक्त्या पश्चतोऽधिका' इति स्पष्टीकृतम्—इति श्रुतप्रकाशिकायां पुराणपद्ध ॥

शा॥कथं वैरी ? इति दृष्टान्तैः प्रत्याययति—धूमेन इति । धूमेन सहजेन आव्रियते वह्निः प्रकाशात्मकः अप्रकाशात्मकेन, यथा वा आदर्शो मलेन च, यथा उल्वेन च जरायुणा गर्भवेष्टनेन आवृतः आच्छादितः गर्भः तथा तेन इदम् आवृतम् ॥ ३८ ॥

किं पुनः तत् इदंशब्दवाच्यं यत् कामेन आवृतम् इति ? उच्यते—आवृतम् इति ।

आ॥कथं विरोधी सः । इदमनेनावृतम् । यथा धूमेनाग्निरावृतः, प्रकाशरूपोऽप्यन्येषां

ज॥ननु प्रश्नस्योत्तरं जातं किमुत्तरेणेत्यतः श्लोकद्वयस्य सङ्गतिमाह—कथमिति । स कामः कथं मोक्षस्य विरोधीति जिज्ञासायामाह । धूमेनेत्यादिनेति शेषः । विवक्षितार्थस्यास्फुटत्वात् व्याख्याति

**या॥ हृज्जननेन नित्यवैरिणा आवृत दुष्पूरेण प्राप्त्यनर्हविषयेण अनलेन च पर्याप्तिरहितेन ॥**

**ता॥**रूप्यते प्रसिद्धस्तद्भ्रमस्युदासायोक्तं—**कामाकारेणेति** । कामस्वभावादर्थादाक्षिप्तमात्मविषयज्ञाना-वरणप्रकारं व्यञ्जयति—**विषयव्यामोहजननेनेति** । **नित्यवैरिणा** आत्मसाक्षात्कारोत्तरबाधिनाऽना-दिवैरिणेत्यर्थः । नित्यसंसारिसिद्धान्तपक्षे चास्य केषुचिदात्मसु नित्यवैरित्वं सिद्धम् । योग्यैर्लब्धैरलभा-वराहित्यमनलशब्दार्थः । 'तृष्णाख्यनिरगाधेयं दुष्पूरा केन पूर्यते । या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते' इत्युक्तप्रकारेणायोग्येषु दुर्लभेषु प्रवृत्तिर्निमित्तं दुष्पूरशब्दविवक्षितमित्यभिप्रायेणोक्तं—**दुष्पू-रेण प्राप्त्यनर्हविषयेण अनलेन च पर्याप्तिरहितेनेति** । यद्वाऽनलशब्दोऽग्निपर्यायः कामे गौणः; नत्वग्नेर्विषयविभागः पर्याप्तिर्वा स्यात्, तद्वदिति भावः ॥ ३९ ॥

**श्री॥ आवृतम् एतेन ज्ञानं ज्ञानिनः नित्यवैरिणा, ज्ञानी हि पूर्वमेव जानाति 'अनेन अहम् अनर्थे प्रयुक्तः' इति । अतः दुःखी च भवति नित्यमेव । तेन असौ ज्ञानिनः नित्यवैरी, न तु मूर्खस्य । स हि कामं तृष्णाकाले मित्रम् इव पश्यन् तत्कार्ये दुःखे प्राप्ते जानाति 'तृष्णया अहं दुःखित्वम् आपादितः' इति न पूर्वमेव । अतः ज्ञानिन एव नित्यवैरी ।**

**आ॥न सम्यग्दर्शनाय, तथा परमात्मा । यथाऽऽदर्शो मलेनावृतोऽन्याभिव्यक्तिहेतुर्न भ-वति,तथान्तःकरणं परमात्माद्यभिव्यक्तिहेतुर्न भवति कामेनावृतम्।यथोल्बेनावृत्य बद्धो भव-ति गर्भस्तथा कामेनावृतो जीवः । शास्त्रतो जातमपि ज्ञानं परमात्मापरोक्ष्याय न प्रका-शते कामेनावृतं ज्ञानिनोऽपि,किम्वल्पज्ञानिनः। कामरूपेण कामाख्येन नित्यवैरिणा । दु-ष्पूरेण, दुःखेन हि कामः पूर्यते । नहीन्द्रादिपदं सुखेन लभ्यते । यद्यपीन्द्रादिपदं प्राप्त**

**ज॥—इदमिति** । ईश्वरान्तःकरणजीवलक्षणं वस्तुत्रयम्। केन किमिवेत्याकाङ्क्षायामाद्यं पादत्रयं व्याचष्टे —**यथेति** । परमात्मा कामेनावृतः स्वयं सर्वज्ञोऽप्यन्यैर्न ज्ञायत इति शेषः । अन्यस्य मुकुरादेः । पर-मात्मादेरित्यादिपदेन जीवो गृह्यते। बन्धापेक्षया आवरणस्य समानकर्तृकत्वम्। बद्धः सङ्कुचितो व्यापारा-क्षम इति यावत् । उल्बो गर्भवेष्टनम् । कामेनावृतो जीवो नेश्वरादिज्ञाने क्षम इत्यर्थः । एवं ज्ञेय-ज्ञानकरणज्ञातृप्रतिबन्धकत्वोक्त्या ज्ञानप्रतिबन्धकत्वमुक्तम् । आवृतं ज्ञानमित्यनेन पुनः किमुच्यत इत्यत आह—**शास्त्रत इति**। पूर्वं ज्ञानोत्पत्तिप्रतिबन्धकत्वमुक्तम्,इदानीं तु कथञ्चिज्जातमपि ज्ञानं न स्वका-र्याय प्रभवतीत्युच्यते । अतो न पुनरुक्तिदोष इति भावः, 'कामकारेणैव' इति वचनात् । अपरो-क्षज्ञानस्य मोक्षसाधने तत्केनापि प्रतिबन्ध इत्यत उक्तम्—**शास्त्रत इति,परमात्मापारोक्ष्यायेति** च । न प्रकाशते न भवति । ज्ञानिन इति व्यर्थम्, ज्ञानस्य ज्ञानिसम्बन्धाव्यभिचारादित्यत आह —**ज्ञानिनोऽपीति** । शास्त्रजनितज्ञानवतोऽपि । अल्पज्ञानिनो गुरूपदेशमात्रजनितज्ञानवतः । अपरे तु ज्ञानिनो नित्यवैरिणा न मूर्खस्य । ज्ञानी हि विनाशयिष्यामि काममिति यतते । मूर्खस्तु तमनुवर्तत इति वर्णयन्ति। तदनेनैव निरस्तम्।अपकारित्वं खल्वत्र वैरित्वं विवक्षितं; तच्च ज्ञान्यपेक्षया मूर्खेऽधिकम्। न हि मूर्खस्तु नानुभवत्त इत्येतावता तन्नास्ति। इच्छानुरूपं रूपं यस्यासौ कामरूप इत्युच्यते। न चैतत्का-मेऽन्तःकरणधर्मे सम्भवतीत्यत आह—**कामेति** । रूप्यतेऽनेनेति रूपमाख्या विवक्षितेत्यर्थः । तर्हि विशेषणपदमिदं जातं किमस्य विशेष्यमित्यत आह—**नित्येति** । यो न पूरयितुं शक्यः, स दुष्पूरः । कामस्तु विषयसम्पादनेन पूरयितुं शक्यः; कथं दुष्पूर इत्यतोऽन्यथा व्याचष्टे—**दुष्पूरेणेति** । न नञर्थे दुःशब्दः किन्तु कृच्छ्रार्थ इत्यर्थः । तदुपपादयति—**नहीति** । कामविषयोपलक्षणमेतत् । ननु प्रज्वलनात्मकत्वात्क्रोधोऽनलो युक्तः । कामस्तु कथमनल इत्यतः सोपपत्तिकमन्यथा व्याचष्टे—**यद्य-**

रा॥कैरुपकरणैरयं काम आत्मानमधितिष्ठतीत्यत्राह—

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥** ४०

अधितिष्ठत्येभिरयं काम आत्मानमितीन्द्रियाणि मनो बुद्धिरस्याधिष्ठानम्, एतैरिन्द्रियमनोबुद्धिभिः कामाधिष्ठानभूतैर्विषयप्रवणैर्देहिनं प्रकृतिसंसृष्टं ज्ञानमावृत्य विमोहयति—विविधं मोहयति, आत्मज्ञानविमुखं विषयानुभवपरं करोतीत्यर्थः ॥ ४० ॥

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥** ४१

यस्मात्सर्वेन्द्रियव्यापारोपरतिरूपे ज्ञानयोगे प्रवृत्तस्यायं कामरूपशत्रुः विषयाभि-

ता॥एवमावरणप्रकार उक्तः, अथावरणोपकरणान्यनन्तरं नियन्तव्यत्वोपदेशायोच्यन्त इत्यभिप्रायेणाह—कैरिति। आत्मानमधितिष्ठति—स्वतन्त्रमात्मानमाक्रम्य परतन्त्रं करोतीत्यर्थः। इन्द्रियशब्दोऽत्र गोबलीवर्दन्यायाद्बाह्येन्द्रियपरः। बुद्धिरत्रापुरुषार्थेषु पुरुषार्थत्वाध्यवसायः। प्रकृतानुपयुक्ताधिकरणादिधीव्युदासाय करणव्युत्पत्तिं दर्शयति—*अधितिष्ठत्येभिरिति*। एतैर्विमोहयतीति सूच्यत इति भावः। अधिष्ठानक्रियाकरणभूतानामिन्द्रियादीनामवान्तरव्यापारप्रदर्शनाय—*विषयप्रवणैरित्युक्तम्। प्रकृतिसंसृष्टमिति।* देहिशब्देनेन्द्रियादेरवर्जनीयत्वं गुणवश्यत्वं च सूच्यत इति भावः। विशब्दः 'अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः' इत्याद्युक्तभ्रान्तिवैविध्यपर इत्यभिप्रायेणाह—*विविधं मोहयतीति*। भ्रान्तिवैविध्यं भोग्ये स्वात्मन्यभोग्यताभ्रमेणाभोग्येषु च विषयेषु भोग्यताभ्रमेण विवृण्वन् प्रकृतोपयोगित्वं च दर्शयति—*आत्मज्ञानेति* ॥

प्र-पा॥१. वि पु. ६-अं. ७-अ ११-श्लो. । 'अविद्यातरुसम्भूतिबीजमेतद्द्विधा स्थितम्' इत्युत्तरा. अनात्मनि देहे, अहमिति भ्रमः. अस्वे - दहपोषकगृहकादौ वस्तुनि, स्वमिति, ममास्फलक काम्यकर्मादिषु, सैवनर., तत्सम्भूतेर्बीजम्, द्विधा स्थितम् अहं ममेति ॥

शं॥किं रूपेण? कामरूपेण काम इच्छैव रूपं अस्य इति कामरूपः तेन दुष्पूरेण दुःखेन पूरणम् अस्य इति दुष्पूरः तेन, अनलेन नास्य अलं पर्याप्तिः विद्यते इति अनलः तेन च ॥

*किम् अधिष्ठाय च पुनः कामः ज्ञानस्य आवरणत्वेन वैरी सर्वस्य लोकस्य? इति अपेक्षायाम् आह, ज्ञाते हि शत्रोः अधिष्ठाने सुखेन निबर्हणं कर्तुं शक्यते इति—इन्द्रियाणि इति। *इन्द्रियाणि मनः बुद्धिः च अस्य कामस्य अधिष्ठानम् आश्रयः उच्यते। एतैः* इन्द्रियादिभिः आश्रयैः विमोहयति विविधं मोहयति *एष* कामः *ज्ञानम् आवृत्य* आच्छाद्य *देहिनं* शरीरिणम् ॥ ४० ॥

आ॥पुनर्ब्रह्मादिपदमिच्छतीत्यल बुद्धिर्नास्तीत्यनलः। उक्तं च—'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा। आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः' इति ॥ ३८ ॥ ३९ ॥

ज॥पीति। इदमपि प्रातादधिकस्योपलक्षणम्। श्लोकद्वयार्थे प्रमाणसंमतिमाह—उक्तं चेति। कामकः कुत्सितकामो ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमः। तथा बुद्धेरन्तःकरणस्यादर्शस्य मलम्। अथ जीवस्य गर्भस्योल्ब इति सर्वत्र गूढोपमा, एतेनेदमित्युक्तस्य विवरणम् द्वितीयश्लोक इति व्याख्यानमपाकृत भवति ॥

पा॥ *किमधिष्ठानः पुनः कामः ॥

रा॥ मुख्यकरणेनात्मनि वैमुख्यं करोति, तस्मात्प्रकृतिसंसृष्टतयेन्द्रियव्यापारप्रवणस्त्वमादौ मोक्षोपायारम्भसमय एवेन्द्रियव्यापारानुरूपे कर्मयोगे इन्द्रियाणि नियम्य एनं ज्ञानविज्ञाननाशनम् आत्मस्वरूपविषयस्य ज्ञानस्य तद्विवेकविषयस्य च नाशनं पाप्मानं कामरूपं वैरिणं प्रजहि नाशय ॥ ४१ ॥

ता॥ अथ कामस्यात्माधिष्ठानोपकरणेष्विन्द्रियमनोबुद्धिषु प्रथममिन्द्रियाणां नियमनं कामविजयोपायतयोपदिश्यते—तस्मादिति श्लोकेन । तस्मादित्येतत्प्रकृतस्य ज्ञानयोगस्योक्तप्रकारदुष्करत्वपरामर्शात्—यस्मादित्यादिना । त्वमिति निर्देशोऽर्जुनस्य तदानीन्तनावस्थापर इत्यभिप्रायेणाह—प्रकृतिसंसृष्टतया इन्द्रियव्यापारप्रवणस्त्वमिति । आदावित्यनेनाभिप्रेतमाह—मोक्षेति । नान्तरिन्द्रियनियमनमत्यन्तव्यापारोपरमः, आदौ तस्याशक्यत्वात्, प्रयोजनं च तत्प्रागेव । कर्मयोगार्थं चेन्द्रियनियमनं प्रागपि 'यस्त्विन्द्रियाणि मनसा' इत्यादावुक्तम् । अतोऽत्रापि तथैव वर्णनीयमित्यभिप्रायेणोक्तम्—इन्द्रियव्यापारानुरूप इत्यादि । ज्ञानविज्ञानयोः द्वयोरप्यात्मविषयत्वं प्रकरणात्सिद्धम् । तत्र च 'ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः' इतिवत् स्वरूपतद्विवेकविषयत्वादपौनरुक्त्यमित्यभिप्रायेणोक्तम्—आत्मस्वरूपेत्यादि । विज्ञानं विविच्य ज्ञानं व्यावृत्ततया ज्ञानमित्यर्थः । प्रत्यक्त्वानानन्दत्वादिविशिष्टमात्मनः स्वरूपम् । अणुत्वनित्यत्वज्ञातृत्वभोक्तृत्वकर्तृत्वादिभेदको धर्मवर्गोऽत्र विवेकः । यद्वा देहातिरिक्तः कश्चिदात्मास्तीत्येतावत्स्वरूपमिह विवक्षितम्, प्रत्यक्त्वादयोऽप्यणुत्वादिवद्विवेकतया विवक्षिताः । अथवा तत्त्वं स्वरूपं विवेको विवेककरणं शास्त्रम् ; ततः प्रमेयं प्रमाणं चोक्तं भवति । एनं पाप्मानमित्यन्वयादेशात्प्रस्तुतकामविषयः पाप्मशब्दः, तस्य पाप्मशब्देनाभिधानं निषेधविषयतया, ज्ञानविरोधित्वेन, अनिष्टफलत्वाच्चेत्यभिप्रेत्य—कामरूपं वैरिणमित्युक्तम् ॥ ४१ ॥

प्र पा ॥ १ गी ३ ७ ॥

२ मनु १ अ ९७ श्लो †ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः । कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः ॥ ब्राह्मणेषु च ब्राह्मणेषु मध्ये विद्वांसः शास्त्रार्थज्ञानवन्तः श्रेष्ठाः, तेभ्योऽपि कृतबुद्धयः शास्त्रोदितानुष्ठानेषु उत्पन्नकर्तव्यताबुद्धयः, श्रेष्ठाः, तेभ्योऽपि कर्तारः अनुष्ठातारः श्रेष्ठाः, तेभ्योऽपि ब्रह्मविदः श्रेष्ठा इत्यर्थः । भारतेचोद्योग ६ अ. २ श्लो द्रष्टव्य ॥

शं॥ यत एवं तस्मात् इति॥ तस्मात् त्वम् इन्द्रियाणि आदौ पूर्वमेव नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं प्रजहि हि परित्यज, एनं *ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रत आचार्यतश्च आत्मादीनाम् अवबोधः विज्ञानं विशेषतः †तदनुभवः तयोः ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोः नाशनं नाशकरं तं नाशनम् आत्मनः परित्यज इत्यर्थः ॥

आ॥ वधार्थं शत्रोरधिष्ठानमाह—इन्द्रियाणीति । एतज्ज्ञानमावृत्य बुद्ध्यादिभिर्हि विषयैर्ज्ञानमावृतं भवति । हताधिष्ठानो हि शत्रुर्नश्यति ॥ ४० ॥ ४१ ॥

ज॥ इन्द्रियाणीत्यादिकमपृष्टं किमर्थमुच्यते इत्यत आह—वधार्थमिति । एतदर्थमेव ह्यर्जुनेन वलात्पृष्ट, किंशब्दश्रवणात् किं प्रतीन्द्रियादीनां करणत्वमिति न प्रतीयते । सन्निधानाद्विमोहनं प्रतीत्यन्यथा च प्रतीयते, अत आह—एतैरिति । तदुपपादयति—बुद्ध्यादिभिरिति । इन्द्रियादित्वेनोक्तानामपि बुद्ध्यादित्वेन ग्रहणं प्राधान्यज्ञापनार्थम् । तस्मात्त्वमितीन्द्रियाणां निग्रहः कामहननायोपदिश्यते । तदुपपादयति—हतेति । नश्यति नाशयितुं शक्यो भवति ॥ ४० ॥ ४१ ॥

पा॥ *प्रकृत वैरिण ॥ †तदर्थानुभव ॥

रा॥ज्ञानविरोधिषु प्रधानमाह—

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः॥** ४२

ज्ञानविरोधे प्रधानानीन्द्रियाण्याहुः, यत इन्द्रियेषु विषयव्यापृतेषु आत्मनि ज्ञानं न प्रवर्तते; इन्द्रियेभ्यः परं मनः इन्द्रियेषूपरतेष्वपि मनसि विषयप्रवणे आत्मज्ञानं न संभवति; मनसस्तु परा बुद्धिः—मनसि वृत्त्यन्तरविमुखे विपरीताध्यवसायप्रवृत्तौ सत्यां

ता॥एवं विरोधिमात्राणामिन्द्रियाणां नियन्तव्यत्वमुक्तम्। अथ मनोबुद्धिकामानां नियन्तव्यतरतमत्वादिसिद्ध्यर्थमुत्तरोत्तरं विरोधितमत्वेन निर्दिश्यन्त इत्यभिप्रायेणाह—ज्ञानविरोधिष्विति। परशब्दस्यात्र कारणत्वादिपरत्वायोगात्प्राधान्यमेव विवक्षितम्। तच्च प्रकरणवशात् ज्ञानविरोधापेक्षयेत्यभिप्रायेणोक्तं—ज्ञानविरोधे प्रधानानीति। प्राधान्यं चेन्द्रियाणां देशकालादिरूपसामान्यविरोध्यन्तरापेक्षया, शरीरापेक्षया वा सूक्ष्मत्वसुमहत्त्वादिभिः। इन्द्रियाणां प्राधान्यहेतुं विरोधित्वप्रकारमाह—यत इति। इन्द्रियेभ्यो मनसः परत्वे हेतुमाह—इन्द्रियेष्विति। पूर्ववाक्याद्यत इत्यनुषञ्जनीयम्। एवमुत्तरत्रापि हेतुवाक्ये भाव्यम्। विषयासन्निधानहठात्करणादिना बाह्येन्द्रियेषु विषयेभ्य उपरतेष्वपि मनसा तत्तद्विषयेषु चिन्त्यमानेष्वात्मज्ञानं न स्यात्; ततो बाह्येन्द्रियोपरतिवेलायामपि विरोधित्वादस्य तेभ्यः परत्वम्। मनसो बुद्धेः परत्वे हेतुमाह—मनसि वृत्त्यन्तरेति। ननु मनसो विषयान्तरवृत्तिवैमुख्ये कथं तद्व्यापाराध्यवसायप्रवृत्तिः; मनसा कञ्चिद्विषयमालम्ब्य तत्रैव हि कुर्यां न कुर्यामित्याद्यध्यवसीयते, उच्यते—नात्र मनसो निश्शेषव्यापारनिवृत्तिः वृत्त्यन्तरवैमुख्यं विवक्षितम्, किन्तु बलादप्यशक्यनिरोधस्वारसिकविषयान्तरप्रावण्यनिवृत्तिः। सूचितं चैतत्पूर्ववाक्ये 'मनसि विषयप्रवणे' इति। अतो यदृच्छया निद्रालस्यादिभिः मनसः स्वरसतो विषयैकधारणत्वाभावेऽपि दुराग्रहादिमात्रेण विपरीताध्यवसायप्रवृत्तौ मनसस्तथाविधमपि प्रावण्यं स्यादेव। एवं च मनसस्त्विति तुशब्दः शङ्कानिरासार्थः; एवंविधवैलक्षण्यार्थो वा। अध्यवसायादपि कामस्य परत्वे हेतुमाह—सर्वेष्विति। वासनाकार्यत्वस्य स्वानुरूपाध्यवसायहेतुत्वस्य च द्योतनाय—इच्छापर्याय इत्युक्तम्। इन्द्रियमनोबुद्ध्युपरतिवेलाया कथं

शं॥इन्द्रियाणि आदौ नियम्य कामं शत्रुं जहि इति उक्तम्। तत्र किमाश्रयः कामं जह्यात् इति? उच्यते—इन्द्रियाणि इति॥इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्ष्य पराणि प्रकृष्टानि आहुः पण्डिताः। त-

आ॥शत्रुहनने आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह—इन्द्रियाणीति। असङ्गज्ञानासिमादाय तरतिपारमिति ह्युक्तम्। शरीरादिन्द्रियाणि पराणि उत्कृष्टानि। न केवलं बुद्धेः परः श्रुत्युक्तप्रकारेणाव्यक्तादपि। 'अव्यक्तात्पुरुषः परः' इति हि श्रुतिः। न च तत्रतत्रोक्तै-

ज॥इन्द्रियाणि पराणीत्यस्य पूर्वेण संगतिर्न दृश्यते; अत आह—शत्रुहनन इति। एवं बुद्धेः परमित्यनेन वस्तु ज्ञानस्यायुधत्वे प्रमाणमाह—असङ्गेति। असङ्गं वैराग्यसहितम्। तराति पारं पारमतितर 'छन्दसिपरेऽपि' इति वचनात्। परत्वस्यावधिसापेक्षत्वात्कस्मादिन्द्रियाणि पराणीत्यत आह—शरीरादिति। सन्निधानादिति भावः। किं परत्वमन्यत्वं नेत्याह—उत्कृष्टानीति। 'यो बुद्धेः परतस्तु सः' इति परमात्मोच्यते। तस्य बुद्धेः परत्वे महताऽऽत्मना साम्यं स्यादत आह—न केवलमिति। काऽसौ श्रुतिर्यद्बलादध्याहार इत्यत आह—अव्यक्तादिति। अस्तु भगवानव्यक्तादपि, कामादिजयार्थं बुद्धेः परत्वेनैव ज्ञातेनालं किं प्रमाणान्तरसिद्धाध्याहारेणेत्यत आह—नचेति। कामादिजयो हि मुक्तिद्वारं न च मुक्तिरेकदेशज्ञानमात्रेण भवति। कुत इत्यत आह—सार्व-

रा॥ज्ञानं न प्रवर्तते, सर्वेषु बुद्धिपर्यन्तेषूपरतेष्वपीच्छापर्यायः कामो रजस्समुद्भवो वर्तते चेत्—स एवैतानीन्द्रियादीन्यपि स्वविषये वर्तयित्वा आत्मज्ञानं निरुणद्धि, तदिदमुच्यते 'यो बुद्धेः परतस्तु सः' इति, बुद्धेरपि

ता॥कामस्योत्पत्तिरित्यलोच — रजस्समुद्भव इति—प्राचीनकर्मान्निमित्तरजोदूषितमनोमात्रसम्भव इत्यर्थः। ननिन्द्रियादीनां विषयान्तरवैमुख्ये सिद्धे विषयेच्छायास्सद्भावेऽपि को विरोधः, आत्मानुभवेच्छया तत्रैवाध्यवसायमननप्राणिध्योरुपपत्तेरित्यत्राह—स एवेत्यादि। सत्यमात्मेच्छाप्यस्त्येव, सा हि कादाचित्कात्मस्मरणमूला विषयेच्छा तु प्रचितप्राचीनकर्मोद्भावितनिरन्तरानुवृत्तवासनामूला, तस्मादात्मेच्छा यावदात्मदर्शनाध्यवसायादिकं करोति, तावद्विषयेच्छा प्रबला विषयानुभवाध्यवसायादिकमेव कुर्यादिति भावः। एवमत्र कामस्य पूर्वपूर्वप्रवर्तकत्ववचनं बुद्धिमनसोरपि पूर्वपूर्वप्रवर्तकत्वस्य उपलक्षणं मन्तव्यम्। रजस्समुद्भवो वर्तयित्वेति पदाभ्यां रागस्याध्यवसायादिनिरपेक्षोत्पत्तिकत्वतदुपकरणत्वलक्षणं वैरूप्यं तुशब्दद्योतितं विवृतम्। अर्थान्तरपरत्वमनन्वयभ्रमं च निरस्यन्नुक्तार्थपरतया चतुर्थं पादमुपादत्ते—तदिदमुच्यत इति। परत इति शब्दस्य पूर्ववाक्यगतपरशब्दतुल्यार्थत्वात्सार्वविभक्तिकत्वेन प्रथमार्थत्वं स इत्यस्य प्रकरणसिद्धं विशेष्यं च व्यञ्जयति—बुद्धेरपीति। अहङ्कारस्य भोक्त्रधिष्ठानाद्बुद्धेः परत्वम्—इति केषाञ्चिद्व्याख्यानं प्रकृतासङ्गत्यादिभिरनादरणीयम्। ननु, 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' इति हि कठवल्ल्यां नियन्तव्यवर्गोऽश्रूयत। स च तदेव 'आनुमानिकमप्येकेषाम्' इत्यधिकरणे व्याख्यातम्। अस्मिन्नपि श्लोके तत्प्रत्यभिज्ञायते न चेन्द्रियमनसां मध्येऽर्थानामदर्शनात् 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' इत्यनयोरनुपादानाच्च भिन्नार्थत्वमिति वाच्यम्, सङ्ग्रहविस्तररूपेण कतिपयाभिधानसकलाभिधानयोरुपपत्तेः,

प्र॰ पा॥ १ कठ १. ३. १०, ११ वा॰ † आत्मानं रथिनं विद्धि' इत्यादिना 'सोऽध्वनः पारमाप्नोति' इत्यन्तेन समाराध्यस्य परं वैष्णवं पदं प्रथमतमुपासकं रथित्वेन, तच्छरीरादीनि च रथत्वादित्वेन रूपयित्वा, यस्य एते रथादयो वशे तिष्ठन्ति, स एवाध्वनः पारं वैष्णवं पदमाप्नोतीत्युक्त्वा, तेषु रथादिरूपितशरीरादिषु यानि वश्यतया वशीकार्यतया प्रधानानि तान्युच्यन्ते—इन्द्रियेभ्य इत्यादिना। इन्द्रियेभ्यः परा ह्यर्थाः—तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यः गोचरत्वेन रूपिता इहशब्दाः विषयाः वशीकार्यत्वे पराः, वशेन्द्रियस्यापि विषयसन्निधौ इन्द्रियाणां दुर्निग्रहत्वात्। अर्थेभ्यश्च परं मनः—विषयेभ्योऽपि परं प्रग्रहरूपिणं मनः, मनसि विषयप्रवणे विषयासन्निधानस्याऽपि अकिञ्चित्करत्वात्। मनसश्च परा बुद्धिः—मनसोऽपि सारथित्वरूपिता बुद्धिः परा, अध्यवसायाभावे मनसोऽप्यकिञ्चित्करत्वात्। बुद्धेरात्मा महान् परः—बुद्धेरपि रथित्वरूपेण आत्मा कर्तृत्वेन प्राधान्यात्परः, सर्वस्य चास्यात्मेच्छायत्तत्वात् आत्मैव 'महान्' इति च विशेष्यते। महतः परमव्यक्तम्—तस्मादपि रथरूपिणं शरीरं परम्, तदायत्तत्वात् जीवात्मनः सकलपुरुषार्थसाधनप्रवृत्तीनाम्। अव्यक्तात् पुरुषः परः—शरीरात् अपि परः सर्वान्तरात्मभूतोऽन्तर्यामी अध्वनः पारभूतः परमपुरुषः, यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात्। सत्त्वेन्तया वशीकार्यानामन्यस्यापि निर्वर्तक वशीकार्योपासननिर्वृत्त्युपायकत्वाभूतः, परमप्राप्यश्च। तदिदमुच्यते—पुरुषान्न परमिति॥ २ शारी॰ १. ४. १॥

शा॥था—इन्द्रियेभ्यः परं मनः सङ्कल्पविकल्पात्मकम्। तथा—मनसस्तु परा बुद्धिः निश्च

आ॥क्देशज्ञानमात्रेण भवति मुक्तिः। सार्वत्रिकगुणोपसंहारो हि भगवता गुणोपसंहार

ज॥त्रिकेति। तस्यान्यथाव्याख्यानेऽपि स्पष्टं प्रमाणमाह—तथा चेति। सर्वत्रैवेति संबन्धः। वेदाद्युक्ता-

रा॥यः परस्स काम इत्यर्थः॥ ४२ ॥

ता॥षष्टिप्रकरणादिषु कतिपयसमस्तसङ्ख्यतत्त्वादिनिर्देशवत्।'आहुः'इति वचनात् कश्चिदन्यत्रास्यार्थस्याभिधानमवश्याभ्युपगन्तव्यम् ; ततश्च 'यो बुद्धेः परतस्तु सः' इत्यस्य 'बुद्धेरात्मा महान्परः' इत्यनेन तुल्यार्थत्वादात्मविषयत्वमेवोचितम् ; एवं च सति 'एवं बुद्धेः परं बुद्ध्वा' इत्यादौ उत्तरश्लोकेऽपि द्वितीयान्तात्मशब्दश्चेतनविषयतयोपपन्नतरस्स्यात् ; अतः कथं स काम इति व्याख्यायते ; उच्यते —यद्यपीन्द्रियादिवत्र तदेवात्र प्रत्यभिज्ञातम् ; तथापि स एव क्रमोऽत्र कात्स्न्र्येन न विवक्षितः ; पूर्वत्र 'इन्द्रियाणि मनो बुद्धिः' इति श्लोके निर्दिष्टानाम् इन्द्रियादिकामपर्यन्तानां चतुर्णां विरोधिनामेवात्र तारतम्यनिर्देशोपपत्तेः, इन्द्रियमनोबुद्धीनां च क्रमस्यात्र न कश्चिद्भङ्गः । कठवल्लयर्थपरत्वे त्वर्थानामनिर्देशान्मालया क्रमभङ्गस्स्यात् । विरोधित्वे जेतव्यत्वे च प्रधानतया पूर्वत्रोत्तरत्र च काम एव व्यपदिश्यते । अतस्स एवात्र सर्वप्रधानतया 'यो बुद्धेः परतस्तु सः' इति निर्देशमर्हति ; अन्यथा स इति शब्दस्य विशेष्यमौपनिषदं दूरस्थं स्यात् ; यदि ह्यात्माप्यत्र नियन्तव्यतयाभिमतः, तदा 'इन्द्रियाणि मनो बुद्धिः' इत्यत्रात्माप्यधिष्ठानतया व्यपदिश्येत ; नचैतत्तथोक्तम् ; आत्मा हि तत्र चतुर्भिर्मोहनीयतया व्यपदिष्टः ; अतश्चतुर्णां नियमनमेवानेन कार्यम् ; तथा सत्युत्तरश्लोकस्थात्मशब्दोऽप्येतदनुरोधेन वर्णनीयः ; एतस्यैवानुवादो हि 'एवं बुद्धेः परम्' इति व्यक्तः । पादद्वयस्थितस्य 'बुद्ध्वा'इत्यादिक्रियाद्वयस्य कर्मद्वयं च भिन्नमेव स्वरसप्रतीतम्।अतस्तत्र द्वितीयान्तात्मशब्दो नियन्तव्यतया निर्दिष्टमनोविषयः । तृतीयान्तस्तु मनोनियमनकरणभूताध्यवसायविषयः । आहुरितिनिर्देशस्तु नावश्यमुपनिषदभिप्रायेण 'इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम्। तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्' इत्याद्यनुसारेण मन्वादय आहुरित्यपि विवक्षोपपत्तेः । तस्मात् 'यो बुद्धेः परतस्तु सः' इति काम एव निर्दिश्यते । तदेतदखिलमभिप्रेत्योक्तं —तदिदमुच्यते इत्यारभ्य—स कामइत्यर्थ इत्यन्तम्॥ ४२ ॥

प्र पा॥ १. मनुस्मृतौ. २-९९॥ २७२. पुटे. व्याख्यानम ॥

शं ॥ यात्मिका । तथा –यः सर्वदृश्येभ्यः बुद्ध्यन्तेभ्यः अभ्यन्तरः, यं देहिनम् इन्द्रियादिभिः आश्रयैः युक्तः कामः ज्ञानावरणद्वारेण मोहयति इत्युक्तम्, सः बुद्धेः द्रष्टा पर आत्मा ॥ ४२ ॥

आ॥पादेऽभिहितः—'आनन्दादयः प्रधानस्य'इत्यादिना । तथाचान्यत्र --'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि । सर्वत्र ये गुणाः प्रोक्ताः संप्रदायागताश्च ये । सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम्। तेषामेव भवेन्मुक्तिर्नान्यथा तु कथंचन'इति गारुडे। तस्मादव्यक्तादपि परत्वेन ज्ञेयः । नचात्र जीव उच्यते, 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तत्वात् । 'अविज्ञाय परं मत्तो जयः कामस्य वै कुतः' इति च। अतः परमात्मज्ञानमेवात्र

ज॥ अपि भगवत्संप्रदायागताः, तैः सह तैः सहितम् । न च तत्रेत्युक्तमुपसंहरति —तस्मादिति । मायावादी तु 'यो बुद्धेः परतस्तु सः' इत्यनेन जीव उच्यत इत्याह । तन्निराकरोति—नचेति । कुत इति चेत् —एवं बुद्धेः परमित्येतज्ज्ञानस्य कामविनाशसाधनत्वोक्तेः ; तस्याश्च भगवत्परिग्रहे घटनादन्यथाऽघटनादिति भावेनोभयत्र प्रमाणमाह—रसोऽपीति। न चानेत्युक्तमुपसंहरति —अत इति । भास्करस्तु कामोऽत्रोच्यत इत्याह । तदतीव मन्दं, कामः सङ्कल्प इत्यादिश्रुतेः तस्य मनोधर्मस्य तत्परत्वानुपपत्तेः । पक्षद्वयेऽपि 'इन्द्रियाणि पराणि'इत्यादिना तारतम्योक्तेर्न प्रयोजनमस्तीति 'संस्तभ्यात्मानमात्मना'

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे कृष्णार्जुनसंवादे कर्मयोगो नाम
तृतीयोऽध्यायः ॥ ३ ॥

रा॥ एवं बुद्धेरपि परं कामं ज्ञानयोगविरोधिनं वैरिणं बुद्ध्वा आत्मानं मनः आत्मना बुद्ध्या कर्मयोगेऽवस्थाप्य एनं कामरूपं दुरासदं शत्रुं जहि नाशयेति ॥ ४३ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

ता॥'सदृशं चेष्टते' इत्याद्युपक्रान्तज्ञानयोगसप्रमादतोपसंहारद्वारा मनसः कर्मयोगेऽवस्थापनमभिधाय ध्यायार्थोऽप्युपसंह्रियते—एवमितिश्लोकेन। कामविजयात्पूर्वं मनसस्संस्तम्भनं नाम कर्मयोगे स्थापनमेव, न पुनरत्यन्तवशीकृतत्वम्, सति हि कामे मनसोऽपि क्षोभस्स्यादिति पूर्वमेवोक्तमित्यभिप्रायेण—कर्मयोगेऽवस्थाप्येत्युक्तम्। दुरासदम् अननुष्ठितकर्मयोगैर्यनिरस्तपापैरगृहीतसुदृढसत्त्वकवचैर्दोषदर्शनेऽप्यशक्तुमशक्यमित्यर्थः। अचेतनस्य कामस्य शत्रुत्वारोपेण हिंसनीयत्वोक्तिफलितं तु नाशनमेवेत्यभिप्रायेण 'प्रजहि' 'जहि' इत्यनयोर्नाशयेति व्याख्या ॥ ४३ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां
तृतीयोऽध्यायः ॥ ३

शं॥*एवम् इति॥एवं बुद्धेः परम् आत्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा आत्मानं स्वेनैव आत्मना सम्यक् समाधायेत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषम् इति ॥

इति श्रीमच्छङ्करभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

आ॥ विवक्षितम्। आत्मानं मनः। आत्मना बुद्ध्या ॥ ४२ ॥ ४३ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

ज ॥ इत्यस्य जीवात्मानं परमात्मनैकीकृत्येति व्याख्यानं शब्दबाह्यमित्याशयवानात्मशब्दद्वयं व्याख्याति—आत्मानमिति ॥ ४२ ॥ ४३ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां तृतीयोऽध्यायः ॥ ३ ॥

पा॥ *अत्र किंच, एवमिति ॥

श्रीः.

श्रियै नमः.

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

**असक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृताम् ।**
**सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता ॥ ७ ॥**

---

श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसङ्ग्रहरक्षा ॥

**असक्त्या**—परमपुरुषप्रीतिव्यतिरिक्तस्वर्गादिफलसङ्गत्यागपूर्वकमित्यर्थः। **लोकरक्षायै**-अनुविधेयानुष्ठानस्य कृत्स्नविदः स्वानुष्ठानानुसन्धानेन अकृत्स्नविदशिष्टलोकस्य निष्प्रमादकुण्टकरहितघण्टापथप्रवर्तनार्थमित्यर्थः। एतेन लोकसंग्रहशब्दो व्याख्यातः। एवं लोकरक्षणार्थं प्रवृत्तेरन्ततः स्वरक्षापर्यन्तत्वं भाष्योक्तम्-'अन्यथा लोकनाशजनितं पापं ज्ञानयोगादप्येनं प्रच्यावयेत्'—इति। **गुणेषु** सत्त्वरजस्तमस्संज्ञकेषु प्रकृतिगुणेष्वित्यर्थः। **आरोप्य कर्तृतां**-स्वस्य देशकालावस्थादिनियतविषयज्ञानचिकीर्षाप्रयत्नाश्रयत्वलक्षणां कर्तृतां गुणप्रयुक्ततया अनुसन्धायेत्यर्थः। तथाच भाष्यं—'गुणेषु कर्तृत्वानुसन्धानं च इदमेवात्मनो नस्वरूपप्रयुक्तमिदं कर्तृत्वम्, अपितु गुणसम्पर्ककृतमिति प्राप्ताप्राप्तविवेकेन गुणकृतमित्यनुसन्धानम्'—इति। 'मयि सर्वाणि कर्माणि' इत्यत्र अस्मच्छब्दाभिप्रेतं व्यनक्ति—**सर्वेश्वरे वा न्यस्येति**। गुणानां तदाश्रयस्य त्रिगुणद्रव्यस्य तत्संसृष्टस्य वियुक्तस्य च जीवस्य नियन्तरि भगवति तस्यास्तन्मूलत्वभावनया निवेश्येत्यभिप्रायः। सूत्रकारश्च 'कर्ता शास्त्रार्थवत्त्वात्' इति आत्मनः कर्तृत्वमुपपाद्य अनन्तरं तस्य परमात्माधीनत्वं 'परात्तु तच्छ्रुतेः' इत्याह। सर्वेश्वरे कर्तृत्वानुसन्धानप्रकारश्चैव भाषितः; 'इदानीमात्मनां परमपुरुषशरीरतया तन्नियाम्यत्वस्वरूपनिरूपणेन भगवति पुरुषोत्तमे सर्वात्मभूते गुणकृतं च कर्तृत्वमारोप्य कर्मकर्तव्यतोच्यते' इति। पिण्डितार्थश्च दर्शितः—'स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणैः स्वाराधनैकप्रयोजनाय परमपुरुषस्सर्वशेषी सर्वेश्वरस्स्वयमेव स्वकीयकर्माणि कारयति' इत्यादिना ॥७॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

प्र-पा॥ १. गी. ३-२१. श्लो. भा॥
२. गी. ३-२९. श्लो. भा॥
३. गी. ३-३०. श्लो॥
४. शारी. २-३-३३॥
५. शारी. २-३-४०॥
६. गी. ३-३०. श्लो. भा॥

# श्रीमद्भगवद्गीता

## चतुर्थोऽध्यायः.

रा॥तृतीयेऽध्याये प्रकृतिसंसृष्टस्य मुमुक्षोस्सहसा ज्ञानयोगेऽनधिकारात् कर्मयोग एव कार्यः, ज्ञानयोगाधिकारिणोऽप्यकर्तृत्वानुसन्धानपूर्वककर्मयोग एव श्रेयानिति सहेतुकमुक्तम्; शिष्टतया व्यपदेश्यस्य तु विशेषतः कर्मयोग एव कार्य इति चोक्तम्; चतुर्थेनेदानीमस्यैव कर्मयोगस्य निखिलजगदुद्धरणाय मन्वन्तरादावेवोपदिष्टतया कर्तव्यतां द्रढयित्वा अन्तर्गतज्ञानतयाऽस्यैव ज्ञानयोगाकारतां प्रदर्श्य, कर्मयोगस्वरूपं, तद्भेदाः, कर्मयोगे ज्ञानांशस्यैव प्राधान्यं चोच्यते; प्रसङ्गाच्च भगवदवतारयाथात्म्यमुच्यते—

ता॥अथ चतुर्थसङ्गतिं वक्तुं तृतीयाध्यायार्थं सङ्ग्रहेणोद्गृह्णाति—तृतीयेऽध्याय इति।सहेतुकमिति—ज्ञानयोगकर्मयोगयोस्सप्रमादत्वनिष्प्रमादत्वादिहेतुपूर्वकमित्यर्थः । एतेन ' असक्तया लोकरक्षायै गुणेष्वारोप्य कर्तृताम्। सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता' इति सङ्ग्रहश्लोकोऽपि व्याख्यातः।अशक्तस्य, शक्तत्वेऽप्यप्रसिद्धस्य च स्वार्थनिपुणस्य कर्मयोग एव कार्यः ; प्रसिद्धस्य त्वशक्तस्य, शक्तस्य वा स्वार्थं लोकरक्षार्थं च स एव कार्य इति तृतीयाध्यायेनाधिकारिचिन्तनं, कर्मयोगस्य ज्ञानयोगाद्वैषम्यचिन्तनं च कृतमिति भावः।अथाधिकर्तव्यतयोक्तस्य कर्मयोगस्य प्रामाणिकत्वं, ज्ञानमिश्रत्वं,स्वरूपं, तद्वैविध्यं, ज्ञानांशप्राधान्यं, प्रासङ्गिको भगवदवतार इति षडर्था इहोच्यन्त इत्याह—चतुर्थेनेति । ननु 'प्रसङ्गात्स्वस्वभावोक्तिः कर्मणोऽकर्मतास्य चाभेदा ज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते' इति चत्वारोऽर्थास्संगृहीताः,तत्कथमत्र षडर्थानुकीर्तनम्।उच्यते—'प्रसङ्गात्स्वस्वभावोक्तिः'इत्यत्रप्रसङ्गःप्रामाणिकत्वप्रसङ्गः,अस्य च भेदाः इत्यत्र स्वरूपमन्तरेण तद्भेदस्य दुर्ज्ञानत्वात्स्वरूपमपि विवक्षितम्;चकारेणवा तत्समुच्चय इति सङ्ग्रहेऽपि षडर्था एव विवक्षिताः।स्वस्वभावोक्तिः स्वस्याकर्मवश्यावतारत्वादिस्वभावोक्तिः। कर्मणोऽकर्मता कर्मयोगस्यान्तर्गतज्ञानतया ज्ञानयोगाकारता,ज्ञानस्य माहात्म्यं कर्मयोगान्तर्गतज्ञानांशस्य प्राधान्यम्;एवं चतुर्थेनेत्यादिभाष्येणायमपि श्लोको व्याख्यातः।कर्तव्यता हि तृतीयाध्याये प्रोक्ता; अतस्तद्दार्ढ्यमात्रमत्र पुरावृत्ताख्यानेन क्रियत इति—कर्तव्यतां द्रढयित्वेत्यस्य भावः।साक्षादध्यायार्थानां सङ्गतिं प्रदर्श्य प्रासङ्गिक पुनराह—प्रसङ्गाच्चेति।इममितिनिर्देशपूर्वकमुपदेशपरम्पराकथनस्य तात्पर्यमाह

शं॥ योऽयं योगः अध्यायद्वयेन उक्तः ज्ञाननिष्ठालक्षणः संन्यासः कर्मयोगोपायः, यस्मिन् वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च, गीतासु च सर्वासु

आ॥बुद्धेः परस्य माहात्म्यं कर्मभेदो ज्ञानमाहात्म्यं चोच्यतेऽस्मिन्नध्याये। पूर्वानुष्ठित·

ज॥उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोऽयमध्याय इति पूर्वसङ्गताध्यायार्थस्थितौ इह प्रकरणभेदप्रतिपादनार्थमाह— बुद्धेरिति । 'एवं ज्ञात्वा' इत्यतः प्राक्तनेन ग्रन्थेन बुद्धेः परस्य विष्णोर्माहात्म्यमुच्यते।आद्यस्य प्रकरणस्य पूर्वेण सङ्गतिं सूचयितुं—बुद्धेः परस्येत्युक्तम्।श्रेयानित्यतः पूर्वेण कर्मभेद—

श्रीभगवानुवाच—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥ २
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३

रा॥योऽयं त्वयोदितो योगः स केवलं युद्धप्रोत्साहनायेदानीमुदित इति न मन्तव्यम् । मन्वन्तरादावेव निखिलजगदुद्धरणाय परमपुरुषार्थलक्षणमोक्षसाधनतयेमं योगमहमेव विवस्वते प्रोक्तवान्, विवस्वांश्च मनवे, मनुरिक्ष्वाकव इत्येवं सम्प्रदायपरम्परया प्राप्तमिमं योगं पूर्वे राजर्षयो विदुः। स महता कालेन तत्तच्छ्रोतृबुद्धिमान्द्याद्विनष्टप्रायोऽभूत् । स

ता॥—योऽयम् इत्यादिना मन्तव्यमित्यन्तेन । योगोऽत्र कर्मयोगः।अत्र ज्ञानयोगपरत्वेन परव्याख्यानं प्रकृतासङ्गतम् कुरु कर्मेत्यादिवक्ष्यमाणविरुद्धं चेति भावः।मनोरपि जनयित्रे तदुपदेष्ट्रे च विवस्वते प्रोक्तत्वादर्जुनेनचादावित्यनुवदिष्यमाणत्वात्स्खलितमुक्तं- मन्वन्तरादाविति । निखिलजगदुद्धरणायेति—न केवल युद्धप्रोत्साहनार्थमर्जुनमात्रार्थं वा,किन्तु समस्ताधिकारिविषयापवर्गदानायेत्यर्थः।मन्वन्तरादावुपदेशात्तस्य निखिलजगत्साधारण्यं सूचितम्।नित्यसूरिशे भगवति स्थितत्वादव्ययत्वम्।अथवा अव्ययत्वमिह फलद्वारा।इममितिनिर्देशश्च पूर्वोक्तमोक्षसाधनत्वमप्यभिप्रेतीति ज्ञापनाय—परमेत्याद्युक्तम् । प्रागपि न फलान्तरार्थमुक्तमिति भावः।अहं प्रोक्तवानित्यनेन मन्वन्तरादौ,महाकल्पारम्भे,भारतसमरारम्भे वा मदन्यः कश्चिदस्य यथावज्ज्ञाता वक्ता च दुर्लभ इत्यभिप्रेतम्।प्रसङ्गादवश्य ज्ञातव्य स्वावतारयाथात्म्यं वक्तु स्वस्य मन्वादिकालविरोधरूपशङ्कोत्थापनं च कृतमिति व्यञ्जनाय — अहमेवेत्युक्तम्।विवस्वते प्रोक्तवानिति-नह्ययमनुरादिभ्यो मयोपदिष्टो बुद्धाद्यागमार्थः,किन्तु सर्ववेदात्मने विवस्वत इति भावः।विवस्वांश्च मनवे मनुरिक्ष्वाकव इति—'यद्वै किंच मनुरवदत्तद्भेषजम्'इतिसकलजगद्भेषजभूतवचनतया प्रसिद्धमर्यादाप्रवर्तनविद्याधिकृतक्षोणिनिवेशयित्रादिक्रमेण सुदेशपरंपरा प्राप्ता,ननु सम्भवद्विप्रलम्भकुदृकपाषण्ड्यादिसंसर्गप्रवृत्तेति भावः।एतत्सर्वम्—एवंसंप्रदायपरंपरयेत्यनेन व्यक्तम्। परंपराशब्देनेक्ष्वाकोरर्वाचीनानामपि ग्रहणात्कृतादियुगे संप्रदायाविच्छेदो विवक्षित इतिचाभिप्रायः।इदानीं नाशस्याभिधानादत्र—पूर्वे राजर्षय इत्युक्तम्।राजर्षयो विदुः—राजानो हि विस्तीर्णागाधमनसः,तत्रापि ऋषित्वादतीन्द्रियार्थदर्शनक्षमाः,ते च बहवः,ते चाश्वपतिजनकाम्बरीषप्रभृतयस्सर्वेऽप्यविगानेनेमं कर्मयोगमनुष्ठितवन्त इति भावः।कालदैर्घ्यस्य विच्छेदहेतुत्वप्रकारमिहशब्दसूचितमाह—तत्तच्छ्रोतृबुद्धिमान्द्यादिति।इह विचित्राधिकारिपूर्णे जगति कृतत्रेतादिषु युगेषु कालक्रमेण बुद्धिशक्त्यनुष्ठानादयो-

शा॥अयम् एव योगो विवक्षितः भगवता,अतः परिसमाप्तं वेदार्थं मन्वानः तं वंशकथनेन स्तौति भगवान्—इममिति । इमम् अध्यायद्वयेन उक्तं योगं विवस्वते आदित्याय सर्गो-

ज॥निवृत्तस्य कर्मणोऽन्यस्माद्भेदः, निवृत्त एव कर्मण्युपासनायज्ञादिरूपेण वा भेदः। ज्ञानमाहात्म्य घोषेणेति। 'इम विवस्वते योगम्' इत्युपदेशपरम्पराकथन प्रकृतानुपयुक्तमित्यतस्तत्तात्पर्यमाह—पूर्वेति ।

रा॥एवायमस्खलितस्वरूपः पुरातनो योगः सख्येनातिमात्रभक्त्या च मामेव प्रपन्नाय ते मया प्रोक्तः—सपरिकरस्सविस्तरमुक्त इत्यर्थः।मदन्येन केनापि ज्ञातुं वक्तुं चाशक्यं, यत इदं वेदान्तोदितमुत्तमं रहस्यं ज्ञानम् ॥ १ ॥ २ ॥ ३ ॥

ता॥पचीयमाना दृष्टाः,श्रुताश्चेति भावः।नष्ट इत्यत्रात्यन्तविच्छेदो नाभिमतः,व्यासभीष्माक्रूरादेरिदानीमपि विद्यमानत्वादित्यभिप्रायेणोक्त —**विनष्टप्रायोऽभूदिति** । सएवायमिति सप्रत्यभिज्ञसावधारणनिर्देशफलितमुक्तम्—**अस्खलितस्वरूप इति**।पुरातनोऽयमिति निर्देशाभ्यां कालभेदमात्रेणापि न स्वरूपे वा प्रकारे वा भेदइति सूचितम्।भक्तोऽसीति वर्तमाननिर्देशादनिवृत्ता भक्तिस्सूचिता। अल्पीयसी तु भक्तिः कदाचिन्निवर्तेतापीत्यभिप्रायेणोक्तम्—**अतिमात्रेति**।भक्तोऽसि—शास्त्रदृष्टमहत्त्वानुसंधानेन प्रीतिमानसीत्यर्थः,सखा चासि—अवतारदृष्टसौलभ्यविशेषेण प्रणयविस्रम्भवानसीत्यर्थः।ते मयेति शब्दावपि 'शाधि मां त्वां प्रपन्नम्'इतिप्रागुक्तप्रपत्तृप्रपत्तव्ययोः प्रत्यभिज्ञापकावित्ययमपि प्रवचनहेतुरितिज्ञापनायोक्त—**मामेव प्रपन्नाय ते मया प्रोक्त इति**। प्रोक्तइत्यत्र सोपसर्गधात्वर्थं विवृणोति—**सपरिकरस्सविस्तरमिति**। परिकरोऽङ्गम्; शब्दस्य प्रपञ्चो विस्तरः;अङ्गोक्तिरप्यत्र सविस्तरेतिभावः। अहं प्रोक्तवान्मयाप्रोक्त इत्याभ्यां सूचितमाह—**मदन्येनेति**।प्रलयेन वा,युगादिस्वभावेन वा सम्प्रदायविच्छेदे सति पुनरहमेव सम्प्रदायप्रवर्तकस्स्याम्, करणायत्तज्ञानेन मदन्येन हिरण्यगर्भादिनापि मदुपदेशमन्तरेण ज्ञातु वक्तु चाशक्यमित्यर्थः।सख्यभक्तिप्रपत्त्यादिगुणपौष्कल्ययुक्तायोपदेश्यत्वे भगवद्व्यतिरिक्तेन ज्ञातु वक्तु चाशक्यत्वे हेतुपर रहस्यमित्यादीति दर्शयति—**यत इति**।हिशब्दोऽत्र हेतुपरः, रहस्यत्वाद्योग्यायोपदेश्यम्;उत्तमरहस्यत्वान्मदन्येन ज्ञातुं वक्तुं चाशक्यमिति विभागः।उत्तमरहस्यत्वे हेतुः—**वेदान्तोदितमिति**। नपुंसकनिर्देशयोग्यं विशेष्यमुक्तं—**ज्ञानमिति** ॥ १ ॥ ॥ २ ॥ ३ ॥

शं॥स्वौ प्रोक्तवान् अहं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय । तेन हि योगबलेन युक्ताः समर्था भवन्ति ब्रह्म परिरक्षितुम् । ब्रह्मक्षत्रे परिपालिते जगत् परिपालयितुम् अलम्। अव्ययम् अव्ययफलत्वात्। न हि अस्य योगस्य सम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं व्येति । स च विवस्वान् मनवे प्राह । मनुः इक्ष्वाकवे स्वपुत्राय आदिराजाय अब्रवीत् ॥ १ ॥

एवम् इति। एवं क्षत्रियपरम्पराप्राप्तम् इमं राजर्षयः राजानश्च ते ऋषयश्चेति राजर्षयो विदुः इमं योगम् । स योगः कालेन इह महता दीर्घेण नष्टः विच्छिन्नसंप्रदायः संवृत्तः । हे परंतप, आत्मनः विपक्षभूताः परा इति उच्यन्ते, तान् शौर्यतेजोगभस्तिभिः भानुरिव तापयति इति परंतपः शत्रुतापन इत्यर्थः ॥ २ ॥

आ॥श्चायं धर्म इत्याह—**इममिति** ॥ १ ॥ २ ॥ ३ ॥

ज॥पूर्वैरनुष्ठितः।ये मे मतमित्युक्तेन हेतुना सहास्य समुच्चयार्थश्चशब्दः।अय धर्मो 'मयि सर्वाणि'इत्यनेनोक्तः । योगशब्दोऽप्यनेन व्याख्यातः । न केवलमुपदेशपरम्पराऽत्रोच्यते, किं तु तेषामनुष्ठानमप्युपलक्ष्यते । तच्चैतोऽपि त्वयाऽनुष्ठेयमिति प्रतिपादनार्थमिति भावः। 'कर्मणैव हि संसिद्धिम्' इत्यनेनैतद्गतार्थमितिचेन्न, गृहस्थकर्म त्वया न त्याज्यमित्यस्योपपादनायाचारस्य तत्रोक्तत्वात्; अत्र तु निवृत्तधर्मानुष्ठाने सदाचारस्योच्यमानत्वात्।अत एव तत्राचारइत्येवोक्तम्, इह त्वयं धर्म इति।'लोकेऽस्मिन्द्विविधा' इत्यत्रोक्तस्य कर्मणैवेत्युदाहरणमुक्तमिति तत्रापि न दोषः ॥ १ ॥ २ ॥ ३ ॥

रा॥अस्मिन् प्रसङ्गे भगवदवतारयाथात्म्यं यथावत् ज्ञातुमर्जुन उवाच—

अर्जुन उवाच—

अपरं भवतो जन्म परं जन्म विवस्वतः।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति॥ ४

कालसङ्ख्यया अपरम् अस्मज्जन्मसमकालं हि भवतो जन्म, विवस्वतश्च जन्म कालसङ्ख्यया परम् अष्टाविंशतिचतुर्युगसङ्ख्यासङ्ख्यातम्, त्वमेवादौ प्रोक्तवानिति कथमेतदसम्भावनीयं यथार्थं जानीयाम् ननु जन्मान्तरेणापि वक्तुं शक्यं जन्मान्तरकृतस्य महतां स्मृतिश्च युज्यत इति नात्र कश्चिद्विरोधः, न चासौ वक्तारमेनं वसुदेवतनयं सर्वेश्वरं न

ता॥'प्रसङ्गात्स्वस्वभावोक्तिः' इतिसङ्ग्रहश्लोकानुसारेणाह—अस्मिन्प्रसङ्ग इति। कर्तव्यतादृढीकरणार्थकथाप्रसङ्ग इत्यर्थः। भगवदवतारयाथात्म्यम् अकर्मवश्यत्वादिरूपम्। यथावदिति प्रातिभासिकत्वादिप्रतिक्षेपकप्रमाणोपपत्तिपूर्वकमित्यर्थः। परावरशब्दाभ्यां न देवमानुषत्वरूपजातिवैषम्यमुच्यते, तस्योपदेशविरोधित्वाभावात्, देवानामपि देवत्वं च कृष्णस्य विदितत्वात्, जन्मशब्दस्य जननवाचितया साक्षाज्जातिवाचकत्वाभावात्, आदाविति कालविरोधस्य च व्यक्तमुक्तत्वात्, 'बहूनि मे व्यतीतानि' 'यदायदा हि' 'युगेयुगे' इत्येवमादिरूपस्योत्तरस्य च कालविरोधपरिहाररूपत्वात्। अतः परावरशब्दौ कालसङ्ख्यात्कर्षापकर्षविषयावित्यभिप्रायेणोक्तं—कालसङ्ख्ययेति। अपरत्वहेतुतया विरोधि ■ कालावधिं दर्शयति—अस्मदिति। समकालमिति—अनतिविप्रकृष्टमित्यर्थः। त्वच्छब्द इदानीन्तनत्वाभिप्रायतया विरोधपर इतिद्योतनाय त्वमेवेत्युक्तम्। कथमेतदित्याक्षेपसूचितमुक्तम्—असम्भावनीयमिति। विजानीयामित्यत्रोपसर्गविवक्षितमाह—यथार्थमिति। जन्मान्तरस्यैवाभावाद्वा, जन्मान्तरानुभूतस्य स्मृत्ययोगाद्वा, वक्तुर्जन्मान्तरस्मृतिमत्तया श्रोतुरविदितत्वाद्वा खल्वेतजन्मावलम्बनेन विरोधचोद्यम्, न चैतदखिलमत्र सम्भवतीति प्रथमाक्षेपं परिहरति—नन्विति। जन्मान्तरेणापि शक्यमिति—नहि तदानीन्तनेन जन्मना तदानीन्तनायोपदेशो विरुद्ध इत्यर्थः। महतामिति—न केवलमीश्वरस्य कृष्णस्य, अन्येषामपि महतामिति भावः। श्रूयन्ते हि जातिस्मरवृत्तान्ताः। 'जातिं स्मरति पौर्विकीम्' इति च ■नु। युज्यत इति—अनुभवेन संस्कारे प्रागेव निष्पन्ने तस्य च अदृष्टविशेषादिवशादुद्बोधे जन्मान्तरानुभूतस्मृतौ न काचिदयुक्तिः यथा प्रथमस्तन्यपाने स्तन्यस्य पिपासाशान्तिहेतुत्वस्मृताविति भावः। ■हतामन्येषां स्मृतिः, ईश्वरस्य तु प्राचीनवृत्तान्तगोचरसाक्षात्कारः स्मृतिरित्युपचर्यते। कश्चिदिति—कालविप्रकर्षरूपो वा कारणाभावादिरूपो वेत्यर्थः। असाविति—वृद्धोपसेवादिभिः श्रुतादिबहुलोऽर्जुनः। वक्तारमिति—विवस्वते प्रोक्तवानहमिति स्वस्मै वक्तारम्, यद्वा विवस्वते

प्र पा॥ १ मानवे

श॥दुर्बलान् अजितेन्द्रियान् प्राप्य नष्टं योगम् उपलभ्य लोकं च अपुरुषार्थसम्बन्धिनम्—स इति। स एव अयं मया ते तुभ्यम् अद्य इदानीं योगः प्रोक्तः पुरातनः भक्तः असि मे सखा च असि इति। रहस्यं हि यस्मात् एतत् उत्तमं योगज्ञानम् इत्यर्थः॥ ३॥

भगवता विप्रतिषिद्धम् उक्तम् इति मा भूत् कस्यचित् बुद्धिः इति परिहारार्थं

ज॥ननु 'न त्वेवाहम्' इत्यादिना सर्वप्रकारेणोत्पत्तिविनाशराहित्यमुक्तं भगवतः, तत् श्रुत्वा कथम-

रा॥जानाति, *यत एवं वक्ष्यति †'परं ब्रह्म परं धाम पवित्रं परमं भवान्। पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्॥ आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा। असितो देवलो व्यासस्स्वयं चैव ब्रवीषि मे' इति। युधिष्ठिर· ... कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः। ... इत्येवमादिषु। कृष्णस्य हि कृते इति कृष्णस्य शेषभूतमिदं कृत्स्नं जगदित्यर्थः। अत्रोच्यते—

ता॥ वक्तारमित्यर्थः। **एवं वसुदेवतनयमिति**—मानुषव्यापारजन्मभ्यां तिरोहितेश्वरभावमपीत्यभिप्रायः। **सर्वेश्वरमिति**—विवस्वदादीनामपीश्वरमिति भावः; यद्वा, गोवर्धनोद्धरणाद्यतिमानुषवृत्तान्तैरवतारदशायामेव चतुर्भुजत्वादिना च व्यञ्जितेश्वरत्वमिति भावः। उक्तज्ञानसद्भावं कार्येण व्यवहारेण कारणेनोपदेशेन च स्थापयति—**यतएवमिति**। **एवम्** अनेकाततमोपदेशादिभिरीश्वरत्वनिष्कर्षपूर्वकमित्यर्थः। अर्जुनस्य स्ववाक्येन स्वोक्तमहर्षिगणोपदेशेन च ज्ञानानुमानमुक्तम्; भारतकथावगतेन वन्धूपदेशेन च ज्ञानवत्तामाह—**युधिष्ठिरेति**। बहुष्वपि वृत्तान्तेष्वाप्ततमेभ्यो बहुभ्यो बहुधा श्रुतमित्यर्थः। **कृष्णएवेति**—स्थितिहेतुत्वेन प्रसिद्धस्स एवोत्पत्त्यादेरपि हेतुः, नतु ब्रह्मरुद्रादिः प्रधानादिर्वा; यद्वा लौकिकैः पुरुषैः वसुदेवतनयतया प्रतीयमानः कृष्णएवेत्यर्थः। हिशब्दः 'एको ह वै नारायण आसीत्' इत्यादिश्रुतिप्रसिद्धिं दर्शयति। **लोकानामिति**। 'लोकस्तु भुवने जने'। तत्रान्यतरविवक्षायामितरदार्थम्;उत्पत्त्यप्ययशब्दावत्रोत्पादकनाशकपरौ। चकारः प्रसिद्धिप्रकर्षादनुक्तं स्थितिहेतुत्वादिकं समुचिनोति। एवं 'यतो वा इमानि भूतानि' इत्यादिना ब्रह्मलक्षणतयोक्तं सर्वकारणत्वमुक्तम्। अतएव हि 'परं ब्रह्म' इत्यर्जुनोक्तिः, कृष्णस्य हीत्यत्र हिशब्देन 'पतिं विश्वस्य' 'करणाधिपाधिपः' इत्यादिप्रसिद्धिस्सूच्यते। कृते इत्यस्य अनेकार्थसाधारणत्वात्तादर्थ्यपरत्वव्यञ्जनायाह—**कृष्णस्य शेषभूतमिति**। अत्र च्विप्रत्ययाभावात्, स्वाभाविकत्वं सूचितम्; 'दासभूतास्स्वतस्सर्वे' इत्यादिवत्। कृष्णस्य कृते भूतमिति कारणार्थमुत्पन्नं सत्तायोगिचेत्यर्थः। 'जन्माद्यस्य

**प्र-पा**॥ *य एवं.पा॥ †गी. १० १२, १३॥
‡भारते. सभापर्वणि-३८-अध्याये-२६.श्लो॥
१. महोपनिषदि. १-१॥
२. नामलिङ्गानुशासने. तृतीयकाण्डे नानार्थवर्गे. कान्तेषु. १५७ श्लो॥ ३. तै. भृ. १-१॥
४. तै.नारा. १०. १॥ ५ श्वे. ६-९॥
६. पाञ्चरात्रे॥ ¶'दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः। नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च॥' दासाश्च ते भूताश्च दासभूताः दासत्वेन लक्षणं सत्ताकाइत्यर्थः। स्वशब्दः—'आत्मानः' इत्युक्तात्मपरः; नत्वागन्तुकोपाधित इत्यर्थः। अनादिभगवन्मायातिरोहितत्वेन दास्यरसानाविर्भावात्, सत्यामपि दास्ययोग्यतायान्तरफलोपधानं नास्तीति भावः। सर्वशब्दः त्रिविधात्मवर्गपरः। हिशब्दः—'पतिं विश्वस्य' इत्यादिप्रमाणप्रसिद्धिपरः। 'आत्मानो दासभूताः' इति व्याहृत, व्यापनभरणस्वाम्यानामात्मपदार्थेत्वात्, स्वामिनश्च स्वत्वानुपपत्तेः—इत्याशङ्का परमात्मसमाख्यया परिहृता। ननु 'असन्नेव स भवति' इत्यत्र ज्ञानस्य सत्ताप्राप्यकत्वं श्रुतमित्यत्राह—नान्यथेति। लक्षणं—भूतशब्दोपात्तभगवत्प्रियतमत्वरूपसत्ताज्ञापकमित्यर्थः। सिद्धान्ते कैङ्कर्यस्यानुभवजनितप्रीतिकारितत्वेन प्रेमोत्कर्षगर्भतया, अनुभवापेक्षया कैङ्कर्यमेव भगवत्प्रियतमम्; 'असन्नेव' इत्यत्र कैङ्कर्यपर्यन्तज्ञानं भगवत्प्रियतमत्वलक्षणसत्तातिशयलाभहेतुरित्यपि विवक्षितमिति भावः। तादृशकैङ्कर्यं 'गुणैर्दास्यमुपागतः' इत्यादिरीत्या भगवत्कटाक्षविशेषेण बद्धदशायामपि सम्भवतीत्यभिप्रायेणाह—बन्धे इति। ननु 'सोऽश्नुते' इत्यादावनुभवस्यैव सामान्येन ब्रह्मविद्याफलत्वश्रवणात् दास्यमेव सत्तालाभहेतुरित्युक्तमयुक्तमित्यत्राह—मोक्षे इति। मोक्षेच तथैवेत्यर्थः॥
७. ब्रह्मसूत्रम्. १-१-२॥ 'अस्य' विचित्रचिद-

रा॥जानात्येवाय भगवन्त वसुदेवसूनुं पार्थ., जानतोऽप्यजानत इव पृच्छतोऽयमाशयः—निखिलहेयप्रत्यनीककल्याणकतानस्य सर्वेश्वरस्य सर्वज्ञस्य सत्यसङ्कल्पस्यावाप्तसमस्त-

ता॥यत. "इमानि भूतानि' इत्यादिवदत्रापीदशब्दस्तत्प्रमाणसिद्धनिचिनचेतनाचेतनसमुदायपर.; पूर्वार्थोक्त सृज्यत्वसहार्यत्वादिप्रकारानुवादपरो वा । तेन तदधीनोत्पत्त्यादिमत्त्वात्तदध्य हेतुरुक्तो भवति, 'कस्योदरे' इत्यादिवत्। अथ चोद्यवादिनोक्तमभ्युपगमेन प्रतिवक्ति—जानात्येवेति। अवधारणेन नास्मिन्नशे विवाद इति सूचितम्।अयमितिनिर्देश पूर्वप्रच्छ्रतार्थत्व सूचयति।वसुदेवसूनु भगवानिति जानातीत्यर्थ । नामपरो गुणपरो वात्र भगवच्छब्द । वसुदेवसूनुपार्थशब्दाभ्या मातुलसुतत्वपैतृष्वसेयत्वसूचनेन इतरपुरुषवदीश्वरत्वादितिरोधायकप्राकृतसम्बन्धे सत्यपि मुहुतरमातुरुपदेशवशाच्च जानातीत्यभिप्रेतम्। तर्हि प्रश्नो निरवकाश इत्यत्राह—जानतोऽपीति।नात्यन्ताज्ञातमनेन पृच्छ्यते, ज्ञातमेव विशेषान्तरजिज्ञासया परिपृष्टमिति भाव । अजानत इवेत्यनेन जिज्ञासुप्रश्नप्रकारश्च सूचित । अज्ञाताशयभुत्स। जन्मादेर्मिथ्यात्वादिशङ्काश्च जनयन्तो भगवति ज्ञाताशयविशेषा उपादीयन्ते— निखिलेत्यादि षष्ठ्यन्तपदै ।निखिलहेयप्रत्यनीकेति —य परगतमपि जन्मजरादिहेय निवर्तयति,स कथ स्वय तदेवोपाददीतेति भाव । कल्याणैकतानस्येति—स्वरूपानन्दतृप्तस्य किं जन्मनेति भाव.। सर्वेश्वरस्येति —यदि कश्चित्स्वच्छन्दोऽस्य नियन्ता स्यात्तदा जन्मादि घटेत,नच सोऽस्तीत्याशय । सर्वज्ञस्येति—यद्यसौ स्वस्य हितमहित च न जानाति, तदा हि स्वेच्छयैव बालादीनामप्रयादिस्वर्णवज्जन्मादिपरिग्रह स्यादित्यभिप्राय । सत्यसङ्कल्पस्येति हिताहितज्ञाने सत्यपि कश्चित्कुपके पतिष्यामीति कर्दमे पतति, न चासौ तथेति हृदयम् यद्वा लोकरक्षणाद्यर्थमेवावतार इति हि परमोत्तर स्यात् तदप्ययुक्त सङ्कल्पमात्रेण रक्षणाद्युपपत्तेरिति भाव । अवाप्तसमस्तकामस्येति—यदि साध्य किञ्चित्प्रयोजन स्यात्, तदा तदर्थं जन्मादि परिगृह्णीत, नच तदप्यस्तीति भाव ।एव च सतीश्वरो न वस्तुतो जन्मादिमान्,अकर्मवश्यत्वात्, मुक्तात्मवत् इत्यन्वयेन,यो जन्मादिमान्,स कर्मवश्य ,यथा ससारी इति व्यतिरेकेण चैकमनुमानम्, तत्रैव

प्र पा॥चिन्निमश्रस्य ज्यवस्थितमुदरदु खोपभागस्य, जगत जन्मादि जन्मस्थितिलया ,यत यस्मात् सर्वेश्वरात्, जन्मादय प्रवर्तन्ते, तद् ब्रह्मेत्यर्थ ॥

१ स्तोत्ररत्ने १४ श्लो॥ †'कस्योदर हरविरिञ्चमुखप्रपञ्च को रक्षतीममजनिष्ट च कस्य नाभ । क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्य क केनवैष परवानिति शक्यशङ्क ॥' परावरतत्त्वविवेकमाह —कस्येति श्लोकेन॥ प्राकृतप्रलयदशाया हरचतुर्मुखादिरूपेण लक्ष्यमाणश्चिदचिदात्मक प्रपञ्च , कस्योदरे—त्वदन्यस्य कस्यान्तरसूक्ष्मतयाऽवस्थित इत्यर्थ । सृष्टे पुरुषार्थशेषतया धर्मादिपुरुषार्थसाधन स्थितिकालभावित्वात् तत्प्राधान्यविवक्षया क्रममुल्लङ्घ्याह—को रक्षतीति । अथ जनिहेतुत्वमाह—अजनिष्टचेति। अथैवमेव परावरत्वविभाजकत्रिविक्रमव्यापारमाह—क्रान्त्वेति । अन्यमपि निगरणादिकमाभूतमहत्स्वदाम शक्यमाश्चर्यव्यापारमाह—निगीर्येति। 'उद्गिरति' इति वर्तमाननिर्देश कल्पान्तरेऽपि तथा प्रवृत्तिप्रवाहज्ञापनार्थ। तस्य यथापूर्वत्वख्यापनाय पुनश्शब्द । एव महार्थत्वसहर्तृत्वरक्ष्यत्वरक्षकत्वजन्यत्वजनकत्वाधिष्ठयत्वाधिष्ठातृत्वादिवैधर्म्यवशप्रत्यक्षैश्च हेतुभिस्त्वदन्येषु कस्मिन्नपि स्वातन्त्र्यशङ्काच न स्यादित्याह—केनेति ॥ त्वदन्येनेति विशेषणीयम्। वाशब्दश्चार्थे । मुक्तेषु नित्येषु च शक्तिभूयस्त्वेऽपि सर्वशरीरत्वादिलक्षण स्वातन्त्र्य नास्ति, किमुत क्षेत्रज्ञेषु हरविरिञ्चादिषु इत्यभिप्रायेण निर्दिशति—एष इति ॥ अत्र सर्वेषामाधारतया नियन्तृतया शेषितया चाधिक पर , तद्वान् - परवान्। प्रामाणिकाना दृढतरबहुप्रमाणसिद्धेऽर्थे तद्विपरीतशङ्काऽपि नास्पदत इत्यभिप्रायेणात्र शङ्काप्रतिक्षेप ॥

२. ज्ञाता विशेषा . पा ॥

र ॥ कामस्य कर्मपरवशदेवमनुष्यादिसजातीयं जन्म किमिन्द्रजालादिवन्मिथ्या, उत सत्यं, सत्यत्वे च कथं जन्मप्रकारः, किमात्मकोऽयं देहः, कश्च जन्महेतुः, कदा च जन्म, किमर्थं च जन्मेति परिहारप्रकारेण प्रश्नार्थो विज्ञायते ॥ ४ ॥

ता॥पक्षसाध्यादौ जन्मकारणभूतेश्वरादिनियोगाविषयत्वादिति द्वितीयम्; द्वयोरप्यनुमानयोः यो यत्कारणरहितः न स तत्कार्यवान्, यथा संप्रतिपन्न इति सामान्यतो वा व्याप्तिः; सर्वेश्वरत्वादित्युक्ते तु न दृष्टान्तः; केवलव्यतिरेकिनिरपेक्षा तु देहपरिग्रहरहितघटादिसपक्षसद्भावात्केवलव्यतिरेकिप्रामाण्यस्य च सामान्यतो यामुनाचार्यादिभिर्निरस्तत्वादयुक्ता। एवं देहपरिग्रहाद्यभावे सङ्कुचितज्ञानशून्यत्वात्, प्रतिहतसङ्कल्परहितत्वात्, अपूर्णकामत्वरहितत्वात्, साध्यप्रयोजनरहितत्वादिति मुक्तात्मघटादिदृष्टान्तेन हेतवः; यद्वा परमसाम्यापन्नान् मुक्तानेव दृष्टान्तीकृत्य सर्वज्ञत्वात्सत्यसङ्कल्पत्वादवाप्तसमस्तकामत्वादित्येव हेतवः, एव यदि जन्मादयस्स्युः, तदा कर्मवश्यत्वमनीश्वरत्वमसर्वज्ञत्वमसत्यसङ्कल्पत्वमपूर्णकामत्व च क्षेत्रज्ञवत्स्यादिति प्रसङ्गाश्च विवक्षिताः।'निखिलहेय'इत्याद्युक्तोभयलिङ्गत्वे च हेतवस्सर्वेश्वरत्वादयः। पूर्वोक्ताकारविरोधितया मिथ्यात्वशङ्काहेतुः सामान्यतो विदितो जन्मप्रकार उच्यते—**कर्मपरवशदेवमनुष्यादिसजातीयमिति।** कर्मपरवशा देवमनुष्यादयः, तेषां सजातीय तज्जन्मसमानतया प्रतीयमानमित्यर्थः; यद्वा जन्मशब्दोऽत्र जायमानविग्रहपरः, ईश्वरेण परिगृह्यमाणत्वादिन्द्रजालादिवदित्युक्तम्। स्वेच्छया परेषां विचित्रभ्रमजननं हीन्द्रजालम्; तेनात्र तत्प्रतिभातलक्षणा। आदिशब्देन शैलूषभूमिकापरिग्रहादि गृह्यते। मिथ्यात्वपक्षे न तत्र कश्चित्प्रकारो निरूपणीय इति कृत्वा सत्यत्वपक्षे शङ्कते—**सत्यत्व इति।** **कथमिति**—किं पारमेश्वरस्वभावपरित्यागेन, अन्यथा वेत्यर्थः। **किमात्मक इति**—किं त्रिगुणात्मकः, उताप्राकृत इत्यर्थः। **अयमिति**—भूतसङ्घसंस्थानवत्प्रतीयमान इति भावः। **देह इति**—उपचयरूपतया ह्युपलभ्यत इति भावः। **कश्च जन्महेतुरिति**—किं सङ्कल्पमात्रमुतेश्वरस्यापि स्वेच्छापरिगृहीते पुण्यपापे इत्यर्थः। **कदाचेति**—किं पुण्यपापविपाककाले, उत धर्मग्लान्यादिकाल इत्यर्थः। **किमर्थश्चेति**—किं सुखदुःखोपभोगार्थम्, उत साधुपरित्राणाद्यर्थमित्यर्थः। इत्ययमाशय इत्यन्वयः। ननु 'अपरम्'इतिश्लोके व्याघातमात्रमेव चोद्यते; तत्र बहुषु प्रश्नेष्वाशय इति कुतोऽवगतमित्यत्राह—**परिहारेति।** अयमभिप्रायः—नह्यन्यस्य प्रश्ने तदन्यविषयतया प्रतिवचनमुपपद्यते; तथा सति प्रतिवक्तुरनभिप्रायज्ञतादिप्रसङ्गात्; अतो यावद्विषयं प्रतिवचनं तावद्विषय एवात्र प्रश्न इत्यभ्युपगन्तव्यम्। अत्र च प्रतिवचने चतुर्भिः श्लोकैर्जन्मसत्यत्व, जन्मप्रकारो, देहयाथात्म्यं, जन्मनो हेतुकालप्रयोजनानि च क्रमात्प्रतिपाद्यानि प्रतीयन्ते; अतस्तान्येव प्रष्टव्यतयाभिप्रेतानीति ॥ ४ ॥

प्र·पा ॥ १. सर्वेश्वरत्वादित्युक्तेन दृष्टान्त . पा॥

शा॥चोद्यम् इव कुर्वन् अर्जुन उवाच—अपरम् इति। अपरम् अर्वाक् वसुदेवगृहे भवतो जन्म। परं पूर्वं सर्गादौ जन्म उत्पत्तिः विवस्वतः आदित्यस्य। तत् कथम् एतत् विजानीयाम् अविरुद्धार्थतया, यः त्वमेव आदौ प्रोक्तवान् इमं योगं स एव इदानीं मह्यं प्रोक्तवान् असि इति ॥ ४ ॥

आ॥मयि सर्वाणीत्युक्तम्। तन्माहात्म्यमादितो ज्ञातुं पृच्छति—

ज॥परमिति पृच्छतीत्यत आह—**मयीति।** तन्महात्म्यमित्युपलक्षणम्। आदितः प्रमितिकारणतः। मयि सर्वाणीत्यत्र परमेश्वरस्य माहात्म्य पूज्यत्वादिलक्षणमुक्तम्। अर्जुनस्य पूजकत्वादिकम्। तमिममीश्वरजीवयोः पूज्यपूजकत्वादिना भगवताङ्गीकृतं भेदं प्रमाणेन ज्ञातुमेवं पृच्छतीत्यर्थः ॥ ४ ॥

श्रीभगवानुवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५

या॥अनेन जन्मनस्सत्यत्वमुक्तम्, 'बहूनि मे व्यतीतानि जन्मानि' इति वचनात्, 'तव च' इति दृष्टान्ततयोपादानाच्च ॥ ५ ॥

अवतारप्रकारं, देहयाथात्म्यं, जन्महेतुं चाह—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६

ता॥एवमुत्तरं श्रीभगवानुवाच बहूनीत्यादिभिः। नहि पूर्वजन्मनामेकत्वबहुत्वे पृष्टे, न च तज्ज्ञानाज्ञाने—इति शङ्कायामाह—अनेनेति। कथं जन्मनस्सत्यत्वमुक्तं बहुत्वातीतत्वतज्ज्ञानादिर्हि वाचनिकतया प्रतीयत इत्यत्राह—बहूनीति। अयमभिप्रायः—इदानीन्तनस्त्वं तदानीन्तनाय कथमुक्तवानिति प्रश्ने जन्मान्तरेणाहमुक्तवान्, तच्चेदानीमनुसन्धाय वदामीति साक्षादुत्तरमुच्येत, तस्य च प्रश्नस्यान्यपरत्वस्य पूर्वं सहेतुकमुक्तत्वादवश्यं प्रष्टव्येष्वंशेषु यत्परत्वमत्र व्याकर्तुं शक्यं तत्पराण्येव बहूनीत्यादिविशेषणानि सत्यत्वे हि बहुत्वातीतत्वादीनि स्वरसानि, जन्मानीतिचोक्तम्, न जन्मप्रतिभासा इति, तवचेत्यदृष्टस्यार्थस्य उपादानमप्येतत्सत्यत्वदृष्टान्ताभिप्रायमन्तरेण न घटते, नचार्जुनस्य जन्म मिथ्या, तस्य वा तथात्वप्रतिभासः, तत्सम्भवे वा कृष्णजन्मनि कुतोऽस्य संशयः—इति ॥ ५ ॥

अथ प्रकारादिप्रश्नत्रयोत्तरमनन्तरश्लोक इत्याह—अवतारेति। अजाव्ययशब्दाभ्यां प्रकृतिपुरुषयोरिव स्वरूपतो धर्मतश्च विकारा न सन्तीत्युच्यते, अजाव्ययशब्दौ कर्मकृतजन्ममरणनिवृत्तिपरौ वा, तेन हेयप्रत्यनीकत्वमुक्तं भवति। 'भूतानामीश्वरोऽपि' इति कल्याणगुणाकरत्वाप्रच्युतिरुपलक्ष्यते। यद्वा अजशब्देन स्वरूपतः शरीरद्वारा च जन्मयुक्ताचित्क्षेत्रज्ञाभ्यां व्यावर्तनम्।'अव्ययात्मा'इत्यात्मशब्दस्य स्वभावपरतया नञोऽत्यन्ताभावपरतया च कदाचिज्ज्ञानसङ्कोचादिमतो मुक्ताद्व्यावृत्तिः। ईश्वरशब्देन नित्यासङ्कुचितज्ञानेभ्यो नित्येभ्यो व्यवच्छेदः।'अव्ययात्मा'इत्यत्रापि पूर्वोत्तरवत्'अपिसन्'इत्यनुषञ्जनीयम्।अत्र च

श॥या वासुदेवे अनीश्वरासर्वज्ञाशङ्का मूर्खाणां तां परिहरन् श्रीभगवानुवाच, यदर्थो हि अर्जुनस्य प्रश्नः—बहूनि इति ॥ बहूनि मे मम व्यतीतानि अतिक्रान्तानि जन्मानि तव च हे अर्जुन। तानि अहं वेद जाने सर्वाणि न त्वं वेत्थ न जानीषे, धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात्। अहं पुनः नित्यशुद्धबुद्ध*मुक्तस्वभावत्वात् अनावरणज्ञानशक्तिः इति वेद अहं हे परन्तप ॥ ५ ॥

कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावे जन्म इति? उच्यते—अजोऽपि इति ॥

आ॥ अपरमिति ॥ ४॥ ५॥

न तर्ह्यनादिर्भगवानित्यत आह—अजोऽपीति। अव्ययः आत्मा देहोऽपीत्यव्ययात्मा

ज॥अत एव ज्ञाताज्ञयोर्भगवानेव च न त्वं वेत्सीति परिहरति। अन्यथाऽनुपयुक्तं तव वक्तव्यमेव ॥ ५ ॥

प्रश्नस्य परिहृतत्वात् 'अजोऽपि' इति किमर्थमित्यत आह—न तर्हीति। यदि जन्मानि व्यतीतानि तर्हीत्यर्थः। अनादिर्देहतोऽपि, उपलक्षणं चैतत्, मरणरहितः सर्वभूतानाम् ईश्वरश्चोऽप्यपि

पा॥ *शुक्रमुक्तस्वभाव ॥

रा॥अजत्वाव्ययत्वसर्वेश्वरत्वादि सर्वं पारमेश्वरं प्रकारमजहदेव स्वां प्रकृतिमधिष्ठाय

ता॥पूर्वार्धेन तृतीयचतुर्थपादाभ्यां च प्रश्नत्रयस्य क्रमात्परिहारः । आदिशब्देनेश्वरत्वोपलक्षितसर्वज्ञत्व-सत्यसङ्कल्पत्वावाप्तसमस्तकामत्वादीनि गृह्यन्ते । सर्वमिति—न कस्यचिदपि स्वभावलेशस्य हानिरिति भावः । परमेश्वरसम्बन्धि पारमेश्वरं परमेश्वरत्वप्रयुक्तमित्यर्थः । अपिसन्नित्यस्य वर्तमाननिर्देशस्य तात्पर्यमाह— अजहदेवेति । एतेन तत्तदवतारेषु तासुतास्ववस्थासु च पारमेश्वरस्वभावस्य सतएव स्वेच्छया तिरोधानमात्रमिति सूचितम्; तथा चाहुः'गुणैष्षड्भिः'इत्युपक्रम्य 'भवान् सर्वत्रैवत्वगणितमहामङ्गलगुणः, इति । अवतारेषु हि परमेश्वरत्वं व्यपदिश्यते । 'ईशन्नपि महायोगी' 'कृष्ण एव हि

प्र पा॥ १ वरदराजस्तवे. १६. श्लो॥ '"गुणैष्षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ ततस्तिस्रस्तेषां त्रियुगयुगलैर्हि त्रिभिरभूः । व्यवस्था या चैषा ननु वरद साऽऽविष्कृतिवशात् भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः ॥' हे वरद, त्रियुग 'ज्ञानबलैश्वर्यवीर्यशक्तितेजांसि' इति त्रीणि युगानि यस्य तथोक्त भगवन्; तव प्रथमतरमूर्तिः — परमाकाशनिलयपरवासुदेवमूर्तिः, एतैः षड्भिर्गुणैः, बभौ—भातिस्म। ततः — अनन्तरम्, तिस्रः — मूर्तयः, 'मूर्तयः' इति वचनव्यत्यासेनानुषङ्गः । तेषां — गुणानाम्, त्रिभिर्युगलैः—युगलत्रयेण, अभूः—आविरभूरिति हीति-प्रसिद्धौ । एषा व्यवस्था सङ्कर्षणमूर्तौ ज्ञानबले, प्रद्युम्नमूर्तौ ऐश्वर्यवीर्ये, अनिरुद्धमूर्तौ शक्तितेजसी, इति यासौ व्यवस्था उक्तेत्यर्थः । सा च आविष्कृति-वशात् —उपासकसौकर्याय, गुणयुगलमेकमेव तत्तन्मूर्तावाविष्कर्तव्यमिति सङ्कल्पवशादित्यर्थः । तर्हि गुणान्तराभावमाशङ्क्याह — भवानिति । भवांस्तु सर्वत्र —सर्वमूर्तावपि, अगणितमहामङ्गलगुण एव —असङ्ख्यातापरिच्छेद्यकल्याणगुणविशिष्ट एव, अत्र 'सन् ज्ञानबलोद्गारात् रूपं साङ्कर्षणं हरेः । ऐश्वर्यवीर्यसम्भेदात् रूपं प्राद्युम्नमुच्यते ॥ शक्तितेजस्समाकर्षाद् आनिरुद्धं तनुर्हरेः' इत्याद्यहिर्बुध्न्यसंहितावचनमनुसन्धेयम् ॥

२. भारते. उद्योगपर्वणि. ६७-अ-१४. श्लो॥ 'ईशन्नपि महायोगी सर्वस्य जगतो हरिः । कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥'—ईशन्नपि ईशानोऽपि, कीनाशः कर्षकः ॥

३. भारते. सभापर्वणि. ३८-२३ ॥

शां॥अजोऽपि जन्मरहितोऽपि सन्, तथा अव्ययात्मा अक्षीणज्ञानशक्तिस्वभावोऽपि सन्, तथा भूतानां ब्रह्मादिस्तम्बपर्यन्तानाम् ईश्वरः ईशनशीलः अपि सन्, प्रकृतिं मम वैष्णवीं

आ॥'अनन्तं विश्वतोमुखम्' इति रूपविशेषणम् । उत्तरत्र 'एतन्नानावताराणां निधानं बीजमव्ययम्' इतिच। जगृह इति तु व्यक्तिः। युक्तयस्तूक्ताः। आत्मानादित्वं तु सर्वसमम्।

ज॥द्रष्टव्यम्; तथा चोक्तविरोध इति भावः । ननु देहतोऽप्यनादित्वादेराक्षेपेऽजत्वादिमात्रं कथमुच्यत इत्यतोऽव्ययात्मेत्येतावत् देहतोऽप्यविनाशमाचष्टे,तत्साहचर्याद्'अजोऽपि'इत्येतदपि तथैव व्याख्येयमिति भावेनाह—अव्ययइति । अपिपदात्परम् अस्मीत्यध्याहार्यम्।स्यादेव व्याख्यानं, यदि भगवद्विग्रहस्याप्यव्ययत्वं गीताचार्याभिमतं स्यात्; तदेव कुत इत्यत आह—अनन्तमिति । इति च रूपविशेषणमिति वर्तते । एवं तर्हि कथं तत्रैव 'जगृहे पौरुषं रूपम्' इति ग्रहणमुच्यते,गृहीतस्य च त्यागो नियत एवेत्यत आह—जगृह इति । व्यक्तिरिति उच्यत इति शेषः। कुत एवं कल्प्यत इत्यत आह—युक्तय इति। युज्यत एभिरिति युक्तयः प्रमाणानि । असम्भावनापरिहारार्था अचिन्त्यशक्तित्वाद्या युक्तयो वा उक्ता द्वितीये। अस्तु भगवद्विग्रहस्याप्यव्ययत्वम्; अत्र तु स्वरूपस्यैवोच्यत इति किं न स्यादित्यत आह—आत्मेति । आत्मनः स्वरूपस्य देहस्याप्यव्ययत्वोपपादनेनाजत्वमपि साहचर्यात्तस्यैवेति योऽभिप्रायस्तं प्रकटयितुमव्ययत्वमुपक्रम्यानादित्वमित्युक्तम्। सर्वसमं जीवानामप्यस्ति ; अतस्तद्विषयो नाक्षेपः परि-

रा॥आत्ममायया सम्भवामि।प्रकृतिः-स्वभावः,स्वमेव स्वभावमधिष्ठाय स्वेनैव रूपेण स्वेच्छया सम्भवामीत्यर्थः। स्वस्वरूपं हि *'आदित्यवर्णं तमसः परस्तात्'†'क्षयन्तमस्य रजसः पराके' ‡'यएषोऽन्तरादित्ये हिरण्मयः पुरुषः'१'तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः'२'सर्वे

ना॥लोकाना' 'व्यक्तमेव महायोगी परमात्मा' इत्यादिभि । नात्र प्रकृतिशब्देन'प्रकृतिं स्वामवष्टभ्य विसृजामि' इत्यादिष्विव त्रिगुणा प्रकृतिरुच्यते, अवतारेष्वपि तद्विग्रहस्य त्रिगुणोपादानत्वाभावात् । तथोक्त 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा' इति । अतोऽत्रावतारोपयुक्तान्या प्रकृतिरुच्यतइत्यभिप्रायेणाह— प्रकृतिस्स्वभाव इति। 'प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे' इति नैघण्टुकाः । विग्रहस्यापि 'नित्यालिङ्गा स्वभावसंसिद्धिः' इत्येकायनश्रुत्यनुसारेण निरुपाधिकस्वासाधारणविशेषणत्वात् , स्वभावशब्देनोपादानम् । गोबलीवर्दन्यायाच्चात्र विग्रहाख्यस्वभावविशेषपरता। स्वभावपर्यायप्रकृतिशब्देनापृथक्सिद्धिलाभेऽपि स्वामितिनिर्देशो जीवसाधारणत्रिगुणप्रकृतिव्यवच्छेदार्थ इत्यभिप्रायेणोक्त—स्वमेवेति । अन्तरादित्याधिकरणभाष्येऽप्येतद्व्याख्यात'स्वमेव स्वभावमास्थाय न संसारिणां स्वभावमित्यर्थ.'इति।प्रकृतिशब्दस्यात्र विग्रहपरतामधिष्ठायेत्यनेन सूचित स्वातन्त्र्य च दर्शयति—स्वेनैवरूपेणेति । यद्वा स्वमेव स्वभावमित्याद्येकवाक्य सङ्कलितार्थपरम् ,तदधिष्ठायेत्येतदन्त पूर्वार्धस्यार्थः,स्वेनैव रूपेणेति तु तृतीयपादस्य,स्वेच्छयेति चतुर्थपादस्य,अस्या योजनाया प्रकृतिशब्दोऽवतारोपादानभूतदिव्यविग्रहमेवाह। अवतारविग्रहोपादानभूतप्रकृतेर्बहुश्रुतिसिद्धतामाह स्वस्वरूपमिति।'स्वरूप ब्रह्मणोऽपरम्'इति प्रयोगात् स्वरूपशब्दोऽत्र विग्रहपरः।'आदि

प्र पा॥ *८ पुरुषसूक्त ॥ †स मवस्म,उत्तरप्रपा. १७ अ.या २ ५ ४ अनु २-वा ॥

छान्दोग्ये. १-६ ६ ॥ 'य एषोऽन्तरादित्ये हिरण्मय पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासम्पुण्डरीकमेवमक्षिणी तस्योदितिनाम स एष सर्वेभ्य पाप्मभ्य उदित '' इत्यादि । आदित्यशब्द व्यवस्थया त्वो मण्डलवाचा, 'य एष एतस्मिन् मण्डले पुरुष' इति बृहदारण्यके पुरुषस्य मण्डलवर्तित्वश्रवणात्. हिरण्मयशब्दः रमणीयत्वपर, दृश्यत, योगिभिरित्यर्थ ,'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि' इति श्रुत्यैकार्थ्यात् (तस्य येत्)नि । अस्याथ श्रुतप्रकाशिकाया(१-१-२१)विस्तरेण प्रपञ्चितस्तत्र द्रष्टव्य ॥

१तै शीक्षा ६-१ ॥ २तै. नारा. ६ १-८॥

१ श्रीरामायणे युद्धका. ११४. स. १४ श्लो॥

'व्यक्तमेष महायोगी परमात्मा सनातन । अनादिमध्यनिधनो महत परमो महान् ' ॥ एष श्रीराम , महायोगः—महान् योग -लोकसंरक्षणोपायचिन्ता सोऽस्यास्तीति महायोगी । परमात्मा-परमश्चासौ आत्मा च परमात्मा, सर्वजीवात्मभ्य उत्कृष्ट इत्यर्थ , सनातन सदास्तित्वयुक्त इत्यर्थ । अनादिमध्यनिधन जन्मवृद्धिविनाशशून्य । अथ 'परमात्म' शब्दविवरणम्—महान् इत्यादि , तस्मान्महान् महादि , तस्मादपि महानित्यर्थ ॥

२ गी ९-८॥ ३ भारते ॥

४ वायुपुराणे पूर्वखण्डे. ३४-४० ॥ वराहपुराणे ३. २४-४१ ॥ १३ पुटे व्याख्यातम् ॥

५.

६ रहस्याम्नायब्राह्मणे ५ पुट. व्याख्यातम् ॥

७ १ १. २१ सू भाष्ये ॥

द्या॥मायांत्रिगुणात्मिकाम्,यस्या वशे सर्वम् इदं जगत् वर्तते,यया मोहितं जगत् सत् स्वम्

आ ॥ कथमनादिनित्यस्य जनिः ।

ज॥हारो वा सम्भवतीति भावः । आत्मशब्दोऽप्यन्यथा व्यर्थ. । अस्मत्पक्षे स्वरूपदेहयोरुपादानार्थः। अत एव देहोऽपीत्युक्तम् । एव तर्हि 'प्रकृतिं स्वामधिष्ठाय' इति कथमुक्तमित्यतस्तदन्यथा व्याख्यातुमाह—कथमिति। स्वरूपतो देहतश्चानादिनित्यस्य 'सम्भवामि' इति जनिः कथमुच्यते व्याहतत्वादि-

रा॥निमेषा जज्ञिरे विद्युतः पुरुषादधि'*'भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्व-

ता॥त्यवर्णं तमसःपरस्तात्'इत्यनेनाप्राकृतत्वं,स्वासाधारणनिरतिशयदीप्तियुक्तत्वं च सिद्धम्। तत्प्रकरणे च देशविशेषवर्तित्वनित्यसूरिसेव्यत्वलक्ष्मीपतित्वादिकमपि भाव्यम्। 'क्षयन्तम्' इत्यत्र रजश्शब्दो मूलप्रकृतिविषयः, न तु लोकविषयः'तमसः परस्तात्' इत्यनेन तुल्यार्थत्वात्।रजोगुणकत्वाच्च रजश्शब्देनोपादानम्।व्याप्तस्य देशविशेषे'क्षयन्तम्'इति निवासवचनाद्विग्रहवत्त्वं सिद्धम्।एवं परमपदनिलयनित्यविग्रहसद्भावश्श्रुतिद्वयेन दर्शितः। तस्यैव विग्रहस्यावतारदशां दर्शयति— यएष इति। 'आदित्यवर्णं' 'हिरण्मयः'इति च एक एव वर्णः प्रतियोगिभेदाधीनप्रातिकूल्यानुकूल्याभ्यां मुखभेदेन निर्दिश्यते। यथाहुर्द्रमिडाचार्याः 'हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत्' इति। यद्वा, हिरण्यविकारत्वव्यवच्छेदार्थं द्रमिडभाष्यम्। तत्र 'मयूरकण्ठच्छविशुद्धहेम' इति शिल्पशास्त्रानुसाराच्छ्यामत्वसिद्धिः। अथवा स्वेच्छया तत्रतत्र रूपभेदेऽपि न दोषः; युगादिभेदे पर्यायतः सितरक्तादिविकल्पितवासुदेवादिव्यूहरूपभेदवत्। तस्यैव हृदयान्तर्वर्तित्वे श्रुतिमुदाहरति—तस्मिन्निति। मनोमय इति—विशुद्धेन मनसा प्रचुरः ग्राह्य इत्यर्थः। आभ्यां श्रुतिभ्यामुपासनस्थानविशेषस्थितिर्दर्शिता। कारणवाक्येऽपि तस्य सद्भावं दर्शयति—सर्व इति। विद्युत इति पदं विद्युद्वर्णादित्यन्यत्र व्याख्यातम्। 'शान्त उपासीत' इति पूर्वोक्तमुपासनं 'स क्रतु कुर्वीत' इत्यनूद्य तच्छेषतया विधीयमानेषु पारमार्थिकेषु गुणेषु विग्रहस्य

प्र-पा॥*छान्दो. ३-१४-२॥ 'मनोमयः प्राणशरीरो भारूपः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर' व्याख्यातेय श्रुतिः (१-२-२) भाष्ये गुरुभिः।तत्रत्येय सूक्तिः 'मनोमयः-परिशुद्धेन मनसैकेन ग्राह्य -विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते। अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपमाख्यते। म लिनमनोभिर्मलिनानामेव ग्राह्यत्वात्। प्राणशरीर—जगति सर्वेषामप्राणाना धारक. ; प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतञ्च स प्राणशरीर.। आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीति (२-१-९.) उपपादयिष्यते।भारूप—भास्वररूप, अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः। सत्यसङ्कल्पः—अप्रतिहतसङ्कल्पः। आकाशात्मा—आकाशवत्सूक्ष्मस्वच्छस्वरूप'। सकलेतरकारणभूतस्याऽऽकाशस्याऽपि आत्मभूत इति वा—आकाशात्मा। स्वयञ्च प्रकाशते, अन्यानपि प्रकाशयतीति वा—आकाशात्मा। सर्वकर्मा—क्रियत इति कर्म, सर्वजगदस्य कर्म, असौ सर्वकर्मा। सर्वा वा क्रिया यस्यासौ सर्वकर्मा। सर्वकाम.—काम्यन्त इति कामा, भोग्यभोगोपकरणादयः। ते परिशुद्धा' सर्वविधास्तस्य सन्तीत्यर्थः,। सर्वगन्धः सर्वरसः—'अशब्दमस्पर्शम्' इत्यादिना प्राकृतगन्धरसादिनिषेधात् अप्राकृतास्स्वासाधारणा निरवद्या निरतिशयाः कल्याणास्स्वभोग्यभूतास्सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः—उक्तं रसपर्यन्तं सर्वमिदङ्कल्याणगुणजातं स्वीकृतवान्। 'अभ्यात्तः' इति 'भुक्ता ब्राह्मणाः'इतिवत् कर्तरिक्तः प्रतिपत्तव्यः। अवाकी वाकः-उक्तिः, सोऽस्य नास्तीति-अवाकी। कुत इत्याह—अनादर इति। अवाप्तसमस्तकामत्वेनाऽऽदर्तव्याभावात् आदररहितः; अतएव अवाकी—अनल्पाकः; परिपूर्णैश्वर्यत्वात् ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषमासीन इत्यर्थः' इति॥

१. 'हिरण्मय इति रूपसामान्याद् चन्द्रमुखवत्' इति वाक्यं न द्रमिडभाष्यकारस्य, अपितु वाक्यकारस्य बोधायनाचार्यस्य। तथोक्तम्भाष्यकारैः श्रुतप्रकाशिकाचार्यैश्चान्तराधिकरणे. (१-१-२१-सारे)

२. छा. ३-१४-१॥

शं॥आत्मानं वासुदेवं न जानाति,तां प्रकृतिं स्वाम् अधिष्ठाय वशीकृत्य सम्भवामि देहवान्

ज॥त्यत आहेति दोषः; अधिष्ठायेत्यतः परम् इतिशब्दश्च। कथमनेन परिहार इत्यतो व्याचष्टे—

य॥कामस्सर्वगन्धस्सर्वरसः"*"माहारजनवासः"इत्यादिश्रुतिसिद्धम्।आत्ममायया आत्मीयया मायया।'माया वयुनं ज्ञानम्' इति ज्ञानपर्यायोऽत्र मायाशब्दः।तथाचाभियुक्तप्रयोगः—†'मायया सततं वेत्ति प्राणिनां च शुभाशुभम्'इति।आत्मीयेन ज्ञानेन—आत्मसङ्कल्पेनेत्यर्थः। अतोऽपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं सर्वमैश्वरं स्वभावमजहत् स्वमेव रूपं देवमनुष्यादिसजातीयसंस्थानं कुर्वन्नात्मसङ्कल्पेन देवादिरूपस्सम्भवामि तदिदमाह

त॥सद्पाठं दर्शयति—भारूप इति । भास्वररूप इत्यर्थः । 'माहारजनं वासः'इत्येषा श्रुतिरस्माभिरेके व्याख्याता—'तस्य ह वा एतस्य पुरुषस्य रूपं यथा माहारजनं वासः'इत्यादिनाऽऽकारविशेषचाभिधाय' इति । सर्वासुचासु श्रुतिषु विलक्षणसंस्थानविशिष्टरूपवर्णविशेषपुरुषशब्दादिभिः पूर्वोक्तपुरुषसूक्तवाक्यैकार्थत्वं सिद्धम्। षष्ठीसमासे स्वस्वामिभावलक्षणसम्बन्धोऽत्र विवक्षित इत्याह—आत्मीययेति । 'माया वयुनं ज्ञानम्' इति निघण्टूपादानम् । स्वेच्छावतरणप्रकरणे न प्रकृतार्थ उचित इति भावः । निघण्टुसिद्धमर्थं तन्मूलभूताभियुक्तप्रयोगेण द्रढयति—तथाचेति । 'मायया वेत्ति' इति निर्देशादिह माया निघण्टुसिद्धं ज्ञानमेव, परप्रसिद्धमायायाम्तस्यार्थप्रकाशकत्वाभावादिति भावः । एतेन प्रकृतिशब्दस्यात्र त्रिगुणात्मकप्रकृतिविषयत्वं मायाशब्दस्य मिथ्यार्थपरत्वं च शङ्करोक्तं प्रत्युक्तम् । 'आत्ममायया' इत्यस्य न परमार्थतो लोकवदिति व्यवच्छेदश्चायुक्तः, अन्येषामपि जन्मनस्तन्मते मिथ्यात्वाविशेषात् । फलितं वक्तुमाह—आत्मीयेन ज्ञानेनेति । ज्ञानमात्रस्य कथमवतारहेतुत्वम्, तथा सति सर्वदावतारप्रसङ्गादित्यत्राह—आत्मसङ्कल्पेनेत्यर्थ इति।श्लोकस्य पिण्डितार्थं निगदयति—अत इति।अपहतपाप्मत्वादीत्यनेन दहरविद्यासुबालोपनिषत्प्रभृतिषु निदानत्वमङ्गलगुणाकरत्वप्रतिपादकानां वाक्यानां स्मारणम्।समस्तकल्याणगुणात्मकत्वमित्यादिना 'समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः । इच्छागृहीताभिमतोरुदेहस्संसाधिताशेषजगद्धितोऽसौ' इत्यादि स्मारितम्। ईश्वरस्वभावस्सर्वोऽप्युभयलिङ्गत्वेन सङ्गृहीत इत्यभिप्रायेणोक्तं—सर्वमैश्वरं स्वभावमिति। स्वमेव रूपमित्यादिना 'समस्तशक्तिरूपाणि तत्करोति जनेश्वर । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया' इत्यादि भगवत्पराशरवचनं स्मारितम् । अजायमानश्रुत्या स्मृतिरियं सम्ध्येतेत्याह—तदिदमाहेति ।

प्र पा॥* १ बृह. उप.४ ३ ६॥ 'माहारजनम्' इति पाठोऽपि दृश्यते तत्र साधु, 'तेन रक्तं रागात्' (४ २-१) इति सूत्रेण 'माहारजनम्' इत्येव साधु, यथा काषायमित्यादि । 'महारजनम्' इति च पाठः—'महारजनम्—कुसुम्भं.' इति (३-२ २१) व्यासार्यो.। वदार्थसङ्ग्रहतात्पर्यदीपिकायां तु 'रागद्व्यविशेष., तेन रञ्जितं महारजनम्' इति ॥

† वेदनिघण्टु . धर्मवर्ग.. २२॥ ‡

२ ३ २ २१ भाष्ये द्रष्टव्यम्॥ 'तस्य हवा एतस्य पुरुषस्य रूपं यथा माहारजनं वासः यथा पाण्डाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तम् ' ॥ कौसुम्भवासःकम्बलशक्रगोपकिंमय-शिखाकाम्भोजैककालं नानेक विद्युत्सदृशं रूपमस्य भवतीत्यर्थ. । विद्युत्तम्—भाव निष्ठा, युगपत्सर्वप्रवृत्तिशो.तनमित्यर्थ ॥

३ २३३. पुटे. व्याख्यातम् ॥

४. वि पु ६ ७ ७१॥ १३ पुटे व्याख्यातम्॥

आ॥'प्रकृतिं स्वामधिष्ठाय' । प्रकृत्या जातेषु वसुदेवादिषु तयैव तेषां जात इव प्रतीये इत्यर्थः । न तु स्वतन्त्रामधिष्ठायेत्याह—स्वामिति ।

ज॥प्रकृत्येति । वसुदेवादिषु प्रादुर्भूतत्वादिति शेषः। अनेन जन्मभ्रान्तेर्निमित्तमुक्तम् । यथोक्तं 'स्त्रीपुंप्रसङ्गात्' इत्यादि । भ्रान्तेरुपादानमाह—तयैवेति तमोरूपया । यदि मातापितृसम्बन्धोऽङ्गीकृतः, तर्हि तन्निमित्तं दुःखादिकमपि प्रसज्यत इत्याशङ्कानिरासाय स्वामितिपदं व्याख्याति—नान्विति ।

रा॥*'अजायमानो बहुधा विजायते' इति श्रुतिः। इतरपुरुषसाधारणं जन्माकुर्वन् देवादिरूपेण स्वसङ्कल्पेनोक्तप्रक्रियया जायत इत्यर्थः 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि' 'तदात्मानं सृजाम्यहं' 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः' इति पूर्वापराविरोधाच्च ॥ ६ ॥

जन्मकालमाह—

यदायदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७

न कालनियमोऽस्मत्सम्भवस्य; यदायदा हि धर्मस्य वेदोदितस्य चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयावस्थितस्य कर्तव्यस्य ग्लानिर्भवति; यदायदा च तद्विपर्ययस्याधर्मस्या-

ता॥अजायमानस्य जायमानत्वोक्त्या व्याहतत्वादन्यपरेय श्रुतिरित्यत्राह—इतरेति। 'अजायमानः' इति सामान्यनिषेधो 'बहुधा विजायते' इति विशेषविधानसन्निधानात्सङ्कुचितविषयः। अतो विरोधे शान्ते तात्पर्यान्तरं न कल्प्यम्; न चेदं 'बहु स्याम्' इतिवज्जगद्रूपेण बहुभवनम्, 'तस्य धीराः परिजानन्ति योनिम्' इत्यनन्तरवाक्यैर्मुमुक्षूणामत्यन्तोपकारकावताररहस्यज्ञानस्यैव वक्तुमुचितत्वात्, अस्य च तदेकार्थ्यादिति भावः। सत्यमिथ्यात्वाभ्यां विरोधपरिहारशङ्का प्रतिक्षेप्तुं 'प्रकृतिं स्वामधिष्ठाय' इत्यस्य विग्रहपरत्वे, मायाशब्दस्य ज्ञानपरत्वे च हेत्वन्तरमाह—बहूनीति। 'वेद, सृजामि, दिव्यम्' इति शब्दैर्जन्मनो बुद्धिपूर्वत्वेच्छामात्रकृतत्वदिव्यत्वादीनि प्रतीयन्ते। मायादिशब्दस्याविद्यादिपरत्वे तु तदखिलं विरुध्येत। न ह्यत्र जन्मशब्दो जन्मप्रतिभासवाची, न च प्रध्वस्तपर्यायो व्यतीतशब्दो बाधपरः; न च मायागृहीतस्य सर्ववेदित्वम्; नापि मिथ्याभूते सृष्टिशब्दः; न च त्रिगुणप्रसूतस्य दिव्यत्वमिति भावः ॥ ६ ॥

कदेति प्रश्नस्योत्तरमुच्यत इत्याह—जन्मकालमाहेति। युगानियमस्य वक्ष्यमाणत्वात् 'यदायदा' इति वीप्सा युगान्तर्वर्तिकालानियमपरेत्यभिप्रायेणाह—नकालेति। जीवस्य पुण्यापुण्यविपाककृतो वा, व्यवस्थितस्वसङ्कल्पकृतो वा, मन्वन्तरमहाकल्पादिरूपो वा कालनियमो नास्तीत्यर्थः। प्रमाणतस्स्वरूपतश्च ग्लानिप्रकारसूचनाय बाह्यधर्मधर्मैकदेशव्यवच्छेदाय च वेदोदितस्येत्यादिविशेषणम्। 'वेदोदितस्य कर्तव्यस्य' इति धर्मलक्षणमप्युक्तं भवति। अधर्मशब्दे नञो विरोधिविषयत्वमभिप्रेत्योक्तं—तद्विपर्ययस्येति। ततश्चावैदिकागमोदितस्य वर्णाश्रमादिव्यवस्थारहितस्य तत एवाकर्तव्यस्येति पूर्वोक्त-

प्र-पा ॥", १. पुरुषसूक्ते ॥ | २ श्वे. ६-२-३, तै. आ. ६-२ ॥

श॥इव भवामि जात इव आत्ममायया आत्मनः मायया, न परमार्थतो लोकवत् ॥ ६॥

तत् च जन्म कदा किमर्थं च इति? उच्यते—यदा यदा हि धर्मस्य ग्लानिः हानिः

आ॥द्रव्यं कर्म चेति ह्युक्तम्। सा हि नत्रोक्ता। ततः सर्वग्रहेः। आत्ममायया आत्मज्ञानेन। प्रकृतेः पृथगभिधानात्। 'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया' इति ह्यभि-

ज॥प्रकृतेर्भगवदधीनत्वं कुत इत्यत आह—द्रव्यमिति। अत्र वाक्ये प्रकृतिर्न श्रूयत इत्यत आह—साहीति। द्रव्यपदेनेति शेषः। तस्य प्रकृतिवाचित्वं कुत इत्यत आह—तत इति। सर्वसृष्टिकारणानि ह्यत्र निर्दिश्यन्ते, तच्च प्रकृतेरेव सम्भवति, न पृथिव्यादेरित्यर्थः। आत्ममाययाऽत्माविद्ययेति प्रतीतिनिरासायाह—आत्मेति। कुतो हेतोरेवं जीवविलक्षणं ते जन्मेत्याशङ्कानिरासार्थमेतत्। अन्यथाप्रतीतिरप्यनेन परिहृता, सर्वज्ञस्याविद्यायोगात्। प्रकृतिरत्र माया किं न स्यादित्यत आह—प्रकृतेरिति। माया-

शा॥भ्युत्थानं तदाऽहमेव स्वसङ्कल्पेनोक्तप्रकारेणात्मानं सृजामि॥ ७ ॥

जन्मनः प्रयोजनमाह—

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥** ८

ता॥प्रकारवैपरीत्य फलितम्। धर्मग्लानेरधर्मोत्थानस्य च तुलाप्रनमनोन्नमनवत्परस्पराविनाभावित्व च द-र्शितम् । तदेतत्त्राऽपि 'यदायदा' इत्येतत्प्रतिनिर्देशरूपत्वाद्वीप्सानुमधेया । धर्मस्य ग्लानिमपि न सहे, किम्पुनर्विच्छेदमिति ग्लानिशब्दतात्पर्यम् । एवमधर्मस्योद्गममात्रमपि न सहे, किमुत शाखानुशाखता-मित्यभ्युत्थानशब्दाभिप्रेतम्। 'अहं सृजामि' इत्यत्रापेक्षणीयान्तरादर्शनात्-अहमेव स्वसङ्कल्पेनेत्युक्तम्। तेन कालस्याप्यधिष्ठातुस्तस्य कालपरतन्त्रत्व परिहृत भवति। 'आत्मान सृजामि'इत्येतत्र तावत्स्वरूपवि-षय, तस्य नित्यत्वात्, आत्माश्रयादिप्रसङ्गाच्च। नापि जीवविषयं,तस्य प्रकरणासङ्गतत्वात् । नाप्याद्य-विग्रहविशिष्टस्वात्मविषयं, तस्यापि रूपस्य नित्यत्वात्; अतोऽवतारविग्रहविशिष्टस्वात्मान 'आत्मानम्' इति निर्दिश्यत इत्यभिप्रायेणोक्तम्— उक्तप्रकारेणेति ॥ ७ ॥

किमर्थमिति प्रश्नस्योत्तरमुच्यत इत्याह—जन्मन इति । साधुशब्दोऽत्र नासमर्थादिविषयः,

शा॥वर्णाश्रमादिलक्षणस्य प्राणिनाम् अभ्युदयनिःश्रेयससाधनस्य भवति भारत, अभ्यु-त्थानम् उद्भवः अधर्मस्य, तदातदा आत्मानं सृजामि अहं मायया ॥ ७ ॥

किमर्थम्?—परित्राणाय इति ॥ परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानां,

आ॥धानम्।सुप्तिकारणया तेषां शरीरादि सृष्ट्रा विमोहिकया।अजात एव जात इव प्रतीये वा । उक्तंच 'महदादेश्च माता या श्रीर्भूमिरिति कल्पिता । विमोहिका च दुर्गाख्या ता-भिर्विष्णुरजोऽपि हि । जातवत्प्रथते ह्यात्मचिद्बलान्मूढचेतसाम्' इति । ईश्वरः— ईशेभ्योऽपि वरः । तथोक्तम् 'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् । वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्यचित्' इति ब्रह्मकैवर्ते। 'समर्थ ईश इत्युक्तः तद्व-रत्वात्त्वमीश्वर.' इति च ॥ ६ ॥ ७॥

ज॥शब्दस्य ज्ञानवाचित्व कुत इत्यत आह—केतुरिति । इति प्रज्ञायाः नामधेयानीति वाक्यशेषात् । प्राक् 'प्रकृतिं स्वामधिष्ठाय' इत्यनेनैव भ्रमनिमित्तत्वमुपादानत्व च प्रकृतेरुक्तमिति मायाशब्दो न प्रकृ-तिवाची, पुनरुक्तिप्रसङ्गादित्युक्तम्, इदानीं तस्य निमित्तमात्रपरत्वे मायाशब्दस्य प्रकृत्यर्थतायामपि न दोषः, उपादानप्रतिपादनार्थत्वादिति भावेनाह—सृष्ट्वेति । प्रकृत्येति शेषः । तेषां वसुदेवादीनां सृष्ट्वा तत्र प्रादुर्भूतः विमोहिकया मायाख्यया। अत्रागमसम्मतिमाह—उक्तं चेति । आत्मचिद्बलाद-जात एव । नन्वीशनशीलानामपि ब्रह्मादीनामुत्पत्तिमरणदर्शनेन विरोधाभावादीश्वरोऽपि सम्भवामीति कथमुच्यते, 'सेयमाशापिसङ्को वरच्' इत्येतदिहायान्यथा व्याचष्टे—ईश्वर इति। कुत एतदि-त्यत आह—ईशेभ्य इति । एतदागमबलादेव समाधाकारलेयावनुमन्तव्यौ । अजत्वादेः सम्भवेन शाब्दो व्याघातः, अस्य तु व्याप्त्येनि आपनाय समुद्रङ्ख व्याख्यातम् ॥ ६ ॥ ७ ॥

'परित्राणाय साधूनाम्' इति साधुपरित्राणादिकं भगवदवतारस्य प्रयोजनमुक्तम्। तत्र किं जन्म-नैव परित्राणादिकं कार्यमिति नियम इत्यपेक्षायामाह—नेति । जन्मना विनाऽपि कर्तुं समर्थत्वादिति

रा॥साधव उक्तलक्षणधर्मशीला वैष्णवाग्रेसरा मत्समाश्रयणे प्रवृत्ता मन्नामकर्मस्वरूपाणां वाङ्मनसागोचरतया मद्दर्शनाद्विना स्वात्मधारणपोषणादिकमलभमानाः क्षणमात्रकालं कल्पसहस्रं मन्वानाः प्रशिथिलसर्वगात्रा भवेयुरिति मत्स्वरूपचेष्टितावलोकनाला-

---

ता॥दुष्कृच्छब्दप्रतियोगिरूपत्वात् ;अतस्सुकृतिविषयोऽयमित्यभिप्रायेणोक्तम्—उक्तलक्षणधर्मशीला इति। उक्तलक्षणशब्देन'वेदोदितस्य'इत्यादि परामृश्यते। ये पुनरुक्तलक्षणधर्मेण देवतान्तराण्येव उपासते; येच वैष्णवाः प्रतर्दनविद्यादिन्यायेन तत्तद्देवताविशिष्टवेषेणैव भगवन्तमुपासते; न तेषामवतारप्रदर्शनेऽत्यन्तनिर्बन्धः; तत्तद्देवताकञ्चुकितवेषेणैव तदपेक्षितसकलप्रदानोपपत्तेरित्यभिप्रायेणोक्तम्—वैष्णवाग्रेसरा—इति—भगवद्भक्तवर्या इत्यर्थः। उक्तलक्षणधर्मशीला इति वैष्णवाग्रेसरा इति पदाभ्यां 'न चलति निजवर्णधर्मतो यः'[1] 'वर्णाश्रमाचारवता'[2] इत्यादि सूचितम्। यथावस्थितमुपायप्राप्यं चावलम्बमाना इतिच फलितम्। त्राणं हि नामानिष्टनिवर्तनपूर्वकेष्टप्रापणम्। एवंविधवैष्णवाग्रेसराणाम अनिष्टश्च भगवदलाभः; तत्समाश्रयणपूर्वकं तल्लाभेनैव च तस्यानिष्टस्य निवर्तनमित्यभिप्रेत्योच्यते-मत्समाश्रयण इत्यारभ्य, आलापादिदानेनेत्यन्तम्। नह्यमीषामन्नपानताम्बूलादि धारणपोषणादिकम्, किंत्विह कृष्ण एव सर्वमित्यभिप्रायेणोच्यते—मद्दर्शनाद्विना स्वात्मधारणपोषणादिकमलभमाना इति। अदर्शने चानिष्पन्नयोगावस्थत्वात्। यद्यमी मत्साक्षात्कारात्पूर्वमल्पं कालं लोचने मीलयित्वा सहेरन्,तदाहमपि तादृशीं तेषामवस्थां सहेयापि,नत्वेते तथेत्यभिप्रायेणोक्तम्—क्षणेत्यादि। 'त्रुटि युगायते त्वामपश्यताम्'[3] इत्यादिकमिह भाव्यम्। अदर्शनदुःखस्य च चरमावस्थोच्यते—प्रशिथिलसर्वगात्रा भवेयुरिति। स्वविश्लेषपरिक्लिष्टानामुज्जीवनाय प्रवृत्तस्य क्रमाद्भक्तानुभाव्याकारा उच्यन्ते — मत्स्वरूपचेष्टितावलोकनालापादिदानेनेति। नह्यपवर्गमुक्त्यादिवदवतारमन्तरेण

---

प्र-पा॥१. वि पु. ३ ८ २०॥ 'नचलति निजवर्णधर्मतो यस्सममतिरात्मसुहृद्विपक्षपक्षे। न हरति नच हन्ति किञ्चिदुच्चैस्सितमनसं तमवेहि विष्णुभक्तम्॥' उच्चैः, अतिशयेन, सित - स्वच्छम्, रागादिरहित मनो यस्य, तं - विष्णुभक्तम्, विद्धि। मनस्स्वच्छत्वस्य दुर्विज्ञेयत्वात् तस्य ज्ञापकचिह्नान्याह-न चलतीति। शुद्धसत्त्वस्य रागाद्यभावात् आत्मनः सुहृत्पक्षे, विपक्षपक्षेऽपिच सममतित्वम्परस्वहरणादिनिवृत्तिश्च भवति तस्य चिह्नमित्यस्यार्थः॥

२ वि पु. ३-८-९॥ 'वर्णाश्रमाचारवता पुरुषेण परः पुमान्। विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः॥' 'आचारवता' इत्यत्राऽऽचारग्रहण यज्ञादेः कर्मणोऽप्युपलक्षणम्। अन्यः - विष्ण्वाराधनलक्षणश्रुतिस्मृतिविहितधर्मत्यागेन केवलतद्व्रतधारणश्रवणकीर्तनादिः, तत्तोषकारको न भवतीत्यर्थः॥

३. भागवते. १०-३१-१५॥ 'अटति यद्भवान् अह्नि काननं त्रुटि युगायते त्वामपश्यताम्। कुटिलकुन्तलं श्रीमुखञ्च ते जड उदीक्षतां पक्ष्मकृद्दृशाम्॥' गोपिकागीतायां पठितोऽयं श्लोकः। अटतीति॥ यद् - यदा, भवान् अह्नि काननं-वृन्दावनम्, अटति-प्रतिगच्छति, भवच्छब्दयोगात् प्रथमपुरुषः। तदा, त्वामपश्यतां - प्राणिनाम्, त्रुटि-क्षणार्धमपि, 'त्रुटि' इत्यविभक्तिकनिर्देश आर्षः। युगायते - युगवद्भवति। एवमदर्शने दुःखमुक्तम्, पुनश्च कथञ्चिद्दिनान्ते, तेतव, कुटिलकुन्तलं - कुटिलाः कुन्तलाः यस्मिन् तत्, श्रीमुखं - श्रीमन्मुखम्, उदीक्षतां - उदुच्चैरीक्षमाणानाम्, तेषां दृशाम्, पक्ष्मकृद् - पक्ष्मनिर्माता ब्रह्मा, जडः - मन्द एव, निमेषमात्रमप्यसह्यमिति दर्शनमुग्धमुक्तम्॥

---

आ॥न जन्मनैव परित्राणादि कार्यमिति नियमः। तथापि लीलया स्वभावेन च यथे-

ज॥भावः।तर्हि किमर्थं जन्मेत्यत आह—तथाऽपीति।यथेष्टचारी इच्छयैव तथाऽऽचरति।तथेच्छैव कि-

रा॥पादिदानेन तेषां परित्राणाय तद्विपरीतानां विनाशाय च क्षीणस्य वैदिकस्य धर्मस्य मदाराधनरूपस्याराध्यस्वरूपप्रदर्शनेन स्थापनाय च देवमनुष्यादिरूपेण युगेयुगे सम्भवामि; कृतत्रेतादियुगविशेषनियमोऽपि नास्तीत्यर्थः ॥ ८ ॥

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥** ९

ता॥स्वसङ्कल्पमात्रेणैव तद्दातु शक्यमिति भावः । 'परित्राणाय' इत्यत्रोपसर्गेण विविधानिष्टनिवृत्तिपूर्वकविविधेष्टप्राप्तिसूचितेत्यभिप्रायेण—**मन्नामगुणकर्मेत्यादिक** **धारणेत्यादिक** **स्वरूपचेष्टितेत्यादिक** चोक्तम् । स्वरूपमत्र विग्रहः । एव साधूनामान्तरभयात्परित्राणमुक्तम्; अथ तेषामेव बाह्यभयात्परित्राणमुच्यत इत्यभिप्रायेणाह—**तद्विपरीतानां विनाशायचेति**। चकारोऽन्वाचयार्थः। इदमप्युक्तमन्तरादित्याधिकरणभाष्ये 'साधवो ह्युपासकाः, तत्परित्राणमेवोद्देश्यम्; आनुषङ्गिकस्तु दुष्कृतां विनाशः, सङ्कल्पमात्रेणापि तदुपपत्तेः' इति । भागवतापराधो हि दुष्करतर इत्यभिप्रायेण—**तद्विपरीतानामित्युक्तम्** ।' रिपूणामपि वत्सल.' 'मेच्छैस्स्य रणे शान्तस्ततः पूतो भविष्यसि' इति तद्दुष्कृतामपि विनाशो नात्यन्तविनाशः; किंतु, वैपरीत्यहेतुभूतराक्षसप्रभृतिशरीरसम्बन्धादिविनिवर्तनम्; तन्निवृत्तौ च तेषामपि धार्मिकत्व सम्भवेदिति सोऽपि धर्मसंस्थापनपर्यवसितः । सङ्क्षेपभूतमाराधन मयैव हि स्थापनीयमित्यभिप्रायेण—**मदाराधनरूपस्येत्युक्तम्** । अनुष्ठानमुखेनोपदेशमुखेन च धर्मप्रवर्तन व्यासादिद्वारापि शक्यम् आराध्यरूपप्रदर्शनेन भक्तयुत्पादनमवतारासाधारणप्रयोजनम्; परस्परातपरस्परवादी जन्मत्रयशत्रुश्शिशुपालोऽपि हि कृष्णदर्शनेन प्रीतिमान्भूत्वा मुक्तिं गत इत्यभिप्रायेण-**आराध्यस्वरूपप्रदर्शनेनेत्युक्तम्**। 'रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम्' इत्यादि च भाष्यम्। एतेन धर्मस्य सम्यक्स्थापन हि तत्पर्यन्ततया स्थापनमित्युक्तं भवति । युगेयुग इति वीप्सातात्पर्यं व्यनक्ति—**कृतत्रेतादीति** । न तु प्रतियुगमवश्यं सम्भवामि, नापि युगविशेषनिर्बन्ध इति भावः ॥ ८ ॥

प्रासङ्गिकस्यावतारयाथात्म्यकथनस्य परमप्रकृतमोक्षोपयोगित्वमुच्यते—'जन्मकर्म' इति श्लोकेन ।

प्र-पा ॥ १ शा. १-१ २१ ॥ | ४. श्रीरामायणे. अयोध्याकाण्डे. ३. २९ ॥
२. ३. | १४ पु व्याख्यानम् ॥

श॥विनाशाय च दुष्कृतां पापकारिणाम्,किञ्च, धर्मसंस्थापनार्थाय धर्मस्य सम्यक् स्थापनं धर्मसंस्थापनं तदर्थं सम्भवामि युगेयुगे प्रतियुगम् ॥ ८ ॥

आ॥एचारी । तथाह्युक्तं 'देवस्यैष स्वभावोऽयम्' 'लोकवत्तु लीला कैवल्यम्' 'क्रीडतो बालकस्येव चेष्टां तस्य निशामय' 'अरिभयादिव स्वयं पुराद्व्यवात्सीद्यदनन्तवीर्यः। पूर्णोऽयमस्मात्र न किंचिदाप्यं तथाऽपि सर्वाः कुरुते प्रवृत्तीः। अतो विरुद्धेषु मिमं वदन्ति परावरज्ञा मुनयः प्रशान्ताः' इत्यादि ऋग्वेदखिलेषु ॥ ८ ॥

पृथग्ज्ञातयुक्तिर्हि सर्वज्ञाननियमदर्शनार्थम् । न तु तावन्मात्रेण मुक्तिरित्युक्तम् ।

ज॥मर्थेत्यत उक्तं—लीलयेति । लीलाप्यालस्यपरिहाराद्यर्था न भवतीत्यत उक्तं—स्वभावेन चेति । अत्रैव प्रमाणान्याह —तथा हीति। अयमेषः—इयमिच्छा। अतः प्रवृत्तिषु विरुद्धेषु लोकविपरीतेष्वपि ॥

'जन्म कर्म च' इति भगवज्जन्मादिज्ञानमात्रेण मुक्तिरुच्यत इति प्रतीतिनिरासायाह —पृथगिति। एकदेशज्ञानेनेत्यर्थः। दर्शनार्थमुपलक्षणार्थम् । यथाप्रतीत एवार्थः किं न स्यादित्यत आह —न त्विति।

रा॥एवं कर्ममूलहेयत्रिगुणप्रकृतिसंसर्गरूपजन्मरहितस्य सर्वेश्वरत्वसार्वज्ञ्यसत्यसङ्कल्पत्वादिसमस्तकल्याणगुणोपेतस्य साधुपरित्राणमत्समाश्रयणैकप्रयोजनं दिव्यम् - अप्राकृतं मदसाधारणं मम जन्म चेष्टितं च तत्त्वतो यो वेत्ति, स वर्तमानं देहं परित्यज्य पुनर्जन्म नैति, मामेव प्राप्नोति, मदीयदिव्यजन्मचेष्टितयाथात्म्यविज्ञानेन विध्वस्तसमस्तमत्समाश्र-

ता॥एवमिति – अजोऽपीत्यादिनोक्तप्रकारेणेत्यर्थः॥दिव्यमित्यस्यैवार्थः—अप्राकृतमिति॥मदसाधारणमित्यनेन 'बहु स्यां प्रजायेय' इत्युक्तजन्मव्यवच्छेदः। बहुधीप्रपञ्चधर्मिग्राहकप्रमाणसिद्धः पदार्थान्तरेष्वदृश्य प्रकारो न तर्कवाध्य इति भावः। 'जन्म कर्म च मे दिव्यम्' इत्युक्ते जन्मबन्धहेतुभूतं पुण्यमपि किमस्तीति शङ्काव्युदासाय—चेष्टितमिति व्याख्यातम्। तत्त्वत इति—वैपरीत्यविपर्ययरहितमित्यर्थः। देहं परित्यज्येत्युक्ते प्रारब्धकर्मपर्यवसानदेहं परित्यज्येति साधारणप्रतीतिस्स्यात्, तद्व्यवच्छेदाय—वर्तमानदेहं परित्यज्येत्युक्तम्। एतच्च 'यो वेत्ति स पुनर्जन्म नैति' इति वेदितृत्वावस्थापेक्षया पुनर्जन्मप्रतिषेधात्फलितम्। 'पुनर्जन्म नैति' इत्यनेन विरोधिनिवृत्तिरुच्यते; मामेतीतीष्टप्राप्तिः। न केवलं विरोधिनिवृत्तिमात्रेण स्वात्मानन्दानुभवमात्रम्, अपित्ववताररहस्यज्ञानवान्मामेव प्राप्नोतीत्यवधारणार्थः। ननु वर्तमानदेहं परित्यज्येत्याद्ययुक्तम्, प्रारब्धकर्मावसाने हि मोक्षश्शारीरके निर्णीतः; प्रारब्धस्य च कर्मणः कियन्ति जन्मानि साध्यानीति न नियमः; व्यासादिष्वनियमदर्शनात्। न च जन्मकर्मज्ञानमात्रान्मोक्षः, दीर्घकालनैरन्तर्यादरसेवनीयदुष्करतरकर्मज्ञानानुगृहीतोपासनशास्त्रार्थनैरर्थक्यप्रसङ्गादित्यत्राह—मदीयेति। दिव्यजन्मचेष्टितज्ञानेनोपासनविरोधिनां समस्तानां पापानां निवृत्तत्वादस्मिन्नेव जन्मनि जन्मान्तरारम्भकपापशमनसमर्थपुष्कलोपासननिष्पत्तेर्न जन्मान्तरपरिग्रहः। स्मरन्ति च "विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि' इति। एवं चोपासनपौष्कल्यहेतुतयास्याभिधा-

प्र-पा॥ १. तै. आ. ६-२॥
२. जन्मबन्धहेतुभूत. पा॥
३. वि. पु. ६-७-३५॥ 'विनिष्पन्नसमाधि-स्तु मुक्तिं तत्रैव जन्मनि। प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात्' – योगाग्निना दग्ध कर्मसमूहो यस्य॥

श॥जन्म इति॥तत् जन्म मायारूपं कर्म च साधूनां परित्राणादि मे मम दिव्यम् अप्राकृतम् ऐश्वरम् एवं यथोक्तं यः वेत्ति तत्त्वतः तत्त्वेन यथावत् त्यक्त्वा देहम् इमं पुनः जन्म

आ॥'येत्वाद्युक्तं तु सर्वं यो ब्राह्मोपास्ते सदा हि माम्।तस्यैव दर्शनपथं यामि नान्यस्य कस्यचित्' इत्युक्तश्च महाकीर्मे। अत्रोक्तरीतिज्ञस्यैव जन्म नेतीति, गतिः, इतरेषामन्यानां नान्या गतिः, नान्यस्य कस्यचिदिति विशेषणात्; तत्त्वत इति विशेषणाच्च सर्वं ज्ञानमापततीति।यत्रैवं भवति,तत्र तत्त्वत इति विशेषणे न विरोधः। उक्तं च—'एकं च तत्त्वतो

ज॥उक्तं तृतीये;प्रमाणान्तरं चाह—वेदादीति।वाक्यत्वाविशेषादेतस्य गीतावाधकत्वं कुत इत्यतः सावकाशत्वनिरवकाशत्वाभ्यामित्याह—अत्रेति।अयोगव्यवच्छेदमात्रपरत्वमित्यर्थः।एतच्च पूर्वोक्तादर्थान्तरमिति ज्ञेयम्। इतरत्वान्यत्वाधिकारिविशेषापेक्षया सावकाशानीति कुतो नान्यगतिरित्यत आह—नेति। विशेषणात्—पक्षान्तरव्यवच्छेदात्। इतोऽप्यत्र सर्वज्ञानमङ्गीकार्यमित्याह—तत्त्वत इति।आपततीत्यनेनार्थापत्तिमभिप्रैति। एतमेव न्यायमन्यत्राप्यतिदिशति—यत्रेति। एवं भवति सर्वज्ञाने प्रमितेऽप्येकदेशज्ञानोक्तिर्भवति; तत्त्वतो ज्ञानं कथं सार्वज्ञ्यमाक्षिपतीत्यत आह— उक्तं चेति। जिज्ञसेत् जिज्ञासेत।

रा॥क्षीणविरोधिपापोऽस्मिन्नेव जन्मनि यथोदितप्रकारेण मामाश्रित्य मदेकप्रियो मदेकचित्तो मामेव प्राप्नोति ॥ ९॥

तदाह—

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥** १०

मदीयजन्मकर्मतत्त्वज्ञानाख्येन तपसा पूता बहव एवं संवृत्ताः।तथाच श्रुतिः 'तस्य

ता॥तात्पर्यमपरया मोक्षसाधनत्वमिति नोपासनशास्त्रैश्वर्यमिति भावः । यथोदितप्रकारेण मामाश्रित्येति पूर्वोक्तानुसन्धानं दर्श्यते । मदेकप्रिय इति तु भक्तिरूपापन्नतोक्तिः। अहमेक एव प्रिय- प्रीतिविषयो यस्य स मदेकप्रियः 'प्रियो हि ज्ञानिनोऽत्यर्थमहम्' इति वक्ष्यते । एतेन पुरुषार्थान्तरनिवृत्त्यवच्छेदः । मदेकचित्त इति समाप्यरक्षा । मय्येवास्मिन्नेव चित्त यस्य स मदेकचित्तः ॥ ९ ॥

उपासनैश्वर्यमित्यादिशङ्कोत्तरत्वेन योऽयमर्थ उक्तः, अयमेव 'वीतराग' इति श्लोकेनोच्यत इत्याह—तदाहेति । तदेव पूर्वप्रस्तुत ज्ञानमिह 'ज्ञानतपसा' इत्युच्यते । 'मन्मया मामुपाश्रिताः' इति तु परम्परया तत्साध्यज्ञानमित्यभिप्रायेणाह—मदीयेति । अस्य श्लोकस्य पूर्वश्लोके व्याख्यात प्रायत्वात् एव संवृत्ता इति सङ्क्षेपेणोक्तम् । तथाहि ज्ञानतपसा पूता इत्यस्यार्थो—मदीयेत्यारभ्य पाप्रहत्यन्तेन प्रदर्शित । 'मामाश्रित्य' इत्यनेन 'मामुपाश्रिताः' इत्यस्यार्थ उक्तः । 'मदेकप्रियः'इत्यनेन 'वीतरागभयक्रोधा ' इत्यस्यार्थोऽभिप्रेत',विषयान्तरेषु प्रीतिर्हि रागः,तद्विरोधिषु निरसनेच्छा क्रोधः ; आगामीष्टविरोध्यनिष्टागमोत्प्रेक्षा भयम् । तदेतत्त्रितयमपि न वासुदेवभक्तानामस्ति, तदेकप्रियत्वेन विषयान्तरे रागाभावात्, तत एव तन्मूलक्रोधाभावात्, तल्लाभालाभव्यतिरिक्तेष्टानिष्टाभावेन भयाभावाच्च । इदञ्च 'न क्रोधो न च मात्सर्यम्' इत्यादिषु प्रसिद्धम् । 'मदेकचित्ताः' इति 'मन्मयाः'

प्र पा॥ १ गी. ७ १७॥ सहस्रनामाध्याये. १३४. श्लो ॥ तद्गत एते दोषा. २. महाभारते. शान्ति आनुशासनिक १४९. स्वभावत एव निवर्तन्त इत्याह—न क्रोध इति ॥

शं॥पुनरुत्पत्ति न पुनि ■ प्राप्नोति । माम् एति आगच्छति स मुच्यते अर्जुन ॥ ९ ॥

न एष मोक्षमार्ग इदानीं प्रवृत्तः . किं तर्हि ? पूर्वमपि—वीतराग इति ॥ वीतरागभयक्रोधाः रागश्च भयं च क्रोधश्च *वीता विगता येभ्यः ते मन्मयाः ब्रह्मविदः ईश्वराभेददर्शिनः माम् एव च परमेश्वरम् उपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः। बहवः अनेके ज्ञानतपसा ज्ञानम् एव च परमात्मविषयं तपः तेन ज्ञानतपसा पूताः परां शुद्धिं गताः

आ॥ज्ञातुं विना सर्वज्ञतां नरः।न समर्थो महेन्द्रोऽपि तस्मात्सर्वत्र जिज्ञासेत्'इति स्कान्दे॥

सन्ति च तथा मुक्ता इत्याह—वीतरागेति। मन्मयाः मत्प्रचुराः । सर्वत्र मां विना

ज॥अन्यत्रापि—'एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः' इति। सर्वत्र सार्वज्ञ यथाशक्ति विवक्षितमित्यवधेयम् ॥ ९ ॥

किंचोत्तरश्लोकेऽधिकानुवादात्तावैतावन्मात्र विवक्षितमिति भावेन तात्पर्यमाह—सन्ति चेति। तथोक्तज्ञानेन, आह श्रद्धेत्यादनार्थमितिशेषः। मन्मया मदात्मका इति प्रतीतिनिरासार्थमाह—मन्मया इति। सर्वथा भगवत्प्रचुरः, को विशेषो ज्ञानिनामित्यत आह—सर्वत्रेति।सर्वेषु पदार्थेषु विश्वस्तता

पा ॥ *रागभयक्रोधाः वीताः. पा ॥

रा॥धीराः परिजानन्ति योनिम्'इति। धीराः धीमतामग्रेसराः एवं तस्य जन्मप्रकारं जानन्तीत्यर्थः ॥ १० ॥

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११

न केवलं देवमनुष्यादिरूपेणावतीर्य मत्समाश्रयणापेक्षाणां परित्राणं करोमि, अपि तु ये मत्समाश्रयणापेक्षा यथा येन प्रकारेण स्वापेक्षानुरूपं मां संकल्प्य प्रपद्यन्ते—समाश्रयन्ते; तान् प्रति तथैव तन्मनोगतप्रकारेण भजामि—मां दर्शयामि; किमत्र बहुना,

ता॥इत्यस्यार्थः । ज्ञानविषयभूतेन मया प्रचुरा मन्मयाः,तादात्म्यविकारार्थयोरत्रानुपपन्नत्वात्; अन्तर्यामित्वविवक्षायां तस्य सर्वसाधारणत्वाच्च । मन्मया इत्यत्रेश्वराभेददर्शिन इति शङ्करोक्तं शास्त्रोपक्रमादिविरोधाच्छब्दस्य चावाचकत्वाच्च निरस्तम् । 'मामेव प्राप्नोति' इत्यनेन 'मद्भावमागताः' इत्यस्यार्थो दर्शितः । मुक्त्यवस्थायामपि तादात्म्यस्य श्रुतिस्मृतितदर्थोपपत्तिसूत्रादिविरुद्धत्वात्, अत्रापि 'मामेति सोऽर्जुन' इति कर्मकर्तृव्यपदेशात्, 'मम साधर्म्यमागताः'इति परस्ताद्वक्ष्यमाणत्वाच्च, 'मद्भावमागताः' इत्यस्य मत्स्वभावमपहतपाप्मत्वादिकं प्राप्ता इत्यर्थः । यद्वा 'ब्रह्मैव भवति' इत्यादाविवात्यन्तसाम्यात्तद्व्यपदेशः । अवताररहस्यस्य च ज्ञातव्यत्वे श्रुतिरप्यस्तीत्याह—तथाचेति । उक्तार्थसंवादित्वं विवृणोति—धीमतामग्रेसरा इत्यादिना । एवं धीरशब्दनिर्वचनेन प्रागुक्तभगवद्व्याप्तिपर्यन्ताभङ्गुरज्ञानवत्त्वमुक्तं भवति । 'परिजानन्ति' इत्यत्रोपसर्गेण पूर्वोक्तयथावस्थितप्रकारोऽभिप्रेत इति ज्ञापनाय—एवं तस्य जन्मप्रकारं जानन्तीत्युक्तम् । 'धीमतामग्रेसरा एव' इति पाठे तु विशेषविधेः शेषनिषेधः फलित इति भावः ॥ १० ॥

एवं साधुपरित्राणाद्यर्थदेवमनुष्यादिसजातीयस्वेच्छावतारवर्णनमुखेनोपासनोपयुक्तं स्वस्य 'सौलभ्यमुक्तम् । अथ तस्यैव काष्ठाप्राप्तां दशां दर्शयति —'ये यथा'इति श्लोकेन। अत्र कृष्णावतारवृत्तान्तेन सहार्चावतारवृत्तान्तोऽपि सङ्गृहीतः।'ये यथा तांस्तथैव'इति शब्दाः पूर्वोक्ताधिकारितदनुष्ठानप्रकारादिनियमनिवृत्तिपरा इत्यभिप्रायेणाह—नकेवलमिति । स्वापेक्षानुरूपमिति—पतित्वपुत्रत्वसारथित्ववराहनारसिंहादिप्रक्रिययेत्यर्थः । सङ्कल्प्य मनोरथविषयं कृत्वेत्यर्थः । एतदेवात्र प्रपदनमित्याह—समाश्रयन्त इति । 'तांस्तथैव भजाम्यहम्' इत्यत्र तद्भजनप्रकारेणाहमपि तान्भजामीत्येतदसङ्गतमिति शङ्कानिरासाय तथैवेत्यस्यार्थमाह—तन्मनोगतप्रकारेणेति। न तु स्वकीयपरत्वानुरूपप्रकारेणेति भावः।

प्र·पा१ गी. १४-२ ॥ ३. पुरुषसूक्ते ॥
२. मु ३ २ ९ ॥

शं॥सन्तः मद्भावम्-ईश्वरभावं मोक्षम् आगताः समनुप्राप्ताः । इतरतपोनिरपेक्षा ज्ञाननिष्ठा इत्यस्य लिङ्गम् 'ज्ञानतपसा' इतिविशेषणम् ॥ १० ॥

तव तर्हि रागद्वेषौ स्तः, येन केभ्यश्चिदेव आत्मभावं प्रयच्छसि न सर्वेभ्यः इति उच्यते—ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तान् तथैव

आ॥ न किंचित्पश्यन्तीत्यर्थः ॥ १० ॥

ज॥दिक्ं मदायत्तमेव सर्वे पश्यन्तीत्यर्थः ॥ १० ॥

'ये यथा'इतिवाक्य न प्रकृतेन साक्षात् सङ्गतम्,अतस्तत्सङ्गमयितुं मध्ये शङ्कान्तरं निराकरोति—

रा॥सर्वे मनुष्याः मदनुवर्तनैकमनोरथा मम वर्त्म मत्स्वभावं सर्वं योगिनां वाङ्मनसागोचरमपि स्वकीयैश्चक्षुरादिकरणैस्सर्वशस्स्वापेक्षितैस्सर्वप्रकारैरनुभूयानुवर्तन्ते ॥ ११ ॥

ता ॥ अत्र यथाभिलषितफलप्रदानेन पक्षपातपरिहारार्थत्वं परोक्तं पूर्वोत्तराभ्यां नात्यन्तसङ्गतम्, 'चातुर्वर्ण्यम्' इत्यादिनार्थतः पुनरुक्तिश्च स्यात्। सेवकान् प्रति सेव्यस्य भजनं नाम सुलभदर्शनत्वमित्यभिप्रायेण—मां दर्शयामीत्युक्तम्। उक्तार्थस्य लोकेऽपि प्रदर्शनपरमुत्तरार्धम्, न पुनः 'यदि ह्यहं न वर्तेयम्' इत्यादाविव स्वस्य लोकानुविधेयानुष्ठानवत्त्वपरम्, तस्येहासङ्गतत्वादित्यभिप्रायेण वाङ्मनसागोचरसौलभ्यपरतां विवृणोति—किमत्र बहुनेति। मनुष्यशब्दः ब्रह्मादीनामपि सङ्ग्राहक इत्यभिप्रायेण सर्वशब्दः। अत्र वर्त्मशब्दो न साक्षात्सरणिवाचकः, असङ्गतवाक्यार्थत्वप्रसङ्गात्। नाप्याचारपरः, तस्याप्यत्रासङ्गतत्वेनोक्तदूषणत्वात्। अत एव 'एवं प्रवर्तितं चक्रम्' 'तेनैव स्थापिता ब्रह्ममर्यादा लोकभाविनी' इत्याद्युक्तशास्त्रमर्यादानुवर्तनपरत्वमपि निरस्तम्। अतोऽत्र सौलभ्योपदेशप्रकरणे स्वासाधारणनिमहचेष्टागौशील्यादिस्वभावसमुदायपरत्वमेवोचितमित्यभिप्रायेणोक्तं—मम वर्त्म मत्स्वभावं सर्वमिति। सरणिवाचकमपि हि शब्दमुपचारात्स्वभावविषयतया प्रयुञ्जते। यथा 'कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम्' इति। मनुष्या इत्यनेन सूचितमुच्यते—योगिनामिति। योगपरिशुद्धमनसां वाङ्मनसागोचरमपि मामचक्षुषो मनुष्या बाह्येन्द्रियैरप्यनुभवन्तीत्यर्थः। प्रियतमपितृपुत्रसुहृद्भ्रातृभृत्यसारथिसख्यादिरूपाण्यर्चावताररूपाणि च 'सर्वशः' इत्यनेन विवक्षितानीत्याह—स्वापेक्षितैरिति। अनुभूयानुवर्तन्त—अनुभवन्तो वर्तन्त इत्यर्थः। अलङ्करणगानोत्सवसेवादिर्वा प्रकारः। अत्र योगिनां वाङ्मनसागोचरमपि 'चक्षुरादिकरणैः' इति वचनादर्चावताररूपेऽपि परत्वानुसन्धानं दर्शितम्। यथा स्मरन्ति 'तामेव ब्रह्मरूपिणीम्' इति। वक्ष्यति च भगवान् 'भुजैश्चतुर्भिः' इत्यादि। एवं प्रसङ्गात्

प्र-रा॥१ गी. ४ १३ ॥
२. गी. ३ २३ ॥
३. गी. ३ १६ ॥
४ ५

६ विष्णुधर्म १०३ २९ ॥ तामर्चयेत्तां प्रणमेत्तां स्मरेत्तां विचिन्तयेत्। विशत्यशेषदोषघ्नीं तामेव ब्रह्मरूपिणीम् ॥
७.

शा॥तत्फलदानेन भजामि अनुगृह्णामि अहम्, तेषां मोक्षं प्रति अनर्थित्वात्। न हि एकस्य मुमुक्षुत्वं फलार्थित्वं च युगपत् सम्भवति, अतः ये यत्फलार्थिनः तान् तत्फलदानेन, ये यथोक्तकारिणः तु अफलार्थिनः मुमुक्षवश्च तान् ज्ञानप्रदानेन, ये ज्ञानिनः संन्यासिनः मुमुक्षवश्च तान् मोक्षप्रदानेन, तथा आर्तान् आर्तिहरणेन इत्येवं यथा प्रपद्यन्ते ये तान्

आ॥न च मद्भजनमात्रेण मुक्तिर्भवत्यन्यदेवतारूपेण, तथापि सर्वेषामानुरूप्येण फलं ददामीत्याह—ये यथेति।

ज॥नन्वेति। 'मामुपाश्रिताः' 'मद्भावमागताः' इत्युक्त्याऽन्यदेवतादिरूपेण मद्भजनमात्रेण त्रैविद्यानामपि मुक्तिर्भवतीति नाशङ्कनीयमित्यर्थः। विष्णुं सामान्यतः सर्वोत्तमं ज्ञात्वाऽन्यदेवताः पितॄंश्चेष्ट्वाऽन्ते विष्णौ समर्पणमन्यदेवतादिरूपेण भगवद्भजनम्, उपपत्तिं तूत्तरत्र वक्ष्यामीति भगवतोऽभिप्रायः। तर्हि त्रैविद्यानां त्वद्भजनं निरर्थकमेवेत्यत आह — तथापीति। यद्यपि न मुक्तिं ददामि, तथापि तदभिप्रेतं स्वर्गादिकं ददामीति शेषः। एवं तर्हि ज्ञानिभ्यो मुक्तिं त्रैविद्येभ्योऽल्पं फलं ददद्विषमो भगवान्स्यादित्याशङ्कानिरासार्थत्वेनोत्तरवाक्यं सङ्गमयन्नाह—सर्वेषामिति। अनुरूपेण तेषामनुसारेण सत्त्वया ज्ञानिना त्रैविद्या-

शा॥ १ तत्फलार्थिनः ॥

ता॥सौलभ्यातिरेकं सारथ्यादिना पश्यतोऽपि पाण्डवस्योपामिभिप्रायपूर्वकं कण्ठोक्त्याप्युपदिदेश । नन्वे-तावतापि चोद्यानुमानतर्काणां कः परिहार उक्तो भवति?;तदुच्यते—हेयप्रत्यनीकः स्वयं हेयं कथमुपाद-दीतेतिचोद्यमवतारादेर्हेयत्वाभावादेव निरस्तम्; तदभावश्चाकर्मवश्यत्वाप्राकृतत्वस्वेच्छाकृतत्वादिभिः । पुण्यपापाद्यभावे नियन्त्रन्तराभावे च कथं जन्मादीत्येतदपि स्वेच्छया परिहृतम्। हिताहितावाप्तिशक्त्या-दिचोद्यमकर्मवश्यस्य लीलयावतरतोऽस्याहिताभावाच्चदज्ञानाभावाच्च निरस्तम् । प्रयोजनाभावचोद्यं तु साधुपरित्राणादिप्रयोजनवर्णनेनापाकृतम्।यत्तु साधुपरित्राणादौ सङ्कल्पमात्रेणापि शक्ये किमवतारादिनेति, तदपि 'परित्राणाय साधूनाम्' इत्यत्र 'मत्नाम' इत्यारभ्य 'आलापादिदानेन तेषां परित्राणाय' इत्यन्तेन भाष्येण, 'धर्मसंस्थापनार्थाय' इत्यत्र 'आराध्यस्वरूपप्रदर्शनेन' इत्यनेन, 'ये यथा' इत्यत्र सर्वसाधारण-स्वसौलभ्यातिरेकप्रदर्शनेन च परिहृतम् । यदुक्तम्—ईश्वरो न वस्तुतो जन्मादिमान् अकर्मवश्यत्वात्, मुक्तात्मवत्, इति,तत्रेश्वराभ्युपगमानभ्युपगमयोर्धर्मिग्राहकबाधाश्रयासिद्धी। किञ्च किमत्र कर्महेतुकजन्मा-दिरहित इति साध्यार्थः, उताकर्महेतुकजन्मादिरहित इति,अथवा सामान्येन जन्मादिमात्ररहित इति; न प्रथमः,सिद्धसाधनात्; न द्वितीयः,हेतोरप्रयोजकत्वात् ; नहि कर्मनिवृत्तिरकर्महेतुकं जन्मापि निवर्तय-ति; निषेध्यस्वरूपसमर्पकप्रमाणेन बाधश्च;यथाग्नेरनौष्ण्यानुमाने, न तृतीयः,दृष्टान्तस्य साध्यविकलत्वात्, मुक्तस्यापि हि शरीरपरिग्रहो'जक्षत्क्रीडन् रममाणः' 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतिसिद्धः।

प्र-पा ॥ १. गी. ४-८ ॥

२. गी. ४-८ ॥ भाष्ये ॥

३. गी. ४-११ ॥

४. छा. ८-१२-३ ॥ †'स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्तः, एवमेवायमस्मिञ्छरीरे प्राणो युक्तः॥' सः - 'अस्मात् शरीरात् समुत्थाय परं ज्योतिरुप-सम्पद्य' इत्यत्रोक्तोपसम्पादनीय , उत्तमः पुरुष इत्यर्थः। 'उत्तमः पुरुषस्तस्य' इति भगवत एवोत्तमपुरुषत्वेन उपसम्पादनकर्तरि उत्तमपुरुषत्वस्य बाधितत्वात्,'स तत्र पर्येति' इत्युत्तरवाक्यस्वारस्यभङ्गप्रसङ्गाच्च । स उप-सम्पन्नः, तत्र-परमात्मनि, पर्येति तं परितोऽनुभवति, अनुसञ्चरतीति वा; 'इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्' इति श्रुत्य-न्तरात् । जक्षत्—'जक्ष-भक्षणे' भक्ष्यभोगान् भुञ्जा-नस्सन् , स्त्रीभिः क्रीडन् , यानैर्वा, ज्ञातिभिर्वा रम-माणस्सन् , उपजनं—जनसमीपे स्थितमिदं शरीरं तस्मरन् सन् इत्यर्थः , 'तत्र पर्येति' इत्यन्वयः । अत्र स्मरणनिषेधस्तु कर्मनिबन्धनदशाकारेण वा, 'यत्र नान्यत्पश्यति' इत्युक्तरीत्याऽनुभाव्यविषयभोग्यतातिशयेन वा पद्यः । आत्मनोऽशरीरस्वभावत्वे प्राक् शरीरसम्बन्धः किंनिबन्धन इत्यत्राह—स यथेति । यथा आचरणे शकटे, प्रयोग्यः, युग्यः अश्वः बलीवर्दो वा, पाशेन युक्तो भवति ; एवमेवायं प्राणसहचारी प्रत्यगात्मा संसारदशायां कर्मपारवश्येन युक्तो भवति । अनेन युग्यशकटदृष्टान्तेन देहात्मनोर्व्यतिरेको दृढीकृतो भवति ॥

५ छा उप. ७-२६-२ ॥ †'स एकधा भवति त्रिधा भवति पञ्चधा । सप्तधा नवधा चैव पुनश्चैकादश स्मृतः । शतञ्च दश चैकश्च सहस्राणि च विंशतिः॥' सः—मुक्तपुरुषः, आत्मनो निरवयवस्य त्रेधा पञ्चधा विभागायोगात् सङ्कल्पपरिगृहीतानेकविधशरीरो भवतीत्यर्थः ॥

शं॥तथैव भजामि इत्यर्थः। न पुनः रागद्वेषनिमित्तं मोहनिमित्तं वा कं चित् भजामि। सर्व-

आ॥सेवयामि: फलदानेन न तु गुणभावेन । कथमयं विशेष इत्यत आह—मम वर्त्मेति ।

ज्ञा॥नां चेति चतुर्थ्यर्थे षष्ठी। तथैव भजामीत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे—सेवयामीति। 'बहुल-मेतन्निदर्शनम्' इति वचनात्स्वार्थे णिच् । 'मम वर्त्म' इत्यस्य मद्भक्त्यप्रतीतेस्तामाह—कथमिति । यः फलतारतम्यहेतुरय ज्ञानिभ्यस्त्रैविद्यानां सेवायां विशेषः कथं किंप्रकार इत्यर्थः । कथमनेनैतच्छङ्कापरिहार

रा॥इदानीं प्रासङ्गिकं परिसमाप्य प्रकृतस्य कर्मयोगस्य ज्ञानाकारताप्रकारं वक्तुं तथाविधकर्मयोगाधिकारिणो दुर्लभत्वमाह—

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२

सर्व एव पुरुषाः कर्मणाम्फलं काङ्क्षमाणाः इन्द्रादिदेवतामात्रं यजन्ते—आराधयन्ति,न तु कश्चिदनभिसंहितफलः इन्द्रादिदेवतात्मभूतं सर्वयज्ञानां भोक्तारं मां यजते;कुत एतत्? यतः क्षिप्रमस्मिन्नेव मानुषे लोके कर्मजा पुत्रपश्वन्नाद्यादिसिद्धिर्भवति; मनुष्य-

ता॥एवमध्यायार्थतयाभिहितेषु पञ्चसु प्रसङ्गात् प्रासङ्गिकं चोक्तम्,अथ प्रकृतस्य कर्मयोगस्य ज्ञानाकारताप्रकारं वक्तुं तदुपोद्घाततया षट् श्लोकाः प्रवर्तन्ते । तत्राधिकारिविषयाश्चत्वारः, कर्मस्वरूपविषयौ द्वावित्यवान्तरविभागः। तदिदमभिप्रयन् प्रथमं श्लोकमवतारयति—इदानीमिति । 'काङ्क्षन्तः' इत्यत्र विशेषनिर्देशाभावात् —सर्व एव पुरुषा इत्युक्तम्। ये मुमुक्षुतया सभाव्यन्ते,तेऽपि हि प्रथमं त्रिवर्गप्रवणा इत्येवकाराभिप्रायः।'कर्मणां सिद्धिम्'इत्यत्र कर्मस्वरूपसिद्धिशङ्काव्युदासायोक्तं— फलमिति। इहशब्दाभिप्रेतमाह—इन्द्रादिदेवतामात्रमिति । इह या देवतात्वेन प्रतीयन्ते, ता इत्यर्थः । 'यज देवपूजायाम्' इति धात्वर्थव्यञ्जनाय –आराधयन्तीत्युक्तम् । एतेन तत्तद्देवताराधनभूतानां दानहोमादीनामपि सङ्ग्रहः। 'सर्वाणि कर्माणि'इत्यनन्तरमेतद्व्यञ्जयिष्यति।व्यतिरेकरूपमाभिप्रायिकं कर्मयोगाधिकारिदौर्लभ्यमाह—न तु कश्चिदिति । सर्वयज्ञानां भोक्तारमित्यनेन 'अहं हि सर्वयज्ञानां' 'भोक्तारं यज्ञतपसाम्' इत्यादि वक्ष्यमाणं सूचितम्। हेतुपरहिशब्दार्थव्यञ्जनाय शङ्कते—कुत एतदिति । महति फले स्थिते क्षुद्रफलाकाङ्क्षा किंनिबन्धनेत्यर्थः । क्षिप्रमानुषशब्दाभ्यां कालतो देशतश्चासत्तिरुच्यते । 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिकं क्षिप्रशब्देन स्मारितम्। अस्मिन्नेवेत्यनेन मानुषशब्दफलितदेशासत्तिद्योतनम् । क्षिप्रलाभादस्मिन्नेव लोके लाभाच्च क्षुद्रेष्वपि फलेषु प्रथममाकाङ्क्षा स्यादिति भावः । मानुषलोकाविरित्यनेन सिद्धिं विशेषयति—पुत्रपश्वित्यादि । अपवर्गप्रकरणफलितमाह

प्र-वा ॥ १ विषयविभाग. पा॥
२. धातुपाठे. भौवादिकः, उभयपदी ॥
३. गी.९-२४॥ ४.गी.५-२९॥ ५.भक्ति.॥॥
६ यजुषि २. का १. प्रश्न. १. अनु ॥
+'वायव्य श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति॥'अस्यार्थः —वायुः देवता यस्य सोऽयं वायव्यः, स च श्वेतवर्णः, तमालभेत—स्पृशेत ; 'आलम्भः स्पर्शहिंसयोः' इति नैघण्टुकाः, यद्वि श्लक्ष्णशाखाभ्यां यागार्थमुपकुर्यादित्यर्थः, यद्यपि अत्र 'यजेत' इति न श्रूयते, तथापि द्रव्यदेवतात्मकस्य यागरूपस्य श्रूयमाणत्वात् अन्यथानुपपत्त्या 'वायव्येन यजेत' इत्येव यागः कल्पनीयः । ननु सत्सु महत्स्वग्न्यादिषु देवेषु कुतः वायुरेवापेक्ष्यते इति शङ्कनीयम्, वायोरतिशयेन क्षिप्रगामित्वात्, श्वेतपशुषु अतिप्रियत्वाच्च वायोः, स्वकीयो भागः, स्वार्थे धेयप्रत्ययः, यद्वा वर्णव्यत्ययेन दातव्यत्वमुक्तं। तेन च भागधेयेन असाधारणेन, वायुमेवोपधावति—समीपम्प्राप्नोति, सेवत इत्यर्थः । इतरदेवतानां तस्मिन् पशौ अत्यन्तप्रियत्वाभावात् 'वायुमेव' इत्येवकारार्थः । यद्वा यजमानस्यानादरव्यावृत्त्यर्थम् 'उपधावत्येव' इति योज्यम् । तेन तुष्टः स वायुरेव, एनं—यजमानं , भूतिम्—ऐश्वर्यम् , गमयति, पूर्ववत् 'गमयत्येव' इति योज्यम् ॥

शं॥यस्मिन् कर्मणि अधिकृताः ये प्रवर्तन्ते ते मनुष्या अत्र उच्यन्ते. हे पार्थ सर्वशः सर्वप्रकारैः ॥ ११ ॥

रा॥लोकशब्दस्स्वर्गादीनामपि प्रदर्शनार्थः। सर्व एव लौकिकाः पुरुषा अक्षीणानादिकाल-प्रवृत्तानन्तपापसञ्चयतयाऽविवेकिनः क्षिप्रफलाकाङ्क्षिणः पुत्रपश्वन्नाद्यस्वर्गाद्यर्थतया सर्वाणि कर्माणीन्द्रादिदेवताराधनमात्राणि कुर्वते, न तु, कश्चित्संसारोद्विग्नहृदयो मुमुक्षुरुक्तलक्षणं कर्मयोगं मदाराधनभूतमारभत इत्यर्थः॥ १२ ॥

यथोक्तकर्मयोगारम्भविरोधिपापक्षयहेतुमाह—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३

ता॥—मनुष्येति। अतिशयितफलसद्भावेऽपि क्षुद्रफलाकाङ्क्षाया तदनुपपत्तिं पापसन्तानानुवृत्तिं च हेतुं दर्शयन् कण्ठोक्ताभिप्रायिकं च सङ्कल्प्य वाक्यार्थमाह—सर्व एवेति। लौकिका इति—त्रिवर्ग-प्रावण्यनिदर्शनार्थमुक्तम्। अविवेकिनः—अविवेकिन इत्यादिन्यर्थः। क्षिप्रफलाकाङ्क्षिण इति—क्षुद्रत्व-नश्वरत्वदुःखानुबन्धित्वादिदोषपुञ्जानादरेण 'वरमद्य कपोतः श्वो मयूरात्' इतिवन्मन्यमाना इति भावः। उपलक्षणोपलक्ष्यभूतैरिहामुष्मिकसङ्कलनेनोक्तं—पुत्रपश्वन्नाद्यस्वर्गादीति। एतेन 'कर्मणा सिद्धिम्' इत्यत्र सिद्धिशब्दस्सामान्यविषय इति दर्शितम्। सर्वाणि कर्माणि—यागदानहोमादीनि ॥ १२ ॥

नन्वक्षीणानन्तपापसञ्चयत्वं सर्वत्र समम्, ततश्चाविवेकित्वात्क्षिप्रफलकाङ्क्षित्वमपि समानम्, अतः कस्यापि मुमुक्षाविरहान्मोक्षोपायशास्त्रमप्रमाणं स्यादित्याशङ्क्य श्लोकद्वयेन तत्परिहारः क्रियत इत्यभिप्रायेणाह—यथोक्तेति। पूर्वश्लोकोक्तेषु देवतान्तराधीनेषु क्षुद्रफलेष्वपि सर्वकर्तुः स्वस्यैव हेतुत्वं 'चा-

प्र पा॥ १. पुञ्जानादरेणानश्वरमुक्तादिव मन्यमाना पा॥ २. लोकोक्तिरियम् ॥

श॥यदि तव ईश्वरस्य रागादिदोषाभावः, तथा सर्वप्राणिषु अनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे च त्वयि सति 'वासुदेवः सर्वम्' इति ज्ञानेनैव मुमुक्षवः सन्तः कस्मात् त्वामेव सर्वे न प्रतिपद्यन्ते इति? शृणु तत्र कारणं—काङ्क्षन्त इति। काङ्क्षन्तः—*प्रार्थयन्तः कर्मणां सिद्धिं फलनिष्पत्तिं यजन्ते इह अस्मिन् लोके देवताः इन्द्राग्न्याद्याः, 'अथ योऽन्यां देवताम् उपास्ते अन्योऽसौ अन्योऽहम् अस्मि इति न स वेद यथा पशुः एवं स देवानाम्' इति श्रुतेः। तेषां हि भिन्नदेवतायाजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं हि यस्मात् मानुषे लोके मनुष्यलोके हि शास्त्राधिकारः। 'क्षिप्रं हि मानुषे लोके' इतिविशेषणात् अन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान्। मनुष्यलोके वर्णाश्रमादिकर्माधिकारः इति विशेषः, तेषां च वर्णाश्रमाधिकारिणां कर्मणां फलसिद्धिः भवति कर्मजा कर्मणो जाता॥ १२॥

आ॥कुतो मम वर्त्मानुवर्तन्ते क्षिप्रं हि अतएवाह फलप्राप्तिः।'तस्मात्तु धनसनयः' इति श्रुतिः॥

ज॥साधकं तु प्रमाणं पृच्छति—कुत इति। 'मम वर्त्मानुवर्तन्ते' इति यत्सर्वयज्ञादिभोक्तृत्वमुक्तम्, तत्कुतः प्रमाणाज्ज्ञायत इत्यर्थः। सर्वकर्तृत्वं तु जीवानामस्वातन्त्र्यदर्शनात्सिद्धम्। इत्यत आहेति शेषः। हीत्यतः परमितिशब्दश्च। किमनेन प्रमाणमुक्तमित्यत आह—अत एव हीति। कर्मजा सिद्धिः, फलप्राप्तिस्तावत् क्षिप्रं प्रत्यक्षोपलभ्याऽस्ति। सा चातएव कर्मणां भगवता भुक्तत्वादेव हि युज्यते। नान्यथेत्यर्थः। इन्द्रादिभ्योऽपि फलप्राप्त्युपपत्तेरप्रक्षीणाऽर्थापत्तिरित्यतश्चाह—अत एव हीति—भगवत एव। अत्र हीति सूचितं प्रमाणमाह—तस्मादिति। धनसनयो धनलाभवन्तः॥ १२॥

पा॥ *अभिलषन्त ॥

ग॥ चातुर्वर्ण्यप्रमुखं ब्रह्मादि स्तम्बपर्यन्तं कृत्स्नं जगत् सत्त्वादिगुणविभागेन तदनुगुणशमादिकर्मविभागेन च विभक्तं मया सृष्टम्; सृष्टिग्रहणं प्रदर्शनार्थम् । मयैव रक्ष्यते,

ना॥ तुर्वर्ण्यम्' इत्यादिना दर्शितम्। व्यष्टिसृष्ट्यन्तर्गतचातुर्वर्ण्यकथनं समस्तव्यष्टिसृष्टिसङ्ग्रहार्थमित्यभिप्रायेण चातुर्वर्ण्यप्रमुखमित्युक्तम्। वैषम्यनैर्घृण्यपरिहारप्रस्तावाय व्यष्टिसृष्ट्युपादानम्। 'गुणकर्मविभागशः' इत्येतत्प्रपञ्चयिष्यमाणसत्त्वादिविभागविषयमित्यभिप्रायेण—सत्त्वादीत्युक्तम् । सत्त्वादिमूलत्वात्सर्वव्यापाराणां—तदनुगुणेत्युक्तम्। 'तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तमम्' इत्यादिगुणविभागः, 'ब्राह्मणक्षत्रियविशाम्' इत्यादिकर्मविभागः। शमादिकर्मेति—शमाद्यनुष्ठेयमित्यर्थः। 'शमो दमः' इत्युपक्रम्य 'ब्राह्मं कर्म स्वभावजम्' इति वक्ष्यते। एवं देवतिर्यङ्मनुष्यादिजातिषु वाराहपाद्मशानकल्पादिषु च पुराणेषु प्रपञ्चितस्तत्तद्गुणोद्रिक्तो विषमसृष्टिप्रकारो द्रष्टव्यः । श्रुत्यादिषु सृष्ट्यादिसमस्तहेतुत्वस्येश्वरस्य ज्ञातव्यत्वविधानादत्र सृष्टिग्रहणं रक्षादेरपि प्रदर्शनपरमित्याह —सृष्टीति । एतेन व्यष्टिसृष्ट्यादिव्यापारत्रयस्यापि

प्र॰पा॥ [१] भारते, आश्वमेधिक॰ अनुगीतापर्व. ३९- [२] गी. १८ ४२ ॥

११ इत्येव निपुवर्णेपु [त्रिवर्णेपु?] गुणारत्नय, इत्युत्तरार्धम्॥ ३. गा. ८-४२ ॥

---

श॥ मानुष एव लोके वर्णाश्रमादिकर्माधिकारः न अन्येषु लोकेषु इति नियमः किंनिमित्त इति? अथवा—वर्णाश्रमादिप्रविभागोपेताः मनुष्या मम वर्त्म अनुवर्तन्ते सर्वश इत्युक्तम् , कस्मात्पुनः कारणात् नियमेन तवैव वर्त्म अनुवर्तन्ते न अन्यस्य इति? उच्यते—चातुर्वर्ण्यम् इति । चत्वार एव वर्णाः चातुर्वर्ण्यं मया ईश्वरेण सृष्टम् उत्पादितं *गुणकर्मविभागशः गुणविभागशः कर्मविभागशश्च । गुणाः सत्त्वरजस्तमांसि । तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य 'शमो दमस्तपः' इत्यादीनि कर्माणि, सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि, तमउपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि, रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषा एव कर्म इत्येवं गुण-

आ॥ अहमेव हि कर्तेत्याह —चातुर्वर्ण्यमिति । चतुर्वर्णसमुदायः । सात्त्विको ब्राह्मणः । सात्त्विकराजसः क्षत्रियः । राजसतामसो वैश्यः । तामसः शूद्र इति गुणविभागः । कर्मविभागस्तु 'शमो दमः' इत्यादिना वक्ष्यते। क्रियायां वैलक्षण्यात्कर्ताऽप्यकर्ता । तथा हि

ज॥ 'चातुर्वर्ण्यम्' इत्यस्य सङ्गतिं सूचयन् तात्पर्यमाह —अहमेव हीति । यस्मादहमेव चातुर्वर्ण्यस्य कर्ता, त्रैविद्याश्च तदन्तर्भूताः, तस्मात्त्वपितर मां परित्यज्यान्यदेवता यजन्तः कथं महाफलभाजो भवेयुरित्याहेत्यर्थः। 'विचित्रा तद्धितगतिः' इति वचनादतिरिक्तार्थसम्भवे 'चतुर्वर्णादिभ्यः स्वार्थे उपसङ्ख्यानम्' इति नादरणीयमिति भावेनाह —चतुर्वर्णेति । वर्णाश्चत्वारो गुणास्त्रयः, तत्कथं तेषु गुणविभाग इत्यत आह— सात्त्विक इति । राजसस्यसात्त्विकेष्वेवाय विभाग इति ज्ञातव्यम् । निर्देशप्राथम्यात्क्षत्रिये रजसः सत्त्वमधिकम्; ततएव वैश्ये तमसो रजः, तच्च समत्वयुतम् , रजोऽपेक्षया तमोऽधिकं शूद्र इत्यसौ तामसः । सत्त्व तु तमसोऽप्यधिकम्। कर्मविभागः कीदृश इत्यत आह—कर्मेति । यदि चातुर्वर्ण्यं त्वया सृष्टं तर्हि कर्तृत्वात् जीववत्तवापि कर्मलेपः प्रसज्यत इत्यतः कर्मलेपाभाव वक्तु हेतुत्वादुच्यते 'तस्य' इति, तदेतद्व्याहतमित्यत आह—क्रियायामिति। कथ वैलक्षण्यमित्यतः श्रुत्यैव दर्शयति —तथा हीति । विश्वकर्माऽपि विमनास्त्वाभिनिवेशरहित इत्यर्थः । प्रकारान्तरेण वैलक्षण्य पुन-

पा ॥ * 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतेः इत्यधिकःपाठः क्वचित् ॥

रा॥मयैव चोपसंह्रियते, तस्य विचित्रसृष्ट्यादेः कर्तारमप्यकर्तारं मां विद्धि ॥ १३ ॥

कथमित्यत आह—

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४**

यत इमानि विचित्रसृष्ट्यादीनि कर्माणि मां न लिम्पन्ति—न मां सम्बध्नन्ति ; न

ता॥स्वकर्तृत्वस्वचनात्, 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' इत्यादेरर्थोऽप्युक्तो भवति । सूचितं चैतत् 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' इति ॥ १३ ॥

एककार्यविषयैकस्यैव कर्तृत्वं तदभावश्चेति व्याहतमित्यभिप्रायेण चोदयति—**कथमिति।** कर्तृत्वं तावन्मुख्यम्, अकर्तृत्वं तु वैषम्यप्रयोजकत्वाभावादुच्यत इति व्यञ्जयति—**यत इति।** कर्मशब्दोऽत्र न पुण्यपापविषयः, प्रकृतानुपयुक्तत्वादिदानीं कर्मवश्यत्वशङ्काभावात्, शङ्कितविरोधपरिहारात्मकत्वस्यैव युक्तत्वादनपेक्षितविधानादपेक्षितविधानप्राबल्याच्चेत्यभिप्रायेण—**इमानि विचित्रसृष्ट्यादीनि कर्मा-णीत्युक्तम्।** 'न मां लिम्पन्ति' इत्यस्य मुख्यासङ्गतेर्लक्ष्यं तावदाह—**न मां सम्बध्नन्तीति।** कथमेता-

प्र पा॥ १. विष्णुधर्म ६८ ५१ ॥ चतुर्मुखं प्रति भगवान् । 'उत्पाद्य पृथिवीं सम्यक् स्थापयित्वा यथा पुरा' इत्युत्तरार्धम् ॥

२. शारी. २ ४-१७ ॥ देवादिनामरूपव्यष्टिसृष्टिः चतुर्मुखशरीरकात्परमात्मन एव, न केवलचतुर्मुखात्; 'नामरूपे व्याकरवाणि' इति त्रिवृत्करणं कुर्वतो नामरूपव्याकरणोपदेशात् । त्रिवृत्करणन्तु केवलचतुर्मुखस्य न सम्भवति, त्रिवृत्कृतैस्तत्त्वैरण्डमुत्पाद्य पश्चाच्चतुर्मुखसृष्टेः, 'तदण्डमभवद्धैमं—तस्मिञ्जज्ञे स्वयं ब्रह्मा' इत्यादिस्मृतेः ॥

शा॥कर्मविभागशः चातुर्वर्ण्यं मया सृष्टम् इत्यर्थः। ननु च इदं चातुर्वर्ण्यं न अन्येषु लोकेषु, अतः मानुषे लोके इति विशेषणम् । हन्त तर्हि चातुर्वर्ण्यस्य सर्गादेः कर्मणः कर्तृत्वात् तत्फलेन युज्यसे, अतः न त्वं नित्यमुक्तः नित्येश्वरश्च इति? उच्यते—यद्यपि मायासंव्यवहारेण तस्य कर्मणः कर्तारमपि सन्तं मां परमार्थतः विद्धि अकर्तारम्। अत एव अव्ययम् असंसारिणं च मां विद्धि ॥ १३ ॥

येषां तु कर्मणां कर्तारं मां मन्यसे परमार्थतः तेषाम् अकर्ता एव अहम्, यतः—न

आ॥श्रुतिः—'विश्वकर्मा विमनाः' इत्यादि, 'तनुर्विद्या क्रिया कृतिः' इति च। साधितं चेतत्पुरस्तात् ॥ १३ ॥

अत एव न मां कर्माणि लिम्पन्ति, इतश्च न लिम्पन्तीत्याह—न मे कर्मफले स्पृहेति।

ज॥णेन दर्शयति—**तनुरिति।** क्रियाया मिथ्यात्वात्कर्ताप्यसन्निति परव्याख्यां प्रत्याख्याति—**साधितं चेति ।** एतत् क्रियायाः सत्यत्वम् । पुरस्तात् द्वितीये ॥ १३ ॥

अपव्याख्यानस्य दूषणान्तरं सूचयन् क्रियावैलक्षण्यकथनस्य का सङ्गतिरित्यत उत्तरेण सङ्गति-माह—**अत एवेति ।** एवशब्देनास्मद्व्याख्यान एवायं हेतुहेतुमद्भावो युज्यते, न परव्याख्यान इति सूचयति। जीवानां कर्मलेपेऽभिनिवेशादिकं कारणं तस्य नास्तीति। मिथ्यात्वं तु जीवक्रियायामपि समानमिति तेषामपि लेपाभावे किमाश्रय आक्षेपः स्यात् । ज्ञानेन विशेष इति चेत्—न, तस्याश्रवणात् । लेपनिवारणं च व्यर्थम्, तस्यापि मिथ्यात्वेन ज्ञातव्यत्वात् । हेतुहेतुमतोरुक्तत्वात् 'न मे कर्म' इति कि-मर्थमित्यत आह—**इतश्चेति ।** नन्वात्मार्थं भगवतः फलस्पृहाभावेऽपि परार्थमस्त्येव, तत्कथमेवमुच्यत

रा॥मत्प्रयुक्तानि तानि देवमनुष्यादिवैचित्र्यधाणि, सृज्यानां पुण्यपापरूपकर्मविशेषप्रयुक्तानीत्यर्थः. अतः प्राप्ताप्राप्तविवेकेन विचित्रसृष्ट्यादेर्नाहं कर्ता; यतश्च सृष्टाः क्षेत्रज्ञाः सृष्टिलब्धकरणकलेबराः सृष्टिलब्धं भोग्यजातं फलसङ्गादिहेतुस्वकर्मानुगुणं भुञ्जते; सृष्ट्यादिफले कर्मफले च तेषामेव स्पृहेति न मे स्पृहा। तथाह सूत्रकारः *'वैषम्यनैर्घृण्ये

ता॥वता विरोधपरिहार इत्यत्राह—नमत्प्रयुक्तानीति। वैषम्यांशे विशेषहेतुत्वं निषिद्ध्यत इति न विरोध इति भावः। कस्तर्हि विषमसृष्टेर्विशेषहेतुरित्यत्राह—तानीति। उक्तहेतुवशादकर्तृत्वव्यपदेशौचित्यं निगमयति—अत इति। प्राप्ताप्राप्तविवेकेन—पुण्यपापतारतम्यानुगुणसुखदुःखादिविषमसृष्टितारतम्यदर्शनकृतविशेषनिष्कर्षेणेत्यर्थः। यथा विचित्रेष्वङ्कुरेषु क्षितिजलादीनि सामान्यकारणानि, वैचित्र्यं स्वबीजवैचित्र्यहेतुकं तद्वदिति भावः। एवं विशेषप्रयोजकत्वाभावेनाकर्तृत्वमुक्तम्। अथ विशेषसृष्टिफलनिःस्पृहत्वे नाकर्तृत्वमुच्यत इत्यभिप्रायेण 'न मे कर्म'इत्यादिकं व्याख्याति—यतश्चेति। स्वस्य स्पृहानिषेध इतरेषां स्पृहासत्त्वाभिप्राय इति व्यञ्जनाय-सृष्टा इत्यादिकमुक्तम्। सृष्टाः क्षेत्रज्ञा इति कर्मनिर्देशेन भोक्तृत्वदशापन्नक्षेत्रज्ञसिद्ध्यर्था सृष्टिरित्यभिप्रेतम्। भोक्तृत्वोपयुक्ताकार उच्यते-सृष्टिलब्धकरणकलेबरा इति। नहि मदीयकरणादिलाभार्था सृष्टिरिति भावः। फलसङ्गादिहेतुशब्दो बहुव्रीहितत्पुरुषयोरन्यतरेण स्वकर्मविशेषकः। फलसङ्गादिहेतुभिरिति वा पाठः। स्वकर्मानुगुण, न तु तन्निरपेक्षकेवलमत्सङ्कल्पविशेषानुगुणमिति भावः। कर्मफल इत्यत्रापि कर्मशब्दः प्रकृतसृष्ट्यादिकर्मविषयः; फलस्वभावात्तु पुण्यपापरूपं कर्म फलितमित्यभिप्रायेण-सृष्ट्यादिफले कर्मफले चेत्युक्तम्। प्रवाहानादिवासनामूलतत्तदिच्छानुरूपं प्रवर्तयन् तत्तदिच्छाहेतुकतत्तत्पुण्यपापानुगुणं फलं प्रयच्छामि, न तु स्वेच्छानुरूपं प्रयच्छामि, नापि स्वातन्त्र्यमात्रेण विषमं फलं ददामि, न च स्वप्रयोजनार्थं परान्पीडयामीत्येतदखिलमपि न मे स्पृहेत्यन्तेनोक्तं भवति। 'अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्' इति पञ्चमवेदे गीतोपनिषत्सङ्ग्रहीतुश्शारीरकसूत्रेणोक्तार्थं संवादयति—तथाहीति। तत्पितुर्देवतापारमार्थ्यविदो वचनं च दर्शयति—तथाचेति। तत्रहि वराहप्रादुर्भावमभिधाय 'भूराद्यांश्चतुरो लोकान्पूर्ववत्समकल्पयत्' इत्यन्तेन पृथिवीसमुद्धरणभूपर्वतादिविभागलोकविभागादिकमुक्त्वा 'ब्रह्मरूपधरो देवस्ततोऽसौ रजसा वृतः। चकार सृष्टिं भगवांश्चतुर्वक्त्रधरो हरिः' इति चतुर्मुखशरीरस्य भगवतो विष्णोः स्वर्गादिलोकान्तर्वर्तिसृष्टिरेव प्रवक्ता। ततो

प्र-पा॥*शारी. २-१-३४॥ २१०. पुट व्याख्यातम्॥ भूरिति पातालानामप्युपलक्षणम्॥
१. भारते. आदिपर्व १-२७९॥ २. वि. पु १ ४-४९॥ ३ वि. पु. १-४-५०॥ †'चतुर्वक्त्रधरः' इ- 'भूविभागं ततः कृत्वा सप्तद्वीपान्यथातथम्'इति पूर्वा।। ति हरेर्ब्रह्मरूपधरतया चतुर्वक्त्रत्वं सुवचम्॥

शं॥इति। न मां तानि कर्माणि लिम्पन्ति देहाद्यारम्भकत्वेन अहङ्काराभावात्। न च तेषां कर्मणां फले मे मम स्पृहा तृष्णा। येषां तु संसारिणाम्'अहं कर्ता'इत्यभिमानः कर्मसु,

आ॥इच्छामात्रं त्वस्ति। न तु तत्राभिनिवेशः। तच्चोक्तम् 'आकाङ्क्षन्नपि देवोऽसौ नेच्छते लोकवत्परः। न ह्याग्रहस्तस्य विष्णोर्ज्ञानं कामो हि तस्य तु' इति। न च केचिन्मुक्ता

ज॥इत्यत आह—इच्छेति। तत्र कर्मफले येन तत्प्राप्तिपर्यन्तं मनसो विक्षेपः, सोऽभिनिवेशः। अत्र प्रमाणमाह—तच्चेति। 'व्यत्ययो बहुलम्' इति व्यत्ययः। ज्ञाने ज्ञानमिव। इति मामित्येवं ज्ञानिनो मुक्तिः फलमुच्यते। सा च वर्तमानप्रत्ययेन; प्राक् च भूतप्रत्ययेन मद्भावमागता इति। तत्रैकजीववादिनामाक्षेपमुद्भाव्य प्रतिषेधति—न चेति। केचिदिदानीं मुक्ता भवन्ति। केचिद्गता इति पक्षेऽतीत

रा॥न सापेक्षत्वात्' इति। तथाच भगवान्पराशरः *'निमित्तमात्रमेवायं सृज्यानां सर्गकर्मणि। प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥ निमित्तमात्रं मुक्त्वैवं नान्यत्किञ्चिदपेक्षते। नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम्' इति। सृज्यानां देवादीनां क्षेत्रज्ञानां सृष्टेः कारणमात्रमेवायं परमपुरुषः; देवादिवैचित्र्ये तु प्रधानकारणं सृज्यभूतक्षेत्रज्ञानां प्राचीनकर्मशक्तय एव; अतो निमित्तमात्रं मुक्त्वा सृष्टेः कर्तारं परमपुरुषं मुक्त्वा इदं क्षेत्रज्ञवस्तु देवादिविचित्रभावे नान्यदपेक्षते; स्वगतप्राचीनकर्मशक्त्यैव हि देवादिवस्तुभावं नीयत इत्यर्थः। एवमुक्तेन प्रकारेण सृष्ट्यादेः कर्तारमप्यकर्तारं सृष्ट्यादिकर्मफलसङ्गरहितं च यो मामभिजानाति; स कर्मयोगारम्भविरोधिभिः फलसङ्गादिहेतुभिः प्राचीनकर्मभिर्न सम्बध्यते मुच्यत इत्यर्थः ॥ १४ ॥

ता॥श्रुत्यादिविरोधात्; उपादाने करणशब्दानौचित्याच। नचास्वातन्त्र्यप्रसङ्गः, विशेषप्रयोजकस्य करणभूतस्यादृष्टस्यापि तत्सापेक्षत्वात्। अतो द्वितीयश्लोकेनापि साधारणकारणतयेश्वराकाङ्क्षणमसाधारणकारणान्तरनैरपेक्ष्यं चोच्यते। तदेतदखिलमभिप्रेत्य श्लोकद्वयं व्याख्याति—सृज्यानामिति। सृज्यशब्दस्य प्रकरणविशेषितोऽर्थः—क्षेत्रज्ञानामित्यनेनोक्तः। निमित्तशब्दस्यात्रोपादानसहपठितनिमित्तपरत्वव्युदासायाह—कारणमात्रमिति। 'सृज्यशक्तयः' इत्यत्र समानाधिकरणसमासभ्रमव्युदासाय—सृज्यभूतेत्याद्युक्तम्। प्रलयकाले करणकलेवरादिरहितानामविभागापन्नानां कथं कर्मेति शङ्काव्युदासाय—प्राचीनेत्युक्तम्। पूर्वकल्पसम्भवशरीरैः कर्माणि निष्पन्नानि, 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति हि स्मरन्ति; न च नित्यानां क्षेत्रज्ञानां प्रलयेऽप्यत्यन्ताविभागः। सूत्रितं चैतत्—'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' इति। वस्तुशब्दोऽत्र प्रकरणादिसिद्धसङ्कोचविशेषविषय इत्यभिप्रायेण—इदं क्षेत्रज्ञवस्त्वित्युक्तम्। 'स्वशक्त्या वस्तु वस्तुतां नीयते' इत्युक्ते अवस्थान्तरं नीयत इत्येवोक्तं भवति; प्रागसतस्सत्तायोगित्वविवक्षायां सत्कार्यवादसिद्धान्तविरोधात्, 'स्वशक्त्या वस्तु वस्तुताम्' इत्यत्र आत्माश्रयादिप्रसङ्गाच्च। तथावस्थान्तरमस्मिन्प्रकरणे प्रलयदशापन्नानां देवादिभाव एवेत्यभिप्रायेण—देवादिवस्तुभावमित्युक्तम्। तदेवं कर्तृत्वाकर्तृत्वयोरविरोध उपपादितः। उक्तार्थस्य प्रकृतोपयोग उच्यते—इति मामित्यादिना। इतिशब्दः 'चातुर्वर्ण्यम्' इत्यादिकं सर्वं परामृशतीत्यभिप्रायेणाह—एवमिति। कर्मभिरिति सामान्यतो निर्देशोऽपि प्रकृतज्ञानमात्रात्सर्वकर्मविनाशायोगात्, 'एवं ज्ञात्वा कृतं कर्म' इत्यनन्तरवाक्यानुरोधाच्च संकोचे कार्ये प्रकृतोपयुक्तो विशेषोऽयमेवेत्यभिप्रायेण—कर्मयोगारम्भविरोधिभिरित्याद्युक्तम्। विरोधित्वेऽवान्तरव्यापारकथनं—फलसङ्गादिहेतुभिरिति। यद्वा फलसङ्गादिना कृतत्वात्फलादिद्वारा कर्मयोगारम्भविरोधिभिरिति भावः। अत्र प्राचीनशब्देन निष्पन्नोपासनस्य उत्तराघाश्लेष इत्यभिप्रेतम्। प्राचीनैः प्रागेव बद्धस्य कस्तैर्बन्ध इत्यत्राह—मुच्यत इत्यर्थ इति। एवं श्लोकद्वयेन यथोक्तकर्मयोगारम्भविरोधिपापक्षयहेतुरुक्तः ॥ १४ ॥

प्र-पा ॥ *वि. पु. १-४ ५१, ५२ ॥
१. नक्षत्रकर्ते प्रकृतिखण्डे. २६-७० ॥
२. शारी. २-१ ४५ ॥

शा॥फले स्पृहा' इति स कर्मभिः न बध्यते, तस्यापि न देहाद्यारम्भकाणि कर्माणि भवन्ति इत्यर्थः ॥ १४ ॥

ज॥युज्यते। उक्ताक्षेपादित्याशङ्कायामनन्ता जीवा इत्युत्तरम्। ननु कालोऽप्यनन्तोऽत इत्यस्योत्तरमाह—

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५

रा॥एवं मां ज्ञात्वा विमुक्तपापैः पूर्वैरपि मुमुक्षुभिरुक्तलक्षणं कर्म कृतम् । तस्मात्त्वमुक्तप्रकारमद्विषयज्ञानविधूतपापः पूर्वैर्विवस्वन्मन्वादिभिः कृतं पूर्वतरं पुरातनं तदानीमेव मयोक्तं वक्ष्यमाणाकारं कर्मैव कुरु ॥ १५ ॥

ता॥तत्पूर्वकं कर्मयोगं शिष्टानुष्ठानप्रदर्शनेन द्रढयन् अर्जुनं प्रत्यनुशास्ति 'एवम्' इति श्लोकेन । एवमिति—कर्तृत्वाकर्तृत्वादिनोक्तप्रकारेणेत्यर्थः । 'ज्ञात्वा कृतं कर्म' इत्युक्ते ज्ञानस्य कर्मकरणहेतुत्वं सूचितम् । 'कर्मभिर्न स बध्यते' इति च पूर्वमुक्तम् । अतो विरोधिपापनिरसनद्वारा ज्ञानस्य कर्महेतुत्वमिति व्यञ्जनाय—ज्ञात्वा विमुक्तपापैरित्युक्तम् । कर्मशब्दोऽत्र मुमुक्षुकर्तव्यविषयत्वाद्व्यवहितमपि प्रधानप्रकृतं कर्मयोगमवलम्बत इत्यभिप्रायेण—उक्तलक्षणमित्युक्तम् । त्वंशब्दो गृहीततत्त्वयाथात्म्योपदेशतां सूचयतीत्यभिप्रायेण—त्वमुक्तप्रकारमद्विषयज्ञानविधूतपाप इत्युक्तम् । 'इमं विवस्वते' इत्यादावुदाहृतानुष्ठातारः पूर्वैरिति परामृश्यन्त इत्यभिप्रायेण—विवस्वन्मन्वादिभिरित्युक्तम् । पूर्वतरमित्यस्य क्रियाविशेषणत्वव्युदासायाह—पुरातनमिति । तदभिप्रेतमाह—तदानीमेव मयोक्तमिति । एवं प्रवाहानादित्वमिह विवक्षितम् । कर्मयोगस्वरूपनिष्कर्षोपोद्घातरूपत्वादस्य—वक्ष्यमाणाकारमित्युक्तम् ॥ १५ ॥

प्र पा॥ १ गी ४ १ ॥

द॥'न अहं कर्ता न मे कर्मफले स्पृहा' इति—एवम् इति । एवं ज्ञात्वा कृतं कर्म पूर्वैः अपि अतिक्रान्तैः मुमुक्षुभिः । कुरु कर्मैव, न तूष्णीम् आसनं, नापि संन्यासः कर्तव्यः, तस्मात् त्वं पूर्वैरपि अनुष्ठितत्वात्, *यदि अज्ञः तदा आत्मशुद्ध्यर्थं, तत्त्ववित् चेत् लोकसंग्रहार्थं, पूर्वैः जनकादिभिः पूर्वतरं कृतं न अधुना कृतं निर्वर्तितम् ॥ १५ ॥

आ॥मृत्युमुपयाति विद्वान्' इति । कथं वा इत्यनन्ता चेत्यनन्तवत् इति होवाचेति ॥१४॥
एवं ज्ञात्वा कर्मकरणे आचारोऽप्यस्तीत्याह—एवमिति । पूर्वतरं कर्म पूर्वभावीत्यर्थः ॥ १५ ॥

ज॥अनन्तवदिति । यथा भगवान् कालक्षणेभ्योऽप्यतिशयेनानन्तस्तथाऽनन्ता , कुत , इति होवाच श्रुत्यन्तरमिति ॥ १४ ॥

ननु 'एवं ज्ञात्वा' इति पुनरुक्तम् । कर्मकरणे आचारस्य प्रागेवोक्तत्वादित्यत आह—एवमिति । यदि ज्ञानी कर्मभिर्न बध्यते, तर्हि ममापि ज्ञानित्वेन कर्मबन्धाभावात् कथं कर्मविधानमित्याशङ्क्य ज्ञानिनामप्यधिकमोक्षाकाङ्क्षया कर्मकरणम् । आचारोऽत्रोच्यते । प्राक्तु जनकादीनां विवस्वदादीनां च विद्यमानमपि ज्ञानित्वं भगवता न विवक्षितमिति भावः । अत एव भाष्यकारेण तत्र कर्म कृत्वैवेत्युक्तम् । न हि ज्ञानिना कर्म ज्ञानद्वारा मुक्तिहेतुः । मुमुक्षुभिरिति तत्साधुकारिण्युप्रत्ययः । पूर्वं कृतमित्यनेनैव पूर्वतरत्वस्योक्तत्वात्पुनरुक्तिरित्यत आह—पूर्वतरमिति । तैरपि ततोऽपि पूर्वमाविष्कृतमित्यर्थः । कर्मणः क्षणिकत्वात्कथं तदेव कर्तव्यमित्यतो वा इदमुक्तम् । पूर्वमिव भवतीति पूर्वभावि । अत एव कर्मेत्यनुवादः ॥ १५ ॥

पा॥ *यदनात्मज्ञः त्वं ॥

रा॥वक्ष्यमाणस्य कर्मणो दुर्ज्ञानतामाह—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६

मुमुक्षुणाऽनुष्ठेयं कर्म किंरूपम्, अकर्म च किम्; अकर्मेति कर्तुरात्मनो याथात्म्यज्ञानमुच्यते; अनुष्ठेयं कर्म तदन्तर्गतं ज्ञानं च किंरूपमित्युभयत्र कवयः— विद्वांसोऽपि, मोहिताः—यथावन्न जानन्ति; एवमन्तर्गतज्ञानं यत्कर्म, तत्ते प्रवक्ष्यामि, यत् ज्ञात्वाऽनुष्ठाय अशुभात्—संसारबन्धात् मोक्ष्यसे; कर्तव्यकर्मज्ञानं ह्यनुष्ठानफलम् ॥ १६ ॥

ता॥'किं कर्म'इति श्लोके कर्माकर्मशब्दाभ्यां पृथक् ज्ञातव्यभ्रमस्स्यादिति तद्व्युदासायाह—वक्ष्यमाणस्य कर्मण इति । 'कर्मण्यकर्म यः पश्येत्' इत्यादिना कर्माकर्मणोर्द्वयोरप्येककर्मयोगशास्त्रं हि वक्ष्यते । अत्रापि श्लोके 'तत्ते कर्म प्रवक्ष्यामि' इति ह्युच्यत इत्यभिप्रेत्य—वक्ष्यमाणस्य कर्मण इत्युक्तम् । दुर्विज्ञानत्वज्ञापनायाह—मुमुक्षुणानुष्ठेयमिति । अकर्मेति कर्माभावादिव्युदासायाह—आत्मनो याथात्म्यज्ञानमिति। अनुष्ठानोपयोगित्वज्ञापनाय—कर्तुरित्युक्तम् । 'कवयः क्रान्तदर्शिनः' इति प्रसिद्ध्यार्थान्तरप्रसिद्धेरत्रानुपयोगाच्च—विद्वांस इत्युक्तम् । 'मोहिताः' इत्यज्ञानम् अयथाज्ञानं च विवक्षितम्; तदुभयसङ्ग्रहायाह—यथावन्न जानन्तीति । मोहिताः विप्रकीर्णैश्शास्त्रैरिति शेषः । 'किं कर्म किमकर्म' इति द्वयोः प्रकृतत्वेऽपि 'कर्म प्रवक्ष्यामि' 'कुरु कर्मैव' 'गहना कर्मणो गतिः' इति पूर्वापरपरामर्शेन कर्मणः प्राधान्यमकर्मणस्तद्विशेषणत्वं च विवक्षितमित्यभिप्रायेण तच्छब्दाभिप्रेतं वैशिष्ट्यं व्यनक्ति – एवमन्तर्गतज्ञानमिति। संसारबन्धादिपरमप्रयोजनविवक्षयोक्तं—ज्ञात्वा मोक्ष्यस इति । एतावति निर्दिष्टे अनुष्ठायेति कुतो लब्धमित्यत्राह—कर्तव्यकर्मज्ञानमिति । अत्र ज्ञात्वेतिपदमजहल्लक्षणया कर्मज्ञानानुष्ठाने अपि गृह्णाति । 'कुरु कर्मैव तस्मात्त्वम्' इतिह्यनन्तरमेवोक्तम्, अन्यथा कर्मानुष्ठानविधिनैरर्थक्यं च स्यादिति भावः ॥ १६ ॥

प्र.पा॥ १. गी. ४ १८ ॥ २. अनुष्ठानदशोपयोगित्व, पा ॥ ३ गी. ३-८ ॥ ४. गी. ४-१७ ॥ ५. गी ४-१५ ॥

शां॥ननु अत्र कर्मचेत् कर्तव्यं त्वद्वचनादेव करोमि अहम् । किं विशेषितेन 'पूर्वैः पूर्वतरं कृतम्' इति ? उच्यते यस्मात् महत् वैषम्यं कर्मणि । कथम् ? किं कर्म इति । किं कर्म, किं च अकर्म इति कवयः मेधाविनः अपि अत्र अस्मिन् कर्मादिविषये मोहिताः मोहं गताः। तत् अतः ते तुभ्यम् अहं कर्म अकर्म च प्रवक्ष्यामि यत् ज्ञात्वा विदित्वा कर्मादि मोक्ष्यसे अशुभात् संसारात् । न च एवं त्वया मन्तव्यं कर्म नाम देहादिचेष्टा लोकप्रसिद्धम्, अकर्म नाम तदक्रिया तूष्णीम् आसनं; किं तत्र बोद्धव्यम्? इति ॥

आ॥कर्म कुर्वित्युक्तम्, तस्य कर्मणो दुर्विज्ञेयत्वमाह सम्यग्वक्तुम्—किं कर्म किमकर्म इति ॥ १६ ॥

ज॥'किं कर्म' इत्यस्य सङ्गतिर्न प्रतीयते, अत आह—कर्मेति । तस्य कर्तव्यतयोक्तस्य; किमर्थम्? सम्यग्वक्तुम्। एतदेव सम्यग्वचनम्, यज्जिज्ञासितकथनम्, जिज्ञासा च दुर्विज्ञेयत्वोक्तौ भवतीति भावः । अत एव प्रकर्षेण वक्ष्यामीत्याह । ननूत्तरश्लोके विकर्मणोऽपि गृहीतत्वादिहाप्यकर्मशब्दस्तदुपलक्षणार्थ इति स्थिते कर्मादीनामिति वक्तव्यम्; कर्मण इति कथम्, अनुष्ठेयत्वात् । अकर्मादिकं हेयतया ज्ञेयम् । अत एव 'तत्ते कर्म प्रवक्ष्यामि' इत्याह । तत्राप्यकर्मादेरुपलक्षणात् ॥ १६ ॥

रा॥कुतोऽस्य दुर्ज्ञानतेत्यत्राह—

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः॥ १७

यस्मान्मोक्षसाधनभूते कर्मस्वरूपे बोद्धव्यमस्ति, विकर्मणि च नित्यनैमित्तिककाम्यरूपेण,तत्साधनद्रव्यार्जनाद्याकारेण च विविधतामापन्नं कर्म विकर्म। अकर्मणि—ज्ञाने च बोद्धव्यमस्ति। गहना—दुर्विज्ञाना मुमुक्षोः कर्मणो गतिः। विकर्मणि बोद्धव्यं नित्यनैमित्तिककाम्यद्रव्यार्जनादौ कर्मणि फलभेदकृतं वैविध्यं परित्यज्य मोक्षैकफलतयैकशास्त्रार्थत्वानुसन्धानम्। तदेतत् "*व्यवसायात्मिका बुद्धिरेका'इत्यत्रैवोक्तमिति नेह प्रपञ्च्यते॥ १७॥

ता॥'तत्ते कर्म प्रवक्ष्यामि' इत्युक्ते अनन्तरं कर्मैवोपदेश्यम् 'कर्मणो ह्यपि' इत्यादि तु कस्यामाकाङ्क्षायामुच्यत इत्यत्राह—कुतोऽस्येति। यस्मादिति हिशब्दार्थः। कर्मणो बोद्धव्यमित्यादिरूपेण वचनं बोद्धव्यांशविशेषनिष्कर्षपरमिति व्यञ्जनाय—कर्मस्वरूपे बोद्धव्यमस्तीत्युक्तम्। अत्र सम्बन्धसामान्ये षष्ठी। 'गहना कर्मणो गतिः' इत्यत्र गतिशब्दो बोद्धव्यप्रकारपर इत्यपि स्वरूपशब्दाभिप्रायः। अत्र विकर्मशब्देन 'पापण्डिनो विकर्मस्थान्' इत्यादाविव न विरुद्ध कर्मोच्यते, तस्यात्रोपयोगाभावात्; अतोऽत्र विशब्दोऽनुष्ठेयवैविध्यपरः। वैविध्यं च तत्र नित्यादिरूपं प्रसिद्धमित्यभिप्रायेणाह—नित्येति। आदिशब्देन रक्षणलवुपायप्रवृत्त्यादि गृह्यते। अत्र विकर्माकर्मशब्दयोः प्रतिषिद्धकर्मतूष्णींभावपरत्वेन पत्व्याख्यानं 'गहना कर्मणो गतिः' इति निगमनेन विरुद्धम्। तत्रापि विकर्मानुपलक्षणार्थत्वं क्लिष्टम्। एवमुत्तरेष्वपि श्लोकेष्वैदमर्थ्येन व्याख्यानं निरस्तम्। यस्मादिति पूर्ववदुक्तत्वात्, गहनेत्यत्र तस्मादिति भाव्यम्। गहनत्वं दुष्प्रवेशत्वम्; तच्चात्र ज्ञानत इत्यभिप्रायेण—दुर्विज्ञानेत्युक्तम्। ननु, मुमुक्षोः फलान्तरार्थेऽपि कर्मणि किं बोद्धव्यमितिशङ्कायां वक्तव्यं परिशेषयितुं तस्योक्ततामाह—विकर्मणीति। किमत्र प्रमाणमित्यत्राह—तदेतदिति। नेह प्रपञ्च्यते—

म॰पा॥ *गी॰ २ ४१॥ १.

शं॥कस्मात्? उ[च्य]ते—कर्मण इति॥ कर्मणः शास्त्रविहितस्य हि यस्मात् अपि अस्ति बोद्धव्यं, बोद्धव्यं च अस्त्येव विकर्मणः प्रतिषिद्धस्य, तथा अकर्मणश्च तूष्णींभावस्य बोद्धव्यम्, अस्ति इति त्रिष्वपि अध्याहारः कर्तव्यः। यस्मात् गहना—विषमा दुर्ज्ञेया

आ॥न केवलं तज्ज्ञात्वा मोक्ष्यसे, ज्ञात्वैवेत्याशयवानाह—कर्मण इति। तथोक्तम् 'अज्ञात्वा भगवान्कर्म कर्माकर्मविकर्मकम्। दर्शनं याति हि मुने कुतो मुक्तिश्च तद्विना' इति। अकर्म कर्माकरणम्। कर्माकर्मान्यद्विकर्म निषिद्धं कर्म बन्धकत्वात्। ततो विविच्य

ज॥ननु 'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' इत्यनेनैव कर्मस्वरूपं मुमुक्षुणा ज्ञातव्यमिति लब्धम्। तत्किमर्थं 'कर्मणो हि' इत्याद्युच्यत इत्यत आह—न केवलमिति। तत् कर्मादिकम्। 'सिद्धे सत्यारम्भो नियमार्थः' इति भावः। अत्रैव प्रमाणमाह—तथेति। दर्शनापेक्षया समानकर्तृकत्वात् क्त्वानिर्देशः। कर्मशब्दार्थो भगवतैव वक्ष्यते। अकर्मविकर्मशब्दार्थावाह—अकर्मेति। किं तद्विकर्मेत्यत आह—निषिद्धमिति। एवं चेत्काम्यादेरस्य कुत्रान्तर्भाव इति चेत् विकर्मणीति ब्रूमः। कथं तस्य निषिद्धत्वमित्यत आह—बन्धकत्वादिति। अस्त्वेवं शब्दार्थः, योजना तु कथमित्यतो लाघवार्थे द्वि‐

रा॥कर्माकर्मणोर्बोद्धव्यमाह—

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८

अकर्मशब्देनात्र कर्मेतरत्प्रस्तुतमात्मज्ञानमुच्यते। कर्मणि क्रियमाण एवात्मज्ञानं यः

---

त॥अस्माभिर्भगवता चेति शेषः ॥ १७ ॥

एवमुपोद्घातः स्थितः; अथ प्रकृतमुपदिश्यत इत्यभिप्रायेणाह— कर्माकर्मणोरिति । 'कर्मण्यकर्म यः पश्येत्' इति कर्मणि बोद्धव्यमुच्यते। 'अकर्मणि च कर्म यः' इति तु ज्ञाने। अकर्मशब्दस्यात्र परोक्तकर्माभावस्वतन्त्रज्ञाननिष्ठाविषयतामपास्य तदन्यव्युत्पत्त्या आसत्त्या च सिद्धमाह—अकर्मेति । अत्र कर्मयोगोपदेशप्रकरण इत्यर्थः। अन्वयार्थं दर्शयति —कर्मणीति। अवधारण शङ्काहेतुभूतविरोधद्योतनेन शा-

---

शं॥कर्मण इति उपलक्षणार्थं कर्मादीनाम् । कर्माकर्मविकर्मणां गतिः याथात्म्यं तत्त्वम् इत्यर्थः ॥ १७ ॥

किं पुनः तत्त्वं कर्मादेः यत् बोद्धव्यं वक्ष्यामि इति प्रतिज्ञातम् ? उच्यते—कर्मणि इति ॥ कर्मणि, क्रियते इति कर्म व्यापारमात्रम् , तस्मिन् कर्मणि अकर्म कर्माभावं यः पश्येत्, अकर्मणि च कर्माभावे कर्तृतन्त्रत्वात् प्रवृत्तिनिवृत्त्योः । वस्तु अप्राप्यैव हि सर्व एव क्रियाकारकादिव्यवहारः अविद्याभूमौ एव ; कर्म यः पश्येत्—पश्यति, स बुद्धिमान् मनुष्येषु, स युक्तः—योगी च, कृत्स्नकर्मकृत—समस्तकर्मकृत् च सः, इति स्तूयते कर्माकर्मणोः इतरेतरदर्शी ॥

ननु किम् इदं विरुद्धम् उच्यते 'कर्मणि अकर्म यः पश्येत् अकर्मणि च कर्म' इति न हि कर्म अकर्म स्यात् , अकर्म वा कर्म ; तत्र विरुद्धं कथं पश्येत् द्रष्टा ?—न, अकर्म एव परमार्थतः सत् कर्मवत् अवभासते मूढदृष्टेः लोकस्य,तथा कर्म एव अकर्मवत् । तत्र यथाभूतदर्शनार्थम्,आह भगवान्—'कर्मण्यकर्म यः पश्येत्' इत्यादि । अतो न विरुद्धम्। बुद्धिमत्त्वाद्युपपत्तेश्च । 'बोद्धव्यम्' इति च यथाभूतं दर्शनम् उच्यते । न च विपरीतज्ञानात् अशुभात् मोक्षणं स्यात् ; 'यत् ज्ञात्वा मोक्ष्यसेऽशुभात्' इति च उक्तम् ।

---

आ॥कर्मादि बोद्धव्यमित्यादि । न च शापादिना कवयोऽप्यत्र मोहिताः । अतस्तत्त्वं चेतज्ज्ञातुमित्याह—गहनेति ॥ १७ ॥

कर्मादिस्वरूपमाह—कर्मणीति । कर्मणि क्रियमाणे सत्यकर्म यः पश्येत्, विष्णो-

---

ज॥यपादयोजनां तावदाह—तत्त्व इति। ततो विकर्मणः कर्मादि कर्माकर्म च इत्यादीत्यनेनाद्यतृतीयपादयोजनां सूचयति। कर्मणो विविच्य विकर्मादि बोद्धव्यम् । अकर्मणश्च विविच्य कर्मादि बोद्धव्यमिति। 'ननु कवयोऽप्यत्र मोहिताः' इत्यनेन कर्मादेर्दुर्ज्ञेयत्वमुक्तम्। तत्पुनः किमर्थमुच्यत इत्यत आह—न चेति । ज्ञातुं स्वभावेनेति शेषः । एतच्च श्रोतुरधिकादरजननार्थमिति ज्ञेयम् ॥ १७ ॥

कर्म प्रवक्ष्यमीति प्रतिज्ञातम्, कर्मादिप्रवचनं क्वापि नोपलक्ष्यते, कर्मणीति श्लोकस्य यत्किञ्चिद्दर्शनस्तुतिरूपत्वादित्यत आह—कर्मादीति। यद्यप्यय श्लोकोऽन्यथा प्रतीयते, तथाप्यविहितस्य स्तुत्ययोगाद्वाक्यभेदेन कर्मादिकं प्रतिपाद्य तत्स्तुतिः क्रियत इति भावः । कथमनेन तत्स्वरूपमुच्यत इत्यतो व्याचष्टे—कर्मणीति। वर्णाश्रमोचिते। अकर्म कर्माभावम्। स्वस्यतद्विवृणोति—विष्णोरेवेति। चित्प्रति-

रा॥पश्येत्, अकर्मणि चात्मज्ञाने वर्तमान एव यः कर्म पश्येत्, किमुक्तं भवति, क्रियमाणमेव

ता॥नकर्मणोऽनन्वितत्वपरिहारार्थम्। नन्विदमयुक्तम्, अन्यानुष्ठानेऽन्यदर्शनस्यानपेक्षितत्वात्, अन्यस्मिन्ननुष्ठीयमाने तदन्यज्ञानस्य दुष्करत्वात्, अन्यस्मिंश्चानुसन्धीयमाने तदन्यस्य कर्तुमशक्यत्वात्, अन्यत्रान्यदर्शने च तदन्यप्रतिक्षेपश्च स्यादित्यभिप्रायेण चोदयति — किमुक्तं भवतीति। यदनुगपदेककालत्वं चोदितं तत्किं शास्त्रार्थव्यापारभेदेनान्यथावर्ति विकल्पमभिप्रेत्य प्रथमं दूषयति — क्रियमाणमेव

शा॥तस्मात् कर्माकर्मणी विपर्ययेण गृहीते प्राणिभिः तद्विपर्ययग्रहणनिवृत्त्यर्थं भगवतो वचनं 'कर्मण्यकर्म यः' इत्यादि। न च अत्र कर्माधिकरणम् अकर्म अस्ति, कुण्डे बदराणि इव। नापि अकर्माधिकरणं कर्म *अभावत्वात् अकर्मणः। अतः विपरीतगृहीते एव कर्माकर्मणी लौकिकैः, यथा मृगतृष्णिकायाम् उदकं, शुक्तिकायां वा रजतम्। ननु कर्म कर्मैव सर्वेषां, न क्वचित् व्यभिचरति। तत् न, नौस्थस्य नावि गच्छन्त्यां तटस्थेषु अगतिषु नगेषु प्रतिकूलगतिदर्शनात्, दूरे च चक्षुषा असंनिकृष्टेषु गच्छत्सु गत्यभावदर्शनात्, एवम् इहापि अकर्मणि कर्मदर्शनं कर्मणि च अकर्मदर्शनं विपरीतदर्शनं, येन तन्निराकरणार्थम् उच्यते 'कर्मण्यकर्म यः पश्येत्' इत्यादि॥

तदेतत् उक्तप्रतिवचनमपि असकृत् अत्यन्तविपरीतदर्शनभावितया मोमुह्यमानो लोकः श्रुतमपि असकृत् तत्त्वं विस्मृत्य विस्मृत्य मिथ्याप्रसङ्गम् अवतार्यावतार्य चोदयति इति प्रति पुनः पुनः उत्तरम् आह भगवान्, दुर्विज्ञेयत्वं च आलक्ष्य वस्तुनः। 'अव्यक्तोऽयमचिन्त्योऽयम्' 'न जायते म्रियते' इत्यादिना आत्मनि कर्माभावः श्रुतिस्मृतिन्यायप्रसिद्धः उक्तः वक्ष्यमाणश्च। तस्मिन् आत्मनि कर्माभावे अकर्मणि कर्मविपरीतदर्शनम् अत्यन्तनिरूढम्, यतः — 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः'। देहाद्याश्रयं कर्म आत्मनि अध्यारोप्य 'अहं कर्ता, मम एतत् कर्म, मया अस्य कर्मणः फलं भोक्तव्यम्' इति च, तथा 'अहं तूष्णीं भवामि, येन अहं निरायासः अकर्मा सुखी स्याम्' इति कार्यकरणाश्रयं व्यापारोपरमं तत्कृतं च सुखित्वम्, आत्मनि अध्यारोप्य 'न करोमि किंचित्, तूष्णीं सुखम् †आसे' इति अभिमन्यते लोकः। तत्र इदं लोकस्य विपरीतदर्शनापनयनाय आह भगवान् — 'कर्मण्यकर्म यः पश्येत्' इत्यादि॥

अत्र च कर्म कर्मैव सत् कार्यकरणाश्रयं कर्मरहिते अविक्रिये आत्मनि सर्वैः अध्यस्तं, यतः पण्डितोऽपि 'अहं करोमि' इति मन्यते। अतः आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गतिप्रातिलोम्येन अकर्म कर्माभावं यथाभूतं गत्यभावमिव वृक्षेषु यः पश्येत्, अकर्मणि च कार्यकरणव्यापारोपरमे कर्मवत् आत्मनि अध्यारोपिते — 'तूष्णीम् अकुर्वन् सुखम् आसे' इत्यहंकाराभिसंधिहेतुत्वात् — तस्मिन् अकर्मणि च कर्म यः पश्येत्, यः एवं कर्माकर्मविभागज्ञः स बुद्धिमान् — पण्डितः मनुष्येषु, स युक्तः — योगी। कृत्स्नकर्मकृत् च सः अशुभात् मोक्षितः कृतकृत्यो भवति इत्यर्थः॥

आ॥तत्र कर्म, नाहं चित्प्रतिबिम्बः किञ्चित्करोमीति। अकर्माणि सुप्त्यादावकरणावस्थायाम्।

ज॥निम्ब इत्यनेन तदधीनं करोमीत्यपि सूचयति। सुप्त्यादिकं कथमकर्मेत्यत उक्तम् — अकरणेति।

पा॥ *कर्माभावत्वादकर्मणः ॥ †आसम्॥

रा॥कर्मात्मयाथात्म्यानुसन्धानेन ज्ञानाकारं यः पश्येत्,तच्च ज्ञानं कर्मयोगान्तर्गततया कर्माकारं यः पश्येदित्युक्तं भवति। क्रियमाणे हि कर्मणि कर्तृभूतात्मयाथात्म्यानुसन्धानेन

ता॥येति। ज्ञानविशिष्टस्य कर्मणः उपायतया विहितत्वेन परस्परमन्वितत्वमिति न भिन्नशास्त्रार्थत्वमिति भावः।एतेन परस्परनिरपेक्षार्थद्वयपरतया परस्परप्रतिक्षेपशङ्कापि प्रत्युक्ता। द्वितीयेऽपि किं स्वरूपभेदमात्रेण दुष्करत्वम्,उत,विरुद्धत्वात्;न प्रथमः,एकेनैव प्रेक्षणगमनभाषणादेर्युगपदनुष्ठानात्।न द्वितीयः,गमनस्थानयोरिव ज्ञानकर्मणोर्विरोधाभावात्। नचानुप्रयोगः, ध्यानविशेषविशिष्टविषनिर्हरणार्थचेष्टाजपादिन्यायादित्यभिप्रायेणाह—क्रियमाणे हीति। तदुभय कर्मणो ज्ञानविशिष्टत्वं,ज्ञानस्य कर्मविशिष्टत्वं च। बुद्धि-

शं॥अयं श्लोकः अन्यथा व्याख्यातः कैश्चित्।कथम्?नित्यानाम् ईश्वरार्थत्वेन किल कर्मणाम् अनुष्ठीयमानानां फलाभावात् अकर्माणि तानि उच्यन्ते गौण्या वृत्त्या। तेषां च अकरणम् अकर्म, तच्च प्रत्यवायफलत्वात् कर्म उच्यते गौण्यैव वृत्त्या। तत्र नित्ये कर्मणि अकर्म यः पश्येत् फलाभावात्; यथा धेनुरपि गौः अगौः इत्युच्यते क्षीराख्यं फलं न प्रयच्छति इति, तद्वत्। तथा नित्याकरणे तु अकर्मणि च कर्म यः पश्येत् नरकादिप्रत्यवायफलं प्रयच्छति इति॥

न एतत् युक्तं व्याख्यानम्; एवं ज्ञानात् अशुभात् मोक्षानुपपत्तेः, 'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' इति भगवता उक्तं वचनं बाध्येत। कथं? नित्यानाम् अनुष्ठानात् अशुभात् स्यात् नाम मोक्षणं, न तु तेषां फलाभावज्ञानात्। न हि नित्यानां फलाभावज्ञानम् अशुभमुक्तिफलत्वेन चोदितम्, नित्यकर्मज्ञानं वा। न च भगवता एव इह उक्तम्। एतेन अकर्मणि कर्मदर्शनं प्रत्युक्तम्। नहि अकर्मणि 'कर्म' इति दर्शनं कर्तव्यतया इह चोद्यते, नित्यस्य तु कर्तव्यतामात्रम्। न च 'अकरणात् नित्यस्य प्रत्यवायो भवति' इति विज्ञानात् किञ्चित् फलं स्यात्। नापि नित्याकरणं ज्ञेयत्वेन चोदितम्। नापि 'कर्म अकर्म' इति मिथ्यादर्शनात् अशुभात् मोक्षणं, बुद्धिमत्त्वं, युक्तता, कृत्स्नकर्मकृत्त्वादि च फलम् उपपद्यते, स्तुतिर्वा; मिथ्याज्ञानमेव हि साक्षात् अशुभस्वरूपम्; कुतः अन्यस्मात् अशुभात् मोक्षणम्? न हि तमः तमसो निवर्तकं भवति॥

ननु कर्मणि यत् अकर्मदर्शनम् अकर्मणि वा कर्मदर्शनं न तत् मिथ्याज्ञानं; किं तर्हि? गौणं फलभावाभावनिमित्तं—न, कर्माकर्मविज्ञानादपि गौणात् फलस्य अश्रवणात्। नापि श्रुतहान्यश्रुतपरिकल्पनायां कश्चित् विशेष उपलभ्यते। स्वशब्देनापि शक्यं वक्तुं 'नित्यकर्मणां फलं नास्ति, अकरणात् च तेषां नरकपातः स्यात्' इति; तत्र व्याजेन परव्यामोहरूपेण 'कर्मण्यकर्म यः पश्येत्' इत्यादिना किम्? तत्र एवं व्याचक्षाणेन भगवतो वाक्यं लोकव्यामोहार्थम् इति व्यक्तं कल्पितं स्यात्। न च एतत् छद्मरूपेण वाक्येन रक्षणीयं वस्तु। नापि शब्दान्तरेण पुनःपुनः उच्यमानं सुबोधं स्यात्

आ॥परमेश्वरस्य यः कर्म पश्यति अयमेव परमेश्वरः, सर्वदा सर्वसृष्ट्यादिकं करोतीति

ज॥जीवापेक्षयेदम्। एतदपि विवृणोति—अयमेवेति। सर्वदा जीवव्यापारभावेऽभावे च,सर्वस्य महदादेः स्थावरजादेश्च। अनेन भगवतः परानपेक्षया कर्तृत्वं स्वस्य तदधीनकर्तृत्वं च ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेत्युक्तं भवति। अनेनैवोक्तलक्षणे विकर्माकर्मणी प्रोक्तप्राये यः पश्येत्स बुद्धिमानिति

सा॥तदुभय सम्पन्न भवति। एवमात्मया गम्यानुसन्धानार्थे कर्म य पश्येत्, स बुद्धिमान् कृत्स्नशास्त्रार्थवित् मनुष्येषु स युक्त मोक्षायार्ह स एव कृत्स्नकर्मकृत्—कृत्स्नशास्त्रार्थकृत् ॥ १८ ॥

प्रत्यक्षेण क्रियमाणस्य कर्मणा ज्ञानाकारता कथमुपपद्यत इत्यत्राह—

---

ता॥मानिन्यत्र भूमान आप्रयसामु नित्ययागऽतिशायनेऽस्तासस्तिविवक्षाया भवात मतुबादय 'इति प्रत्ययशात् प्रकृष्ट बुद्धिसिमितत्वाद—कृत्स्नशास्त्रार्थविदिति। य कृत्स्नकर्मकृदिति ह्यनन्तरमुच्यते तदनुरूपैव च बुद्धिरभिधेयेति भाव। बुद्धिमान् कृत्स्नकृत् इति ज्ञानेऽनुष्ठाने च अभिहिते तदधीनफल्यात्पत्यमव हि योगप्रभावेण युक्तत्वमित्यभिप्रायमभिप्रेत्य—मोक्षायार्ह इत्युक्तम्। स बुद्धिमान् स युक्त इति। तच्छब्ददृयेन वाक्यभेद सिद्ध कृत्स्नकृदित्यत्रापि भिन्नवाक्यमेव भवितुम् इति ज्ञानफलत्वा पौष्कल्यस्यानुष्ठानपौष्कल्यस्यापि प्रसङ्गादुक्त्त्वं प्राधान्यादस्याभिप्रायेण तच्छब्दानुषङ्गमाह—स एव कृत्स्नकर्मकृदिति ॥ १८ ॥

प्रत्यक्षेणेति—प्रत्यक्षविरुद्ध न शास्त्रतात्पर्यविषय वा प्रतिपादयितु शक्यमिति भाव। क्रियमाणत्वात्। नाह चिरप्रध्वस्त स्मृतिदशापन्न ज्ञानमात्रविषयतया ज्ञानाकारमित्युच्यते किन्तु क्रियमाणमेवेद कर्मेति भाव। यद्वा प्रत्यक्षेण क्रियमाणस्यात पदाभ्या ज्ञानविषयस्य ज्ञानकार्यस्य च कथ ज्ञानत्वमित्यभिप्रेतम्। कथमुपपद्यत इति—तदुपपत्तिसह यदि पर हाणवधानादाविव भावनीयमिति

प्र पा॥ १ अष्टा ५२६४ अ० ब

---

शा॥इत्येव वक्तु युक्तम्। कर्मण्येवाधिकार' इत्यत्र हि स स्फुटतर उक्त अथ न पुनर्वक्तव्य भवति। सर्वत्र च प्रशस्त बोद्धव्य च कर्तव्यमर्थ, न त्र निष्प्रयोजन बोद्धव्यम् इति उच्यते। न च मिथ्याज्ञान बोद्धव्य भवति, तत्प्रत्युपस्थापित वा वस्त्वाभासम्। नापि नित्यानाम् अकरणात् अभावात् प्रत्यवायभावोत्पत्तिः 'नासतो विद्यते भाव' इति, 'कथम् असत सज्जायेत' इति च असत सज्जन्मप्रतिषेधात्। असत सदुत्पत्तिं ब्रुवता असदेव सद्भवेत्, सत् चापि असत् भवेत्' इत्युक्त स्यात्। तत् च अयुक्तम्, सर्वप्रमाणविरोधात्। न च निष्फल विदध्यात् कर्मशास्त्र दुःखस्वरूपत्वात् दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्ते। तदकरणे च नरकपाताभ्युपगमात्, अनर्थायैव उभयथा अपि करणे च अकरणे च शास्त्र निष्फल कल्पित स्यात्। स्वाभ्युपगमविरोधश्च 'नित्य निष्फल कर्म' इति अभ्युपगम्य 'मोक्षफलाय' इति ब्रुवत। तस्मात् यथाश्रुत एवार्थ 'कर्मण्यकर्म' इत्यादे। तथा च व्याख्यात अस्माभि श्लोक ॥ १८ ॥

---

आ॥स बुद्धिमान् ज्ञानी स एव च युक्तो योगयुक्त सर्वाकरणात्स एव च कृत्स्नकर्मकृत् कृत्स्नफलवत्वात् ॥ १८ ॥

---

चा॥कोऽयभेद कथ च स्तुतिरित्यत आह—स इति। ज्ञानिशब्दो हि परमार्थज्ञलक्षण प्रसिद्ध मतुबादीना प्रशस्त्यार्थत्वात्, स युक्त इत्येत स्तुतिर्यथा स्यात्तथा व्याचष्टे स एव चेति। कृत्स्नकर्मकृदित्येतदुपपादयन् प्रशस्त्यन् गौण व्याचष्टे—सर्वेति। सर्वस्याश्वमेधादे कृत्स्नकर्मणा फलस्य ज्ञानस्य मोक्षस्य प्राप्तमायत्वादित्यर्थ ॥ १८ ॥

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९

रा॥यस्य मुमुक्षोः सर्वे द्रव्यार्जनादिलौकिककर्मपूर्वकनित्यनैमित्तिककाम्यरूपकर्मसमारम्भाः कामवर्जिताः फलसङ्गरहिताः सङ्कल्पवर्जिताश्च; प्रकृत्या तद्गुणैश्चात्मानमेकीकृत्यानुसन्धानं सङ्कल्पः ; प्रकृतिवियुक्तात्मस्वरूपानुसन्धानयुक्ततया तद्रहिताः ; तमेवं कर्म कुर्वाणं पण्डितं कर्मान्तर्गतात्मयाथात्म्यज्ञानाग्निना दग्धप्राचीनकर्माणमाहुस्तत्त्वज्ञाः; अतः कर्मणो ज्ञानाकारत्वमुपपद्यते ॥ १९ ॥

ता॥भावः। सर्वशब्दासङ्कोचात् द्रव्यार्जनादिसङ्ग्रहः । कामसङ्कल्पवर्जिता इत्यत्र न तावत्काम एव सङ्कल्प इति समासः, पर्यायत्वादिप्रसङ्गात् । नापि कामानां सङ्कल्प इति, उपयुक्तोभयपदार्थप्रधाने द्वन्द्वे सम्भवत्येकपदार्थप्रधानतत्पुरुषायोगात् । अतः कामसङ्कल्पाभ्यां वर्जिता इत्येवार्थ इत्यभिप्रेत्याह—कामवर्जिता इति । वर्जितशब्दस्य प्रत्येकमन्वयं दर्शयता द्वन्द्वो ह्ययं समासान्तरात्प्रबल इति सूचितम् । कर्मप्रकरणे कामो हि फलसङ्ग इत्यभिप्रायेणाह—फलसङ्गरहिता इति । सङ्कल्पोऽत्र न कर्मानुष्ठानसङ्कल्पः, तदभावेऽनुष्ठानायोगात्। नापि फलसङ्कल्पः, कामशब्देन कृतकरत्वात् । अतोऽत्र प्रकृतिवियुक्तात्मोपदेशप्रकरणे तदुपयुक्तः कश्चिदर्थो वक्तव्य इत्यभिप्रायेणाह—प्रकृत्येति । समित्येकीकारे, कल्पो भ्रान्तिज्ञानं, प्रकृत्येति देहरूपेण परिणतयेति शेषः ; तद्गुणैरात्मन एकीकरण नाम गुणहेतुके कर्मविशेषे स्वहेतुत्वानुसन्धानम् , यद्वा प्रकृतिगुणभूतानां सत्त्वरजस्तमसां देवत्वमनुष्यत्वादिसन्निवेशानां स्थौल्यकार्श्यशुक्लकृष्णादीनां च स्वमात्मानम्प्रति गुणत्वेनानुसन्धानम् । एतेनास्वे गृहादौ स्वमितिबुद्धिरपि सङ्गृहीता भवति । एवंविधकामसङ्कल्पराहित्ये पण्डितशब्दाभिप्रेत हेतुमाह —प्रकृतिवियुक्तेति । पण्डित हेयोपादेयभूतदेहात्मादिविवेकज्ञानवत्त्वम्, ऊहापोहक्षमा हि बुद्धिः पण्डा । चरमोक्तस्यापि पण्डितशब्दस्य तं पण्डितमित्युद्देश्यनिवेशः, पावनिवर्तकत्वलक्षणज्ञानप्राशस्त्यविधेयौचित्यात् । अप्रस्तुतस्वतन्त्रज्ञानान्तरव्यवच्छेदायोक्तं—कर्मान्तर्गतेति। नह्यत्र क्रियमाणमेव कर्म ज्ञानाग्निना दह्यते, निष्फलत्वप्रसङ्गात्, नाप्युत्तरं तस्य विद्यामाहात्म्यनिवर्त्यत्वात्; अतः प्राचीनेत्युक्तम् । तत्त्वज्ञा इति—प्राप्यस्य प्राप्तुश्चात्मनः प्रापकस्य च कर्मयोगस्यामन्दिग्धाविपरीतस्वरूपज्ञा बुधशब्देन विवक्षिता इति भावः । श्लोकोत्तरार्धं निगमयति—अत इति ॥ १९ ॥

शं॥तदेतत् कर्मादौ अकर्मादिदर्शनं स्तूयते—यस्य इति॥ यस्य यथोक्तदर्शिनः सर्वे यावन्तः समारम्भाः सर्वाणि कर्माणि, समारभ्यन्ते इति समारम्भाः, कामसङ्कल्पवर्जिताः कामैः तत्कारणैश्च सङ्कल्पैः वर्जिताः मुधैव चेष्टामात्रा अनुष्ठीयन्ते ; प्रवृत्तेन चेत् लोकसङ्ग्रहार्थं, निवृत्तेन चेत् जीवनमात्रार्थम्। तं ज्ञानाग्निदग्धकर्माणं कर्मादौ अकर्मादिदर्शनं ज्ञानं तदेव अग्निः तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य

आ॥एतदेव प्रपञ्चयति—यस्येत्यादिना श्लोकपञ्चकेन । उक्तप्रकारेण ज्ञानाग्निदग्धकर्माणम् ॥ १९ ॥

ञा॥नन्न प्रतिज्ञातमुक्तं किमुत्तरैः श्लोकैरित्यत आह—एतदेवेति—कर्मस्वरूपमेव । अनेनात्रापि वाक्यभेदेन कामादिवर्जनं विधाय स्तुतिः क्रियत इति सूचितम् । मिथ्यात्वज्ञानेन कर्मणामुपमर्दो ज्ञानाग्निदग्धकर्मत्वमिति व्याख्यानमसदिति भावेनाह—उक्तेति । परमेश्वरस्यैव कर्तृत्वं ज्ञात्वा स्वस्य स्वातन्त्र्येण कर्माभावज्ञानमेव ज्ञानाग्निदग्धकर्मत्वमित्यर्थः ॥ १९ ॥

रा॥एतदेव विवृणोति—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २०

कर्मफलसङ्गं त्यक्त्वा नित्यतृप्तः नित्ये स्वात्मन्येव तृप्तः निराश्रयः अस्थिरप्रकृतावाश्रयबुद्धिरहितो यः कर्माणि करोति, स कर्मण्याभिमुख्येन प्रवृत्तोऽपि नैव किंचित्कर्म करोति, कर्मापदेशेन ज्ञानाभ्यासमेव करोतीत्यर्थः ॥ २० ॥

ता॥अनन्तरश्लोकस्यार्थान्तरपरत्वपौनरुक्त्ययोर्व्युदासायाह—एतदेव विवृणोतीति । नित्यतृप्त इत्यत्र नित्यं तृप्त इति नार्थः, तृप्तिहेत्वनुक्तेः, कर्मफलासङ्गं त्यक्त्वेति कामवर्जितत्वविवरणेन अनित्यत्यागेऽभिहिते सङ्कल्पवर्जितत्वविवरणतया नित्यस्वाकारस्य च वक्तुमुचितत्वादित्यभिप्रेत्य नित्ये स्वात्मन्येव तृप्त इत्युक्तम्।'निराश्रयः' इत्यत्र न तावदाश्रयभूतदेहादिमात्रं निषिध्यते, तत्परित्यागस्य अशक्यत्वात्, अतोऽत्र लौकिकानां य आश्रयणीयत्वबुद्धिविषयः, तस्याश्रयणीयत्वबुद्धिरेव निषिध्यत इत्यभिप्रेत्योक्तम्—अस्थिरेत्यादि।तद्वृत्तस्य आकाङ्क्षया य इत्यध्याहृतम्।अभिशब्दार्थः आभिमुख्यं तदेकपरता। 'नैव किंचित्' इत्युक्ते सामान्यतो ज्ञानमपि निषिद्धं स्यादिति तद्व्युदासायोचितं विशेष्यमाह—नैव किंचित्कर्मेति । 'कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति' इति व्याहतमिदमित्याशङ्कयाह कर्मापदेशेनेति। विपरीतविषयसञ्चरणेन ज्ञानाभ्यासविरोधिनामिन्द्रियाणामनुकूलविषयसञ्चरणमात्रं हि कर्मयोग इति भावः ॥ २० ॥

शं॥तम् आहुः परमार्थतः पण्डिताः बुधा ब्रह्मविदः ॥ १९ ॥

यस्तु कर्मादौ अकर्मादिदर्शी सः अकर्मादिदर्शनादेव निष्कर्मा संन्यासी जीवनमात्रार्थचेष्टः सन् कर्मणि न प्रवर्तते यद्यपि प्राक् विवेकतः प्रवृत्तः । यस्तु प्रारब्धकर्मा सन् उत्तरकालम् उत्पन्नात्मसम्यग्दर्शनः स्यात् स सर्वकर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजति एव । स कुतश्चित् निमित्तात् कर्मपरित्यागासम्भवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावात् लोकसङ्ग्रहार्थं पूर्ववत् कर्मणि प्रवृत्तोऽपि नैव किञ्चित् करोति, ज्ञानाग्निदग्धकर्मत्वात् तदीयं कर्म अकर्मैव सम्पद्यते इत्येतमर्थं दर्शयिष्यन् आह—त्यक्त्वा इति॥त्यक्त्वा कर्मसु अभिमानं फलासङ्गं च *यथोक्तेन ज्ञानेन नित्यतृप्तः निराकाङ्क्षो विषयेषु इत्यर्थः । निराश्रयः आश्रयरहितः, आश्रयो नाम यत् आश्रित्य पुरुषार्थं सिसाधयिषति, दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः । तेन एव भू. तेन स्वप्रयोजनाभावात् ससाधनं कर्म परित्यक्तव्यमेव इति प्राप्ते ततः निर्गमासम्भवात्,

आ॥न च कामसङ्कल्पाभावनालम्। आसङ्गं स्नेहं च त्यक्त्वा । ज्ञानस्वरूपमाह—पुनः नित्यतृप्त इति । नित्यतृप्तनिराश्रयब्रह्मस्वरूपोऽस्मीति तथाविधः ॥ २० ॥

ज॥'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः' इत्यनेन यदुक्तं तदेव 'त्यक्त्वा कर्मफलासङ्गम्' इत्यनेनोच्यते।सङ्कल्पो हि कर्मासङ्गः, कामश्च फलासङ्ग इत्यतः सङ्गतिपूर्वमन्यथा व्याचष्टे—न चेति।नैतावता कर्मस्वरूपं सम्पूर्णमित्यर्थः ।किं तर्हीत्यध्याहारः । ननु 'नित्यतृप्तो निराश्रयः' इति साध्योऽर्थः कथं साधने निवेश्यत इत्यत आह—ज्ञानेति । कर्मण्यकर्मत्यपेक्षया—पुनरिति । मिथ्याज्ञानमेतदित्यतोऽभिप्रायमाह—नित्येति । इति हेतोरहमपि तथाविधः किं त्वविद्यया तथा न प्रतीय इति जानन्नित्यर्थः ॥२०॥

पा॥ *यथोक्तं ज्ञानं नित्य ॥

म॥पुनरपि कर्मणो ज्ञानाकारतैव विशोध्यते—

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१

निराशीः - निर्गतफलाभिसन्धिः यतचित्तात्मा - यतचित्तमनाः त्यक्तसर्वपरिग्रहः- आत्मैकप्रयोजनतया प्रकृतिप्राकृतवस्तुनि ममतारहितः यावज्जीवं केवलं शारीरमेव कर्म

ता॥'यस्य'इति श्लोकेन ज्ञानाकारत्वमुपपादितम्;'त्यक्त्वा'इति श्लोकेन तदेव विवृतम्।अतःपरं श्लोकत्रयेण तदेव विशोध्यत इत्यपुनरुक्ततामाह-पुनरपीति। उक्तार्थस्य दुर्ज्ञानत्वाद्विशदमतिपत्त्यर्थं पूर्वं बहुप्रदेशेषु व्याकीर्णाभिहितानां सकलस्य प्रतिपत्त्यर्थम् अस्यैवार्थस्यादरविषयत्वद्योतनार्थं चोक्त एवार्थः पुनरपि विविच्य प्रतिपाद्यते । कर्मणोऽफल्यादिविषयसर्वाशीर्निषेधपरत्वव्युदासाय-निर्गतफलाभिसन्धिरित्युक्तम्। यतचित्तात्मेत्येतन्नियन्तव्यविषयम् । तत्र नियन्तव्यस्य नियन्तृव्यतिरेकस्वारसिकः। आत्मशब्दस्य चित्तस्वरूपाद्यर्थत्वं तु निरर्थकम् । अतो मनोविषयत्वे युक्ते तदवस्थाविशेषरूपस्य बुद्ध्यहङ्काराख्यवृत्तिसहपठितस्य चित्तस्य वाचकोऽत्र चित्तशब्द इत्यभिप्रायेण—यतचित्तमना इत्युक्तम्।विषयान्तरचिन्तारहितमना इत्यर्थः । 'अध्यवसायाभिमानचिन्तावृत्तिभेदान्मनएव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते' इति शारीरकभाष्ये व्यक्तमुक्तम्। सृष्ट्यादिप्रकरणेषु तु बुद्ध्यादिशब्दो महदादिवाचकः। अत्र चित्तस्य पृथगभिधानं मनसो बुद्ध्यहङ्कारावस्थयोरप्युपलक्षणम् । प्रकृतिप्राकृतेति—सर्वशब्दाभिप्रेतभोग्यभोगोपकरणादिसङ्ग्रहः । सर्वविषयः परिग्रहस्सर्वपरिग्रहः । सच स्वकीयताभिमानः 'पेयाँतौ च परीवार आलवाले परिच्छदे। पत्नीस्वीकारशपथमूल्येष्वपि परिग्रहः' इति वैजयन्ती । शारीरशब्दसामर्थ्याच्छरीरावधिकत्वं सिद्धमिति—यावज्जीवमित्युक्तम्। शारीरं शरीरसम्बन्धि शरीरिणो दुस्त्यजमिति भावः । यद्वा

प्र-पा ॥ १. गी. ४-१९ ॥ २. गी. ४-२० ॥ ३. अनन्तरं पा ॥ ४. शारी. २-४-५. भाष्ये ॥ ५. वैजयन्ती ॥

शं॥लोकसङ्ग्रहचिकीर्षया शिष्टविगर्हणपरिजिहीर्षया वा पूर्ववत् कर्मणि अभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वान् नैव किञ्चित् करोति सः ॥ २० ॥

यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्मारम्भात् ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये सञ्जातात्मदर्शनः स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टः यतिः ज्ञाननिष्ठो मुच्यते इत्येतमर्थं दर्शयितुम् आह—निराशीः इति ॥ निराशीः निर्गताः आशिषः यस्मात् सः निराशीः यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा बाह्यः कार्यकरणसङ्घातः तौ उभावपि यतौ संयतौ येन सः त्यक्तसर्वपरिग्रहः त्यक्तः सर्वः परिग्रहः येन सः शारीरं शरीरस्थितिमात्रप्रयोजनं केवलं तत्रापि अभिमानवर्जितं कर्म कुर्वन् न आप्नोति न प्राप्नोति किल्बिषं *पापम् अनिष्टरूपम् । मुमुक्षोः अनिष्टरूपत्वात् धर्मोऽपि किल्बिषमेव ।

आ॥कामादित्यागोपायमाह—निराशीरिति । यतचित्तात्मा भूत्वा निराशीरित्यर्थः ।

ज॥कामादिवर्जिततरमेव निराशीरित्यनेनोच्यत इत्यत आह—कामेति । आदिपदेन सङ्कल्पादिपरिग्रहः कथमित्यतो योजयति—यतेति । निराशीः त्यक्तसर्वपरिग्रहश्च भवतीति शेषः । सेन्द्रियशरीरमात्मेत्यमत्, अन्तःकरणवृत्तेः नियमेनैवैतन्नियमसिद्धेरिति भावेनाह—आत्मेति । ननु परिग्रहो

पा ॥ *अनिष्टरूपं पापम्, धर्मं च, धर्मोऽपि मुमुक्षोरनिष्टरूपत्वात्किल्बिषमेव, बन्धापादकत्वाच ॥

रा॥कुर्वन् किल्बिषं संसारं नाप्नोति, ज्ञाननिष्ठाव्यवधानरहितकेवलकर्मयोगेनैवरूपेणात्मानं पश्यतीत्यर्थः ॥ २१ ॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२

ता॥बुद्धिव्यापारभूतफलसङ्गादिराहित्यात्—शारीरमित्युक्तम्। अथवा शारीरमेव शरीरधारणार्थमेव, स्वर्गाद्यर्थमितिभावः। मनोनियमनातिशयसापेक्षज्ञानयोगव्यवच्छेदाय वा शारीरशब्दः। अत्र पारिव्राज्यसङ्गतेर्द्रव्याभिलाष्यकर्मव्यवच्छेदः परोक्तो न युक्तः । किल्बिषशब्दफलितमुक्तं—संसारमिति । 'शारीर केवल कर्म'इत्युक्ते यज्ञादिकर्मणोऽपि निषेधः प्रतीयेतेति तद्व्युदासार्थं केवलशब्दस्यान्यव्यवधाननिषेधपरत्वमाह – ज्ञानेति ॥ २१ ॥

'शारीर कर्म कुर्वन्' इत्युक्ते शरीरधारणार्थद्रव्यार्जनादिष्ववश्यं प्रवृत्तिस्स्यात्, ततश्चावर्जनीयाश्शस्त्रपातादिशीतोष्णमृदुपरुषादिस्पर्शाः, तत्र च प्रवृत्तिविघातिषु क्रोधस्स्यात्, विहितायां च प्रवृत्तौ मोधप्र-

श॥*तस्मात् ताभ्यां मुक्तः भवति, संसारात् मुक्तो भवति इत्यर्थः ॥

'शारीरं केवलं कर्म' इत्यत्र किं शरीरनिर्वर्त्यं शारीरं कर्म अभिप्रेतम्? आहोस्वित् शरीरस्थितिमात्रप्रयोजनं शारीरं कर्म इति' । किं च अतः—यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरम् इति उच्यते—यदा शरीरनिर्वर्त्यं कर्म शारीरम् अभिप्रेतं स्यात् तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन् नाप्नोति किल्बिषम् इति ब्रुवतो विरुद्धाभिधानं प्रसज्येत । शास्त्रीयं च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन् नाप्नोति किल्बिषम् इत्यपि ब्रुवतः अप्राप्तप्रतिषेधप्रसङ्गः 'शारीरं कर्म कुर्वन्' इति विशेषणात् केवलशब्दप्रयोगात् च वाङ्मनसाभ्यां निर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन् प्राप्नोति किल्बिषम् इत्युक्तं स्यात् । तत्रापि वाङ्मनसाभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धम् आपद्येत । प्रतिषिद्धसेवापक्षेऽपि भूतार्थानुवादमात्रम् अनर्थकं स्यात् । यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्म अभिप्रेतं भवेत् तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधगम्यं शरीरवाङ्मनोनिर्वर्त्यम् अन्यत् अकुर्वन् तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगात् 'अहं करोमि' इत्यभिमानवर्जितं शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन् नाप्नोति किल्बिषम् इति । एवंभूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसम्भवात् किल्बिषं संसारं प्राप्नोति, ज्ञानाग्निदग्धसर्वकर्मत्वात् अप्रतिबन्धेन मुच्यत एव इति पूर्वोक्तसम्यग्दर्शनफलानुवाद एव एषः । एवं 'शारीरं केवलं कर्म' इत्यस्य अर्थस्य परिग्रहे निरवद्यं भवति ॥ २१ ॥

आ॥आत्मा मनः।परिग्रहत्यागोऽनभिमानम्। नैव किञ्चित्करोतीत्यस्याभिप्रायमाह—नाप्नोति किल्बिषमिति ॥ २१ ॥

ज॥देहादिः, तत्त्यागः कथं साधकस्येत्यत आह—परिग्रहेति। अनभिमानमिति स्थितिरित्यादिक्रियाविशेषणम् । अर्थाभावेऽव्ययीभावो वाऽयम् । अभिमानाभाव इत्यर्थः । पूर्वश्लोके 'कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति'इति कर्मणा मिथ्यात्वज्ञानादिति व्याख्यानमसत्, अत्र श्लोके अन्यथा तदभिप्रायस्य वर्णितत्वादिति भावेनाह—नैवेति । गौण्या वृत्त्यैतदभिप्रायकथनमवधेयम् ॥ २१ ॥

पा॥ *तस्मादित्यादिवाक्यखण्डः क्वचिन्न दृश्यते ॥

रा॥यदृच्छोपनतशरीरधारणहेतुवस्तुसन्तुष्टः द्वन्द्वातीतः-यावत्साधनसमाप्त्यवर्जनीयशीतोष्णादिसहः विमत्सरः-अनिष्टोपनिपातहेतुभूतस्वकर्मनिरूपणेन परेषु विगतमत्सरः समस्सिद्धावसिद्धौ च - युद्धादिकर्मसु जयादिसिद्ध्यसिद्ध्योस्समचित्तः कर्मैव कृत्वापि ज्ञाननिष्ठां विनापि न निबध्यते-न संसारं प्रतिपद्यते ॥ २२ ॥

ता॥यत्नतया सन्तापो लाभे प्रहर्षश्च स्यातामिति कर्मयोगएवात्मदर्शनविरोधिसमस्तवैरिणामुत्थापकः प्रसज्यतइति शङ्कानिरासाय इष्टफलेष्वसङ्ग उच्यते—यदृच्छेतिश्लोकेन। तत्र शरीरधारणार्थंषु साभिसन्धि-कात्यन्तव्यापारनिवृत्तिपर प्रथमपाद व्याख्याति—यदृच्छोपनतेति । समस्तव्यापारनिवृत्तौ विवक्षितायां स्वयमुपनताना निगरणादिव्यापारोऽपि निवृत्तस्स्यात्; अतो व्याप्रियमाणस्यैवाभिसन्ध्यादिनिवृत्तिरिह विवक्षिता । एतेन यदा स्वयमेव यत्किञ्चिच्छरीरधारणवस्त्वागमः, तदा ततोऽतिशयितमाधुर्यादिविशिष्टेषु न प्रवर्तितव्यमित्यप्युक्तं भवति । यावदित्यादिना—'मात्रास्पर्शास्तु' इत्यादि पूर्वप्रपञ्चितं स्मारितम्। अनिष्टेत्यादि—यथा आतपादिहेतुषु तपनादिषु स्वकर्मनिरूपणेन न क्रोधः,यथा छत्रादिभिरातपनिवारणादिमात्रमेव क्रियते,तावदत्रापि कर्तव्यमिति भावः। युद्धादीत्यादिना —'सुखदुःखे समे कृत्वा' 'सिद्ध्यसिद्ध्योस्समो भूत्वा' इत्यादिकं स्मारितम्।कृत्वेत्यस्य सामर्थ्यात् —कर्मैवेत्युक्तम्। बन्धहेतौ सत्यपि न बध्यत इति विरोधव्युदासाय अपिशब्दतात्पर्यमाह—ज्ञाननिष्ठां विनेति । कर्मयोगानुष्ठानपूर्वकस्वतन्त्रज्ञानयोग विनापीत्यर्थः। न निबध्यत इत्यस्य कर्मणैव ज्ञाननिष्ठाफलसिद्धौ तात्पर्यमाह-नसंसारमिति॥

प्र-पा ॥ १. गी. २-१४ ॥ २. गी. २-३८ ॥ ३. गी. २-४८ ॥

शा॥त्यक्तसर्वपरिग्रहस्य यतेः अन्नादेः शरीरस्थितिहेतोः परिग्रहस्य अभावात् याचनादिना शरीरस्थितिकर्तव्यतायां प्राप्तायाम् 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' इत्यादिना वचनेन अनुज्ञातं यतेः शरीरस्थितिहेतोः अन्नादेः प्राप्तिद्वारम् आविष्कुर्वन् आह—यदृच्छा इति ॥ यदृच्छालाभसन्तुष्टः अप्रार्थितोपनतो लाभो यदृच्छालाभः तेन सन्तुष्टः सञ्जातालंप्रत्ययः । द्वन्द्वातीतः द्वन्द्वैः शीतोष्णादिभिः हन्यमानोऽपि अविषण्णचित्तः द्वन्द्वातीतः उच्यते । विमत्सरः विगतमत्सरः निर्वैरबुद्धिः समः तुल्यः यदृच्छालाभस्य सिद्धौ असिद्धौ च । यः एवम्भूतो यतिः अन्नादेः शरीरस्थितिहेतोः लाभालाभयोः समः हर्षविषादवर्जितः कर्मादौ अकर्मादिदर्शी यथाभूतात्मदर्शननिष्ठः सन् शरीरस्थितिमात्रप्रयोजने भिक्षाटनादौ कर्मणि शरीरादिनिर्वर्त्ये 'नैव किञ्चित् करोम्यहम्' 'गुणा गुणेषु वर्तन्ते' इत्येवं सदा परिसङ्ख्यातात्मा आत्मनः कर्तृत्वाभावं पश्यन्नैव किञ्चित् भिक्षाटनादिकं कर्म करोति, लोकव्यवहारसामान्यदर्शनेन तु लौकिकैः आरोपितकर्तृत्वात् भिक्षाटनादौ कर्मणि कर्ता भवति । स्वानुभवेन तु शास्त्रप्रमाणजनितेन अकर्तैव । स एवं पराध्यारोपितकर्तृत्वः शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्म कृत्वापि न निबध्यते बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वात् इति उक्तानुवाद एव एषः ॥ २२ ॥

आ ॥ यतचित्तात्मनो लक्षणमाह—यदृच्छालाभेति । कथं द्वन्द्वातीतत्वमिति आह—समः सिद्धाविति ॥ २२ ॥

ज्ञा॥कामादिवर्जने यदृच्छालाभसन्तुष्टत्वादिकमर्थात्सिद्धम् । तत्किमर्थमुच्यत इत्यत आह—यतेति । 'द्वन्द्वातीतः' इत्युक्तमेव 'समः सिद्धावसिद्धौ च' इत्यनेनोच्यत इत्यत आह—कथमिति । किंप्रकारमित्यर्थः । इति जिज्ञासायामिति शेषः । व्याख्यानव्याख्येयत्वेन न पुनरुक्तिदोष इत्यर्थः ॥२२॥

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३

शा॥आत्मविषयज्ञानावस्थितमनस्त्वेन निर्गतनिःसङ्गस्य ततएव निखिलपरिग्रहवि निर्मुक्तस्य उक्तलक्षणयज्ञादिकर्मनिर्वृत्तये वर्तमानस्य पुरुषस्य बन्धहेतुभूतं प्राचीनं कर्म समग्रं प्रविलीयते निःशेषं क्षीयते ॥ २३ ॥

ता॥ 'त्यक्त्वा कर्मफलासङ्गम्' 'त्यक्तसर्वपरिग्रहः' 'यतचित्तात्मा' इत्यनैः पूर्वं बुद्धिपूर्वसङ्गपरित्यागादिरुक्तः । इदानीं तथाविधनियमवतोऽवस्थान्तरं यज्ञाद्यर्थद्रव्यार्जनादिव्यापृतस्यापि स्वरसत एव सज्ञाभावादिकं वदन्ननन्तस्यापि विरोधिकर्मणः समग्रस्य प्रविलयमिति(?) माह—गतसङ्गस्येतिश्लोकेन । पूर्वोक्तैर्बुद्धिपूर्वसङ्गत्यागादिभिः आत्मज्ञाने मनोऽवस्थितम् । अतो नेदानीं नियन्तव्यम् । ततश्च सङ्गोऽपि निरतिशयभोग्यस्यात्मनोऽनुसन्धानात्स्वात्मन स्वयमेव गतः । एवं सङ्गेऽपि निवृत्ते न स्वयं सर्वपरिग्रहात्त्याज्यः किन्तु, तैरेव मुक्तः । एवं जितसमस्तजेतव्यस्य यथावस्थितोपाये निष्प्रत्यूहं प्रवर्तमानस्य आत्मसाक्षात्कारतत्प्राप्तिविरोधि पूर्वकृतं पुण्यपापरूपं सर्वं कर्म विनश्यतीत्यवदारिल दर्शयति—आत्मविषयेति । कर्मशब्दः प्रथमान्तः 'प्रविलीयते'इत्यनेनान्वितः । 'आचरतः'इत्यस्य तु कर्मविषयत्वं स्वरससिद्धम् । अन्यथा 'समग्रं प्रविलीयते' इत्येतदपि साकाङ्क्षं स्यादित्येतदभिप्रेत्य—यज्ञादिकर्मनिर्वृत्तये वर्तमानस्येत्याद्युक्तम् । यज्ञायेत्यनेन स्वकुक्षिभरणादिमात्रनिरासः । समग्रशब्दस्य उपसर्गस्य च अभिप्रायात्—निःशेषमित्युक्तम् । सहाग्रेण फलेन वर्तत इति परव्याख्यानम् अप्रसिद्धार्थत्वादर्थसिद्धकथनरूपत्वाच्च हेयम् । धात्वर्थश्लेषे कारणापत्तौ च प्रयोगात्तद्युदासाय क्षीयत इत्युक्तम् ॥ २३ ॥

प्र पा॥ १ गी ४ २० ॥ २ गी ४ २१ ॥

श्री॥'त्यक्त्वा कर्मफलासङ्गम्' इत्यनेन श्लोकेन यः प्रारब्धकर्मा सन् यदा निष्क्रियब्रह्मात्मदर्शनसंपन्नः स्यात् तदा तस्य आत्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्याग प्राप्त कुतश्चिन्निमित्तात् तदसम्भवे सति पूर्ववत् तस्मिन् कर्मणि अभिप्रवृत्तस्य अपि 'नैव किञ्चित् करोति सः' इति कर्माभावः प्रदर्शितः । यस्य एव कर्माभावो दर्शितः तस्यैवम्—गतसङ्गस्य इति ॥ गतसङ्गस्य सर्वतो निवृत्तासक्तेः मुक्तस्य निवृत्तधर्माधर्मादिबन्धनस्य ज्ञानावस्थितचेतसः ज्ञाने एव अवस्थितं चेतः यस्य सोऽयं ज्ञानावस्थितचेताः तस्य यज्ञाय यज्ञनिर्वृत्त्यर्थम् आचरतः निर्वर्तयतः कर्म समग्रं सह अग्रेण फलेन वर्तते इति समग्रं कर्म तत् समग्रं प्रविलीयते विनश्यति इत्यर्थः ॥ २३ ॥

आ॥उपसंहरति—गतसङ्गस्येति । गतसङ्गस्य फलस्नेहरहितस्य । मुक्तस्य शरीराद्यनभिमानिनः । ज्ञानावस्थितचेतसः परमेश्वरज्ञानिनः ॥ २३ ॥

जा॥यदुक्तं कामादिवर्जनं तदेव 'गतसङ्गस्य'इत्यनेनोच्यते । त्यक्तसर्वपरिग्रह इत्येतत् 'मुक्तस्य'इत्यनेन कर्मणीति नियताप्त इति च 'ज्ञानावस्थितचेतसः'इत्यनेन। अतः पुनरुक्तिरिव आह—उपसंहरतीति । निक्षिप्तं पिण्डीकरोतीत्यर्थः । गतसङ्गस्येति विषयसापेक्षम्, अतस्तत्प्रदर्शनेन व्याख्याति—गतेति । मुक्तस्येत्येतत्साधकं घटयति—मुक्तस्येति । अनेनाभिमानान्मुक्तस्येति वा,मुक्तसदृशस्येति वा व्याख्यातं भवति । ज्ञानस्य विषयसापेक्षत्वात् त प्रदर्शयन् व्याचष्टे—ज्ञानेति । आत्मज्ञानस्याप्युपलक्षणमेतत् ॥

रा॥प्रकृतिवियुक्तात्मस्वरूपानुसन्धानयुक्ततया कर्मणो ज्ञानाकारत्वमुक्तम्, इदानीं सर्वस्य सपरिकरस्य कर्मणः परब्रह्मभूतपरमपुरुषात्मकत्वानुसन्धानयुक्ततया ज्ञानाकारत्वमाह—

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४

ता॥ब्रह्मार्पणमिति श्लोकोऽपि प्रकारभेदेन कर्मणो ज्ञानाकारत्वोपपादक इति पूर्वेण सङ्गतिं दर्शयति —प्रकृतीति। सर्वस्य नित्यनैमित्तिकादिरूपस्य सपरिकरस्य स्रुक्स्रुवहविरादिविशिष्टस्येत्यर्थः।ब्रह्मशब्दः पुरुषोत्तमएव मुख्यवृत्तइति शारीरकभाष्यारम्भे प्रपञ्चितम्। अत्र च मुख्ये सम्भवति गौणत्वमन्याय्यम्;सर्वस्य च परमपुरुषात्मकत्वानुसन्धानं शास्त्रसिद्धम्। स्वयं च वक्ष्यति 'मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्' इतीत्यभिप्रायेण परब्रह्मभूतपरमपुरुषात्मकत्वानुसन्धानोक्तिः । अत्र ब्रह्मव्यतिरिक्तार्पणहविरादिमिथ्यात्वभावनं ब्रह्मण एव यज्ञत्वकल्पनादिकं च परोक्त प्रत्यक्षादिविरोधप्रकृतासङ्गत्यादिभिर्निरसनीयम् । एकवाक्यत्वे सम्भवति वाक्यभेदायोगात् । ब्रह्मार्पणमित्यस्य व्यस्तपदत्वेन वाक्यभेदभ्रमव्यु-

प्र-पा ॥ १. गी. ९-१६ ॥

शा॥कस्मात् पुनः कारणात् क्रियमाणं कर्म स्वकार्यारम्भम् अकुर्वत् समग्रम् प्रविलीयते इति?उच्यते यतः ब्रह्म इति।ब्रह्म अर्पणं येन करणेन ब्रह्मवित् हविः अग्नौ अर्पयति तत् ब्रह्मैव इति पश्यति, तस्य आत्मव्यतिरेकेण अभावं पश्यति, यथा शुक्तिकायां रजताभावं, *तदुच्यते ब्रह्मैव अर्पणमिति, यथा यद्रजतं तत् शुक्तिकैवेति । 'ब्रह्म अर्पणम्' इति असमस्ते पदे यत् अर्पणबुद्ध्या गृह्यते लोके तत् अस्य ब्रह्मविदः ब्रह्मैव इत्यर्थः । ब्रह्म हविः तथा यत् हविर्बुद्ध्या गृह्यमाणं तत् ब्रह्मैव अस्य । तथा ब्रह्माग्नौ इति समस्तं पदम् । अग्निरपि ब्रह्मैव यत्र हूयते ब्रह्मणा कर्त्रा, ब्रह्मैव कर्तेत्यर्थः । यत् तेन हुतं हवनक्रिया तत् ब्रह्मैव । यत् तेन गन्तव्यं फलं तदपि ब्रह्मैव ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म ब्रह्मकर्मणि समाधिः यस्य स ब्रह्मकर्मसमाधिः तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम् ॥

एवं लोकसङ्ग्रहं चिकीर्षुणापि क्रियमाणं कर्म परमार्थतः अकर्म,ब्रह्मबुद्ध्युपमृदितत्वात्। तदेवं निवृत्तकर्मणोऽपि सर्वकर्मसंन्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसम्पादनं ज्ञानस्य सुतराम् उपपद्यते; यत् अर्पणादि अधियज्ञे प्रसिद्धं तत् अस्य अध्यात्मं ब्रह्मैव परमार्थदर्शिन इति । अन्यथा सर्वस्य ब्रह्मत्वे अर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानम् अनर्थकं स्यात् । तस्मात् ब्रह्मैव इदं सर्वमिति जानतः कर्माभावः, कारकबुद्ध्यभावाच्च । न हि कारकबुद्धिरहितं यज्ञाख्यं कर्म दृष्टम् । सर्वमेव अग्निहोत्रादिकं कर्म शब्दसमर्पितदेवताविशेषसम्प्रदानादिकारकबुद्धिमत् कर्त्रभिमानफलाभिसन्धिमत् च दृष्टम्;

आ॥ज्ञानावस्थितचेतस्त्वं स्पष्टयति—ब्रह्मार्पणमिति ॥ सर्वमेतद्ब्रह्मेत्युच्यते,तदधीनस-

ज॥ननु कर्मस्वरूपं प्रतिज्ञाय संक्षेपविस्तराभ्यां प्रतिपाद्योपसंहृतं, किमिदं ब्रह्मार्पणमित्यनेनोच्यत इत्यत आह—ज्ञानावस्थितेति । एतेन इति यो जानातीत्यध्याहारोऽत्र सूचितो भवति । अत्रार्पणादेः ब्रह्मस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह—सर्वमिति। कुत एतदित्यत आह—उक्तंहीति । स-

पा ॥ *तदुच्यते ॥

रा॥ब्रह्मार्पणमिति हविर्विशिष्यते, अर्प्यतेऽनेनेत्यर्पण स्रुगादि, तद्ब्रह्मकार्यत्वाद्ब्रह्म, ब्रह्म यस्य हविषोऽर्पण तद्ब्रह्मार्पण ब्रह्म हवि ब्रह्मार्पण हविस्स्वय च ब्रह्मभूत, ब्रह्माग्नौ ब्रह्मभूतेऽग्नौ

---

ता॥दासायाह—ब्रह्मार्पणमिति हविर्विशिष्यत इति। ब्रह्मण्यर्पण प्रक्षेपो यस्येति समासे व्यधिकरण बहुव्रीहिस्स्यात्, ब्रह्माग्नौ हुतमित्यनेन पौनरुक्त्य च, अतस्समानाधिकरणबहुव्रीहिरयम् अर्पणशब्दश्चात्र करणल्युटन्तत्वया स्रुगादिविषय । अधिकरणादिल्युडन्तत्वेऽपि पूर्वोक्तपौनरुक्त्यादिदोष इत्येतदभिप्रेत्याह—अर्प्यतेऽनेनेति । ब्रह्मकार्यत्वादिति हेतु सर्वत्रानुषञ्जनीय । ब्रह्मणि स्रुगादिदारुविधिभ्रमव्युदासाय ब्रह्मकार्यत्वाद्ब्रह्म स्वय च ब्रह्मभूत ब्रह्मभूतेऽग्नावित्याशुकम्। ब्रह्मणा हुतमित्यत्रार्पणहविरग्निशब्दव

---

शा॥ न उपमृदितक्रियाकारकफलभेदबुद्धि कर्तृत्वाभिमानफलाभिसन्धिरहित वा । इद तु ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धि कर्म अत अकर्मैव तत् । तथा च द र्शित 'कर्मण्यकर्म य पश्येत्' 'कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति स' 'गुणा गुणेषु वर्तन्त' 'नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिभि । तथा च दर्शयन् तत्रतत्र क्रियाकारकफलभेदबुद्ध्युपमर्दन करोति । दृष्टा च काम्याग्निहोत्रादौ कामोपमर्देन काम्याग्निहोत्रादिहानि । तथा मतिपूर्वकामतिपूर्वकादीना कर्मणा कार्यवि शेषस्य आरम्भकत्व दृष्टम् । तथा इहापि ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेद बुद्धे बाह्यचेष्टामात्रेण कर्मापि विदुष अकर्म सपद्यते । अत उक्त 'समग्र प्रविलीयते' इति ॥

अत्र केचित् आहु —यत् ब्रह्म तत् अर्पणादीनि, ब्रह्मैव किल अर्पणादिना पञ्च विधेन कारकात्मना अवस्थित सत् तदेव कर्म करोति । तत्र न अर्पणादिबुद्धि निवर्त्य ते, किं तु अर्पणादिषु ब्रह्मबुद्धि आधीयते, यथा प्रतिमादौ विष्ण्वादिबुद्धि, यथा वा नामादौ ब्रह्मबुद्धि एवमिति ॥

सत्यम् एवमपि स्यात् यदि ज्ञानयज्ञस्तुत्यर्थं प्रकरण न स्यात् । अत्र तु सम्यग्दर्शन ज्ञानयज्ञशब्दित अनेकान् यज्ञशब्दितान् क्रियाविशेषान् उपन्यस्य श्रेयान् द्रव्यमयाद्य ज्ञात् ज्ञानयज्ञ इति ज्ञान स्तौति । अत्र च समर्थम् इद वचन 'ब्रह्मार्पणम्' इत्यादि ज्ञानस्य यज्ञत्वसपादने इत्युक्तम् । ये तु अर्पणादिषु प्रतिमाया विष्णुदृष्टिवत् ब्रह्मदृष्टि क्षिप्यते नामादिष्विव चेति ब्रुवते न तषा ब्रह्मविद्या उक्ता इह विवक्षिता, अर्पणादिविषयत्वात् ज्ञानस्य । न च दृष्टिसपादनज्ञानेन मोक्षफल प्राप्यते । 'ब्रह्मैव तेन गन्तव्यम्' इति चोच्यते । विरुद्ध च सम्यग्दर्शनम् अन्तरेण मोक्षफल प्राप्यत इति । प्रकृतविरोधश्च, सम्यग्दर्शन च प्रकृत 'कर्मण्यकर्म य पश्येत्' इत्यत्र, अन्ते च सम्यग्दर्शनस्यैव उपस हारात् । 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञ परतप । ज्ञान लब्ध्वा परा शान्तिम्' इत्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन् उपक्षीण अध्याय । तत्र अकस्मात् अर्पणादौ ब्रह्मदृष्टि अप्रकरणे प्रतिमायामिव विष्णुदृष्टि उच्यते इति अनुपपन्नम् । तस्मात् यथा

---

आ॥त्तामनुसृत्य गम्यात् न तु तत्स्वरूपत्वात्। उक्त हि—'रवदधीन यत सर्वमत सर्वो भ वानिति । वदन्ति मुनय सर्वे न तु सर्वस्वरूपत' इति पाद्मे। सर्व तत्प्रज्ञानेत्रमिति च।

---

ज॥र्वस्य भगवदधीनत्वे प्रमाणमाह—सर्वमिति । प्रज्ञा ब्रह्म नेत्र नेतृ यस्य तत्तथोक्तम् । एत हीत्यने न सर्वान्तर्यामित्वमुच्यते, ब्रह्मकर्म ब्रह्मविषय समाधियस्यासौ तथोक्त इति व्याख्याने प्रक्रमविरुद्ध

रा॥ब्रह्मणा कर्त्रा हुतमिति सर्वं कर्म ब्रह्मात्मकतया ब्रह्ममयमिति यस्समाधत्ते, स ब्रह्मकर्मसमाधिः; तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम्,ब्रह्मात्मकतया ब्रह्मभूतमात्मस्वरूपं गन्तव्यम्। मुमुक्षुणा क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसन्धानयुक्ततया ज्ञानाकारं साक्षादात्मावलोकनसाधनं न ज्ञाननिष्ठाव्यवधानेनेत्यर्थः ॥ २४ ॥

एवं कर्मणो ज्ञानाकारतां प्रतिपाद्य कर्मयोगभेदानाह—

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५

दैवं - देवार्चनरूपं यज्ञम् अपरे कर्मयोगिनः पर्युपासते - सेवन्ते,

ता॥विशेष्यानिर्देशाभावात्करणस्य च ब्रह्मार्पणमित्युक्तत्वात् पारिशेष्यात्कर्तरि तृतीयेतिव्यञ्जनाय—ब्रह्मणा कर्त्रा हुतमित्युक्तम्। नन्वत्र पूर्वोत्तरार्धयोरन्वयो न दृश्यते; न च पूर्वार्धं पृथग्वाक्यम्,अपूर्णत्वात्; अत आह—इतीत्यादि समाधत्त इत्यन्तम्। ब्रह्मात्मकतया ब्रह्ममयमिति-तत्कार्यत्वेन,तच्छरीरतया वा तदात्मकत्वात्,तदितिव्यपदेशार्हमित्यर्थः। एतेन ब्रह्मकर्मसमाधिशब्दोऽपि व्याख्यात इत्याह—स इति । ब्रह्मात्मके कर्मणि समाधिरनुसन्धानं यस्य स तथोक्तः ;गत्यभावादिह व्यधिकरणबहुव्रीहिः। यद्वा समाधत्त इति समाधिशब्दार्थः ; ब्रह्मरूपं कर्म समाधत्ते-अनुसन्धत्ते ; 'ब्रह्मैव तेन गन्तव्यम्' इत्यत्रापि कर्मयोगसाध्यसाक्षात्कार्यमात्मस्वरूपमत्र मुग्धविस्मयादिवत् ब्रह्मशब्देनोच्यत इत्याह—ब्रह्मात्मकतयेति । फलितं ज्ञानाकारत्वं वदन् वाक्यार्थमाह—मुमुक्षुणेति । आत्मावलोकनसाधनमित्यनेन ब्रह्म गन्तव्यमित्यस्यार्थो दर्शितः । साक्षाच्छब्देन न ज्ञाननिष्ठेत्यादिना च एवकारार्थो विवृतः ॥ २४ ॥

उक्तार्थसंगतिपूर्वकं 'दैवमेव' इत्यादेः 'प्राणान्प्राणेषु जुह्वति' इत्यन्तस्य प्रघट्टकस्यार्थमाह—एवं कर्मण इति । देवसम्बन्धि दैवम्, तत्सम्बन्धित्वं च तदर्चनरूपत्वमिति—देवार्चनरूपमित्युक्तम्। 'दैवमेव'इत्यवधारणेन 'अपरे'इत्यादिना च विकल्पस्सिद्धः;ततश्च देवसम्बन्धमात्रं साधारणं नात्र वाच्यम्, अतोऽर्चनशब्देन वक्ष्यमाणयागहोमादिभ्यो व्यावृत्तिस्सूचिता । यागादेरपि देवार्चनत्वेऽपि तत्तद्देवतारूपादिसपर्याया ह्यर्चनशब्दः प्रसिद्धः । 'कर्मयोगेन योगिनाम्' इत्युपक्रमवदत्रापि योगिशब्दः कर्मयोगनिष्ठविषय इति ज्ञापनाय—कर्मयोगिन इत्युक्तम् । दैवस्य यज्ञत्वेन हविष्ट्वं विधीयत इति भ्रमव्युदासाय निरन्तरानुष्ठानप्रयुक्तचरणपर्यायेण व्याख्याति —सेवन्त इति । 'सेवा भक्तिरुपास्तिः'

प्र-पा॥ १. स्वरूपमात्रम्. पा ॥ | ३ तदर्चनरूपत्वात्. पा ॥ ४. गी. ३-३ ॥
२ गी ४-३० ॥ | ५. प्रयुक्तचरेण पर्यायेण. पा ॥ ६.

शा॥व्याख्यातार्थ एव अयं श्लोकः ॥ २४ ॥

तत्र अधुना सम्यग्दर्शनस्य यज्ञत्वं सम्पाद्य तत्स्तुत्यर्थम् अन्येऽपि यज्ञा उपक्षिप्य-

आ॥'एतं ह्येव बह्वृचाः' इत्यादि च ।.समाधिना सह ब्रह्मैव कर्म ॥ २४ ॥

यज्ञभेदानाह—

ज॥मिति भावेनान्यथा व्याख्याति—समाधिनेति । समाधिरपि ब्रह्मेत्यर्थः ॥ २४ ॥

उत्तरप्रकरणप्रतिपाद्य बुद्ध्यारोहार्थमाह—यज्ञेति । सामान्यतः कर्मस्वरूपमुक्तम् । तच्च यज्ञादिभेदभिन्नम् । तत्र नायं लोकोऽस्तीति वक्ष्यति; तदनुपपन्नम् , यत्याद्याश्रमविलोपप्रसङ्गादित्याद्याश-

या॥तत्रैव निष्ठां कुर्वन्तीत्यर्थः । अपरे ब्रह्माग्नौ यज्ञं यज्ञेनैवोपजुह्वति : अत्र यज्ञशब्दो हविस्स्रुगादियज्ञसाधने वर्तते ; 'ब्रह्मार्पणं ब्रह्म हविः' इति न्यायेन यागहोमयोर्निष्ठां कुर्वन्ति ॥ २५ ॥

ना॥इति नैघण्टुकाः। अत्र सेवोपासनशब्दौ सेव्यं प्रति करणत्रयस्यानुकूल्यवृत्तिनैरन्तर्यपरौ; न तु ध्यानमात्रपरौ , भक्तिशब्दस्तु ध्यानस्य प्रीतिरूपतां शंसति । ननु मन्वादिभिः 'देवताभ्यर्चनं चैव समिदाधानमेव च' इति नित्यकर्मतया स्मरणाद्देवतार्चनरूपो यज्ञस्सर्वेषामपि कर्मयोगिनामवश्यकर्तव्यः , स कथं विकल्प्यत इत्यत्राह—तत्रैव निष्ठां कुर्वन्तीत्यर्थ इति । ननु ब्रह्मार्पणमित्यत्र श्लोके कश्चित्कर्मयोगभेदोऽभिहितः , अर्पणहविरग्न्यादिविशेषनिर्देशेनावान्तरभेदप्रतीतेः । तत्र च तेनेति कर्तापि निर्दिष्टः , तत्प्रतियोगिकोऽयमपरशब्द इति किं नाङ्गीक्रियते , तदुच्यते—ब्रह्मार्पणमिति श्लोको न कर्मयोगस्वरूपभेदविषयः , किंतु सर्वेषामपि कर्मयोगानां ब्रह्मात्मकत्वानुसन्धानाख्यसाधारणगुणविषयः ; तत्रैव 'ब्रह्मकर्मसमाधिना' इति सामान्येनोक्तेः।अतोऽर्पणहविरादिग्रहणं तत्तत्कर्मयोगभेदापेक्षिततत्तत्कारकविशेषोपलक्षणार्थम्। अत एव निवृत्तिलक्षणयज्ञप्रसङ्गात् 'दैवमेवापरे' इत्यादिभिः प्रवृत्तिलक्षणयज्ञोक्तिरिति परोक्तं परास्तम् । 'ब्रह्माग्नावपरे यज्ञम्' इत्यत्र यज्ञस्वरूपस्य, परमात्मादिवत् साक्षाद्धोतव्यत्वहोमसाधनत्वानुपपत्तेर्यज्ञसाधनलक्षणया द्वितीयान्तयज्ञशब्दो हविर्विषयः , तृतीयान्तस्तु स्रुगादिविषय इत्याह—अत्रेति । ननु 'ब्रह्माग्नौ ब्रह्मणा हुतम्' इति पूर्वमेवोक्तम्, अत्रापि "ब्रह्माग्नावपरे' इत्युच्यते, अतोऽत्र यज्ञं यज्ञेनेत्यनयोरर्थोऽन्यथा वर्णनीयः , इतरथा पौनरुक्त्यप्रसङ्गः ; सर्वकर्मयोगसाधारणस्यार्थस्य विशेषतया निर्देशोऽप्यनुपपन्न इत्यत्राह—ब्रह्मार्पणं ब्रह्महविरिति न्यायेनेति । अत्र यज्ञशब्दाज्जुहोतिशब्दाच्च यागहोमयोर्निष्ठाया एव विवक्षितत्वादवान्तरभेदत्वमपौनरुक्त्यं चोपपन्नमिति भावः । अनात्मत्वेन कल्पिते ब्रह्मणि यज्ञशब्दनिर्दिष्टं जीवमपूर्वं वा हविष्ट्वेन परिकल्प्य प्रक्षिपन्तीत्यादिपरव्याख्यानानि शब्दवृत्तिपरिक्लेशादेव निरस्तानि। कर्मप्रकरणाद्यात्र सर्वत्र ज्ञानमयज्ञत्वकृतिपक्षोऽप्ययुक्तः ॥ २५ ॥

प्र पा ॥ १. मनुस्मृतौ ॥ | २ गी ४२४ ॥

शा॥न्ते—दैवमेव इत्यादिना। देवमेव देवा इज्यन्ते येन यज्ञेन असौ दैवो यज्ञः तमेव अपरे यज्ञं योगिनः कर्मिणः पर्युपासते कुर्वन्तीत्यर्थः । ब्रह्माग्नौ 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः' इत्यादिवचनोक्तम् अशनायापिपासादिसर्वसंसारधर्मवर्जितं 'नेति नेति' इति निरस्ताशेषविशेषं ब्रह्मशब्देन उच्यते । ब्रह्म च तत् अग्निश्च सः । होमाधिकरणत्वविवक्षया ब्रह्म अग्निः । तस्मिन् ब्रह्माग्नौ अपरे अन्ये ब्रह्मविदः यज्ञं - यज्ञशब्दवाच्यं आत्मा, आत्मनामसु यज्ञशब्दस्य पाठात् ; तम् आत्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तम् , अध्यस्तसर्वोपाधिधर्मकम् आहुतिरूपं यज्ञेनैव आत्मनैव उक्तलक्षणेन उपजुह्वति प्रक्षिपन्ति, सोपाधिकस्य आत्मनः निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन् होमः तं कुर्वन्ति ब्रह्मात्मैकत्वदर्शननिष्ठाः सन्यासिनः इत्यर्थः ॥ २५ ॥

ज॥ज्ञानिरासार्थमिति शेषः । तत्र दैवं देवविषयमिति व्याख्यानमसत्, द्रव्ययज्ञा इत्यस्य पुनरुक्तत्वादिति भावेनाह—दैवमिति । एवं तर्हि केचित् भगवन्तमुपासत इत्युक्तं स्यात् ; तथाच नेयं यज्ञोक्ति-

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६

रा॥अन्ये श्रोत्रादीनामिन्द्रियाणां संयमने प्रयतन्ते । अन्ये योगिनः इन्द्रियाणां शब्दादिविषयप्रवणतानिवारणे प्रयतन्ते ॥ २६ ॥

ता॥'श्रोत्रादीनि' इत्यत्र संयमस्य साक्षादग्नित्वाभावाच्छ्रोत्रादेश्च होतव्यत्वाभावात्तात्पर्यमाह—अन्य इति । संयमस्याग्नित्वं श्रोत्रादीनां निर्व्यापारत्वलक्षणभस्मसात्करणात् । नन्विन्द्रियनियमनमपि सर्वकर्मयोगिसाधारणं कथमत्र विशिष्योच्यत इत्यत्रोक्तम्—संयमने प्रयतन्त इति । एवमुत्तरत्रापि प्रयतन्त इत्यनयोस्तात्पर्यं ग्राह्यम् । तथा निद्राशब्देऽपि । अत्र प्रतीन्द्रियं संयमभेदात्संयमाग्निष्विति बहुवचनम् । 'शब्दादीन्' इत्यत्र इन्द्रियेषु शब्दादिविषयान् समर्पयन्तीति भ्रमव्युदासायाह—इन्द्रियाणां शब्दादिविषयप्रवणतानिवारण इति । इन्द्रियाणां नियमनं हि श्रोत्रादीनीत्यादिनोक्तम्; अत्र तु 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इतिवद्विषयमनसोरपि नियमनं क्रमेणोच्यते । विषयस्य नियमनं नाम दूरीकरणम्, तत्सन्निधिपरिहार इति यावत् । तत एवेन्द्रियाणां तत्प्रवणता निवर्तेत इति भावः । कथमिन्द्रियाग्निषु शब्दादेर्होमो नाम? उच्यते—होमेन हविषो विनाशः क्रियते, तद्वदत्र शब्दादेरिन्द्रियेषु विनाशो नाम तत्सम्बन्धविनाशो विवक्षितः—इति । यद्वा श्रोत्रादीनीत्यत्र विषयसन्निधिपरिहारो विवक्षितः; इह तु सन्निहितानामपि विषयाणामकिञ्चित्करत्वापादनमिति विभागः । विषयप्रवणतानिवारण इत्यनेनात्यन्तासमस्तविषयनिवृत्तेर्दुष्करत्वान्निषिद्धादिभ्योऽत्यन्तनिवारणं धर्माविरुद्धेष्वतिसङ्गनिवृत्तिश्च विवक्षिता ॥ २६ ॥

प्र॰पा॥ १. कठ. १-३-१० ॥ २५६ पुटे व्याख्यातम् ॥ २. निवर्तेत श॥

शं॥सोऽयं सम्यग्दर्शनलक्षणः यज्ञः दैवयज्ञादिषु यज्ञेषु उपक्षिप्यते 'ब्रह्मार्पणम्' इत्यादि*श्लोके प्रस्तुतः 'श्रेयान् द्रव्यमयात् यज्ञात् ज्ञानयज्ञः परन्तप' इत्यादिस्तुत्यर्थं—श्रोत्रादीनि इति । श्रोत्रादीनि इन्द्रियाणि अन्ये योगिनः संयमाग्निषु; प्रतीन्द्रियं संयमो भिद्यते इति बहुवचनम्; संयमा एव अग्नयः तेषु जुह्वति इन्द्रियसंयममेव कुर्वन्ति इत्यर्थः । शब्दादीन् विषयान् अन्ये इन्द्रियाग्निषु इन्द्रियाण्येव अग्नयः तेषु इन्द्रिया-

आ॥दैवमित्यादिना । दैवं भगवन्तम् । स एव तेषां यज्ञः । भगवदुपासनं यज्ञमिति क्रियाविशेषणम् । नान्यत्तेषामस्ति यतीनां केषाञ्चित् । यज्ञं भगवन्तम् । 'यज्ञेन यज्ञम्' 'यज्ञो विष्णुर्देवता' इत्यादिश्रुतिः । यज्ञेन प्रसिद्धेनैव । यज्ञं प्रति जुह्वतीति सर्वत्र

ज॥रित्यत आह—स एवेति । स इति परामृष्टं दर्शयति—भगवदिति । भगवदुपासनस्य यज्ञत्वमिह कथं लभ्यत इत्यत आह—यज्ञमिति । भगवदित्यादिकं क्रियाविशेषणत्वप्रदर्शनार्थमेकमेव वाक्यम् । साधनं परित्यज्य धात्वर्थमात्रस्य विशेषणं क्रियाविशेषणम् । अवधारणार्थं दर्शयति—नान्यदिति । अन्यद्भगवदुपासनात् । अनेन एवशब्दो भिन्नक्रम इत्युक्तं भवति । दैवमेवोपासते नान्यदिति तु प्रकृतासङ्गतम् । केषाञ्चित्परमहंसानाम् अन्येषां बाह्यकर्मणोऽपि भावात् । यद्वा केषाञ्चिदित्यस्यैव व्याख्यानं—यतीनामिति । ब्रह्माग्नावित्यस्यात्मानमात्मनैव मनसा वा ब्रह्मण्येकीभावयन्तीति व्याख्यानमसदिति भावेन यज्ञमित्येतद्व्याचष्टे—यज्ञमिति । भगवतो यज्ञशब्दार्थत्वं कुत इत्यत आह—यज्ञेनेति ।

पा॥ *श्लोके: 'श्रेयान्॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७

रा॥अन्ये ज्ञानदीपिते मनस्संयमयोगाग्नौ सर्वाणीन्द्रियकर्माणि प्राणकर्माणि च जुह्वति; मनस इन्द्रियप्राणकर्मप्रवणतानिवारणे प्रयतन्त इत्यर्थः ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८

ता॥इन्द्रियार्थयोर्नियमने 'अभिहितेऽर्थेभ्यश्च परं मनः' इति क्रमेण मन एव नियन्तव्यतया वक्तव्यम्, अतोऽत्रात्मसंयमशब्देन मनोनियमनमुच्यत इति ज्ञापयति—मनस्संयमयोगाग्नाविति। मनस्संयम एव योगसाधनत्वादिना योगः, मनस्संयमस्य वा योगः-प्राप्त्यादिः; तस्य ज्ञानदीपितत्वं देहातिरिक्तशुद्धात्मस्वरूपानुसन्धानमूलत्वम् । श्रोत्रादीनां शब्दादीनामिव चात्रापि होतव्यतयोक्तानामिन्द्रियकर्मणां प्राणकर्मणां च नियमनमुच्यते चेत्पौनरुक्त्यादिदोषस्स्यादिति शङ्काव्युदासायाह—मनस इति। इन्द्रियकर्म-दर्शनस्पर्शनादिकं, वचनादानादिकं च; प्राणकर्म-उच्छ्वासनिश्श्वासादिकम् । यद्वा प्राणशब्दादिसिद्ध इन्द्रियव्यापारादिहेतुस्सूक्ष्मो व्यापारविशेषः । तेन वक्ष्यमाणप्राणायामाद्यनुच्छेदः । अत्रापि प्रवणतानिवारणशब्दतात्पर्यं पूर्ववत्। श्रोत्रादीनां पूर्वमुपादानात्कर्मेन्द्रियमात्रनियमनपरो वाऽयं श्लोकः॥

प्रत्येकं यज्ञशब्दप्रयोगाद्बहुविधकर्मयोगभेदनिष्ठा उच्यन्ते। तत एवापरशब्दोऽपि प्रत्येकमन्वितः । तत्र द्रव्यैर्यज्ञा येषां ते द्रव्ययज्ञाः । यद्वा द्रव्यात्मका यज्ञा येषामिति विग्रहः । द्रव्यशब्दसामर्थ्यात्तत्साध्ययज्ञविशेषास्सर्वे सङ्गृहीता इति देवतार्चनदानयागहोमाः पृथगुक्ताः । अतो द्रव्ययज्ञा इत्यादि बहुवचनमपि तत्तदवान्तरभेदविषयमिति भावः । ननु देवतार्चनयागादेः पूर्वमेवोक्तत्वान्निरर्थक

श्रा॥ग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥ २६॥

किञ्च—सर्वाणि इति॥ सर्वाणि इन्द्रियकर्माणि इन्द्रियाणां कर्माणि इन्द्रियकर्माणि, तथा प्राणकर्माणि प्राणो वायुः आध्यात्मिकः तत्कर्माणि आकुञ्चनप्रसारणादीनि तानि च अपरे आत्मसंयमयोगाग्नौ आत्मनि संयमः आत्मसंयमः स एव योगाग्निः तस्मिन् आत्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति ज्ञानदीपिते स्नेहेनेव प्रदीपे विवेकविज्ञानेन उज्ज्वलभावम् आपादिते जुह्वति प्रविलापयन्ति इत्यर्थः ॥ २७॥

द्रव्येति॥ द्रव्ययज्ञाः तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञाः ।

आ॥समम्'तं यज्ञम्'इत्यादौ । उक्तंच 'विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना । अयजन्मानसे यज्ञे पितरं प्रपितामहः' इति ॥ २५ ॥ २६ ॥

आत्मसंयमाख्योपायाग्नौ ॥ २७ ॥

ज॥यज्ञेनेत्यस्यार्थमाह—यज्ञेनेति । एवशब्देनापव्याख्यानं निराकरोति ।एवं चेयज्ञमित्यस्य कथमन्वय इत्यत आह—यज्ञमिति । एतद्व्याख्यानमन्यत्रातिदिशति—इति सर्वत्रेति । अतिप्रसङ्गनिवारणाय सर्वत्रेत्युक्तं विवृणोति—तमिति । एवं तद्धिमतो जात उ पुरुष यज्ञ भगवन्तं प्रति बर्हिषि प्रौक्षन्नित्यर्थः स्यात् । स च निर्मूल इत्यत आह—उक्तं चेति ॥ २५ ॥ २६ ॥

आत्मसंयमेत्येतद्दुर्गमार्थत्वाद्व्याख्याति—आत्मेति । आत्मनो मनसः । आत्मसंयमाख्योऽयमुपायः । स एवाग्निः ॥ २७ ॥

रा॥केचित्कर्मयोगिनो द्रव्ययज्ञाः न्यायतो द्रव्याण्युपादाय देवतार्चने प्रयतन्ते, केचिच्च दानेषु, केचिच्च यागेषु, केचिच्च होमेषु, एते सर्वे द्रव्ययज्ञाः; केचित्तपोयज्ञाः कृच्छ्रचान्द्रायणोपवासादिषु निष्ठां कुर्वन्ति; योगयज्ञाश्चापरे पुण्यतीर्थपुण्यस्थानप्राप्तिषु निष्ठां कुर्वन्ति; इह योगशब्दः कर्मनिष्ठाभेदप्रकरणात्तद्विषयः; केचित्स्वाध्यायाभ्यासपराः; केचित्तदर्थज्ञानाभ्यासपराः, यतयो-यतनशीलाः, संशितव्रताः दृढसंकल्पाः॥ २८॥

ता॥पुनर्वचनमितिचेन्न, द्रव्यशब्दस्य साधारणत्वेन दानस्यापि सङ्ग्रहात्, पूर्वं च तस्यानुक्तत्वेनापौनरुक्त्यात्। तर्हि दानयज्ञा इति विशिष्य वक्तव्यम्; तदपि न, अर्चनदानयोगहोमयज्ञानां चतुर्णामपि तपोयज्ञादिभ्यो व्यावृत्तावान्तरभेदसङ्ग्राहकसूचनार्थतया न्यायार्जितद्रव्यसाध्यत्वज्ञापनार्थतया च सामान्यशब्दोपयोगात्। तदेतदभिप्रेत्योक्तम्—**एते सर्वे द्रव्ययज्ञा** इति। यद्वा अर्चनादिस्वरूपस्य यज्ञस्य प्रागुक्तम्; इह तु तदर्थद्रव्यार्जनादेरेवेत्यभिप्रायेण—**न्यायत** इत्यादि **प्रयतन्त** इत्यन्तमुक्तम्। तपः शास्त्रीयो भोगसङ्कोचः; तदवान्तरभेदप्रदर्शनं—**कृच्छ्रे**त्यादि। 'योगयज्ञाः' इत्यत्र योगसंयोगः प्राप्तिरित्यर्थः। सा चात्र पुण्यतीर्थाद्यभिगमनतन्निवासादिरूपा विवक्षितेत्यभिप्रायेणाह—**पुण्यतीर्थे**ति। पुण्यस्थानशब्दोऽत्र देवतास्थानाश्रमजनपदविशेषादिसङ्ग्राहकः। नन्विह योगशब्दः साक्षाद्योगे कर्मयोगमात्रे वा किं न वर्ततइत्यत्राह—**इहे**ति। कर्मनिष्ठाप्रकरणत्वात्साक्षाद्योगविषयत्वं न युक्तम्, तद्भेदप्रकरणत्वात् तत्सामान्यविषयत्वं चानुचितम्; तद्भेदेषु च पारिशेष्याद्योगशब्दसामर्थ्याच्च तीर्थादिप्राप्तिरेव ग्राह्या। सूचितं चैतत्सङ्ग्रहे परमाचार्यैः 'कर्मयोगस्तपस्तीर्थदानयज्ञादिसेवनम्' इति इति भावः। स्वाध्यायाभ्यासतदर्थज्ञानयोः पृथग्धर्मत्वेन पृथग्यज्ञत्वनिर्देशोपपत्तेः, द्वन्द्वस्य प्राधान्याच्च विभज्य निर्दिशति—**केचित्स्वाध्यायाभ्यासपरा** इति। स्वाध्यायसहपाठौचित्यादात्मज्ञानस्य न सर्वसाधारणत्वादर्थज्ञानस्यानुष्ठानेऽप्युपयोगात्—**केचित्तदर्थज्ञानाभ्यासपरा** इत्युक्तम्। परशब्दोऽत्र साधारण्यव्यवच्छेदाय तन्निष्ठतामाह। यतिशब्दस्याश्रमविशेषपरत्वानौचित्यात्सर्वकर्मयोगनिष्ठसाधारणविशेषपरत्वौचित्याच्च प्रकृतिप्रत्ययार्थविभागेन निर्वक्ति—**यतनशीला** इति। सर्वप्रयोगानुगतः सर्वकर्मयोगनिष्ठसाधारणश्च सङ्कल्पो व्रतशब्दार्थ इत्यभिप्रेत्य—**दृढसङ्कल्पा** इत्युक्तं। संशितत्वमत्राकुण्ठत्वम्। तच्च दृढत्वमेव॥२८॥

प्र-पा॥ १. शब्दप्रयोगात्. पा॥ २ गी. सं. २३-श्लो॥

शां॥तपोयज्ञाः तपः यज्ञः *येषां ते तपोयज्ञाः।योगयज्ञाः प्राणायामप्रत्याहारादिलक्षणो योगो यज्ञो येषां ते योगयज्ञाः।तथा अपरे स्वाध्यायज्ञानयज्ञाश्च स्वाध्यायः यथाविधि ऋगाद्यभ्यासः यज्ञः येषां ते स्वाध्याययज्ञाः। ज्ञानयज्ञाः ज्ञानं शास्त्रार्थपरिज्ञानं यज्ञः येषां ते

आ॥द्रव्यं जुह्वतीति द्रव्ययज्ञाः। तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति तपोयज्ञा इत्यादि। इदं तपोहविस्तद्ब्रह्माग्नौ जुहोमि तत्पूजार्थमिति होमः। तदर्पणमेव होमबुद्धिः॥

ज॥ननु द्रव्य यज्ञो न भवति; तत्कथं बहुव्रीहिः; तत्पुरुषत्वे च कथं पुरुषसामानाधिकरण्यमित्यत आह—**द्रव्यमि**ति। अनेन नाथ यज्ञशब्दो भावार्थः, किंतु कर्त्रर्थः, तथा च द्रव्यस्य यष्टा याजका इत्यर्थं इत्युक्तं भवति। एतदाशङ्कापरिहारायैव तपोयज्ञा इत्येतदप्येवं व्याचष्टे—**तप** इति। तत्र परमेश्वरे योगयज्ञा इत्यादिकमप्येवमेव व्याख्येयमिति दर्शयति—**इत्यादी**ति। तपसो होमः कथमित्यत आह—**इदमि**ति। तपश्चरणमेव तपोयज्ञत्वं किं न स्यादित्यत आह—**तदर्पण एवे**ति। अनेनैव प्रकारेण यज्ञत्वसम्पादनं नान्यथेत्यर्थः॥ २८॥

पा॥ *येषां तपस्विनां ते तपो॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।

रा॥अपरे कर्मयोगिनः प्राणायामेषु निष्ठां कुर्वन्ति. ते च त्रिविधाः पूरकरेचककुम्भक-भेदेन, अपाने जुह्वति प्राणमिति पूरकः, प्राणेऽपानमिति रेचकः, प्राणापानगती रुद्ध्वा.. प्राणान् प्राणेषु जुह्वति' इति कुम्भकः, *प्राणायामपरेषु त्रिष्वप्यनुषज्यते नियताहारा इति॥

सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३०
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।

द्रव्ययज्ञप्रभृतिप्राणायामपर्यन्तेषु कर्मयोगभेदेषु स्वसमीहितेषु प्रवृत्ता एते सर्वे

ना॥'प्राणायामपरायणाः' इत्यनेन वर्गत्रयस्य सामान्यसङ्ग्रहः कियतइति व्यञ्जनाय —प्राणायामेषु निष्ठांकुर्वन्तीति पृथग्वाक्य कृतम्। प्राणायामनिष्ठानामवान्तरभेदज्ञापनाय—पूरकेत्यादिना प्राणायामावान्तरभेदप्रदर्शनम्। तत्तद्भेदप्रतिपादकांश विविनक्ति—अपानेत्यादिना। ऊर्ध्वप्रवृत्तस्य प्राणस्य अधः प्रवेशन हि पूरकः।ततश्च अपाने जुह्वतीत्येतदुपचारादुपपन्नम्। एवमधःस्थितस्य वायोरूर्ध्वप्रवर्तन हि रेचकइति प्राणेऽपानमित्युपचरितम्। वायोरूर्ध्वाधोगमननिवारणेनावस्थापन कुम्भकइति प्राणापानगती रुद्ध्वा इत्यादेरभिप्रायः। प्राणान्—प्राणवृत्तिभेदानित्यर्थः। आहारनियमस्तु दृष्टादृष्टोपकारद्वारा सर्वप्राणायामसाधारणतया विहितइत्याह—प्राणायामपरेषु त्रिष्वपि इति ॥ २९ ॥

किमेतेषाम् उक्तानां कर्मयोगभेदनिष्ठानामवान्तरफलभेदोऽस्ति, किं प्राणायामनिष्ठाना यज्ञादिकृत्यानमिति शङ्काद्वय निराक्रियते—सर्वेतिश्लोकेन।स्वसमीहितेष्वितिवचनादविशिष्टफलतया विकल्पे

प्र-ता ॥ *प्राणायामेषु पा ॥

म॥ज्ञानयज्ञाः स्वाध्याययज्ञा ज्ञानयज्ञाश्च यतयः यतनशीलाः संशितव्रताः सम्यक् शिताः तनूकृतानि तीक्ष्णीकृतानि व्रतानि येषां ते संशितव्रताः ॥ २८॥

किञ्च—अपाने इति॥ अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिं, पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। प्राणे अपानं तथा अपरे जुह्वति, रेचकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। प्राणापानगती रुद्ध्वा मुखनासिकाभ्यां वायोः निर्गमनं प्राणस्य गतिः, तद्विपर्ययेण अधोगमनम् अपानस्य गतिः, ते प्राणापानगती रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुम्भकाख्य प्राणायामं कुर्वन्तीत्यर्थः॥ २९ ॥

किञ्च—अपरे इति॥ अपरे नियताहाराः नियतः परिमित आहारः येषा ते निय-

आ॥अपरे प्राणायामपरायणाः प्राणमपाने जुह्वति। अपान च प्राणे। कुम्भकस्था एव भवन्तीत्यर्थः ॥ २९॥

ज॥अपाने जुह्वतीत्येतत् पूरकरेचककुम्भकपरतया केचिद्व्याचक्षते, तदसत्, अध्याहारादिप्रसङ्गात्, पूरकरेचकयोः कुम्भकार्थत्वेन पृथक् प्राणायामत्वाभावाचेति भावेन कुम्भकमात्रपरतया योजयति—अपर इति। परायणा इत्यतः पर प्राणापानगती रुद्ध्वेति द्रष्टव्यम्। अभिप्रायमाह—कुम्भकस्था एवेति। एवशब्देनाप्रव्याख्यान व्यावर्तयति ॥ २९ ॥

अपरे नियतत्वन प्राणाना प्राणेषु कीदृशो होमः,नियताहारत्वस्य कथ तत्रोपयोग इत्यत आह—

रा॥'सह यज्ञैः प्रजास्सृष्ट्वा' इत्यभिहितमहायज्ञपूर्वकनित्यनैमित्तिककर्मरूपयज्ञविदः तन्निष्ठाः ततएव क्षपितकल्मषाः यज्ञशिष्टामृतेन शरीरधारणं कुर्वन्त एव कर्मयोगे व्यापृताः सनातनं ब्रह्म यान्ति ॥ ३० ॥

नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१

अयज्ञस्य महायज्ञादिपूर्वकनित्यनैमित्तिककर्मरहितस्य, नायं लोकः-न प्राकृतलोकः,

ता॥न्याय्ये तत्तत्सामर्थ्याद्यनुसारिणी स्वेच्छैव हि विशेषनियामिकेति सूचितम् । सामान्यस्य यज्ञशब्दस्य असङ्कोचप्रदर्शनाय—सहयज्ञैरित्यादिकमुक्तम्। 'यज्ञक्षपितकल्मषाः''यज्ञशिष्टामृतभुजः'इत्याभ्यां 'यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः' इत्यादिप्रागुक्तप्रत्यभिज्ञानात्तत्प्रकरणे च यज्ञशिष्टाशनस्य शरीरयात्रार्थत्वप्रपञ्चनात् तत्स्मरणायोक्त-यज्ञशिष्टामृतेन शरीरधारणं कुर्वन्त एवेति। प्राणायामादिषु निष्ठावतामपि नित्यत्वादिना यज्ञादिकमवश्यकार्यमित्यपि सिद्धम्। एवकारेण नैवंविधशरीरधारणादिव्यापार आत्मावलोकनविरोधी,किन्तूपयुक्त इत्यभिप्रेतम्। व्यापृता इति—अन्यथा व्यापार एवाशक्य इति भावः। 'ब्रह्मैव तेन गन्तव्यम्'इति पूर्वव्याख्याततुल्यार्थत्वादुपसंहारस्य सनातनं ब्रह्म यान्तीत्येतदपि व्याख्यातम् ॥ ३० ॥

कर्मयोगावान्तरभेदनिष्ठत्वाभिमानेन सामान्यधर्मभूतनित्यनैमित्तिकादिपरित्यागिनः सकलपुरुषार्थानर्हतोच्यते—नायमित्यर्धेन।अयज्ञस्येति व्याख्येयपदम्।'नाय लोकः'इत्यत्रायमिति निर्देशाभिप्रेतं दर्शयति—न प्राकृतलोक इति। लोकस्वरूपमात्रनिषेधभ्रमव्युदासायाह—प्राकृतलोकसम्बन्धीति ।

प्र-पा ॥ १. गा. ३-१३ ॥ | २ गी ४-२४ ॥

शा॥ताहाराः सन्तः प्राणान् वायुभेदान् प्राणेषु एव जुह्वति, यस्ययस्य वायोः जयः क्रियते इतरान् वायुभेदान् तस्मिन् तस्मिन् जुह्वति, ते तत्र प्रविष्टा इव भवन्ति; सर्वेऽपि एते यज्ञविदः यज्ञक्षपितकल्मषाः यज्ञैः यथोक्तैः क्षपितः नाशितः कल्मषो येषां ते यज्ञक्षपितकल्मषाः॥ ३० ॥

एवं यथोक्तान् यज्ञान् निर्वर्त्य—यज्ञ इति ॥ यज्ञशिष्टामृतभुजः यज्ञानां शिष्टं यज्ञशिष्टं यज्ञशिष्टं च तत् अमृतं च यज्ञशिष्टामृतं तत् भुञ्जते इति यज्ञशिष्टामृतभुजः । यथोक्तान् यज्ञान् कृत्वा तच्छिष्टेन कालेन यथाविधिचोदितम् अन्नम् अमृताख्यं भुञ्जते ये ते यज्ञशिष्टामृतभुजो यान्ति गच्छन्ति ब्रह्म सनातनं चिरन्तनं मुमुक्षवश्चेत्; कालातिक्रमापेक्षया इति सामर्थ्यात् गम्यते । न अयं लोकः सर्वप्राणिसाधारणोऽपि अस्ति यथोक्तानां

आ॥नियताहारत्वेनैव प्राणशोषात्प्राणान् प्राणेषु जुह्वति । 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादिश्रुत्युक्तप्रकारेण वा । अन्यदपि ग्रन्थान्तरे सिद्धम् 'यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुताः' इति ॥ ३० ॥ ३१ ॥

ज॥नियतेति।प्राणशोषादिन्द्रियवृत्तीनां वृत्तिमत्स्विन्द्रियेषु सङ्कोचाज्जुह्वतीत्युच्यत इति शेषः। एकशब्देन श्रोत्रादीनीत्यतो भेदं दर्शयति—तत्र प्रत्याहारेण, अत्र नियताहारत्वेन-इति।प्राणानित्यादिकं प्रकारान्तरेण व्याचष्टे—यच्छेदिति । वाग्वाचम्मनसि यच्छेत् तन्नियता ध्यायेत् । अत्रपाणामिन्द्रियदेवतानाम् उत्तमेन्द्रियदेवतानियतत्वचिन्तनं प्रकारणार्थः । वा प्राणाना प्राणेषु होम इति शेषः । अस्मिन्पक्षे नियताहाराः इति पृथक् यज्ञो ज्ञातव्यः।इदमेवास्तु व्याख्यानं श्रौतत्वात्,किं पूर्वेणेत्यत आह—अन्यदपीति॥

रा॥प्राकृतलोकसंबन्धिधर्मार्थकामाख्यः पुरुषार्थो न सिध्यति; कुत इतोऽन्यो मोक्षाख्यः पुरुषार्थः; परमपुरुषार्थतया मोक्षस्य प्रस्तुतत्वात्तदितरपुरुषार्थः 'अयं लोकः' इति निर्दिश्यते; स हि प्राकृतः ॥ ३१ ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२

एवं हि बहुप्रकाराः कर्मयोगा ब्रह्मणो मुखे विततः आत्मयाथात्म्यावाप्तिसाधन-

ता॥'अयं लोकः' इति प्रत्यक्षसिद्धभूलोकपरत्वौचित्यात् 'कुतोऽन्यः' इतीदं स्वर्गादिपरं किं न स्यादित्याशङ्क्याह-परमपुरुषार्थतयेति । अयज्ञस्य मोक्षाभावे प्रतिपादिते हि तदर्थं तदुपादानं स्यादितिभावः। मोक्षव्यतिरिक्तदृष्टानुश्रविकपुरुषार्थवर्गनिर्देशस्यायंलोक इति निर्देशहेतुभूतसाधारणोपाधिं प्रस्तुतपरमपुरुषार्थविरुद्धरूपत्वं च व्यञ्जयितुमाह—स हि प्राकृत इति । प्रकृतिपरिणामविशेषरूपत्वात्तत्सम्बन्धस्य प्राप्यत्वाच्च प्राकृतत्वोक्तिः ॥ ३१ ॥

एवं कर्मयोगावान्तरभेदाननुपदिश्य तत्तद्भेदेऽपि साधारणानां नित्यनैमित्तिकानाम् अवश्यानुष्ठेयत्वं तत्परित्यागे प्रत्यवायश्चाभिहितः अस्यैवार्थस्योपसंहारः क्रियते—एवमितिश्लोकेन । बहुप्रकारकर्मयोगभेदोपदेशानन्तरमेव 'एवं बहुविधा यज्ञाः' इति वचनं प्रकृतविषयमेव भवितुमर्हतीत्यभिप्रायेणाह—एवं हि बहुप्रकाराः कर्मयोगा इति। ब्रह्मशब्दोऽत्र यथावस्थितात्मविषयः, वेदादिपरत्वे प्रकृतौचित्याभावात्। मुखशब्दश्चोपायविषयः । आहुश्च नैघण्टुकाः 'मुखं तु वदने मुख्ये तात्त्रे द्वाराभ्युपाययोः' इति। आत्मनः प्राप्त्युपाये कर्मयोगे अवान्तरभेदतया वितता इत्यर्थः । तदाह— आत्मयाथात्म्येति ।

प्र पा ॥ १.

शं॥यज्ञानाम् एकोऽपि यज्ञः यस्य नास्ति सः अयज्ञः तस्य । कुतः अन्योऽपि विशिष्टसाधनसाध्यः कुरुसत्तम ॥ ३१ ॥

एवमिति ॥ एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञा वितता विस्तीर्णाः ब्रह्मणो वेदस्य मुखे द्वारे, वेदद्वारेण अवगम्यमानाः ब्रह्मणो मुखे वितता उच्यन्ते; तद्यथा 'वाचि हि प्राणान् जुहुमः' इत्यादयः । कर्मजान् कायिकवाचिकमानसकर्मोद्भवान् विद्धि

आ॥ब्रह्मणः परमात्मनो मुखे 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति वक्ष्यति। मानसिकवाचिककायिककर्मजा एव हि ते सर्वे। एवं ज्ञात्वा तानि कर्माणि कृत्वा वि-

आ॥ब्रह्मणो मुखे वितता इत्यस्य वेदप्रतिपादिता इति व्याख्यानमयुक्तम् ।मुखशब्दवैयर्थ्यादित्यभिप्रायेणाह—ब्रह्मण इति । परमात्मनः सर्वयज्ञभोक्तृत्वं कुतो भगवत्सम्मतमित्यत आह—अहं हीति । उपासनादीनां कर्मजत्वाभावात् कर्मजान्विद्धि तान् सर्वान् इत्ययुक्तमित्यत आह—मानसेति । अत्र विमोक्ष्यस इति भवन्तान्मुचः कर्मकर्तरि लृट्। तस्य प्रकृतोपयुक्ततयाऽर्थमाह—एवमिति । एवं शास्त्रोऽपि यदि सर्वेऽपि यज्ञाः कर्मजा इति जानासि तर्हि तानि युद्धादीनि स्वविहितानि कर्माणि कृत्वैव विमोक्ष्यसे संसारादात्मानं मोक्तुमिच्छसि, सर्वेषां कर्मजत्वज्ञाने तवैव मोक्षार्थं युद्धादिकं कर्तव्यमितीच्छा भविष्यतीत्यर्थः । तत्कर्थमित्यत आह—युद्धमिति । यद्येवमनेके यज्ञास्तर्हि किं कर्मात्मकेन युद्धेन, उपासनादिनैवाहं कृती स्यामित्यर्जुनस्य हार्दं ज्ञात्वा भगवतेदमुक्तम् । तस्याय भावः—

रा॥तया स्थिताः तानुक्तलक्षणानुक्तभेदान् कर्मयोगान्सर्वान्कर्मजान्विद्धि - अहरहरनुष्ठीयमाननित्यनैमित्तिककर्मजान् विद्धि; एवं ज्ञात्वा यथोक्तप्रकारेणानुष्ठाय मोक्ष्यसे ॥ ३२ ॥

अन्तर्गतज्ञानतया कर्मणो ज्ञानाकारत्वमुक्तम्; तत्रान्तर्गतज्ञाने कर्मणि ज्ञानांशस्यैव प्राधान्यमाह—

श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३

ता॥तानितिनिर्देशः प्रस्तुतसमस्ताकारपरामर्शी,सर्वानिति चाशेषावान्तरभेदसङ्ग्रह इत्यभिप्रायेण—उक्तलक्षणानुक्तभेदानित्युक्तम्। उभाभ्यां पदाभ्याम् एवंशब्दबहुविधशब्दयोरर्थोक्तिर्वा । अन्तर्भूतज्ञानतया ज्ञानाकारत्वमुक्तलक्षणत्वम्। उक्तलक्षणानितिवदताध्यायार्थतयारम्भनिर्दिष्टेषु कर्मयोगस्वरूपाभिधानमपि कृत भवतीति सूचितम्। 'सर्वान्कर्मजान्विद्धि'इति पृथग्वचनात्प्राणायामादीनां प्राधान्य नित्यनैमित्तिकादीनां तदर्थत्वं चाह—अहरहरिति । अनेन तस्याकरणे सर्वानर्हतया यावत्फलमनुष्ठेयत्वं प्रतिदिवस पापहरणेनोत्तरोत्तरमनसोन्मेषहेतुत्वेनात्यन्तोपयुक्तत्व च सूचितम् ॥ ३२ ॥

श्रेयानित्यादेराध्यायपरिसमाप्तेर्ज्ञानविषयस्यैकप्रघट्टकस्य सङ्गतिपूर्वकमर्थमाह—अन्तर्गतेति। अवान्तरभेदप्रतिपादनरूपावान्तरप्रकरणात्प्राचीनेन कर्मणो ज्ञानाकारत्वप्रतिपादकप्रघट्टकेनास्य साक्षात्सङ्गतिः। ननु द्रव्यमयाद्यज्ञात् ज्ञानयज्ञःश्रेयानिति निर्दिष्टे सत्यात्मसाक्षात्कारान्तरङ्गज्ञानयोगप्राधान्य प्रतीतुमुचितम्; 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यनेन कर्मफलस्य सर्वस्य ज्ञानेऽन्तर्भावश्च प्रतीयते; 'अपि चेदसि सर्वेभ्यः पापेभ्यः पापकृत्तमः' 'ज्ञानाग्निस्सर्वकर्माणि' 'योगसंन्यस्तकर्माणम्' इत्यादिनिर्देशाश्चा-

प्र-पा॥ १. पापहरणेनोत्तरोत्तरमनसोन्मेषहेतुत्वेन. पा ॥ २. गी. ४-३६ ॥ ३ गी. ४-३७ ॥ ४. गी. ४ ४१ ॥

शं॥तान् सर्वान् अनात्मज्ञान्, निर्व्यापारो हि आत्मा । अत एवं ज्ञात्वा विमोक्ष्यसे अशुभात् । न मद्व्यापारा एते,निर्व्यापारोऽहम् उदासीन इत्येवं ज्ञात्वा अस्मात् सम्यग्दर्शनात् मोक्ष्यसे अशुभात् संसारबन्धनात् इत्यर्थः ॥ ३२ ॥

'ब्रह्मार्पणम्' इत्यादिश्लोकेन सम्यग्दर्शनस्य यज्ञत्वं संपादितम् । यज्ञाश्च अनेके

आ॥मोक्ष्यसे युद्धं परित्यज्य यन्मोक्षार्थं करिष्यसि तदपि कर्म; अतो विहितं न त्याज्यमिति भावः ॥ ३२ ॥

अखिलमुपासनाद्यङ्गयुक्तम् ।

ज॥मोक्षार्थं यदुपासनादिकं युद्ध परित्यज्य करिष्यसि,तदपि कर्म। तथा च त्वया विहितातिक्रम एव कृतः स्यात्, न तु कर्मत्यागः । अत एव जानतस्तव विहितयुद्धादिकं न त्याज्यमिति बुद्धिर्भविष्यतीत्यर्थः। विमोक्ष्यस इति लृडन्तत्वपक्षेऽयमर्थः । किं सर्वयज्ञाना कर्मजत्वज्ञानमात्रेण मोक्षः, तथा च 'कुरु कर्मैव'इति विधानं व्यर्थमित्यत आह—एवमिति । कर्मजान्विद्धीत्यनेन कथमर्जुनस्य शङ्कापरिहार इत्यत आह—युद्धमिति ॥ ३२ ॥

सर्वं कर्मेत्युक्तत्वात् अखिलमिति पुनरुक्तिरित्यत आह—अखिलमिति । कर्मसमृद्ध्यर्थान्युपासनानि वेद एवोच्यन्ते; खिलं सशेषं न भवतीति अखिलमित्यर्थः । ज्ञाने परिसमाप्यत इत्यस्य ज्ञाने

रा॥उभयाकारे कर्मणि द्रव्यमयादंशात् ज्ञानमयांशश्श्रेयान्; सर्वस्य कर्मणस्तदितरस्य

ता॥नन्तरभाविनः कर्मयोगविरोधिनः; 'न हि ज्ञानेन' इतिश्लोकोऽपि कर्मयोगात् ज्ञानयोगस्य पावनत्वातिरेकपर इति प्रतीयते; 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' इत्येतदपि ज्ञानयोगस्यान्तरङ्गतया शीघ्रकारित्वमितरस्य विलम्बितफलत्वं व्यनक्ति; 'येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' इतिज्ञानस्वरूपकथनमपि ज्ञानयोगस्य द्रढयति; न हि कर्मयोगान्तर्गतेन आत्मज्ञानेनैवं सर्वं साक्षात्क्रियते; 'स्वाध्यायज्ञानयज्ञाश्च' इत्यत्र च द्रव्ययज्ञादेः पृथक्त्वेन ज्ञानयज्ञो निर्दिष्टः, अतो ज्ञानयोगप्रशंसाप्रकरणमिदमिति प्राप्तमिति। अत्रोच्यते—'श्रेयान् द्रव्यमयाद्यज्ञात्' इत्यत्र तावत् ज्ञानप्राधान्यमात्राद्य ज्ञानयोगविवक्षा वक्तुमुचिता, 'कर्म ज्यायो ह्यकर्मणः' इत्यादिषु सर्वत्र तद्विपरीतकर्मप्राधान्यस्यैव प्रपञ्चितत्वात्, उत्तराध्यायेऽपि 'तयोस्तु कर्मसन्यासात्कर्मयोगो विशिष्यते' इत्यादेर्वक्ष्यमाणत्वात्, मध्ये तद्विरुद्धार्थप्रतिपादनायोगात्; अतोऽत्र ज्ञानयज्ञशब्दः कर्मयोगाद्यनिषयः। 'स्वाध्यायज्ञानयज्ञाश्च' इत्यत्र तु स्वाध्यायार्थाभ्यासरूपज्ञानयज्ञपरत्वमुक्तम्, आत्मयाथात्म्यमपि स्वाध्यायार्थ इति तस्य चास्य च नातिप्रकर्षः। 'तस्मादज्ञानसम्भूतम्' इत्यध्यायोपसंहारश्लोके च ज्ञानासिना संशयं छित्त्वा योगमातिष्ठोत्तिष्ठेति युद्धोत्साहविधानेन कर्मयोगस्तदन्तर्गतज्ञानं च व्यक्तं प्रतीयते; न हि ज्ञानयोगस्य श्रेयस्तया युद्धार्थमुत्तिष्ठेति सङ्गच्छते। 'सर्वं कर्म' इत्येतत्तु कर्मान्तर्गतज्ञानांशस्य प्राधान्यहेतुमात्रपरमेव, 'अपि चेदसि' 'ज्ञानाग्निस्सर्वकर्माणि' 'नहि ज्ञानेन सदृशम्' इत्यादेरपि न ज्ञानयोगैकान्त्यं, ज्ञानांशस्य पापनिवर्तकस्वरूपप्रशंसापरत्वात्। 'योगसन्यस्तकर्माणम्' इत्यत्रापि कर्मणः फलसङ्गादिरहितज्ञानाकारतापत्तिमात्रं विवक्षितम्। 'ज्ञानं लब्ध्वा परां शान्तिम्' इति श्लोके तु कर्मयोगान्तर्गतज्ञानांशस्य साक्षात्काररूपपरिपाकावस्थोच्यते; 'तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति' 'श्रद्धावान् लभते ज्ञानम्' इत्यनन्तरमेव परिपाकावस्थाया विशदीकरणात्। एतेन 'येन भूतान्यशेषेण द्रक्ष्यसि' इत्येतदपि निर्व्यूढम्। तदेतदखिलमभिप्रेत्याह—उभयाकार इति। कर्मणि कर्मयोग इत्यर्थः। अनुष्ठेयपरो ह्यत्र कर्मशब्दः। द्रव्यमयाद्यज्ञादिति। यज्ञशब्दोऽत्र यज्ञांशविषय इति भावः। सर्वाखिलशब्दयोर्विषयभेदादपौनरुक्त्यमाह—तदितरस्येति। कर्मेतरत्किमन्यदिहोपादेयं, कथं च कर्मणस्तस्य च ज्ञाने परिसमाप्तिरित्य-

प्र॰पा॥ १. गी॰ ४-३८॥ २. गी॰ ४-३९॥ ३. गी॰ ४-३५॥ ४. गी॰ ४-२८॥ ५. गी॰ ३-८॥ ६. गी॰ ५-२॥ ७. गी॰ ४-४२॥ ८. गी॰ ४-३६॥ ९. गी॰ ४-३७॥ १०. गी॰ ४-४१॥

श॥उपदिष्टाः। तैः सिद्धपुरुषार्थप्रयोजनैः ज्ञानं स्तूयते कथम्?—श्रेयान् इति॥ श्रेयान् द्रव्यमयात् द्रव्यसाधनसाध्यात् यज्ञात् ज्ञानयज्ञः हे परन्तप। द्रव्यमयो हि यज्ञः फलस्यारम्भकः, न ज्ञानयज्ञः फलस्य आरम्भकः, अतः श्रेयान् प्रशस्यतरः। कथं? यतः सर्वं कर्म समस्तम् अखिलं पार्थ ज्ञाने मोक्षसाधने परिसमाप्यते अन्तर्भवति इत्यर्थः। 'यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत् किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद' इति श्रुतेः॥ ३३॥

आ॥ज्ञानफलमेवेत्यर्थः॥ ३३॥

ज॥ज्ञाने न कर्म कार्यमित्यन्यथाप्रतीतिनिवारणाय तात्पर्यमाह—ज्ञानेति। परिसमाप्तिः सम्पूर्णता सफलता; सा च ज्ञाने सतीति सन्निधानाज्ज्ञानलक्षणेनैव फलेनेति भावः॥ ३३॥

रा॥चाखिलस्योपादेयस्य ज्ञाने परिसमाप्तेः तदेव सर्वैस्साधनैः प्राप्यभूतं ज्ञानं कर्मान्तर्गतत्वेनाभ्यस्यते, तदेवाभ्यस्यमानं क्रमेण प्राप्यदशां प्रतिपद्यते ॥ ३३ ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४

तदात्मविषयं ज्ञानम् *'अविनाशि तु तद्विद्धि' इत्यारभ्य †'एषा तेऽभिहिता' इत्यन्तेन मयोपदिष्टम्, तद्युक्तकर्मणि वर्तमानस्त्वं विपाकानुगुणं कालेकाले प्रणिपातपरिप्रश्नसेवादिभिर्विशदाकारं ज्ञानिभ्यो विद्धि;साक्षात्कृतात्मस्वरूपास्तु ज्ञानिनः प्रणिपातादिभि-

ता॥वाह—तदेवेति । सर्वैस्साधनैरिति—तदितरोपादेयप्रदर्शनम्। प्राप्यभूतमिति—तत्र तत्परिसमाप्तिज्ञापनम् । कर्मणन्तर्गतत्वेन परिसमाप्तिं विवृणोति —तदेवाभ्यस्यमानमिति । अवधारणेन साध्यसाधनभावोऽप्यस्याभेदमाननिबन्धन इत्यभिप्रेतम्।एतेन कर्मणस्त्वान्तर्भूतज्ञाने परिसमाप्तिस्साक्षात्कारलक्षणप्राप्यदशाविवक्षयेत्युक्तं भवति ॥ ३३ ॥

उपदिष्टमेव ज्ञानं तत्तद्विपाकदशायां प्रतिक्षणवैशद्याय पुनःपुनर्ज्ञानिभ्यः श्रोतव्यमित्युच्यते—तद्विद्धीति श्लोकेन । तदितिपरोक्षनिर्देशः प्रकरणप्रारम्भोक्तप्रकारपरामर्शीति व्यञ्जनाय—अविनाशि इत्यादिमयोपदिष्टमित्यन्तमुक्तम् । इतः पूर्वमनुपदिष्टस्य ज्ञानस्य कस्यचिच्छ्रोतव्यस्य नात्रोच्यत इति भावः । तद्युक्तकर्मणि वर्तमानस्त्वमिति विपाकहेतुः । विपाकानुगुणं कालेकाल इति प्रभावनरः । अदृष्टद्वारा प्रणिपातादेर्विपाकानुगुण्यं वा विवक्षितम्। 'गुरुमेवाभिगच्छेत्' इत्यादिविधिप्राप्तं चैतत् । प्रणिपातादेरितरेतरयोगो विवक्षित इति व्यञ्जनाय—प्रणिपातपरिप्रश्नसेवाभिः इति द्वन्द्वसमासेन व्याख्या। 'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्' इत्यादीनि शास्त्राणि कालेकाल इति वीप्सया द्योतितानि । विशदाकारमिति पुनः श्रवणस्य नैष्फल्यपरिहारः । ननु किमिदानीं भगवता ज्ञानमविशदमुपदिष्टं, किंवा बीभत्सुना अविशदेन ज्ञातं, येनैतदुच्यते इत्येतदपि विपाकानुगुणशब्देन परिहृतम्; विशदमेवोपदिष्टं भगवता, अवधानादिमांश्च अर्जुनः, तथाप्यनादिकर्मोपार्जितैरनन्तैः पापकवाटैरन्तःकरणरूपस्य तत्त्वज्ञानप्रसवद्वारस्योपरुद्धत्वादिदानीं नातिवैशद्यं जायते; 'पितृभमञ्जनमनाप्नुवि जातु नेत्रे नैव प्रभाभिरपि शङ्खमितत्वबुद्धिः इतिवत्; यथावस्थितकर्मयोगनिरस्तेषु पापेषु विशदज्ञानार्हावस्था स्यात्,तदा च पूर्वोपदिष्टस्य सामान्यतो ज्ञातस्यार्थस्य ज्ञाताज्ञातवादायाज्ञाताज्ञानाय विस्मृतप्रतिबोधनाय च पुनश्श्रवणं कार्यमिति । अयमर्थोऽनुगीतावृत्तान्तेन व्यक्तो भविष्यति । ज्ञानिनः, अहं वा, अन्यो वेति भावः। 'तत्त्वदर्शिनः' इति विशेषणं तेषामेतज्ज्ञानोपदेष्टृत्वाधिकारं सूचयतीति व्यञ्जनाय—साक्षात्कृतात्मस्वरूपा इत्युक्तम् । तत्त्वदर्शिभिरपि 'नासवत्सरवासिने प्रब्रूयात् न विनयादि-

प्र·पा ॥ *गी. २-१७ ॥ †गी. २-३९ ॥
१. मुण्ड. १-२-१२ ॥
२. वि. पु. ६-६-२ ॥ †स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते—इत्युत्तरार्धम् ॥

३ श्रीवैकुण्ठस्तवे. १६-श्लो ॥ †'ये तु त्वदङ्घ्रिसरसीरुहभक्तिहीनास्तेपाममांशिरपि नैव यथार्थबोधः' इति पूर्वार्धम् । अभीभिः – न्यायादिभिः। 'न्यायस्मृतिप्रभृतिभिः' इति हि पूर्वप्रस्तुतश्लोकः ॥ ४.

आ॥ इदानीमपि ज्ञान्येव ।

ज॥तद्विद्धीत्युक्तत्वात् इदानीमर्जुनो न ज्ञानीति प्रतीतिं निवारयति —इदानीमपीति। तद्विद्धीत्यधिक-

॥॥स्सेविताः ज्ञानबुभुत्सया परितः पृच्छतस्तवाशयमालक्ष्य ज्ञानमुपदेक्ष्यन्ति ॥ ३४ ॥

आत्मयाथात्म्यविषयस्य ज्ञानस्य साक्षात्काररूपस्य लक्षणमाह—

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५

यत् ज्ञानं ज्ञात्वा पुनरेच देहाद्यात्माभिमानरूपं तत्कृतं ममतायास्पदं च मोहं [illegible]

ता॥रहितायत्र वक्तव्यम्' इत्यादिविधिप्रयुक्तविलम्बोऽनतिलङ्घनीय इत्याह—प्रणिपातादिभिरिति । 'तस्मै [illegible] विद्वानुपसन्नाय सम्यक्' इत्युपक्रम्य 'प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति श्रुतेर्विधिपरत्वं च तत्त्वदर्शितराज्ञानन्तस्ते यथावदुपदेक्ष्यन्तीति भावः । प्रकर्षेण नीचैः पतनं प्रणिपातः प्रश्नपूर्वाङ्गभूतः प्रणामोपसङ्ग्रहादिर्विवक्षितः । परिप्रश्नः—स्वबुद्धिमत्ताविरेकगूहनेनाजानत इव साक्षात्प्रष्टव्यानभिधानेन तदनुबन्धिविषयः प्रश्नः । प्रतिवादिवत्कुयुक्तिभिः प्रत्यवस्थानं न कर्तव्यमिति भावः । सेवा तु भक्तिश्चिरानुवर्तनं वा ॥ ३४ ॥

एवमन्तर्भूतस्यात्मयाथात्म्यज्ञानस्य विपाकानुगुणं कालेन वेदनीयस्य साक्षात्कारावस्थायाश्चिह्नं यज्ज्ञात्वेत्यनेन श्लोकेनोच्यत इत्याह—आत्मयाथात्म्येति । एवमित्यस्यार्थो—देहेत्यादिनोक्तः। 'अ-

प्र पा ॥ १. मु. १ २ १ ३ ॥ †'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ तस्मै स विद्वान् उपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ ब्राह्मण वेदाध्याम-रत, कर्मचितान् कर्मणा सम्पादितान्, लोकान्-आ-रान्पक्षविष्णुत्वेन क्षयस्वभावान्, कर्ममीमांसया परीक्ष्य, अकृतः नित्यः परमपुरुषः, कृतेन कर्मणा, न भवतीति, यो निर्वेदमायात्, सः, तद्विज्ञानार्थम्, गुरुमेवाभिगच्छेत्; समित्पाणिः, श्रोत्रियम्-वेदान्तवेदिनम्, ब्रह्मनिष्ठम् साक्षात्कृतपरमपुरुषनिष्ठम्, स -गुरुः, स-म्यगुपसन्नाय तस्मै, येन विद्याविशेषेण, अक्षरं, सत्यं, परमपुरुषं, विद्यात्, ताम्- ब्रह्मविद्याम्, प्रोवाच-प्र-ब्रूयादित्यर्थः, 'स गुरुमेवाभिगच्छेत् तस्मै स विद्वान् प्रोवाच' इत्यन्वयात्, अप्राप्तत्वाच, विधावपि लिटो विधानात् 'छन्दसि लुङ् लङ् लिटः' इति । इति वेदान्तसारे इयं श्रुतिर्व्याख्याता ॥

घ॥नन्वेतत् निर्दिष्टं ज्ञानं तर्हि केन प्राप्यत इति ? उच्यते—तद्विद्धीति ॥ तत् विद्धि विजानीहि येन विधिना प्राप्यते इति । आचार्यान् अभिगम्य प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातः दीर्घनमस्कारः तेन 'कथं बन्धः ? कथं मोक्षः ? का अविद्या ? का विद्या? ' इति परिप्रश्नेन सेवया गुरुशुश्रूषया । एवमादिना प्रश्रयेण आवर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणं ज्ञानिनः ज्ञानवन्तोऽपि केचित् यथावत् तत्त्वदर्शनशीलाः, अपरे [illegible] भवन्ति, अतो विशिनष्टि तत्त्वदर्शिनः इति । ये सम्यग्दर्शिनः तैः उपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरत् इति भगवतो मतम् ॥ ३४ ॥

तथा च सति इदमपि समर्थं वचनम्—यत् इति ॥ यत् ज्ञात्वा यत् ज्ञानं तैः उपदिष्टम् अधिगम्य पुनः भूयः मोहम् एवं यथा इदानीं मोहं गतः असि पुनः एवं न यास्यसि

आ॥तथाऽप्यभिभवान्मोहः । मातृका ॥ ३४ ॥

ज्ञ॥ज्ञानार्थमनुक्रमिति भावः। ज्ञानी चेत्तर्हि बध्नात्येवेति तस्य मोहः कथमुच्यत इत्यत आह—तथाऽपीति । अभिभवात् ज्ञानस्य अर्जुनस्य ज्ञानित्वे सिद्धे भवेदेतत्, तन्नैव क्रियमाणमित्यत आह—मा त्विति ॥

येन भूतानीत्यस्य येन मोहेन सर्वाणि भूतान्यात्मनि स्वस्मिन् अथो मयि च द्रक्ष्यसीत्यन्यथाप्रतीति-

रा॥ यास्यसि, येन च देवमनुष्याद्याकारेणानुसंहितानि सर्वाणि भूतानि स्वात्मन्येव द्रक्ष्यसि, यतस्त्वान्येषां च भूतानां प्रकृतिवियुक्तानां ज्ञानैकाकारतया साम्यम्, प्रकृतिसंसर्गदोषविनिर्मुक्तमात्मस्वरूपं सर्वं सममिति च वक्ष्यते *'निर्दोषं हि समं ब्रह्म' 'तस्माद्ब्रह्मणि ते स्थिताः' इति। अथो मयि सर्वभूतान्यशेषेण द्रक्ष्यसि, मत्स्वरूपसाम्यात् परिशुद्धस्य सर्वस्यात्मवस्तुनः; †'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति हि वक्ष्यते ; तथा ‡'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्येवमादिषु नामरूपविनिर्मुक्तस्यात्मवस्तुनः परस्वरूपसाम्यमवगम्यते, अतः प्रकृतिविनिर्मुक्तं सर्वमात्मवस्तु परस्परं समं सर्वेश्वरेण च समम् ॥ ३५ ॥

ता॥'शेषेण' इत्यस्य तात्पर्यार्थमाह—देवमनुष्येत्यादि। तेन 'विद्याविनयसम्पन्ने' इत्यादि वक्ष्यमाणं स्मारितम्। भूतशब्देनाचित्संसृष्टक्षेत्रज्ञा विवक्षिताः। तेन देवाद्याकारानुसन्धाने हेतुर्दर्शितः। 'आत्मन्यथो मयि' इति सप्तम्योस्सामानाधिकरण्यभ्रमव्युदासाय—स्वात्मन्येवेत्युक्तम्। एवंविधस्य प्राकरणिकस्य साक्षात्कारस्य स्वात्मविषयत्वात् 'अथो मयि' इत्यनेन पृथग्भावसूचनाद्वक्ष्यमाणममदर्शित्वविपाकक्रमाच्च व्यधिकरणतैवोचितेति भावः। सर्वाणि भूतानि स्वात्मनि द्रक्ष्यसि—प्रकृतिसंसर्गेण विषमतया प्रतिपन्नानि भूतानि परिशुद्धतया ज्ञाते स्वात्मनि निदर्शनभूते स्थालीपुलाकादिन्यायेन द्रक्ष्यसीत्यर्थः। आधाराधेयभावाद्यर्थान्तरभ्रमव्युदासाय प्रकृतार्थे हेतुमाह—यतस्त्वेति। प्रकृतिवियुक्तानामिति। औपाधिकवैषम्यविगमावस्थायामिति भावः। 'पुमान्न देवो न नरः' 'नाय देवो न मर्त्यो वा' इत्याद्यनुसारेणाह—ज्ञानैकाकारतयेति। स्वात्मनि सर्वानुसन्धानहेतुतयोक्तं साम्यं परस्ताद्वक्ष्यमाणत्वादिहानुक्तमित्यभिप्रायेणाह—प्रकृतिसंसर्गेति। अथो मयीत्यादि—मन्निदर्शनेन स्वात्मानं परांश्च द्रक्ष्यसीत्यर्थः। अनीश्वराणां कर्मवश्यानां कथमीश्वरनिदर्शनेनानुसन्धानमित्यत्राह—मत्स्वरूपसाम्यात्परिशुद्धस्येति। हेतुतयोक्तम् ईश्वरसाम्यमपि परस्ताद्वक्ष्यत इति नेहोक्तमित्याह—इदमिति। परिशुद्धात्मनः परमात्मसाम्ये श्रुतिरप्यस्तीत्याह—तथेति। पुण्यपापे विधूय निरञ्जनः—पुण्यपापविगमात्तत्कृतप्रकृतिसंसर्गतत्प्रयुक्तक्लेशादिरहितः। नामरूपविनिर्मुक्तस्येतिपदेन 'तथा विद्वान्नामरूपाद्विमुक्तः' इति तत्तुल्यं वाक्यान्तरमपि स्मारितम्। ईश्वरसाम्यस्य काचित्कताशङ्कां निरस्य श्रुतिस्मृतिसिद्धं हेतुं सङ्कलय्य दर्शयति—अत इति। एतेन श्रुत्यादिसिद्धमीश्वरसाम्यमपि जीवानां परस्परसाम्ये हेतुरित्यप्युक्तं भवति। एतेन क्षेत्रज्ञानां परस्परमीश्वरेण चैक्यमिहोच्यत इति वदन्तः प्रत्युक्ताः। ननु स्वात्मनि सर्वेश्वरे च सर्वेषामाधेयतया दर्शनमिह विधीयत इति प्रतीयते; नैव स्वात्मनस्सर्वाधारत्वायोगात्। परमात्मपर्यन्तबुद्ध्योपपद्यत इति चेत्—न, जीवसमाधेः प्रकरणार्थत्वात्। अतः स्वात्मनि परेषां दर्शनं सर्वसमानाकारानुसन्धानम् ॥ ३५ ॥

प्र-पा॥ *गी. ५-१९ ॥ †गी. १४-२ ॥ ‡मुण्ड. ३-१-३. १८६-पुट. व्याख्यातेयं श्रुतिः ॥ | १. गी. ५-१८ ॥ २. वि पु. २-१३-९८ ॥ ३. ४. मुण्ड. ३-२-८. १८५-पुटे. व्याख्याता॥

शा॥ हे पाण्डव। किञ्च—येन ज्ञानेन भूतानि अशेषेण ब्रह्मादीनि स्तम्बपर्यन्तानि द्रक्ष्यसि साक्षात् आत्मनि 'मत्संस्थानि इमानि' इति अथो अपि मयि वासुदेवे 'परमेश्वरे च

आ॥ येन ज्ञानेन मय्यात्मभूते सर्वभूतान्यथो तस्मादेव मोहनाशात्पश्यसि ॥ ३५ ॥

ज॥ निराशार्थमाह—येनेति। आत्मभूते सर्वान्तर्यामिणि द्रक्ष्यसीत्येतत्पश्यसीति व्याख्यातम्, इदानीमपि शान्येवेति शापयितुम् ॥ ३५ ॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६

रा॥यद्यपि सर्वेभ्यः पापेभ्यः पापकृत्तमोऽसि, सर्वं पूर्वार्जितं वृजिनरूपं समुद्रमात्मविषयज्ञानरूपप्लवेनैव सन्तरिष्यसि ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७

सम्यक्प्रवृद्धोऽग्निरिन्धनसंचयमिवात्मयाथात्म्यज्ञानरूपोऽग्निर्जीवात्मगतमनादिकालप्रवृत्तानन्तकर्मसंचयं भस्मीकरोति ॥ ३७ ॥

ता॥एवं ज्ञानस्य प्राधान्यं विपाकानुगुणं कालेकाले वेदनीयत्वलक्षणं चोक्तम्, अथ तस्य निरोधिनिवर्तकत्वरूपं माहात्म्यमुच्यते अपिचेदिति श्लोकेन। चेच्छब्दपर्यायो यदिरपिश्च गर्हितो यद्यपर्यो तद्विषयानत्वापिचेर्योदस्येतानिति व्यञ्जनाय—यद्यपीत्युक्तम् । पापकृत्तमशब्दप्रतियोगित्वात्पापेभ्य इति शब्दः पापविशिष्टपुरुषविषयः, पापमात्रे वा हेतौ पञ्चमी। ज्ञानप्लवेन सन्तरिष्यसीत्यनयोस्सामर्थ्यात्—वृजिनरूपं समुद्रमिति रूपितम्। समुद्रत्वानुगुणं सर्वशब्दोक्तमानन्त्यमनादिकालप्रवृत्ततेत्याद्यभिप्रायेणाह—पूर्वार्जितमिति ॥ ३६ ॥

नन्वेकस्य कथमनादिकालप्रवृत्तानन्तपापनिवर्तकत्वम्, 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिवचनाच्च पापस्वरूपनिवर्तकत्वमनुपपन्नम्, केवलं तिरस्कार स्यादित्याशङ्कयोच्यते—यथैधांसीति। समुद्रसन्तरणदृष्टान्तः पुनः प्रवेशाविरोधी, काष्ठभस्मसात्करणदृष्टान्तेन तु पुनः कार्यकरत्वप्रसङ्गोऽपि प्रतिषिद्धः। भस्मसात्कुरुते भस्मीभूतानि कुरुते, अकार्यकराणि कुरुत इत्यर्थः। समिद्ध इत्यत्र सर्वदहनयोग्यत्वायोपसर्गधात्वर्थाभ्यञ्जनं सम्यक्प्रवृद्ध इति । एधांसीति बहुवचनमेकस्यानेकनिवर्तकत्वाभिप्रायमिति दर्शयति— इन्धनसंचयमिति । सर्वकर्माणीतिवचनाद्विरोधित्वेन स्थितस्य सांसारिकपुण्यविशेषस्यापि निवर्तकत्वमवगतम्। नाभुक्तमित्यादिरन्यपरम्, अन्यथा प्रायश्चित्तशास्त्राण्यपि कुप्येयुरिति भावः ॥ ३७ ॥

प. पा ॥ १ ब्रह्मकैवर्त. प्रकृतिखण्ड २६ ७०. 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्' इत्युत्तरार्धम् ॥

शा॥इमानि' इति, क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसि इत्यर्थः ॥ ३५ ॥

किञ्च, एतस्य ज्ञानस्य माहात्म्यम्—अपीति ॥ अपि चेत् असि पापेभ्यः पापकृद्भ्यः *सर्वेभ्यः अतिशयेन पापकृत् पापकृत्तमः सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं कृत्वा वृजिनं वृजिनार्णवं पापं सन्तरिष्यसि । धर्मोऽपि इह मुमुक्षोः पापम् उच्यते ॥ ३६ ॥

ज्ञानं कथं नाशयति पापमिति† दृष्टान्त उच्यते—यथेति ॥ यथा एधांसि काष्ठानि समिद्धः सम्यक् इद्धः दीप्तः अग्निः भस्मसात् भस्मीभावं कुरुते हे अर्जुन ज्ञानमेव अग्निः ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा निर्बीजं करोतीत्यर्थः । नहि साक्षादेव ज्ञानाग्निः कर्माणि इन्धनवत् भस्मीकर्तुं शक्नोति । तस्मात् सम्यग्दर्शनं सर्वकर्मणां निर्बीजत्वे कारणम् इत्यभिप्रायः। सामर्थ्यात् येन कर्मणा शरीरम् आरब्धं तत् प्रवृत्तफलत्वात् उपभोगेनैव क्षीयते, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतेः। अतो यानि अप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक् कृतानि ज्ञानसहभावीनि वा अतीतानेक-

पी ॥ *सर्वेभ्यः सकाशात् अतिशयेन ॥ † दृष्टान्तमुच्यते ॥

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८

रा॥यस्मादात्मज्ञानेन सदृशं पवित्रं शुद्धिकरमिह जगति वस्त्वन्तरं न विद्यते, तस्मादात्मज्ञानं सर्वपापं नाशयतीत्यर्थः; तत्तथाविधं ज्ञानं यथोपदेशमहरहरनुष्ठीयमानज्ञानाकारकर्मयोगेन संसिद्धः कालेन स्वात्मनि स्वयमेव लभते ॥ ३८ ॥

तदेव विस्पष्टमाह—

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९

एवमुपदेशात् ज्ञानं लब्ध्वा चोपदिष्टज्ञानवृद्धौ श्रद्धावान् तत्परस्तत्रैव नियतमना-

ता॥लोकदृष्टान्तेन दर्शितोऽर्थो वह्नेः पदार्थान्तरादृष्टदाहकत्ववत्पवित्रतमत्वस्वभावत्वेनोपपाद्यते—नहीत्यर्धेन; तदाह—यस्मादिति। वस्त्वन्तरमिति ज्ञानरहितकर्मपुण्यस्थानादिकम्, 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः'[1] इत्युक्तादीश्वरज्ञानादर्वाचीनेषु परिशुद्धात्मज्ञानतुल्यं पावनं नास्तीत्यर्थः । ननु इदानीं तथाविधज्ञानं कुर्यामिति साभिसन्धिकस्यापि तन्न जायते. अतस्तस्य पुरुषव्यापाराविषयत्वादविधेयत्वमिति शङ्का परिह्रियते—तत्स्वयमित्यर्धेन । तच्छब्देन विपाकावस्थं परामृश्यत इत्याह—तथाविधमिति । यथोपदेशमिति । शास्त्रीयत्वमविकल्पत्वं कालेकाले वेदनीयत्वं च सूचितम्। तथाविधज्ञानस्य सत्कारप्राचुर्याद्विरोधिपापनिवर्तनाच्च स्वयमागमे हेतुः 'योगसंसिद्धः' इत्यनेनोच्यत इत्यभिप्रायेणाह-ज्ञानाकारकर्मयोगसंसिद्ध इति । पक्वकषायत्वलक्षणयोग्यतापन्न इत्यर्थः। स्वयंशब्देन तदानीमुपदेशानैरपेक्ष्यमुच्यत इत्यभिप्रायेणाह—स्वयमेवेति । ज्ञानस्वरूपस्य साक्षात्स्वप्रयत्नागोचरत्वेऽपि तन्मूलभूतोक्ताकारकर्मयोगद्वारा तस्य विधेयत्वमुपपद्यत इति भावः।अत्र 'आत्मनि'इति विषयसप्तमी,इदानीं तद्रहितेऽपीत्यभिप्रायेणाधिकरणार्थत्वं वा, स्वात्मसाक्षिकमिति वा विवक्षितम् ॥ ३८ ॥

पूर्वश्लोकार्धयोरनन्तरश्लोकार्धं व्युत्क्रमेण विवरणरूपं इत्यभिप्रायेणाह—तदेव विस्पष्टमाहेति। श्रद्धावत्त्वादिकं स्वयं ज्ञानलाभे हेतुः; 'अज्ञश्चाश्रद्दधानश्च'[2] इति वक्ष्यमाणत्वादत्रापि ज्ञश्श्रद्धावांश्चेति विवक्षितमिति ज्ञापनार्थं, तत्र दशाभेदव्यञ्जनार्थं, श्रद्धोत्पत्तिसिद्ध्यर्थं चोक्तम्— उपदेशाज्ज्ञानं लब्ध्वेति।श्रद्धावान् त्वरमाणः; 'अश्रद्दधानः' इत्यत्र'अत्वरमाणः'इति हि व्याख्यास्यति। तदेव परमपुरुषार्थतयाभिसन्ध्यास्पदं यस्य स तत्परः।तदाह—तत्रैव नियतमना इति। 'अचिरेण' इत्येतदुत्तरवाक्य-

प्र॰पा ॥ १ याज्ञवल्क्यस्मृतौ. ३-अध्याये. १-आशौचप्रकरणे 'भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् । क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥ २. गी ४·४०॥

शं॥जन्मकृतानि च तान्येव सर्वाणि भस्मसात् कुरुते ॥ ३७ ॥

यतः एवम् अतः—न हीति ॥ न हि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरम् इह विद्यते । तत् ज्ञानं स्वयमेव योगसंसिद्धः योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतः योग्यताम् आपन्नः सन् कालेन महता आत्मनि विन्दति लभते इत्यर्थः॥३८॥

येन एकान्तेन ज्ञानप्राप्तिः भवति स उपायः उपदिश्यते—श्रद्धावानिति ॥ श्रद्धा-

आ॥करणभूतं ज्ञानं स्तौति पुनः श्लोकत्रयेण ॥ ३६ ॥ ३७ ॥ ३८ ॥

जा॥येनेति ज्ञानस्यैव निर्देशादिति स्वापयन्नपि चेदित्यादेः प्रतिपाद्यमाह—करणेति । येनेति करणतया निर्दिष्टमित्यर्थः। श्रेयानित्याद्यपेक्षया—पुनरिति ॥ ३६ ॥ ३७ ॥ ३८ ॥

रा ॥ त्वदितरविषयात्संयतेन्द्रियोऽचिरेण कालेनोक्तलक्षणविपाकदशापन्नं ज्ञानं लभते, तथाविधं ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति—परं निर्वाणमाप्नोति ॥ ३९ ॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४०

अज्ञः-एवमुपदेशलब्धज्ञानरहितः उपदिष्टज्ञानवृद्ध्युपाये चाश्रद्दधानः अत्वरमाणः उपदिष्टे च ज्ञाने संशयात्मा संशयमना विनश्यति-नष्टो भवति; अस्मिन्नुपदिष्टे आत्म-,

ता॥ स्वमपि 'कालेन' इत्येतद्गुचितविलम्बशङ्कापरिहारार्थमपेक्षितत्वात्पूर्वार्धेऽप्यन्वेतव्यमित्यभिप्रायेण अचिरेण कालेनोक्तलक्षणेत्याद्युक्तम् । भक्तियोगव्यवहितः प्रारब्धकर्मावसानभावी च मोक्षः कथमचिरेणेत्युच्यतेति भावः।पूर्वं 'कालेन' इति पद द्वित्रादिनादिव्यवच्छेदार्थम्।'अचिरेण' इति तु ज्ञानयोगदेहान्तरादिविलम्बनिषेधार्थमित्यविरोधः।शान्तिशब्दोऽत्रोपायस्य निर्दोषनिष्पन्नत्वात्र तदङ्गभूतशमविषय इति व्यञ्जनाय —परं निर्वाणमाप्नोतीत्युक्तम्। 'स शान्तिमाप्नोति न कामकामी' 'स शान्तिमधिगच्छति' 'ब्रह्म निर्वाणमृच्छति' इति द्वितीयाध्यायान्तिमश्लोकत्रयेऽपि फलदशाविषये शान्तिनिर्वाणशब्दौ समानविषयौ । तत्र मध्यमश्लोकस्थ 'शान्तिमधिगच्छति' इत्येतदत्रापि प्रत्यभिज्ञातम् । तत्पूर्वोत्तरश्लोकस्मारणायात्र—आप्नोतिपद निर्वाणपदं चोक्तम् ॥ ३९ ॥

उक्तस्यैवार्थो व्यतिरेकेण स्थाप्यते 'अज्ञश्च' इति श्लोकेन। उपदेशलब्धज्ञानरहित इति—पूर्वक्रमनिर्देशौचित्यादश्रद्धाहेत्वाकाङ्क्षणात्, संशयदशासमभिव्याहाराच्च अज्ञशब्दोऽत्र शास्त्रजन्यज्ञाननिवृत्तिपर इति भावः । संशयस्य पृथगभिहितत्वात्'अश्रद्दधानः' इत्येतत्र विश्वासनिषेधपरम्, किं त्वाकाङ्क्षानिषेधपरम् । प्रकृष्टाकाङ्क्षैव हि त्वरेत्यभिप्रायेण—अत्वरमाण इत्युक्तम् । संशयमना इति—संशय्यतेऽनेनेति संशयः, संशयकारण संशयहेतुभूतमना इत्यर्थः; यद्वा संशये मनो यस्येति विग्रहः । नित्यस्यात्मनः पुरुषार्थशून्यत्वलक्षणस्य विनाशस्य पूर्वापरभावेन सन्तन्यमानस्य प्राचीनस्यैवानुवृत्तिप्रदर्शनाय प्रकृतिप्रत्ययार्थभेदविवक्षया—नष्टो भवतीत्युक्तम्।'विनष्टा वा प्रणष्टा वा' इत्यादिषु प्रध्वंसव्यतिरिक्तविषये प्रयोगोऽप्यनेन सूचितः। विनश्यतीत्यस्य विवरणमुत्तरार्धम्। अयमपीत्यनेनायंशब्देन निर्दिष्टप्रत्यक्षवचनम्। 'नाय लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम' इतिवदत्रापि—लोकशब्दः पुरुषार्थ-

प्र-पा ॥ १. गी. २-७० ॥ २. गी. २-७१ ॥ ३. गी. २-७२ ॥ ४. श्रीरामायणे सुन्दरकाण्डे १३-स. १७,१८ श्लो॥ ५. गी. ४-३१ ॥

शा॥वान् श्रद्धालुः लभते ज्ञानम्।श्रद्धालुत्वेऽपि भवति कश्चित् मन्दप्रस्थानः, अत आह—तत्परः *गुरूपसदनादौ अभियुक्तः ज्ञानलब्ध्युपाये श्रद्धावान्। तत्परः अपि अजितेन्द्रियः स्यात् इत्यतः आह—संयतेन्द्रियः संयतानि विषयेभ्यो निवर्तितानि यस्य इन्द्रियाणि स संयतेन्द्रियः । य एवंभूतः श्रद्धावान् तत्परः संयतेन्द्रियश्च सः अवश्यं ज्ञानं लभते । प्रणिपातादिस्तु बाह्योऽनैकान्तिकोऽपि भवति, मायावित्वादिसम्भवात्, न तु तत् श्रद्धावत्त्वादौ इत्येकान्ततः ज्ञानलब्ध्युपायः । किं पुनः ज्ञानलाभात् स्यात् इति ? उच्यते—ज्ञानं लब्ध्वा परां मोक्षाख्यां शान्तिम् उपरतिम् अचिरेण क्षिप्रमेव अधिगच्छति । सम्यग्दर्शनात् क्षिप्रमेव मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितः अर्थः ॥ ३९ ॥

अत्र संशयः न कर्तव्यः, पापिष्ठो हि संशयः । कथम् इति ? उच्यते—अज्ञश्चेति ॥

पा ॥ *गुरूपासनादौ ॥

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८

रा॥यस्मादात्मज्ञानेन सदृशं पवित्रं शुद्धिकरमिह जगति वस्त्वन्तरं न विद्यते, तस्मादात्मज्ञानं सर्वपापं नाशयतीत्यर्थः; तत्तथाविधं ज्ञानं यथोपदेशमहरहरनुष्ठीयमानज्ञानाकारकर्मयोगसंसिद्धः कालेन स्वात्मनि स्वयमेव लभते ॥ ३८ ॥

तदेव विस्पष्टमाह—

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९

एवमुपदेशात् ज्ञानं लब्ध्वा चोपदिष्टज्ञानवृद्धौ श्रद्धावान् तत्परस्तत्रैव नियतमना-

ता॥लोकदृष्टान्तेन दर्शितोऽर्थो वह्नेः पदार्थान्तरादृष्टदाहकत्ववत्पवित्रतमस्वभावत्वेनोपपाद्यते—नहीत्यर्धेन; तदाह—यस्मादिति। वस्त्वन्तरमिति ज्ञानरहितकर्मपुण्यस्थानादिकम्, 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः'[1] इत्युक्तादीश्वरज्ञानादर्वाचीनेषु परिशुद्धात्मज्ञानतुल्यं पावनं नास्तीत्यर्थः। ननु इदानीं तथाविधज्ञानं कुर्यामिति नाभिसन्धिकस्यापि तत्र जायते, अतस्तस्य पुरुषव्यापारविषयत्वादविवेकतामिति शङ्का परिह्रियते—तत्स्वयमित्यर्धेन। तच्छब्देन विशोकात्मस्वरूपं परामृश्यत इत्याह—तथाविधमिति। यथोपदेशमिति। शास्त्रीयत्वमविकलत्वं कालेकाले वेदनीयत्वं च सूचितम्। तथाविधज्ञानस्य संस्कारप्राचुर्याद्विरोधिपापनिवर्तनाच्च स्वयमागमे हेतुः 'योगसंसिद्धः' इत्यनेनोच्यत इत्यभिप्रायेणाह-ज्ञानाकारकर्मयोगसंसिद्ध इति। पक्वकषायत्वलक्षणयोग्यतापन्न इत्यर्थः। स्वयंशब्देन तदानीमुपदेशनैरपेक्ष्यमुच्यत इत्यभिप्रायेणाह—स्वयमेवेति। ज्ञानस्वरूपस्य साक्षात्स्वप्रयत्नागोचरत्वेऽपि तन्मूलभूतोक्ताकारकर्मयोगद्वारा तस्य विधेयत्वमुपपद्यत इति भावः।अत्र 'आत्मनि'इति विषयसप्तमी,इदानीं तद्रहितेऽपीत्यभिप्रायेणाधिकरणार्थत्वं वा, स्वात्मसाक्षिकमिति वा विवक्षितम् ॥ ३८ ॥

पूर्वश्लोकार्धयोरनन्तरश्लोकार्धे व्युत्क्रमेण विवरणरूपे इत्यभिप्रायेणाह--तदेव विस्पष्टमाहेति। श्रद्धावत्त्वादिकं स्वयं ज्ञानलाभे हेतुः; 'अज्ञश्चाश्रद्दधानश्च'[2] इति वक्ष्यमाणत्वादत्रापि शब्दश्रद्धावांश्चेति विवक्षितमिति ज्ञापनार्थं, तत्र दशाभेदव्यञ्जनार्थं, श्रद्धोत्पत्तिसिद्ध्यर्थं वाक्यम्– उपदेशाज्ज्ञानं लब्ध्वेति।श्रद्धावान् त्वरमाणः; 'अश्रद्दधानः' इत्यत्र'अत्वरमाणः'इति हि व्याख्यास्यति। तदेव परमुपादेयतयाभिसन्ध्यास्पदं यस्य स तत्परः।तदाह—तत्रैव नियतमना इति। 'अचिरेण' इत्येतदुत्तरवाक्य-

प्र-पा ॥ १ याज्ञवल्क्यस्मृतौ. ३-अध्याये. १-आ-शौचप्रकरणे 'भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशो- | धनम्। क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥
२, गी ४-४०॥

शं॥जन्मकृतानि च तान्येव सर्वाणि भस्मसात् कुरुते ॥ ३७ ॥

यतः एवम् अतः—न हीति॥ न हि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरम् इह विद्यते । तत् ज्ञानं स्वयमेव योगसंसिद्धः योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतः योग्यताम् आपन्नः सन् कालेन महता आत्मनि विन्दति लभते इत्यर्थः॥३८॥

येन एकान्तेन ज्ञानप्राप्तिः भवति स उपायः उपदिश्यते—श्रद्धावानिति ॥ श्रद्धा-

आ॥करणभूतं ज्ञानं स्तौति पुनः श्लोकत्रयेण ॥ ३६ ॥ ३७ ॥ ३८ ॥

ज॥येनेति ज्ञानस्यैव निर्देशादिति स्यापत्रपिचेदित्यादेः प्रतिपाद्यमाह—करणेति । येनेति करणतया निर्दिष्टमित्यर्थः। श्रेयानित्याद्यपेक्षया—पुनरिति ॥ ३६ ॥ ३७ ॥ ३८ ॥

रा ॥ स्तद्भिन्नविषयात्संयतेन्द्रियोऽचिरेण कालेनोक्तलक्षणविपाकदशापन्नं ज्ञानं लभते, तथाविधं ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति—परं निर्वाणमाप्नोति ॥ ३९ ॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४०

अज्ञः एवमुपदेशालब्धज्ञानरहितः उपदिष्टज्ञानवृद्ध्युपाये चाश्रद्दधानः अत्वरमाणः उपदिष्टे च ज्ञाने संशयात्मा संशयमना विनश्यति नष्टो भवति, अस्मिन्ननुपदिष्टे आत्म .

ता॥ समपि 'कालेन' इत्येनत्सूचितविलम्बशङ्कापरिहारार्थमपेक्षितत्वात्पूर्वोर्धेऽप्यन्वेतव्यमित्यभिप्रायेण अचिरेण कालेनोक्तलक्षणेत्याद्युक्तम् । भक्तियोगव्यवहित प्रारब्धकर्मावसानभावी च मोक्षः कथमचिरेणत्युच्यतेति भावः । पूर्वं 'कालेन' इति पदं द्विनदिनादिव्यवच्छेदार्थम् । 'अचिरेण' इति तु ज्ञानयोगदेहान्तरादिविलम्बनिषेधार्थमित्यविरोधः । शान्तिशब्दोऽत्रोपायस्य निश्श्रेयसनिष्पन्नत्वात्तु तदङ्गभूतशमविषय इति भ्रमनिरासाय —परं निर्वाणमाप्नोतीत्युक्तम् । 'स शान्तिमाप्नोति न कामकामी' 'स शान्तिमधिगच्छति' 'ब्रह्म निर्वाणमृच्छति' इति द्वितीयाध्यायान्तिमश्लोकत्रयेऽपि फलदशाविषये शान्तिनिर्वाणशब्दौ समानविषयौ । तत्र मध्यमश्लोकस्थ 'शान्तिमधिगच्छति' इत्येतदत्रापि प्रत्यभिज्ञातम् । तत्पूर्वोत्तरश्लोकस्मारणायात्र—आप्नोतिपदं निर्वाणपदं चोक्तम् ॥ ३९ ॥

उक्त एवार्थो व्यतिरेकेण स्थाप्यते 'अज्ञश्च' इति श्लोकेन । उपदेशालब्धज्ञानरहित इति—पूर्वक्रमनिदर्शनौचित्यादश्रद्धाहेत्वानाग्रहणात्, संशयदशासमभिव्याहाराच्च अज्ञशब्दोऽत्र शास्त्रजन्यज्ञाननिवृत्तिपर इति भावः । संशयस्य पृथगभिहितत्वात् 'अश्रद्दधान' इत्येतत्र विश्वासनिषेधपरम्, किं त्वाकाङ्क्षानिषेधपरम् । प्रकृष्टाकाङ्क्षैव हि त्वरेत्यभिप्रायेण—अत्वरमाण इत्युक्तम् । संशयमना इति—संशय्यतेनेनेति संशयः, संशयकारणं संशयहेतुभूतमना इत्यर्थः, यद्वा संशये मनो यस्येति विग्रहः । नित्यस्यात्मनः पुरुषार्थशून्यत्वलक्षणस्य विनाशस्य पूर्वापरभावेन सन्तन्यमानस्य प्राचीनस्यैवानुवृत्तिप्रदर्शनाय प्रकृतिप्रत्ययार्थभेदविवक्षया—नष्टो भवतीत्युक्तम् । 'विनष्टेन वा प्रणष्टा वा' इत्यादिषु प्रध्वंसव्यतिरिक्तविषये प्रयोगोऽप्यनेन सूचितः । विनश्यतीत्यस्य विवरणमुत्तरार्धम् । अयमपीत्यनेनायशब्देन निर्दिष्टमुद्रतानूदनम् । 'नाय लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम' इतिवदत्रापि—लोकशब्दः पुरुषार्थ

प्र पा ॥ १ गी २ ७० ॥ | ४ श्रीरामायणे सुन्दरकाण्डे १३ स. १७,१८ श्लो॥
२ गी २ ७१ ॥ ३. गी. २ ७२ ॥ | ५. गी. ४ ३१ ॥

शा॥ वान् श्रद्धालु लभते ज्ञानम् । श्रद्धालुत्वेऽपि भवति कश्चित् मन्दप्रस्थानः, अत आह—तत्परः *गुरूपासदनादौ अभियुक्तः ज्ञानलब्ध्युपाये श्रद्धावान् । तत्परः अपि अजितेन्द्रियः स्यात् इत्यत आह—संयतेन्द्रियः संयतानि विषयेभ्यो निवर्तितानि यस्य इन्द्रियाणि स संयतेन्द्रियः । य एवंभूतः श्रद्धावान् तत्परः संयतेन्द्रियश्च स अवश्यं ज्ञानं लभते । प्रणिपातादिस्तु बाह्योऽनैकान्तिकोऽपि भवति, मायावित्वादिसम्भवात्, न तु तत् श्रद्धावत्त्वादौ इत्येकान्ततः ज्ञानलब्ध्युपायः । किं पुनः ज्ञानलाभात् स्यात् इति ? उच्यते—ज्ञानं लब्ध्वा परां मोक्षाख्यां शान्तिम् उपरतिम् अचिरेण क्षिप्रमेव अधिगच्छति । सम्यग्दर्शनात् क्षिप्रमेव मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितः अर्थः ॥ ३९ ॥

अत्र संशयः न कर्तव्यः, पापिष्ठो हि संशयः । कथम् इति ? उच्यते—अज्ञश्चेति ॥

पा ॥ *गुरूपासनादौ ॥

रा॥याथात्म्यविषये ज्ञाने संशयात्मनोऽयमपि प्राकृतो लोको नास्ति, न च परः; धर्मार्थकामरूपपुरुषार्थाश्च न सिध्यन्ति, कुतो मोक्ष इत्यर्थः, शास्त्रीयकर्मसिद्धिरूपत्वात्सर्वेषां पुरुषार्थानाम्, शास्त्रीयकर्मजन्यसिद्धेश्च देहातिरिक्तात्मनिश्चयपूर्वकत्वात्। अतस्सुखलवभागित्वमात्मनि संशयात्मनो न संभवति ॥ ४० ॥

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥** ४१

**यथोपदिष्टयोगेन संन्यस्तकर्माणं - ज्ञानाकारतापन्नकर्माणं यथोपदिष्टेन चात्मज्ञानेनात्मनि संछिन्नसंशयम्, आत्मवन्तं - मनस्विनम् उपदिष्टार्थे दृढावस्थितमनसं**

ता॥विषयः । कैमुतिकन्यायप्रदर्शनार्थं च'अयं लोकः'इत्युक्तम्। मोक्षप्रकरणत्वाचाश्रयशब्दपरशब्दयोर्न भौमदिव्यविषयत्वमुचितमित्यभिप्रायेणाह—**धर्मार्थेति** । मोक्षोपायभूतार्थं संशयात्मनः कथं पुरुषार्थान्तरासिद्धिरित्यत्राह—**शास्त्रीयेति** । अस्तु तत्तच्छास्त्रैरेव तत्तत्सिद्धिः, किमनेन मोक्षोपयुक्तेनेत्याह—**शास्त्रीयकर्मजन्यसिद्धेश्चेति** । अयमभिप्रायः—नह्यायुर्वेदादिवत्केवलमैतद्देहान्तर्भाविफलसाधनं कर्म तत्तच्छास्त्रैः प्रतिपाद्यते, येन देहातिरिक्तात्मज्ञाननिरपेक्षता स्यात्; देहान्तरभाव्येव हि यज्ञादिसाध्य स्वर्गादिकं फलं प्राचुर्येण प्रतिपाद्यते; अतो देहातिरिक्तात्मनिश्चयोऽत्यन्तापेक्षितः—इति । उभयविधपुरुषार्थराहित्योपसंहारपरं 'न सुखम्'इत्येतदिति व्यञ्जनायाह—**अत इति**। यद्वानन्तसुखदुःखभोगरूपनिःश्रेयसनिरयपर्यन्तसंशयस्य मनस्तापहेतुत्वात्तदानीन्तनदुःखाभिप्रायेण 'न सुखम्' इत्युक्तम्। अथवा पुरुषार्थयोग्यताभिमानमूलसुखाभावोऽभिप्रेतः ॥ ४० ॥

अध्यायप्रधानार्थं उपसंह्रियते—योगसंन्यस्तेति श्लोकेन । **यथोपदिष्टयोगेनेति**—'कर्मण्यकर्म यः पश्येत्'इत्यादिनोपदिष्टबुद्धियोगेनेत्यर्थः । एतेनात्मावलोकनरूपयोगव्युदासः । संन्यस्तकर्माणमित्यत्र कर्मस्वरूपत्यागभ्रमव्युदासाय—**ज्ञानाकारतापन्नकर्माणमित्युक्तम्** । कर्तृत्वादित्यागगर्भज्ञानाकारतापत्त्या कर्माकारत्वतिरस्कारोऽत्र कर्मणस्संन्यासशब्देनोपचर्यते। स्वरूपत्यागपरत्वे तु पूर्वापरादिविरोध इति भावः । ज्ञानयोगादिव्युदासाय—**यथोपदिष्टेन चात्मज्ञानेनेत्युक्तम्** । आत्मनो देहातिरिक्तत्वादिसंशयोऽस्मिन् निषिध्यत इति व्यञ्जनाय—**आत्मनीत्युक्तम्** । 'आत्मवन्तम्' इत्यत्रात्मशब्दः सम्बन्धविषयप्रत्ययसामर्थ्यात्प्रयोगप्रौढ्या च मनोविषय इत्यभिप्रायेण—**मनस्विनमित्युक्तम्** । अतिशयेन सम्बन्धोऽत्र मतुबर्थः; स चातिशयः केनाप्यविचाल्यत्वमिति द्योतनायोक्तम्—**उपदिष्टार्थे दृढाव**

प्र॰पा ॥ १. गी. ४-१८ ॥

शं॥अज्ञश्च अनात्मज्ञश्च अश्रद्दधानश्च गुरुवाक्यशास्त्रेषु अविश्वासवान्, संशयात्मा च संशयचित्तश्च विनश्यति । अज्ञाश्रद्दधानौ यद्यपि विनश्यतः, न तथा यथा संशयात्मा। स तु पापिष्ठः सर्वेषाम् । कथं? नायं साधारणोऽपि लोकोऽस्ति । तथा न परः लोकः। अस्ते न सुखं, तत्रापि संशयोत्पत्तेः संशयात्मनः संशयचित्तस्य । तस्मात् संशयो न कर्तव्यः ॥

कस्मात्? यस्मात्—योगेति ॥ योगसंन्यस्तकर्माणं परमार्थदर्शनलक्षणेन योगेन संन्यस्तानि कर्माणि येन परमार्थदर्शिना धर्माधर्माख्यानि तं योगसंन्यस्तकर्माणम् । कथं

ज ॥ उत्तरस्य श्लोकत्रयस्य सङ्कीर्णार्थत्वादेकोक्त्यैव तात्पर्यमुक्त्वा तस्मादिति चतुर्थस्य प्रतिपाद्यमाह—**तदिति** । तस्य ज्ञानस्य साधनमन्तरङ्गं श्रद्धादिकम् । विरोध्यज्ञानादिकं ज्ञानस्य फलं परशा-

रा ॥ बन्धहेतुभूतप्राचीनानन्तकर्माणि न निबध्नन्ति ॥ ४१ ॥

**तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥** ४२

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
साङ्ख्ययोगो नाम चतुर्थोऽध्याय ॥ ४ ॥
श्रीकृष्णाय परब्रह्मणे नम ॥

---

तस्मादनाद्यज्ञानसम्भूत हृत्स्थम् आत्मविषय सशय मयोपदिष्टेनात्मज्ञानासिना छित्वा मयोपदिष्ट कर्मयोगमातिष्ठ ,

---

ता॥श्छिन्नमनसमिति । परमप्रयोजनोपसहाररूपत्वव्यञ्जनाय—बन्धहेतुभूतेत्यादिकमुक्तम् ॥ ४१ ॥

एव विस्तरेणोपपाद्योपसहृतोऽथाऽर्जुन प्रति कर्तव्यतया निगम्यते—तस्मादितिश्लोकेन। सशय स्याज्ञानसभूतत्व विशेषणमहस्य सशयहेतुत्वात्।हृत्स्थ हृदि शल्यमिवार्पितम्, यद्वा हृत्स्थमित्यान्तरमिति भाव । 'आत्मन 'इति पष्ठ्या विषयविषयित्वलक्षणसम्बन्धविशेषे पर्यवसानमत्र विवक्षितमिति द्योतनाय—आत्मविषय सशयमित्युक्तम् । यद्वा 'एन सशयम्' इति निर्देशादात्मविषयत्व सिद्धम् , 'आत्मन ' इत्यस्य तु 'ज्ञानासिना' इत्यननान्वयाय—आत्मज्ञानासिनेत्युक्तम् । काकाक्षिन्यायेन वोभयत्रान्वय । मयेत्यनेनोपदेष्टुस्सर्वज्ञत्वकारुणिकत्वादिपौष्कल्यादाप्ततमत्व विवक्षितम् । कर्मयोगोपदेशोपसहारतया योगशब्दोऽत्र नतरविषय इति ज्ञापनाय—मयोपदिष्ट कर्मयोगमित्युक्तम् । भरतकुलप्रभूतार्जुनस्य स्वधर्मभूतयुद्धार्थमुत्थानमेव कर्मयोगार्थमुत्थानमिति भारतशब्दाभिप्रायव्यञ्जनाय—

---

श॥योगसन्यस्तकर्मेति'आह —ज्ञानसछिन्नसशय ज्ञानेन आत्मेश्वरकत्वदर्शनलक्षणेन स छिन्न सशयो यस्य स ज्ञानसछिन्नसशय । य एव योगसन्यस्तकर्मा तम् आत्मवन्तम् अप्रमत्त गुणचेष्टारूपेण दृष्टानि कर्माणि न निबध्नन्ति अनिष्टादिरूप फल नारभन्ते हे धनञ्जय ॥ ४१ ॥

यस्मात् कर्मयोगानुष्ठानात् अशुद्धिक्षयहेतुकज्ञानसछिन्नसशय न निबध्यते कर्मभि ज्ञानाग्निदग्धकर्मत्वादेव, यस्माच्च ज्ञानकर्मानुष्ठानविषये सशयवान् विनश्यति—तस्मादिति । तस्मात् पापिष्ठम् अज्ञानसम्भूत अज्ञानात् अविवेकात् जात हृत्स्थ हृदि बुद्धौ स्थित ज्ञानासिना शोकमोहादिदोषहर सम्यग्दर्शन ज्ञान तदेव असि खड्ग तेन

---

आ॥तत्साधन विरोधिफल च तदुक्तैरुक्तरोपसहरति ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये
चतुर्थोऽध्याय ॥ ४ ॥

---

जा॥त्यादिकम् । विरोधिन फल विनाशादिकमिति ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीभगवद्गीताभाष्यस्य टीकाया
जयतीर्थमुनिविरचिताया प्रमेयदीपिकाया चतुर्थोऽध्याय ॥ ४ ॥

रा ॥ तदर्थमुत्तिष्ठ भारतेति ॥ ४२ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमते रामानुजाय नमः ॥

---

ता॥तदर्थमुत्तिष्ठ भारतेत्युक्तम् । तेनैव मोक्षोपाययोग्यत्वाय योगिवंशप्रसूतत्वमप्यर्जुनस्य सूच्यते ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

शं॥ज्ञानासिना आत्मनः स्वस्य, आत्मविषयत्वात् संशयस्य । न हि परस्य संशयः अपरेण छेत्तव्यतां प्राप्तः, येन स्वस्येति विशेष्येत । अतः आत्मविषयोऽपि स्वस्यैव भवति । छित्त्वा एनं संशयं स्वविनाशहेतुभूतं, योगं सम्यग्दर्शनोपायं कर्मानुष्ठानम् आतिष्ठ कुर्वित्यर्थः । उत्तिष्ठ च इदानीं युद्धाय हे भारत इति ॥ ४२ ॥

इति श्रीपरमहंस परिव्राजकाचार्य गोविन्दभगवत्पादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्गीताभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥



श्रीः

श्रियै नमः।

श्रीमते रामानुजाय नमः

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः।

प्रसङ्गात्स्वस्वभावोक्तिः कर्मणोऽकर्मतास्य च।
भेदा ज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते॥ ८ ॥

## श्रीमन्निगमान्तमहादेशिकविरचिता गीतार्थसङ्ग्रहरक्षा।

स्वशब्देनावतीर्णावस्थो भगवानिह विवक्षितः, तस्य स्वभावः स्वासाधारणो भावः; स्वस्वभावोक्तिरुच्यत इति ओदनपाकः पच्यत इतिवत्, क्रियत इत्यर्थः। कर्मणोऽकर्मता 'कर्मण्यकर्म यः पश्येत्' इत्यादिभिरुक्ता; अकर्मशब्दोऽत्र तदन्यवृत्त्या कर्मयोगासन्नात्मज्ञानविषयः, अस्य च भेदाः 'दैवमेवापरे यज्ञम्' इत्यादिनोक्ताः। देवार्चनेन्द्रियनिरोधप्राणायामयागदानहोमतपस्तीर्थसेवास्वाध्यायतदर्थाभ्यासादिरूपा वर्णाश्रमधर्मेतिकर्तव्यताकाः यथाज्ञान यथाशक्ति यथारुचि प्रधानतया परिगृहीताः कर्मयोगावान्तरविशेषा इत्यर्थः। ज्ञानस्य माहात्म्य - 'श्रेयान् द्रव्यमयाद्यज्ञात्' इत्युक्त प्राधान्यम्। अयं च श्लोकः तृतीयसङ्गतिपूर्वकं चतुर्थारम्भे व्याख्यातः—'तृतीयेऽध्याये प्रकृतिसंसृष्टस्य मुमुक्षोस्सहसा ज्ञानयोगेऽनधिकारात्कर्मयोग एव कार्यः, ज्ञानयोगाधिकारिणोऽपि अकर्तृत्वानुसन्धानपूर्वकः कर्मयोग एव श्रेयानिति सहेतुकमुक्तम्; शिष्टतया व्यपदेश्यस्य तु विशेषतः कर्मयोग एव कार्य इति चोक्तम्। चतुर्थेन इदानीमस्यैव कर्मयोगस्य निखिलजगदुद्धरणाय मन्वन्तरादावेवोपदिष्टतया कर्तव्यतां द्रढयित्वा अन्तर्गतज्ञानतयाऽस्यैव ज्ञानयोगाकारता प्रदर्श्य कर्मयोगस्वरूपं, तद्भेदः, कर्मयोगे ज्ञानांशस्यैव प्राधान्यं चोच्यते, प्रसङ्गाच्च भगवदवतारयाथात्म्यमुच्यते'—इति। ईदृशं चावतारमाहात्म्यमत्र निरमन्थि—निखिलहेयप्रत्यनीककल्याणैकतानस्यापि भगवतो जन्म नेन्द्रजालवन्मिथ्या, अपितु सत्यम्, अवतरंश्च भगवानस्मदादिवन्न ज्ञानसङ्कोचादिमान् भवति, किंतु अजत्वाव्ययत्वसर्वेश्वरत्वादिकं सर्वं पारमेश्वरं स्वभावमजहदेवावतरति, नचावतारविग्रहोऽप्यस्य गुणत्रयमयः प्राकृतः, प्रत्युत अप्राकृतशुद्धसत्त्वमयः; नचास्य जन्म पुण्यापुण्यरूपेण कर्मणा, अपितु स्वेच्छयैव, न वा कर्मविपाककाले अस्य जन्म, अपितु धर्मग्लान्यधर्मोत्थानकाले, नापि भगवज्जन्मनः सुखदुःखमिश्राणि फलानि, अपि तर्हि साधुपरित्राणदुष्कृद्विनाशनधर्मसंस्थापनादीनीति स्वरूपतः प्रकारतो द्रव्यतः कारणतः कालतः प्रयोजनतश्च दिव्यत्वम्। एवं जानतश्चैकस्मिन्नेव जन्मनि उपायपूर्त्यानन्तरजन्मप्रतिषेधेन भगवत्प्राप्तिर्गीयते 'जन्म कर्म च मे दिव्यम्' इत्यादिना। अत एव हि प्राचेतसपाराशर्यशुकशौनकादयः परमर्षयः प्रायस्तत्रैव निष्ठाम्भूयसीमाद्रियन्ते—इति॥ ८ ॥

श्रीमते निगमान्तमहागुरवे नमः।

---

प्र-पा॥ १. गी. ४-१८॥ २. गी ४-२५॥
३. गी. ४-३३॥
४. गी. ४-१॥ भा. अवतरणिका॥
५. गी. ४-९॥

श्रीमद्भगवद्गीता

# पञ्चमोऽध्यायः.

रा ॥ चतुर्थेऽध्याये कर्मयोगस्य ज्ञानाकारतापूर्वकस्वरूपभेदो ज्ञानांशस्य च प्राधान्यमुक्तम्; ज्ञानयोगाधिकारिणोऽपि कर्मयोगस्यान्तर्गतात्मज्ञानत्वादप्रमादत्वात्सुकरत्वान्निरपेक्षत्वाच्च ज्यायस्त्वं तृतीय एवोक्तम्।इदानीं कर्मयोगस्यात्मप्राप्तिसाधनत्वे ज्ञाननिष्ठाया-

ना॥अथ पञ्चमस्याशतस्तृतीयचतुर्थाभ्यां सङ्गतिप्रदर्शनायोक्तानुक्तांशविवेकेन पञ्चमस्यानुक्तांशे तात्पर्यप्रदर्शनायचाह—चतुर्थेऽध्याय इति। कर्मयोगस्य ज्ञानाकारतेत्यादिकं चतुर्थाध्यायप्रधानार्थोऽयमिति द्योतनार्थं,सङ्गतिप्रदेशप्रदर्शनार्थञ्च । तृतीयएवेति—कर्तव्यतोपदेशलक्षणएवेत्यर्थः। पञ्चमार्थमाह—इदानीमिति । अत्रैवं सङ्ग्रहश्लोकः—'कर्मयोगस्य सौकर्यं शैघ्र्य काश्चन तद्विधाः । ब्रह्मज्ञानप्रकारश्च पञ्चमाध्याय उच्यते' इति । अत्र 'सौकर्यं शैघ्र्यम्' इति सङ्गृहीतत्वेऽपि भाष्ये शैघ्र्यमात्रवचनं सौकर्यस्य तृतीयाध्यायोक्तस्यैवानुवादः पञ्चमे शैघ्र्यौपयिकतया क्रियत इति ज्ञापनार्थम्, शैघ्र्यं तु तत्रानुक्तत्वादत्र साक्षात्प्रतिपाद्यम् । 'काश्चन तद्विधाः' 'ब्रह्मज्ञानप्रकारश्च' इत्युभयोर्व्याख्यानरूपेण कर्म-

प्र-पा ॥ १. गी. सं. ९-श्लो ॥

शं ॥ 'कर्मण्यकर्म यः पश्येत्' इत्यारभ्य 'स युक्तः कृत्स्नकर्मकृत्' 'ज्ञानाग्निदग्धकर्माणम्' 'शारीरं केवलं कर्म कुर्वन्' 'यदृच्छालाभसन्तुष्टः' 'ब्रह्मार्पणं ब्रह्म हविः' 'कर्मजान् विद्धि तान् सर्वान्' 'सर्वं कर्माखिलं पार्थ' 'ज्ञानाग्निः सर्वकर्माणि' 'योगसंन्यस्तकर्माणम्' इत्येतैः वचनैः सर्वकर्मणां संन्यासम् अवोचत् भगवान् । 'छित्त्वैनं संशयं योगमातिष्ठ' इत्यनेन वचनेन पुनः योगं च कर्मानुष्ठानलक्षणम् अनुतिष्ठ इत्युक्तवान् । उभयोश्च कर्मानुष्ठानकर्मसंन्यासयोः स्थितिगतिवत् परस्परविरोधात् एकेन सह कर्तुम् अशक्यत्वात् , कालभेदेन च अनुष्ठानविधानाभावात् , अर्थात् एतयोः अन्यतरकर्तव्यताप्राप्तौ सत्यां यत् प्रशस्यतरम् एतयोः कर्मानुष्ठानकर्मसंन्यासयोः तत् कर्तव्यं न इतरत् इत्येवं मन्यमानः प्रशस्यतरबुभुत्सया अर्जुन उवाच—संन्यासं कर्मणां कृष्ण इत्यादिना ॥

आ॥तृतीयाध्यायोक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन। 'यदृच्छालाभसन्तुष्टः' इत्या-

ज ॥ पूर्वसंगतत्वेनैतदध्यायप्रतिपाद्यमर्थमाह—तृतीयेति । कर्मयोगो नाम कर्माणि कृत्वा तेषां ब्रह्मात्मकत्वज्ञानमिति कश्चित् , तद्व्यावर्तयितुमेवशब्दः । फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितकर्मानुष्ठानमेव कर्मयोगोऽत्र प्रपञ्च्यते,तस्यैव पूर्वमुक्तत्वात्;नान्यः,तस्याप्रकृतत्वात्।द्व्यंशश्चायं कर्मयोगः—कामादिवर्जनम्, ईश्वरार्पणबुद्ध्या कर्मानुष्ठानं च—इति । तत्राद्यं संन्यासशब्दोक्तम् । द्वितीयमुपचारेण कर्मयोगशब्दोक्तम्। तदभिप्रायेण योगसंन्यासयोर्लक्षणं स्पष्टयतीत्यन्यत्रोक्तमिति। संन्यासमित्यादिना कुतोऽकमर्जुनोऽनुदवतीत्यत आह—यदृच्छेति। कर्मयोगमिति वदता कर्मणामित्येतद्योगशब्देन

रा ॥ इत्थमयं कर्मयोगान्तर्गताकर्तृत्वानुसन्धानप्रकारं च प्रतिपाद्य तन्मूलं ज्ञानं च विशोध्यते—

अर्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १

कर्मणां सन्न्यासं ज्ञानयोगं पुनः कर्मयोगं च शंससि, एतदुक्तम्भवति—द्वितीयेऽध्याये

---

ता॥योगेत्यादिना तृतीयचतुर्थाभ्यामशतस्सङ्गतिरुक्ता भवति।ज्ञाननिष्ठाया इति पञ्चमी।तत्र प्रकारशब्देन विशोध्यत इति वचनाचानुक्ताशतात्पर्येणापौनरुक्त्यं दर्शितम् । तन्मूलं ज्ञानमिति विपाकदशापन्नज्ञानं विवक्षितम् । अथ 'तद्विद्धि प्रणिपातेन' इत्येतदनुसन्दधानोऽनुक्तमपेक्षितमद्य मज्जिज्ञासुरुत्तमेनार्थं परिपृच्छन्नर्जुन उवाच—'सन्न्यासम्' इति । सन्न्यासयोगशब्दावत्र प्रकृतरक्ष्यमाणसाङ्ख्ययोगविषयतया नार्थान्तरपरानित्यभिप्रायेणाह—कर्मणा संन्यासं ज्ञानयोगमिति । कर्मणामित्येतदुभयान्वितम् । ननु कर्मयोगस्य त्याज्यत्वं क्वचिदपि नोक्तम्, प्रत्युत तदेवोपादेयतया प्रपञ्चितम्; न च ज्ञानयोगस्य प्रशंसा क्वापि कृता, येन 'सन्न्यासं योगञ्च शंससि' इत्युच्यते । उभयोः प्रशंसने कृतेऽपि विकल्प इत्येव मन्तव्य, न पुनरन्यतराधिक्यप्रश्नावकाश इत्यत्राह—एतदुक्तमिति । प्रतिपाद्येत्यन्तेन

---

प्र पा ॥ १ गा. ४ ३८ ॥

---

श ॥ ननु च आत्मविदः ज्ञानयोगेन निष्ठां प्रतिपादयिष्यन् पूर्वोदाहृतैः वचनैः भगवान् *कर्मसंन्यासम् अवोचत्, न तु अनात्मज्ञस्य। अतश्च कर्मानुष्ठानकर्मसंन्यासयोः भिन्नपुरुषविषयत्वात् अन्यतरस्य प्रशस्यतरबुभुत्सया अयं प्रश्नः अनुपपन्नः । सत्यमेव त्वदभिप्रायेण प्रश्नो न उपपद्यते, प्रष्टुः स्वाभिप्रायेण पुनः प्रश्नः युज्यते एवेति वदामः । कथम् ? पूर्वोदाहृतैः वचनैः भगवता कर्मसंन्यासस्य कर्तव्यतया विवक्षितत्वात्, प्राधान्यमन्तरेण च तस्य कर्तुः कर्तव्यत्वासम्भवात् अनात्मविदपि कर्ता पक्षे प्राप्तः अनूद्यते; न पुनः आत्मवित्कर्तृकत्वमेव सन्यासस्य विवक्षितम्, इत्येवं मन्यानस्य अर्जुनस्य कर्मानुष्ठानकर्मसन्यासयोः अविद्वत्पुरुषकर्तृकत्वमपि अस्तीति पूर्वोक्तेन प्रकारेण तयोः परस्परविरोधात् अन्यतरस्य कर्तव्यत्वे प्राप्ते प्रशस्यतरं च कर्तव्यम् न इतरत् इति प्रशस्यतरविविदिषया प्रश्नः न अनुपपन्नः ॥

प्रतिवचनवाक्यार्थनिरूपणेनापि प्रष्टुः अभिप्रायः एवमेवेति गम्यते । कथम् ? 'संन्यासकर्मयोगौ निःश्रेयसकरौ तयोस्तु कर्मयोगो विशिष्यते इति प्रतिवचनम्। एतत् नि-

---

आ॥दिसन्यासं 'कुरु कर्मैव' इत्यादि कर्मयोगं च। नियमनादिना सकललोककर्षणात्कृष्णः।

---

ज॥सम्भवत इत्युक्तं भवति। तथा च कर्मणा सन्यासं त्यागमिति व्याख्यानमयुक्तमिति सूचितम्। शंससीत्यनेनान्वयः । चतुर्थाध्यायोक्तस्यार्थस्यैतदध्यायोत्थानबीजत्वात्तृतीयाध्यायार्थप्रपञ्चनात्मकस्याप्यस्य चतुर्थानन्तर्यं युक्तमित्यप्यनेन ज्ञापितम् । कृष्णशब्दो वर्णविशेषमात्रवचन इति प्रतीतिनिरासायाह—नियमनादिनेति । नित्यनैमित्तिककाम्यनिषिद्धरूपसर्वकर्मत्यागः सन्यासशब्दार्थ इति व्याख्यानं दूषयति

---

पा ॥ *सर्वकर्म ॥

रा ॥ मुमुक्षोः प्रथमं कर्मयोग एव कार्यः;कर्मयोगेन मृदितान्तःकरणकषायस्य ज्ञानयोगेनात्मदर्शनं कार्यमिति प्रतिपाद्य पुनस्तृतीयचतुर्थयोर्ज्ञानयोगाधिकारदशापन्नस्यापि कर्म-

ता॥'सन्यासं कर्मणाम्' इत्यस्याभिप्रायो विवृतः। कषायनिवृत्त्यर्थः कर्मयोगः। तन्निवृत्तौ कर्मयोगं परित्यज्य ज्ञानयोग उपादेयः; अतो ज्ञानयोग एवात्मदर्शने साक्षात्साधनमिति द्वितीये प्रतिपादितमिति भावः। पूर्वं संन्यस्तस्य पुनर्योगं शंससीति भ्रमव्युदासाय 'शंससि' इत्यनेन पुनश्शब्दाश्रयमाह—तृतीयचतुर्थयो रिति। द्वितीय इत्येतत्तृतीयचतुर्थयोरित्येतच भाष्यकारैस्स्वानुसन्धानेनोक्तम्, न पुनरर्जुनवाक्यानुसारः। अत्र मृदितकषायस्य कर्मयोगस्याज्यश्रेष्ठ्यमुपादेयः, ज्ञानयोगस्य दर्शनसाधनत्वे कथमव्यवधानेन तत्सम्भव इति भावः। 'कर्म ज्यायो ह्यकर्मणः' इति ज्यायस्त्वेन शंसनमित्यभिप्रायेणाह

प्र-पा ॥ १. गा. ३-८ ॥

शा॥रूप्यम्—किम् अनेन आत्मवित्कर्तृकयोः संन्यासकर्मयोगयोः निःश्रेयसकरत्वं प्रयोजनम् उक्त्वा तयोरेव कुतश्चित् विशेषात् कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वम् उच्यते? आहोस्वित् अनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोः तदुभयम् उच्यते? इति। किञ्चातः —यदि आत्मवित्कर्तृकयोः कर्मसंन्यासकर्मयोगयोः निःश्रेयसकरत्वम्, तयोस्तु कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वम् उच्यते; यदि वा अनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोः तदुभयम् उच्यते इति। अत्र उच्यते—आत्मवित्कर्तृकयोः संन्यासकर्मयोगयोः असम्भवात् तयोः निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वाभिधानम् इत्येतत् उभयम् अनुपपन्नम्। *यदि अनात्मविदः कर्मसंन्यासः तत्प्रतिकूलश्च कर्मानुष्ठानलक्षणः कर्मयोगः सम्भवेतां, तदा तयोः निःश्रेयसकरत्वोक्तिः कर्मयोगस्य च कर्मसंन्यासात् विशिष्टत्वाभिधानम् इत्येतत् उभयम् उपपद्येत। आत्मविदस्तु संन्यासकर्मयोगयोः असम्भवात् तयोः निःश्रेयसकरत्वाभिधानं संन्यासाच्च कर्मयोगः विशिष्यते इति च अनुपपन्नम्॥

अत्र आह—किम् आत्मविदः संन्यासकर्मयोगयोः उभयोरपि असम्भवः? आहोस्वित् अन्यतरस्य असम्भवः? यदा च अन्यतरस्य असम्भवः तदा किं कर्मसंन्यासस्य? उत कर्मयोगस्य? इति। असम्भवे कारणं च वक्तव्यम् इति। अत्र उच्यते—आत्मविदः निवृत्तमिथ्याज्ञानत्वात् विपर्ययज्ञानमूलस्य कर्मयोगस्य असम्भवः स्यात्। जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियम् आत्मानम् आत्मत्वेन यो वेत्ति तस्य आत्मविदः सम्यग्दर्शनेन अपास्तमिथ्याज्ञानस्य निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्वकर्मसंन्यासम् उक्त्वा तद्विपरीतस्य मिथ्याज्ञानमूलकर्तृत्वाभिमानपुरस्सरस्य सक्रियात्मस्वरूपावस्थानरूपस्य कर्मयोगस्य इह गीताशास्त्रे तत्रतत्र आत्मस्वरूपनिरूपणप्रदेशेषु सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधात् अभावः प्रतिपाद्यते यस्मात् तस्मात् आत्मविदः निवृत्तमिथ्याज्ञानस्य विपर्ययज्ञानमूलः कर्मयोगो न सम्भवति इति युक्तम् उक्तं स्यात्॥

केषुकेषु पुनः आत्मस्वरूपनिरूपणप्रदेशेषु आत्मविदः कर्माभावः प्रतिपाद्यते इति? अत्र उच्यते—'अविनाशि तु तत्' इति प्रकृत्य 'य एनं वेत्ति हन्तारं' 'वेदाविनाशिनं नित्यम्' इत्यादौ तत्रतत्र आत्मविदः कर्माभावः उच्यते॥

पा ॥ *आत्मविदः ॥

रा॥निष्ठैव ज्यायसी, सैव ज्ञाननिष्ठानिरपेक्षा आत्मप्राप्तौ साधनमिति कर्मनिष्ठां प्रशंससि —इति। तत्रैतयोर्ज्ञानयोगकर्मयोगयोरात्मप्राप्तिसाधनभावे यदेकं सौकर्याच्छैघ्र्याच्च श्रेयः

ता॥—प्रशंससीतीतत्रेति द्वयोरप्यव्यवहितसाधनत्वे विवक्षिते इत्यर्थः। एतयोरित्यत्र निर्धारितान्यत रविषय एकशब्दः। तत्र सामान्याकारविवक्षया नपुंसकत्वं,श्रेयश्शब्दविशेषणतया वा। सौकर्याच्छै-घ्र्याच्चेति फलस्यैकत्वात्तन्निरपेक्ष श्रैष्ठ्यमिहायुक्तमितिभावः। श्रेयस्सुनिश्चितमित्यन्वयः। श्रेयस्त्वेन

शा॥ननु च कर्मयोगोऽपि आत्मस्वरूपनिरूपणप्रदेशेषु तत्रतत्र प्रतिपाद्यते एव, तत् यथा 'तस्मात् युध्यस्व भारत' 'स्वधर्ममपि चावेक्ष्य' 'कर्मण्येवाधिकारस्ते' इत्यादौ। अतश्च कथम् आत्मविदः कर्मयोगस्य असम्भवः स्यादिति? अत्र उच्यते—सम्यग्ज्ञान मिथ्याज्ञानतत्कार्यविरोधात्, 'ज्ञानयोगेन साङ्ख्यानाम्' इत्यनेन साङ्ख्यानाम् आत्मतत्त्व विदाम् अनात्मवित्कर्तृककर्मयोगनिष्ठातः निष्क्रियात्मस्वरूपावस्थानलक्षणायाः ज्ञानयोग निष्ठायाः पृथक्करणात्, कृतकृत्यत्वेन आत्मविदः प्रयोजनान्तराभावात्, 'तस्य कार्यं न वि द्यते' इति कर्तव्यान्तराभाववचनाच्च, 'न कर्मणामनारम्भात्' 'सन्न्यासस्तु महाबाहो दुः खमाप्तुमयोगतः' इत्यादिना च आत्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात्, 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यनेन च उत्पन्नसम्यग्दर्शनस्य कर्मयोगाभाववचनात्, 'शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्' इति च शरीरस्थितिकारणातिरिक्तस्य कर्मणो निवारणात्, 'नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यनेन च शरीरस्थिति मात्रप्रयुक्तेष्वपि दर्शनश्रवणादिकर्मसु आत्मयाथात्म्यविदः 'न अहं करोमि' इति प्रत्य यस्य समाहितचेतस्तया सदा कर्तव्यत्वोपदेशात् आत्मतत्त्वविदः सम्यग्दर्शनविरुद्धो मिथ्याज्ञानहेतुकः कर्मयोगः स्वप्नेऽपि न सम्भावयितुं शक्यते यस्मात्, तस्मात् अना त्मवित्कर्तृकयोरेव सन्न्यासकर्मयोगयोः निःश्रेयसकरत्ववचनं, तदीयाच्च कर्मसन्न्यासात् पूर्वोक्तात्मवित्कर्तृकसर्वकर्मसन्न्यासविलक्षणात् सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविष यात् यमनियमादिसहितत्वेन च दुरनुष्ठेयात् सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभि धानम् इत्येवं प्रतिवचनवाक्यार्थनिरूपणेनापि पूर्वोक्तः प्रष्टुः अभिप्रायः निश्चीयते इति स्थितम्॥

'ज्यायसी चेत्कर्मणस्ते' इत्यत्र ज्ञानकर्मणोः सह असम्भवात् 'यत् श्रेय एतयोः तत् मे ब्रूहि' इत्येवं पृष्टोऽर्जुनेन भगवान् साङ्ख्यानां सन्न्यासिनां ज्ञानयोगेन निष्ठा कर्म योगेन योगिनां निष्ठा प्रोक्तेति निर्णयं चकार। 'न च सन्न्यसनादेव केवलात् सिद्धिं समधिगच्छति' इति वचनात् ज्ञानसहितस्य तस्य सिद्धिसाधनत्वम् इष्टम्, कर्मयोगस्य च विधानात्। ज्ञानरहितस्य सन्न्यासः श्रेयान्? किं वा कर्मयोगः श्रेयान्? इति एतयोः प्रशस्यतरं बुभुत्सुः अर्जुन उवाच—

आ॥तच्चोक्तम्—'यत् कर्षसि देवेश नियम्य सकलं जगत्। अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः' इति महाकौर्मे। सन्न्यासशब्दार्थं भगवानेव वक्ष्यति। अयं प्रश्नाशयः —

ज्ञा॥—सन्न्यासेति।'ज्ञेयः स नित्यसन्न्यासी' इति सन्न्यासशब्दस्य भगवतैवान्यथा व्याख्यातत्वात् तद्वि रुद्धं पर्व्याख्यानमित्यर्थः। यदि सर्वकर्मपरित्यागो न सन्न्यासशब्दार्थः, किन्तु द्वेषादिवर्जनमेव, तर्हि तस्य योगेन विरोधाभावात्सन्न्यासयोगयोर्विरोधाभिप्रायेण श्रेयःप्रश्नोऽनुपपन्नः स्यादित्यत आह—अथ-

ता॥श्रेष्ठमिति सुनिश्चितं, तन्मे ब्रूहि ॥ १ ॥

श्रीभगवानुवाच—

संन्यासः कर्मयोगश्च निश्श्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २

सन्न्यासो - ज्ञानयोगः, कर्मयोगश्च ज्ञानयोगशक्तस्याप्युभौ निरपेक्षौ निश्श्रेयस-

ता॥सुनिश्चितमित्यर्थः । क्रियाविशेषणत्वं तु निरर्थकमित्यभिप्रायेणाह—श्रेष्ठमितिसुनिश्चितमिति । श्रेयश्शब्दस्य फलादिष्वपि प्रयोगप्राचुर्यात्तद्युदासाय तारतम्यप्रश्नानुगुण्येन प्रकृतिप्रत्ययार्थव्यञ्जनाय श्रेष्ठशब्देन व्याख्यातम् । अनेकफलसाधनत्वाद्विकल्पे प्राप्ते सौकर्यादिगुणयोगाच्छ्रेयस्त्वोक्तिः ॥ १ ॥

अथ सद्वारकत्वाभिधानस्य अधिकारिविशेषनियततया द्वयोरप्यव्यवहितसाधनत्वमुपपादयंस्तत एव मृदितकषायस्यापि सौकर्यगौरवमद्भिनस्तस्यैव कर्तव्यता च दर्शयन्भगवानुवाच—संन्यास इति । ज्ञानयोगाशक्तस्य कर्मयोगसापेक्षत्वात्तच्छक्तस्यैव निरपेक्षसाधनत्वोक्तिरुपपन्नेत्यभिप्रायेणाह—ज्ञानयोगशक्तस्यापीति । 'उभौ निश्श्रेयसकरौ' इत्येतत्सामर्थ्यात् 'एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम्' इति वक्ष्यमाणानुसन्धानाच्च—निरपेक्षावित्युक्तम्।चकारेणाप्येतदेव व्यज्यते। अन्वाचयेतरेतरयोगसमा-

प्र-पा॥ १. गा. ५-४ ॥

शं॥संन्यासं परित्यागं कर्मणां शास्त्रीयाणाम् अनुष्ठेयविशेषाणां शंससि प्रशंससि कथयसि इत्येतत् । पुनः योगं च तेषामेव अनुष्ठानम् अवश्यं कर्तव्यं शंससि । अतः मे कतरत् श्रेयः इति संशयः—किं कर्मानुष्ठानं श्रेयः? किं वा तद्धानम् इति?। प्रशस्यतरं च अनुष्ठेयम् । अतश्च यत् श्रेयः प्रशस्यतरम् एतयोः कर्मसंन्यासकर्मयोगयोः, यदनुष्ठानात् श्रेयोवाप्तिः मम स्यादिति मन्यसे,तत् एकम् अन्यतरत् सह एकपुरुषानुष्ठेयत्वासम्भवात् मे ब्रूहि सुनिश्चितम् अभिप्रेतं तवेति ॥ १ ॥

स्वाभिप्रायम् आचक्षाणो निर्णयाय श्रीभगवानुवाच—संन्यासः कर्मणां परित्यागः कर्मयोगश्च तेषाम् अनुष्ठानं तौ उभौ अपि निश्श्रेयसकरौ मोक्षं कुर्वाते ज्ञानोत्पत्तिहेतुत्वेन।

आ॥यदि संन्यासः श्रेयोऽधिकः स्यात् ; तर्हि संन्यासस्यैवद्विरोधि युद्धमिति ॥ १ ॥

नायं संन्यासो यत्याश्रमः । 'द्वन्द्वत्यागात्तु संन्यासान्मत्पूजैव गरीयसी' इति वच-

ज॥मिति। अत्र 'श्रेय'इति यथास्थित गीतापदमनूद्य सन्यासपदानुगुण्येन—अधिक इति व्याख्यातम् । नन्वेतत् 'श्रेरे' इति चोदितं श्रेयानिनिच परिहृतं च । सत्यम्,अत एवात्र ईषदित्युक्तमिति । अतस्त्यक्त्वा संन्यास एव कर्तव्ये किं वैगुण्यमङ्गीकृत्यापि विधीयते युद्धमित्याशयशेषः ॥ १ ॥

'सन्यासम्' इति प्रश्नवाक्ये 'सन्यासः' इति परिहारवाक्ये च संन्यासयोगशब्दौ यतिगृहस्थाश्रमविषयावेव, तयोः सर्वकर्मत्यागतदनुष्ठानरूपत्वात्। 'श्रेयः' इति वचन तु न संन्यासशब्दव्याख्यानपरम् ; किं तु यो द्वेषादिवर्जितो गृही,सोऽपि सन्यासी ज्ञातव्य इति स्तुतिपरमेवेत्यत आह—नायमिति । अथ परिहारवाक्यस्थः, प्रश्नवाक्यस्थस्य तात्पर्यनिर्णये तथाभ्युपगमात् । योगश्च न गृहस्थाश्रम इत्यपि द्रष्टव्यम् । कुतो नेति चेत्—अत्र तयोस्त्विति सन्यासात्कर्मयोगस्य विशिष्टत्ववचनात् । तस्य चासत्पक्ष एव सम्भवादन्यत्रासम्भवादिति भावः । कुतो भवत्पक्षे सम्भव इत्यत आह—द्वन्द्वेति । मत्पूजा म-

या॥करो। तयोस्तु कर्मसंन्यासात्—ज्ञानयोगात् कर्मयोग एव विशिष्यते ॥ २ ॥

कुत इत्यत्राह—

ज्ञेयस्स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३

ता॥हारा हि पृथक्फलसाधनत्वप्रकरणविरुद्धाः। अतः पृथक्स्वातन्त्र्यगर्भस्समुच्चय एवात्र चार्थः। तर्हि द्वावप्यनियमेन यथेच्छमुपादेयौ, कर्मयोगस्य तु किमर्थं प्रशंसेति शङ्काव्युदासाय तुशब्दः। तदभिप्राय व्यञ्जनार्थमेवनकार ॥ २ ॥

द्वयोः श्रेयस्साधनत्वाविशेषे कर्मयोग एव विशिष्यत इति प्रतिज्ञामात्रम्, तत्र हेत्वाकाङ्क्षाया सौकर्यादन्य हेतुमाहेत्याह—कुतइत्यत्राहेति। 'ज्ञेयः' इति श्लोके 'नित्यसंन्यासी' इत्येतावता ज्ञानयोगनिष्ठविषय इति न मन्तव्यम्, 'कर्मयोगो विशिष्यते' इति प्रतिज्ञाय ज्ञानयोगनिष्ठस्य मुखेन मोक्षानिरसङ्गतत्वात्, 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' इतिवक्ष्यमाणविरोधाच्च। अतः कर्मयोगनिष्ठस्यैव प्रशंसेयमित्यभिप्राये

प्र पा ॥ १ र्ग ५ ६ ॥

श ॥ उभौ यद्यपि निःश्रेयसकरौ, तथापि तयोस्तु निःश्रेयसहेत्वोः कर्मसंन्यासात् केवलात् कर्मयोगो विशिष्यते इति कर्मयोगं स्तौति ॥ २ ॥

कस्मात् इति? आह—ज्ञेयः ज्ञातव्यः स कर्मयोगी नित्यसंन्यासी इति यो न द्वेष्टि किञ्चित् न काङ्क्षति दुःखसुखे तत्साधने च। एवंविधो यः कर्मणि वर्तमानोऽपि स नित्यसंन्यासी इति ज्ञातव्यः इत्यर्थः। निर्द्वन्द्वः द्वन्द्ववर्जितः हि यस्मात् महाबाहो सुखं ब

आ॥नात्। 'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' इति च। 'संन्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः। न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ॥ तद्भक्तोऽपि हि यद्दृच्छेत्तद्गृहस्थो न धार्मिकः। मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते ॥ यदाधिकारो भवति ब्रह्मचर्येऽपि प्रव्रजेत्' इति नारदीये। 'ब्रह्मचर्यादेव प्रव्रजेत् यदहरेव विरजेत्' इति च। 'संन्यासे तु तुरीये वै प्रीतिर्मम महीयसी। येषामनाधिकारो न तेषां कर्मेति निश्चयः' इत्यादेश्च ग्राह्य। अतो नात्राश्रमः संन्यास उक्तः ॥ २ ॥

ज॥दर्पणबुद्ध्या कर्मानुष्ठानम्, आश्रमार्थत्वे कुतोऽसम्भव इत्यत आह— तानीति। तान्याधानादीनि। अत्यरेचयत्—अत्यरिच्यत, इति वचनादिति वर्तते। न्यस्यतेऽस्मिन्सर्वमिति ब्रह्मैव न्यास इति कश्चित्, तदसत्, तपोपेक्षयोत्तमत्वाभिधानस्यासङ्गतत्वात्। उपायोपेयभावेन सङ्गतिरिति चेत्—तर्हि तत्सिद्धौ लोकत एवोत्तमत्वसिद्धेरभिधानवैयर्थ्यात्। गृहस्थाश्रमाद्यत्याश्रमस्योत्तमत्वमयुक्तम्। गृहस्थाश्रमो हि सर्वधर्मोपपन्नस्तत्समर्थे मध्यमे वयसि अनुष्ठेयो महाफलश्च। यत्याश्रमस्तु निष्क्रियश्चरमे वयसि गृहस्थधर्मानधिकृतैरन्धपङ्ग्वादिभिरनुष्ठेयोऽल्पफलश्चेति केचित्, तन्निरासार्थमाह—**संन्यासस्त्विति**। नाम्यकर्मरहितत्वात् निष्क्रियाख्योऽपि सधर्मकः, न केवलं सधर्मकं किं तु तस्माद्यत्याश्रमानुष्ठेयाद्यतिभक्त्यापि यत्फलं प्राप्नुयात्र तत्सर्वैर्गृहस्थधर्मैरित्यर्थः। ब्रह्मचर्यादेव ब्रह्मचर्ये स्थित्वैव। विरजेत् विरक्तो भवेत्। 'तदहरेव प्रव्रजेत्' इति श्रुतिशेषः। कमत्याश्रमान्तरम्। यदुक्तं नायमित्यादि, तदुपसंहरति—अत इति। अत्र—परिहारवाक्ये ॥ २ ॥

रा ॥ यः कर्मयोगी तदन्तर्गतात्मानुभवतृप्तस्तद्व्यतिरिक्तं किमपि न काङ्क्षति, ततएव किमपि नद्वेष्टि, ततएव द्वन्द्वसहश्च; स नित्यसंन्यासी - नित्यज्ञाननिष्ठ इति ज्ञेयः; स हि सुकरकर्मयोगनिष्ठतया सुखं बन्धात्प्रमुच्यते ॥ ३ ॥

ज्ञानयोगकर्मयोगयोरात्मप्राप्तिसाधनभावेऽन्योन्यनैरपेक्ष्यमाह—

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम् ॥ ४**

ता॥णाह—यःकर्मयोगीति। काङ्क्षाया बाह्यमात्रविषयत्वव्यञ्जनार्थं तद्धेयत्वार्थं च—तदन्तर्गतात्मानुभवतृप्त इत्युक्तम्। काङ्क्षा हि प्रतिहन्यमाना द्वेषहेतुरित्यभिप्रायेण—ततएवकिमपिनद्वेष्टीतिव्युत्क्रमेण व्याख्यातम् । द्वन्द्वस्वरूपनिवृत्तिव्युदासाय द्वन्द्वसहशब्दः । ततएवद्वन्द्वसहश्चेति—रागद्वेषवतो द्वन्द्वतितिक्षा न शक्येतिभावः।नित्यसंन्यासित्वे हिशब्दस्य हेतुपरत्वव्यञ्जनाय—सहीत्युक्तम्। सुखशब्दोऽत्र सौकर्यपरइत्याह—सुकरकर्मयोगनिष्ठतयेति ॥ ३ ॥

''निःश्रेयसकरावुभौ' इत्यभिप्रेतं विवृणोतीत्यभिप्रायेणाह—ज्ञानयोगकर्मयोगयोरिति । अत्र साङ्ख्ययोगशब्दौ न कापिलहैरण्यगर्भसिद्धान्तविषयौ, तयोरप्रस्तुतत्वात्, महाप्रकरणासङ्गतत्वात् , 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' इत्यादिपूर्वोत्तरवि-

प्र-पा ॥ १. गी. ५-२ ॥ २. गी. ५-६ ॥

शं॥न्धात् अनायासेन प्रमुच्यते ॥ ३ ॥

संन्यासकर्मयोगयोः भिन्नपुरुषानुष्ठेययोः विरुद्धयोः फलेऽपि विरोधो युक्तः, न तु उभयोःनिश्श्रेयसकरत्वमेव इति प्राप्ते इदम् उच्यते—साङ्ख्ययोगौ पृथक् विरुद्धभिन्नफलौ

आ॥संन्यासशब्दार्थमाह—ज्ञेयइति। संन्यासस्य निश्श्रेयसकरत्वं ज्ञापयितुं तच्छब्दार्थं स्मारयति—ज्ञेयइति ॥ ३ ॥

संन्यासो हि ज्ञानान्तरङ्गत्वेनोक्तः, न तस्य तत्त्वग्रहणायेत्यादौ । अतः कथं सोऽ-

ज॥'ज्ञेयः' इत्यस्यापव्याख्यानं दूषयन् तात्पर्यमाह—संन्यासेति। अर्थान्तरस्याप्रतीतेरिति भावः । ननु ,यदृच्छालाभसन्तुष्टः' इत्यादिनोक्त कामादिपरित्याग 'सन्यासं कर्मणाम्' इत्यनूद्यार्जुनस्य प्रश्न इत्युक्तम् ; ततश्च जानात्येवासौ सन्यासशब्दार्थमिति न त प्रति स वक्तव्यः ; तथा च पूर्वपक्ष्युत्प्रेक्षित एवास्यार्थ इत्यत आह —संन्यासस्येति । 'सन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ' इति यत्संन्यासस्य निःश्रेयसकरत्वमुक्तम् , तदुपपादयितु ज्ञातमपि सन्यासशब्दार्थं स्मारयत्यनेन । द्वेषादिवर्जनं हि सन्यासः । तस्य च निःश्रेयसकरत्व श्रुत्यादिप्रसिद्धमेवेति ; अतः सन्यासशब्दार्थकथन एव तात्पर्याभावात्नानुपपत्तिरित्यर्थः । ज्ञापक चास्यार्थस्यास्तीत्याह—ज्ञेय इतीति । ज्ञेयः स्मर्तव्य इत्यनेनोक्तमित्यर्थः । योगस्य तु निःश्रेयसकरत्वमुत्तरवाक्य एव सेत्स्यति ॥ ३ ॥

सन्यासं गृहीत्वा योगं त्यक्ष्यामीत्याशयेन द्वयोः श्रेयसि पृष्टे द्वावपि निःश्रेयसकरौ ; तत्रापि संन्यासाद्योगो विशिष्टः, अतो न युद्धं त्वया त्याज्यमिति परिहारो जातः ; किमर्थमिदानीं 'साङ्ख्ययोगौ' इत्युच्यत इत्यत आह—संन्यासो हीति । हिशब्दो हेतौ । ज्ञानान्तरङ्गत्वेन ज्ञानोत्पत्तावत्यावश्यकत्वेन न तस्येत्यत्र विषयवैराग्याभावे ज्ञानानुत्पत्तिवचनेन तत एव तदुत्पत्तिरिति लभ्यते । एवं क-

रा॥ज्ञानयोगकर्मयोगौ फलभेदात्पृथग्भूतौ ये प्रवदन्ति,ते बालाः अनिष्पन्नज्ञानाः; न पण्डिताः-अकृत्स्नविदः ; कर्मयोगो ज्ञानयोगमेव साधयति ; ज्ञानयोगस्त्वेक आत्मावलोकनं साधयतीति तयोः फलभेदेन पृथक्त्वं वदन्तो न पण्डिता इत्यर्थः। उभयोरात्मावलोकनैकफलयोरेकफलत्वेन एकमप्यास्थितस्तदेव फलं लभते ॥ ४ ॥

ता॥रुभयोर्विन्दते फलम्' 'यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' इत्यादिभिः पृथगनुष्ठानस्यैव सिद्धत्वात् । अतः फलैक्यस्य 'एकमप्यास्थितः' इत्यादिना विधानात्, अत्र फलभेदकृतभेदनिषेधे तात्पर्यमित्याह—फलभेदात्पृथग्भूताविति । अस्य वाक्यस्य पृथक्फलत्वादिना निन्दारूपत्वात् , येप्रवदन्ति ते बाला इति बालत्वस्योपादेयतया वचनव्यक्तिर्दर्शिता । उत्तरश्लोकेऽप्येकफलत्ववादिप्रशंसायां ' यः पश्यति ' इत्यनूद्य ' स पश्यति' इति हि विधीयते । बालशब्दस्यात्र मुख्यायोगादुपचरितमाह—अनिष्पन्नज्ञाना इति । अपक्वौन्निकज्ञानेष्वपक्वपर्यायशब्दोपचारः; बालसाम्याद्वा बालाः । 'न पण्डिताः' इत्यत्र अशास्त्रीयानुष्ठानपर्यन्ताज्ञानव्युदासायोक्तम्—अकृत्स्नविद इति । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' इत्यादिप्रसिद्ध सदाचार्यप्रसादैकसमधिगम्यार्थविषय ज्ञानमिह पाण्डित्यम् ; अतो 'बालाः' इत्युक्तेऽपि तदभावोक्तिर्न पुनरुच्यत इति भावः । फलादिभेदभ्रमप्रकारं 'न पण्डिताः'इत्यस्यापि 'बालाः' इतिवद्विधिविषयत्वं च दर्शयति—कर्मयोग इति । ज्ञानयोगमेवेति—नतु कस्मिंश्चिदप्यधिकारिणि साक्षादात्मावलोकनमित्यर्थः । ये तु 'ये बालास्त एवं वदन्ति, ये पण्डितास्ते तु न' इति वचनव्यक्तिमाहुः, तेषामप्ययमेवार्थः फलतोऽङ्गीकार्यः। उभयोः फलमेकेन कथं लभ्यमित्यत्राह—उभयोरिति । निर्धारणे षष्ठी; एकशब्दश्चान्यतरपर्यायः; द्वयोरपि तुल्यफलत्वादन्यतरास्थानेऽपि तत्फलं सिद्ध्यतीत्यर्थः ॥ ४ ॥

प्र-पा ॥ १ गी. ५-५ ॥

२. गी. ५-६ ॥

३. बृ. ५-५-१ ॥ *'तस्माद् ब्राह्मण पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मण ॥' तस्मात्-यस्माद् वैराग्यमावश्यकं तस्माद्, 'ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति'इति हि पूर्वमुक्तम्।ब्राह्मणः-विद्वान्, पाण्डित्यम्-ऊहापोहक्षमा धीः पण्डा, साऽस्य सञ्जातेति पण्डित , तस्य कर्म पाण्डित्यम् , औपदेशिकार्थाधिगमरूपं विवेकनिर्वेदविरक्तिफलकम् , निर्विद्य-लब्ध्वा, बाल्येन-स्वमाहात्म्यानाविष्करणलक्षणबालस्वभावेन युक्तस्सन्।अस्यार्थोऽनाविष्काराधिकरणे(३ - ४ - ४९), स्पष्ट. । तिष्ठासेत्-सन्नाणि तिष्ठासेत्, निष्ठा लभेत, उपासीतेत्यर्थः । बाल्यञ्च पाण्डित्यं च - बाल्यपाण्डित्यं, निर्विद्य-लब्ध्वा, अथ मुनिः आलम्बनसंशीलनलक्षणमननशील इत्यादित्यर्थ । शेषं पूर्वमेव(२२६-पु. १७-पं) व्याख्यातम् ॥ ४. अन्यतरानुष्ठानेऽपि. पा॥

सं॥'साङ्ख्ययोगौ'इति । तौ एव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ साङ्ख्ययोगशब्दवाच्यौ इति भगवतो मतम् । अतः न अप्रकृतप्रक्रियेति ॥ ४ ॥

आ॥धूमतान्तः स्वं लोकं न प्रत्यभिजानाति। मा वः पदव्यः पितरस्मदास्थिता या यज्ञशालासनधूमवर्त्मनाम्' इत्यादिकाम्यकर्मविषयमिति भावः । ये त्वन्यथा वदन्ति ते बालाः॥

ज्ञा॥मिति भ्रान्तः । धूमतान्तो होमधूमेन तान्तो ग्लानः । धूमता धूमादित्यमेवान्तः पर्यवसानमस्येति वा । स्व लोकं स्वीयमाश्रयं परमात्मानम् । यज्ञशालामनेन धूमोपलक्षितमार्गवता वः पदव्योऽस्मदाश्रिता मेत्यर्थः । नन्वकाम्यमपि नित्यं नैमित्तिकं च कर्म प्रत्यवायपरिहारार्थमेव न ज्ञानान्तरङ्गमिति विद्वांस एव मन्यन्त इत्यत आह—ये त्विति । बाला अविवेकिनः ॥ ४ ॥

गा॥एतदेव विवृणोति—

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥** ५

**साङ्ख्यैः ज्ञाननिष्ठैः। यदात्मावलोकनरूपं फलं प्राप्यते, तदेव कर्मयोगनिष्ठैरपि प्राप्यते। एवमेकफलत्वेनैकं वैकल्पिकं साङ्ख्यं योगं च यः पश्यति; स एव पण्डित इत्यर्थः॥**

ता॥भिन्नफलत्वेन पृथक्त्वाभिधायिना निन्दा कृता; अथैकफलत्वेनैक्याभिधायिना प्रशंसनं क्रियत इत्यभिप्रायेणाह—**एतदेव विवृणोतीति**। 'साङ्ख्यैः' इत्यत्र सिद्धान्तविशेषनिष्ठभ्रमव्युदासायाह—**ज्ञाननिष्ठैरिति**। साङ्ख्यमात्मज्ञानशास्त्रं तद्वेदिन इह साङ्ख्याः, यद्वा संख्या बुद्धिर्ज्ञानयोगः, तन्निष्ठास्साङ्ख्याः; अथवा साङ्ख्य आत्मा, तद्वेदिनोऽपि साङ्ख्याः। स्थानशब्दोऽत्र 'विन्दते फलम्' इतिवत्फलविषयः, न तु देशविशेषविषयः, ज्ञानयोगादिमात्रप्राप्यदेशविशेषाभावात्। तच्च फलं पूर्वोत्तरानुवृत्तमात्मावलोकनमित्यभिप्रायेण—**यदात्मावलोकनरूपं फलमित्युक्तम्**। अत्र 'यदेव साङ्ख्याः पश्यन्ति' इति यादवप्रकाशोक्तः पाठोऽप्रसिद्धत्वादनादृतः। 'योगैः' इत्येतल्लक्षणया वा मत्वर्थीयविशेषाद्वा तन्निष्ठविषयमिति व्यञ्जनाय—**कर्मयोगनिष्ठैरित्युक्तम्**। अत्र साङ्ख्ययोगशब्दौ नोपायपरौ, बहुवचनानौचित्यादिति भावः। 'एकम्' इत्युक्ते एकशास्त्रार्थत्वादिभ्रमव्युदासायाह—**एवमेकफलत्वेनेति**। अङ्गाङ्गिभावेतरेतरयोगरहितयोरुपाययोरेकफलत्वलक्षणं ह्यैक्यमनुष्ठाने विकल्पाय स्यात्। तथा च सूत्रं 'विकल्पोऽविशिष्टफलत्वात्' इति। तदाह—**वैकल्पिकमिति**। 'स पश्यति' इत्येतत् 'ते पण्डिताः' इत्येतत्प्रतिरूपं दर्शयति—**स एव पण्डित इति** ॥ ५ ॥

प्र पा॥ १. गी ५ ४॥

२. शारी ३-३-५७. †अग्निहोत्रदर्शपौर्णमासज्योतिष्टोमादीनां स्वर्गकफलानां यत्र भूयस्त्वापेक्षया यथैकस्मिन्पुरुषे समुच्चयो दृश्यते, तथा सद्विद्यादहरविद्यादीनां ब्रह्मप्राप्तिफलकानां ब्रह्मानुभवभूयस्त्वापेक्षया एकस्मिन्पुरुषे समुच्चय इति पूर्वपक्षः, देशतः कालतः स्वरूपतश्चानवच्छिन्नानन्दस्वरूपब्रह्मानुभवरसवीना ब्रह्मविद्यानामेकफलम्; तस्यैकया विद्ययावाप्तिमित्येकस्मिन्पुरुषे विद्यान्तरसमुच्चये प्रयोजनाभावात् न सम्भवतीति सर्वासां विकल्प इति सिद्धान्तः॥

श्री॥एकस्यापि सम्यगनुष्ठानात् कथम् उभयोः फलं विन्देत इति? उच्यते—**यत् साङ्ख्यैः** ज्ञाननिष्ठैः सन्यासिभिः प्राप्यते **स्थानं** मोक्षाख्यं **तत् योगैरपि** ज्ञानप्राप्त्युपायत्वेन ईश्वरे समर्प्य कर्माणि आत्मनः फलम् अनभिसन्धाय अनुतिष्ठन्ति ये ते योगाः योगिनः

आ॥एकमपीत्यस्याभिप्रायमाह—**यत्साङ्ख्यैरिति**। **योगिभिरपि** ज्ञानद्वारा ज्ञानफलं **प्राप्यत** इत्यर्थः ॥ ५ ॥

ज॥योगस्य ज्ञानसाधनत्वे प्रमिते भवेदेतत्, तदेव कथमित्यत उक्तम्—**एकमपीति**। तदनुपपन्नम्, उभयोर्मध्ये सम्यगेकमप्यास्थितः फलं विन्दत इति योजनाया द्वयोः साफल्यमात्रमुच्यते। एकमपि सम्यगास्थितः उभयोः फलं विन्दत इति पक्षे तु द्वयं किञ्चित्फलं प्रति स्वतन्त्रं साधनमुच्यते। पक्षद्वयेऽपि न प्रकृतोपयोग इत्यत आह—**एकमपीति**। एवमनुपयोगेऽपि भगवानेव स्ववाक्याभिप्रायमाह। स ग्राह्य इत्यर्थः। अनेनापि योगस्य ज्ञानसाधनत्वे किं प्रमाणमुक्तमित्यतो व्याचष्टे—**योगिभिरपीति**। 'तरति शोकमात्मवित्' इत्यादिना यज्ज्ञानफलं मोक्षाख्यं प्रमितं, तत्तावद्योगिभिरपि प्राप्यत

रा॥इयान् विशेष इत्याह—

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६**

ता॥ननु 'कर्मयोगो विशिष्यते'इति वचनम्, अत्र वैकल्पिकत्ववचन च कथमुपपद्यते,अत्यन्ततुल्यत्वे हि विकल्प इति शङ्कायां सौकर्यशैघ्र्याभ्यां वैशिष्ट्यम्, फलस्यात्यन्ततुल्यतया च विकल्पः; अधिकारिभेदप्रतिनियतत्वाच्च न दुष्करविलम्बितोपायनैरर्थक्यमित्यभिप्रायेण वैषम्यमुच्यत इत्याह—**इयान्विशेष इत्याहेति।** तुशब्दोऽन्योन्यवैषम्यपरः; 'अयोगतः'इत्यनेन कर्मयोगमन्तरेण ज्ञानयोगस्वरूपमेव न

प्र॰पा ॥ १. गी. ५-२ ॥

शं॥तरपि परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यते इत्यभिप्रायः। अतः एकं साङ्ख्यं च योगं च यः पश्यति फलैकत्वात् स पश्यति सम्यक् पश्यतीत्यर्थः ॥ ५ ॥

एवं तर्हि योगात् संन्यास एव विशिष्यते ; कथं तर्हि इदमुक्तं 'तयोस्तु कर्मसंन्यासात् कर्मयोगः विशिष्यते' इति ? शृणु तत्र कारणम्—त्वया पृष्टं केवलं कर्मसंन्यासं कर्मयोगं च अभिप्रेत्य तयोः अन्यतरः कः श्रेयान् इति । तदनुरूपं प्रतिवचनं मया उक्तं कर्मसंन्यासात् कर्मयोगः विशिष्यते इति ज्ञानम् अनपेक्ष्य। ज्ञानसव्यपेक्षस्तु संन्यासः साङ्ख्यमिति मया अभिप्रेतः । परमार्थयोगश्च स एव । यस्तु कर्मयोगः वैदिकः स च तादर्थ्यात् योगः संन्यास इति च उपचर्यते । कथं तादर्थ्यम् इति? उच्यते—संन्यासस्तु पारमर्थिकः हे महाबाहो दुःखम् आप्तुं प्राप्तुम् अयोगतः योगेन विना । योगयुक्तः वैदिकेन

आ॥इतश्च संन्यासाद्योगो वर इत्याह—संन्यासस्त्विति । योगाभावे मोक्षादिफलं न भवति ; अतः कामजयादिदुःखमेव तस्य मोक्षाद्येव हि फलम्।अन्यत्तत्फलमल्पत्वादफलमेवेत्याशयः । तच्चोक्तं—'विना मोक्षफलं यत्तु न तत्फलमुदीर्यते' इति पाद्मे ।

ज॥ इत्युक्त 'अपाम सोमम्' इत्यादिना; तत्र विचार्यम्—किं द्वयमपि स्वतन्त्रं मुक्तिसाधनम्; उत समुच्चितम्। अथवैकं साक्षान्मोक्षसाधनम्, अपरं तत्साधनत्वेनेति । न प्रथमद्वितीयौ,'नान्यः पन्थाः' इत्यादिविरोधात् । तृतीयेऽपि चिन्त्यं किं कस्य साधनमिति । तत्र न तावज्ज्ञानं कर्मसाधनत्वेन मोक्षहेतुः, 'न किञ्चिदन्तराधाय'इत्यादिविरोधात् । अतः परिशेषाद्योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इति सिद्ध्यति ; तथा च योगस्य ज्ञानसाधनत्वं सिद्धमित्यर्थः । अत्र योगिभिरिति वदता योगशब्दो धर्मिणामुपलक्षकोऽसौ आद्यजन्तो वेति सूचितम् ॥ ५ ॥

सन्यासस्त्वित्यस्य सङ्गतिमाह— इतश्चेति । ननु प्राक् सन्यासाद्योगस्य वरत्वे न कोऽपि हेतुरुक्तः ; तत्कथमेवमुच्यते , मैव, सन्यासस्य योगावरत्वे बाधकं परिहृतम् ; साधकमिदानीमुच्यते। बाधकाभावसहितमेव साधकं वस्तुनो व्यवस्थापकम् । तस्मादितश्चेति युक्तम् । पूर्वं सन्यासस्य निःश्रेयसकरत्वमुक्तम् ; इदानीं कथं दुःखहेतुत्वमुच्यते ; किं वाऽनेन साधकमुक्तमित्यतो व्याचष्टे—योगेति । विष्ण्वर्पणबुद्ध्या करणाभावे संन्यासमात्रेणेति शेषः । आदिपदेन ज्ञानं गृह्यते । तस्य केवलसंन्यासिनः। योगाभावे सन्यासो निष्फल एवेत्येतन्न युज्यते, मोक्षाद्यभावेऽपि तात्कालिकावमानादिदुःखाभावादेर्भावादित्यत आह—**मोक्षादीति** । अत्र पुराणसम्मतिमाह—**तच्चेति** । ननु मोक्षफलाभावेऽपि धान्यादिनैव कृष्यादिकं सफलमित्युच्यते । तत्कथमेवमभिहितमित्यत उक्तं विवृणोति—

रा॥संन्यासः ज्ञानयोगस्तु अयोगतः - कर्मयोगादृते प्राप्तुमशक्यः; योगयुक्तः-कर्मयोगयुक्तः स्वयमेव मुनिः आत्ममननशीलः सुखेन कर्मयोगं साधयित्वा नचिरेण - अल्पेनैव कालेन ब्रह्माधिगच्छति—आत्मानं प्राप्नोति। ज्ञानयोगयुक्तस्तु महता दुःखेन ज्ञानयोगं साधयति, दुःखसाध्यत्वादात्मानं चिरेण प्राप्नोतीत्यर्थः ॥ ६ ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७

ता॥सिद्ध्यतीत्यभिप्रेतम्,तदाह—कर्मयोगादृत इति। 'शक्यमञ्जलिभिः पातुं वाताः'इत्यादिवद्शब्दस्यात्र नपुंसकत्वम्। मुनिशब्दे प्रकृतापेक्षितप्रकृतिप्रत्ययार्थविवरण— मननशील इति। तत्राकर्तृत्वानुसन्धानप्रकरणत्वान्मननस्यात्मविषयत्वोक्तिः स्वयमेव ज्ञानयोगमन्तरेणेत्यर्थः। 'दुःखमाप्तुमयोगतः' इत्येतद्व्यतिरेकानुसन्धानात्—सुखेनकर्मयोगं साधयित्वेत्युक्तम्। 'नचिरेण' इति नञ नित्यान्वये चिरेणाप्यधिगमो न स्यादिति भ्रमस्स्यात्, तद्व्युदासाय—नचिरेणेत्युक्तम्। नैकादिवत् नचिरेण इति समस्तप्रयोगः। ब्रह्मशब्दोऽत्र परिशुद्धात्मस्वरूपलक्षणकर्मयोगाव्यवहितफलविषय इति व्यञ्जनाय—आत्मानं प्राप्नोतीत्युक्तम्।प्राप्तिरिह साक्षात्कारः। एवमव्यवहितात्मप्राप्तिसाधनत्वं वदता प्रकृतस्संन्यासो ब्रह्मशब्देनोच्यत इति शङ्करोक्तं प्रत्युक्तम्। तद्व्यतिरेकेण पूर्वोक्तं पूरयति—ज्ञानयोगयुक्त इति। दुःखसाध्यत्वाद्विलम्बितफलो ज्ञानयोगः; कर्मयोगस्तु सुखसाध्यत्वादविलम्बितफल इति वैषम्यमनेन श्लोकेनोक्तं भवति ॥ ६ ॥

कर्मयोगस्य सुखसाध्यत्वे शीघ्रफलाधिगमे च हेतुरुच्यते—'योगयुक्तः' इति श्लोकेन। पूर्वौ वात्मशब्दौ मनोविषयौ, जितेन्द्रियममभिव्याहारात्। 'योगयुक्तः' इत्यनेनैव सिद्धो विशुद्धमनस्त्वे प्र

पा॥१. श्रीरामायणे, किष्किन्धाकाण्डे. २८ ८ ॥ 'शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः ॥' 'मेघोदरविनिर्मुक्ताः कह्लारसुखशीतलाः।' इत्ययमर्धश्लोकः

शा॥कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तः, मननात् ईश्वररूपस्य मुनिः, ब्रह्म परमात्म*ज्ञानलक्षणत्वात् प्रकृतः संन्यासः ब्रह्म उच्यते, 'न्यास इति ब्रह्म ब्रह्म हि परः' इति श्रुतेः, ब्रह्म परमार्थसन्यासं परमार्थज्ञाननिष्ठालक्षणं नचिरेण क्षिप्रमेव अधिगच्छति प्राप्नोति। अतः मया उक्तं 'कर्मयोगो विशिष्यते इति ॥ ६ ॥

यदा पुनः अयं सम्यग्ज्ञानप्राप्त्युपायत्वेन—योगेन युक्तः योगयुक्तः,विशुद्धात्मा वि

आ॥यस्तु महाफलयोग्यं तस्याल्पं फलमेव न भवति, यथा पद्मरागस्य तण्डुलमुष्टिः। महाफलश्च योगयुक्तश्चेत्संन्यास इत्याह—योगयुक्त इति। मुनिः संन्यासी। तच्चोक्तं—'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इति ॥ ६ ॥

ज्ञा॥यस्त्विति। महाफलं साधयितुं योग्यमित्यर्थः। मोक्षादिग्रहणं प्रकृतापेक्षयैव कृतमिति भावः। ननु संन्यासात् योगस्य वरत्वमनेन साधितं,तत्किमुत्तरार्धनेत्यत आह—महाफलश्चेति। महत्फलं यस्मात्तयोः। योगाङ्गत्वेन वतोऽवरत्वं सन्यासस्य निष्पादयिपितम्। तच्चान्वयव्यतिरेकाभ्यां सिद्ध्यति, तत्र पूर्वार्धेन व्यतिरेकमुक्त्वाऽनेनान्वयमाचष्ट इत्यर्थः। ननु योगोऽप्येवमेवोत चेत्सत्यम्, तथाऽपि चरमभावित्वेन विशेष। नन्वत्र सन्यासवाचकं न श्रूयते, तत्कथमेवमुच्यत इत्यत आह— मुनिरिति। मुनिशब्दस्य कामवर्जनलक्षणसन्यासवाचकत्वं कुत इत्यत आह—तच्चोक्तमिति ॥ ६ ॥

पा॥ *ज्ञाननिष्ठालक्षणत्वात् ॥

रा॥कर्मयोगयुक्तस्तु शास्त्रीये परमपुरुषाराधनरूपे विशुद्धे कर्मणि वर्तमानः तेन विशुद्धमनाः विजितात्मा-स्वाभ्यस्ते कर्मणि व्यापृतमनस्त्वेन सुखेन विजितमनाः, तत एव जितेन्द्रियः कर्तुरात्मनो याथात्म्यानुसन्धाननिष्ठतया, सर्वभूतात्मभूतात्मा-सर्वेषां देवादिभूतानाम् आत्मभूत आत्मा यस्यासौ सर्वभूतात्मभूतात्मा ; आत्मयाथात्म्यमनुसन्दधानस्य हि देवादीनां स्वस्य चैकाकार आत्मा; देवादिभेदानां प्रकृतिपरिणामविशेषरूपतयात्माकारत्वासम्भवात् । प्रकृतिवियुक्तस्सर्वत्र देवादिदेहेषु ज्ञानैकाकारतया समानाकार इति *'निर्दोषं हि समं ब्रह्म' इत्यनन्तरमेव वक्ष्यते । स एवंभूतः कर्म कुर्वन्नपि अनात्म-

ता॥हेतुः—शास्त्रीय इत्यादिनोच्यते। विशुद्धिरत्र रजस्तमोनिवृत्तिस्तन्मूलरागद्वेषादिकषायनिवृत्तिश्च । प्राक्समर्थितं स्मारयति—स्वाभ्यस्ते कर्मणीति। प्रधानस्य मनोनिग्रहस्य वक्तुमुचितत्वात्, 'विजितदेहः' इति परव्याख्यानं मन्दमिति भावः। सर्वेन्द्रियकूटस्थे मनसि जिते बाह्यानीन्द्रियान्तराणि जितानि भवन्तीत्यभिप्रायेण तत एवेत्युक्तम्। सर्वभूतेत्याद्युपपादनाय—कर्तुरित्युक्तम् । प्रथमस्य भूतशब्दस्यात्र देवादिदेहमात्रविषयतां, द्वितीयस्य क्रियात्मतां, विग्रहं च दर्शयति—सर्वेषामिति । भिन्नानामैक्यं हि विरुद्धमित्यत्राह—आत्मयाथात्म्यमिति । अयमभिप्रायः—सत्यं, न स्वरूपैक्यं विधीयते, तस्य प्रत्यक्षानुमानागमपूर्वापरविरुद्धत्वात्, किन्त्वेकाकारत्वं, यथा सर्वस्मिन् गृहे वर्तमानो व्रीहिरयमेवेत्युक्ते तज्जातीयत्वमुक्तं भवति, तद्वदत्रापि सर्वस्मिन् देहे वर्तमानोऽयमेवात्मेतिप्रयोगेऽपि देहान्तरवर्तिनामस्य चात्मनस्समानत्वमुक्तं भवति । ननु समानत्वमपि प्रत्यक्षादिविरुद्धम्, देवतिर्यग्ब्राह्मणक्षत्रियब्रह्मचारिगृहस्थपण्डितापण्डितशक्ताशक्तधनिकदरिद्रस्थविरतरुणादिनिरवधिकवैषम्यनिर्भरत्वादात्मनाम्; अन्यथा 'ब्राह्मणो यजेत' इत्याद्यारम्भपर्यन्तशास्त्रीयप्रयोगोऽपि भज्येतेत्यत्राह—देवादिभेदानामिति। अयम्भावः—सत्यं, देवादिवैषम्यं प्रामाणिकमेव, तत्तु न स्वरूपप्रयुक्तम्, तस्य कर्मोपाधिकप्रकृतिपरिणामभेदनिबन्धनत्वात्; शुद्धाकारविवक्षया तु समानत्वमिहोच्यते' – इति। साम्यस्यात्र विवक्षितत्वे संवादकमनन्तरमेव साम्याभिधानं दर्शयति—प्रकृतिवियुक्त इति । 'कुर्वन्नपि नलिप्यते' इत्यत्र न तावन्निषिद्धं कुर्वन्नपि न दुष्टो भवतीत्युच्यते, तथा सति यदृच्छाकारिप्रसङ्गात्; न च कर्मयोगं कुर्वन्नपि तेनैव न लिप्यत इति, तथा च सति निष्फलप्रयासत्वेन तस्याननुष्ठानप्रसङ्गात्। अतोऽत्र न केवलं ज्ञानयोगनिष्ठः, अपि तु कर्मयोगं कुर्वन्नप्यात्मसाक्षात्काराख्यफलविरोधिना केनचिन्न लिप्यत इत्येवार्थं इत्यभिप्रायेण—अनात्म-

प्र-पा ॥ *गी. ५-१९ ॥ १ शत०ब्राह्म०. ५-का. १-अध्या. ५-ब्रा. २-वा ॥

शं॥शुद्धसत्त्वः, विजितात्मा विजितदेहः, जितेन्द्रियः च, सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानाम् आत्मभूतः आत्मा प्रत्यक्चेतनो यस्य सः सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः, स तत्रैव वर्तमानः लोकसङ्ग्रहाय कर्म कुर्वन्नपि ॥ लिप्यते न कर्मभिः बध्यते इत्यर्थः ॥ ७ ॥

आ॥एतदेव प्रपञ्चयति—योगयुक्त इति । सर्वभूतात्मभूतः परमेश्वरः, यच्चाप्नोतीत्यादेः; स आत्मभूतः स्वसमीपं प्रत्यादानादिकर्ता यस्य सर्वभूतात्मभूतात्मा ॥ ७ ॥

ज॥प्रकृतप्रमेयस्य समाप्तत्वादुत्तरस्य वैयर्थ्यमाशङ्क्याह—एतदेवेति। योगयुक्तस्य संन्यासस्य महाफलत्वमेव। प्रपञ्चनं च 'यो न द्वेष्टि' इत्यत्रोक्तद्वेषादिवर्जनकारणोपन्यासेन 'ब्रह्माधिगच्छति' इत्यत्रोक्तब्रह्मज्ञानानन्तरफलोपन्यासेन चेति ज्ञातव्यम् । 'सर्वभूतात्मभूतात्मा' इत्यनेन जीवस्य परमात्मस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह—सर्वेति । सर्वभूतानामात्मभूतः कथमित्यत उक्तं—यच्चेति । एतन्निर्वच-

पा ॥ *वित्तः ॥

रा॥न्यात्माभिमाने न नलिप्यते न सम्बध्यते । अतोऽचिरेणात्मानं प्राप्नोतीत्यर्थः ॥ ७ ॥

यतस्सौकर्याच्छ्रैष्ठ्याच्च कर्मयोगएव श्रेयान्, अतस्तदपेक्षितं शृणु—

नैवकिञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्छृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपञ्छ्वसन् ॥ ८
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९

एवमात्मतत्त्ववित् श्रोत्रादीनि ज्ञानेन्द्रियाणि, वागादीनि च कर्मेन्द्रियाणि, प्राणाश्च स्वविषयेषु वर्तन्त इति धारयन् अनुसन्दधानो नाहं किञ्चित्करोमीति मन्येत,

ता॥न्यात्माभिमानेनेत्याद्युक्तम्।'नैव किञ्चित्करोमि'इत्यादिकं ह्यनन्तरमुच्यत इति भावः।'न लिप्यते' इत्यत्र सवासनसम्बन्धनिषेधो विवक्षित इत्याह—न सम्बध्यत इति। प्रस्तुतार्थतया निगमयति—अत इति ॥ ७ ॥

एवमर्जुनस्य परिपृच्छतस्साक्षात्प्रश्नस्योत्तरमुक्तम्, अथ तदाचार्यान्दो भगवत आभिप्रायिकं वा क्यमुत्तरसङ्गत्यर्थं दर्शयति—यत इति । युक्तोऽत्र योगनिष्ठः, तत्त्ववित् तदन्तर्गतात्मतत्त्वविज्ञानवान्, तदाह—एवमात्मतत्त्वविदिति । 'पश्यन्' 'शृण्वन्' 'स्पृशन्' 'जिघ्रन्' 'अश्नन्' इति चक्षुश्श्रोत्रत्वग्घ्राणजिह्वाख्यज्ञानेन्द्रियव्यापाराः । 'गच्छन्' 'प्रलपन्' 'विसृजन्' 'गृह्णन्' इति पादादि कर्मेन्द्रियव्यापाराः । तत्र 'विसृजन्' इति पायूपस्थव्यापारसङ्ग्रहः । उक्तं च 'पायूपस्थे विसर्गार्थमिन्द्रिये तुल्यकर्मणी। विसर्गं च पुरीषस्य विसर्गं चाभिकामतः' इति। 'स्वपन्' 'श्वसन्' 'उन्मिषन्' 'निमिषन्' इति तु प्राणव्यापाराः । स्वापस्य तमोवृत्तित्वेऽपि प्राणाधीनत्वं सिद्धम् । 'उन्मिषन्' 'निमिषन्' इति तु व्यानाख्यप्राणव्यापारः । 'श्वसन्' इति तु प्राणसमानप्राणविशेषव्यापारः । 'गृह्णन्'इति पाणिव्यापारेरोऽपि अपानव्यापारस्यापि तन्त्रेण ग्राहकः । 'तैदपाननानि गृह्यस्तदावयत्तस्य एषोऽन्नस्य ग्रहो यद्वायुः' इति । एवं विभागज्ञापनाय—श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि च कर्मेन्द्रियाणि प्राणाश्चे त्युक्तम् । इन्द्रियशब्दोऽत्र सर्वेन्द्रियप्रवृत्त्यादिहेतुतया प्राणसंवादादिषु प्रसिद्धं मुख्यप्राणमजहल्लक्षणया लम्भयतीति तात्पर्यम् । 'इन्द्रियार्थेषु' इत्येतदपि तथैव लक्षकमिति व्यञ्जनाय—स्वविषयेष्वित्युक्तम् ।

प्र पा ॥ १ गी ५८ ॥
२

३.

शा॥न च असौ परमार्थतः करोतीत्यतः—नैव किञ्चित् करोमीति युक्तः समाहितः सन् मन्येत चिन्तयेत्, तत्त्ववित् आत्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित् परमार्थदर्शीत्यर्थः । कदा कथं वा तत्त्वम् अवधारयन् मन्येत इति? उच्यते—पश्यन्निति। मन्येत इति पूर्वेण सम्बन्धः । तस्य एवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मसु अकर्मैव पश्यतः सम्यग्दर्शिनः सर्वकर्मसन्यासे एव अधिकारः, कर्मणः अभावदर्शनात् । न हि मृग

आ॥सन्यासं स्पष्टयति

जा॥नमाश्रित्य न स्वरूपत्वमित्यर्थः ।स आत्मभूत इति'सर्वभूतात्मभूत'इत्युक्तस्यानुवादः ।स्वसमीपमित्यादि द्वितीयात्मशब्दस्यार्थः । एवं चानन्यत्र विवक्षितः ॥ ७ ॥

'नैव किञ्चित्'इत्यादेः प्रतिपाद्यमाह—सन्यासमिति। 'ज्ञेय' इत्यादिना 'विशुद्धात्मा'इत्यादिना

रा॥ज्ञानैकस्वभावस्य मम कर्ममूलेन्द्रियप्राणसम्बन्धकृतमीदृशं कर्तृत्वं न स्वरूपप्रयुक्तमिति मन्येतेत्यर्थः ॥ ९ ॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १०

ब्रह्मशब्देन प्रकृतिरिहोच्यते। 'मम योनिर्महद्ब्रह्म' इति हि वक्ष्यते,। इन्द्रियाणां प्रकृतिपरिणामविशेषरूपत्वेन इन्द्रियाकारेणावस्थितायां प्रकृतौ 'पश्यञ्शृण्वन्' इत्याद्युक्तप्रकारेण कर्म ब्रह्मण्याधाय फलसङ्गं त्यक्त्वा नैव किञ्चित्करोमीति यः कर्माणि करोति, सः

ता॥नन्विन्द्रियप्राणेष्वकर्तृषु कर्तृत्वाध्यासः स्वस्याकर्तृत्वबुद्धिश्च भ्रान्तिरेव स्यात्; आत्मन एव कर्तृत्वस्य 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिभिः स्थापितत्वादित्यत्राह—ज्ञानैकस्वभावस्येति । कर्मणा मिथ्यात्वानुसन्धानमिह परोक्तमयुक्तम्, 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते' इत्यस्याप्यननुसन्धेयत्वप्रसङ्गात्। मुक्तस्य स्वेच्छागृहीतेन्द्रियादिव्यवच्छेदायोपाधीनामप्यौपाधिकत्वव्यञ्जनाय च—कर्ममूलशब्दः। ईदृशमिति—पुण्यपापरूपमित्यर्थः । अत्र 'तत्त्ववित्' इति निरुपाधिकस्वरूपपरत्वात्, 'कार्यकारण' इत्यादाविव न चिदचिद्व्यापारविभागोक्तिः ॥ ८ ॥ ९ ॥

नन्वेव फलाभिसन्धिपूर्वकेऽपि कर्मणि क्रियमाणे 'नैव किञ्चित्करोमि' इति भावनया तत्करणेऽपि न दोषस्स्यात्; यदि च परमार्थतः स्वस्यैव कर्तृत्वं किं तस्यौपाधिकत्वानुसन्धानेन प्रयोजनम्; तथानुसन्धानेऽपि प्रकृतिसंसर्गादेवैन देहात्मभ्रमे निमज्जयेदिति शङ्का निराक्रियते—'ब्रह्मणि' इति श्लोकेन। न तावदत्र ब्रह्मशब्देन जीव उच्यते, तत्कर्तृत्वतिरस्कारप्रकरणत्वात्। नापि परं ब्रह्म, औपाधिकत्वप्रतिपादनप्रकरणे तदनपेक्षणात्, अनन्तरं च 'सर्वकर्माणि मनसा' इति श्लोकेन देहकर्तृत्वाभिसन्धानाभिधानात्। अतः पूर्वोक्तस्यार्थस्य आकाङ्क्षितफलनिर्देशपरत्वोपपत्तेः, ब्रह्मशब्दोऽत्रेन्द्रियाकारपरिणतप्रकृतिगोचरः। भवति हि प्रकृतिकार्येऽपि ब्रह्मशब्दप्रयोगः 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इति। तदेतदखिलमभिप्रेत्याह—ब्रह्मशब्देनेति। ब्रह्मशब्दस्य प्रकृतौ प्रयोगं भगवद्गीतायामेवोदाहरति—मम योनिरिति। भवतु प्रकृतौ ब्रह्मशब्दः, प्रस्तुतस्य किमायातमिति शङ्कायां पूर्वश्लोकार्थन्यायाभ्यामुपबृंहितं वाक्यार्थमाह—इन्द्रियाणामिति। ननु बृहत्त्वगुणात्प्रयोगबलाच्च मूलप्रकृतिर्ब्रह्मशब्देनोच्यताम्, तत्र दर्शनश्रवणादिकर्तृत्वानुसन्धानमशक्यम्, मूलप्रकृतिरूपे तद्धेतुत्वाभावादिति शङ्कानिराकरणाय-अवस्थितायामित्यन्तमुक्तम्। औपचारिकोऽपि कारणविषयः प्रयोगो द्रव्यैक्यात्कार्यमपि गोचरयेदिति भावः । कर्माणीति बहुवचनं पूर्वोक्तवैविध्यपरमिति प्रदर्शनायोक्तं—पश्यञ्शृण्वन्नित्याद्युक्तप्रकारेणेति । 'यः करोति' इत्यात्मन्येव कर्तृत्वनिर्देशात्तदौपाधिकत्वस्मारणाय पूर्वोक्तमाकृष्टं—नैव किंचित्करोमीति । पापशब्दोऽत्र

प्र-पा ॥ १. शारी. २-३-३३ ॥ २. भावनाकरणेऽपि. पा॥ ३. गी. ५-१३॥ ४. मुण्डकोप. १-१-१०. २८७-पुटे. व्याख्यातम्॥

शं॥तृष्णिकायाम् उदकबुद्ध्या पानाय प्रवृत्तः उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते ॥ ८ ॥ ९ ॥

यस्तु पुनः अतत्त्ववित् प्रवृत्तश्च कर्मयोगे—ब्रह्मणि ईश्वरे आधाय निक्षिप्य 'त-

आ ॥ पुनः श्लोकद्वयेन ॥ ८ ॥ ९ ॥

ज ॥ च स्पष्टीकृतत्वात्—पुनरिति । स्पष्टं च प्रागनुक्तसङ्कल्पत्यागस्याभिधानात् ॥ ८ ॥ ९ ॥

रा॥प्रकृतिसंसृष्टतया वर्तमानोऽपि प्रकृत्यात्माभिमानरूपेण बन्धहेतुना पापेन न लिप्यते। पद्मपत्रमिवाम्भसा-यथा पद्मपत्रमम्भसा संसृष्टमपि न लिप्यते, तथा न लिप्यत इत्यर्थः ॥ १० ॥

त॥देहात्मभ्रमविषयः'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा' इत्यादिषु चात्मान्यथाज्ञानस्य पापत्वं प्रसिद्धम्; आत्मनोऽकर्तृत्वानुसन्धानप्रकरणे तन्निवृत्तिरेव वक्तुमुचितेत्यभिप्रायेण—प्रकृत्यात्माभिमानरूपेणेत्युक्तम्।बन्धहेतुनेति।बन्ध पापलक्षणद्योतनम्। अलौकिकमनिष्टफलासाधारणकारणं हि पापम्।प्रयुक्तश्च पापशब्दोऽनेकेष्वर्थेषु,यथा'नैं सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति। ननु पद्मपत्रमम्भसा संसृष्टं कथमत्र दृष्टान्तइत्यत्राह—यथेति। न संसर्गमात्रनिषेधायायं दृष्टान्तः, किंतु यथा पद्मपत्रस्य जन्मस्थित्यादिकं सर्वमम्भसैव, तथापि न तत्कार्यं क्लेदादिः, तद्वत् प्रकृत्यधीनभोगस्थित्यादेरस्य तत्कार्यदेहात्मभ्रमादिर्न स्यादिति भावः ॥ १० ॥

प्र पा॥१.भारते,आदि ७४-२८॥ †'योऽन्यथा सन्तमात्मानम्' य-अन्यथाभूतम्, देहेन्द्रियादिभ्यो विलक्षणं ज्ञानानन्दादिस्वरूपम्, भगवदत्यन्तपारतन्त्र्यस्वरूपवा, आत्मानम् जीवात्मानम्, अन्यथा प्रकारान्तरेण, 'देवोऽहं मनुष्योऽहम्' इत्यादिप्रकारम्, 'ईश्वरोऽहम्' इत्यादिप्रकारञ्च, प्रतिपद्यते अनुमन्यते, तेन मूर्खेण, आत्मापहारिणा चोरेण किं न कृतं पापं; महापातकादि सर्वं तेनैव कृतमित्यर्थः । ईश्वरविषये तु, अन्यथा सन्तमात्मानम् - जगज्जन्मादिकारणभूतं, निखिलहेयप्रत्यनीकानवधिकातिशयज्ञानानन्दैकरूपं पुरुषोत्तमं, नारायणम्, अन्यथा-प्रकारान्तरेण, 'ईश्वर एव नास्ति, निर्विशेषं ब्रह्म, स एव भ्रमति' इत्यादिरूपम् । शेषं पूर्ववत् । इति यामुनाचार्यम् ॥

६. छा ८-४-१॥ †'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम् । सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः । य आत्मा स सेतुर्विधृति पूर्वखण्डोक्तलक्षणः परमात्मा सेतुरिव विधारकः । किमर्थं सेतुर्विधृतिरित्यत्राह — 'एषां लोकानामसम्भेदाय' इति । असम्भेदः असङ्करः । तरतिः प्राप्तिवचनः, 'वेदान्तं तरति' इतिवत् । एनं परमात्मसेतुम्, अहोरात्रे परिच्छेदके येन न प्राप्नुतः, जरादिकमपि न प्राप्नोति । सर्वे पाप्मानोऽतो निवर्तन्ते श्रावकादिषु पाप्मशब्दस्यामुख्यत्वेऽपि सुकृतदुष्कृतयोर्लोकवदमुख्यत्वनिष्टसाधनत्वलक्षणपापशब्दप्रवृत्तिनिमित्तसद्भावात् पाप्मशब्दो मुख्यः'इति लघुसिद्धान्तव्याख्यानकम् । तत्र हेतुमाह—अपहतपाप्मा ह्येष ब्रह्मलोक इति। ब्रह्मरूपो लोक एष अपहतपाप्मा हि। हिर्हेतौ, यस्मात् अपहतपाप्मा, तस्मात् सर्वे पाप्मानोऽतो निवर्तन्त इत्यर्थः ॥

म॥'ईश्वरार्थं कर्म करोमि' इति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्गं त्यक्त्वा

ना॥सन्यासयोगयुक्त एव च कर्मणा न लिप्यत इत्याह—ब्रह्मणीति । साधननियमस्योपचारत्वव्यावृत्त्यर्थं पुनःपुनः फलकथनम् ॥ १० ॥

श्री॥ननु'योगयुक्तः'इत्यनेन यत्सन्यासयोगयुक्तस्य कर्मालेपलक्षणं फलमुक्तम्,तदेव तस्य'ब्रह्मण्याधाय'इति किमर्थं पुनरुच्यत इत्यत आह—सन्यासेति।प्रागुक्तस्यैव नियमोऽत्र क्रियते।सिद्धे सत्यारम्भस्य नियमार्थत्वादिति भावः।योगविवरणं च किञ्चिदधिकमिति चार्थः। ननु 'सन्यासस्तु' इत्यनेनैव सन्यासयोगौ मिलितावेव फलं साधयत इति नियमोऽपि लब्ध एव, तत्किमर्थमिदं सन्यासयोगयुक्तस्य 'कुर्वन्नपि न लिप्यते' 'लिप्यते न स पापेन' इति पुनःपुनः फलकथनमित्यत आह—साधनेति। साधननियमस्येति तदुक्तेरित्यर्थः । सन्यासयोगौ मिलितावेव फलसाधनमिति नियमोक्तेरुपचारत्वमपि सम्भवति लोकवत्, तन्निवृत्त्यर्थमित्यर्थः ॥ १० ॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ११

रा॥कायमनोबुद्धीन्द्रियसाध्यं कर्म स्वर्गादिफलसङ्गं त्यक्त्वा योगिन आत्मविशुद्धये कुर्वन्ति-आत्मगतप्राचीनकर्मबन्धविनाशाय कुर्वन्तीत्यर्थः ॥ ११ ॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२

युक्तः-आत्मव्यतिरिक्तफलेष्वचपलः, आत्मैकप्रवणः कर्मफलं त्यक्त्वा केवलमा

ता॥एवमुक्तार्थदृढीकरणाय शिष्टाचारसिद्धतोच्यते—कायेनेतिश्लोकेन । बुद्धिरत्र कृत्यध्यवसायः। 'केवलैः' इति कर्तृत्वाभिमानत्यागो विवक्षितः।अथवा ममत्वबुद्धिविषयतारहितैरित्यर्थः।तदा'कायेन'इत्यादौ केवलेनेत्यादि परिणाम्यम् ।यद्वा कायशब्देन कर्मेन्द्रियवर्गस्यापि लक्षणया सङ्ग्रहणात् 'केवलैरिन्द्रियैः'इति ज्ञानेन्द्रियाण्युच्यन्ते; तेषां च केवलत्वं वचनादानादिकर्मरहितत्वम्; ततश्च 'धर्मश्श्रुतो वा दृष्टो वा' इत्यादिकमपि सूचितं भवति।आत्मशुद्धेरेव फलतया निर्देशात्, निष्फलप्रवृत्त्ययोगाच्च—स्वर्गादिफलसङ्गमित्युक्तम्। शुद्धिर्हि केनचिद्दूषितस्यापेक्षिता;न च दोषोऽत्र स्वतश्शुद्धस्याप्यात्मनोऽनादिकालकृतमात्मतत्त्वसाक्षात्कारविरोधि कर्मेत्यभिप्रायेणाह—आत्मगतेति ॥ ११ ॥

एकस्यैव कर्मणो बन्धहेतुत्वं मोक्षहेतुत्वं च फलसङ्गतदभावादिरूपसहकारिविशेषाधीनमिति इतीममर्थं विशदयति—'युक्तः'इति श्लोकेन।अत्र युक्तशब्देन समाहितचेतस्त्वमुच्यते,तच्चात्र फलान्तरविरक्तिपूर्वकमात्मप्रावण्यमेवेति व्यञ्जनाय-आत्मव्यतिरिक्तेत्याद्युक्तम्।कर्मफलंत्यक्त्वेति वचनात्कर्मस्वरू-

प्र-पा॥ १. भारते. आश्वमेधिकपर्वणि. ९४-२९. ॥ अनुमोदितो वा राजेन्द्र पुनाति पुरुषं सदा ॥' गप
†'धर्म. श्रुतो वा दृष्टो वा कथितो वा कृतोऽपि वा । श्लोकस्तु तालकोशेऽस्मि न मुद्रितकोशे दृश्यते ॥

श॥करोति यः,लिप्यते न स पापेन सम्बध्यते पद्मपत्रमिव अम्भसा उदकेन।केवलं सत्त्वशुद्धिमात्रमेव फलं तस्य तत्कर्मणः स्यात् ॥ १० ॥

यस्मात्—कायेन देहेन मनसा बुद्ध्या च केवलैः इन्द्रियैरपि ममत्ववर्जितैः 'ईश्वरायैव करोमि, न मम फलाय' इति ममत्वबुद्धिशून्यैः इन्द्रियैरपि, केवलशब्दः कायादिभिरपि प्रत्येकं सम्बध्यते, सर्वव्यापारेषु ममतावर्जिताः योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयम् आत्मशुद्धये सत्त्वशुद्धये इत्यर्थः।तस्मात् तत्रैव तव अधिकारः इति कुरु कर्मैव ॥ ११ ॥

यस्माच्च—युक्तः 'ईश्वराय कर्माणि करोमि न मम फलाय' इत्येवं समाहितः सन्

आ॥एवं चाचार इत्याह—कायेनेति ॥ ११ ॥

पुनर्युक्त्यादिनियमनार्थं युक्तायुक्तफलमाह—

ज्ञा॥'कायेन' इत्यनेनापि सन्यासयोगयुक्तस्यात्मशुद्धिलक्षणः पापालेप उच्यत इत्यत आह—एवं चेति। उभयसमुच्चयरूप एवेत्यर्थः । अन्यत्र तात्पर्यान्न पुनरुक्तिरिति भावः। आचारकथनमपि नियमसमर्थनार्थमिति ज्ञातव्यम् ॥ ११ ॥

तथाऽपि 'युक्तः' इत्येतत् पुनरुक्तमित्यत आह—पुनरिति । युक्तिर्योगः। आदिपदेन संन्यासः। युक्तायुक्तेत्युपलक्षणम्। सन्यास्यसंन्यासीत्यपि ग्राह्यम् । प्राक् सन्यासयोगौ मिलितावेव फलं साधयतो

रा॥त्मशुद्धये कर्मानुष्ठाय नैष्ठिकीं शान्तिमाप्नोति-स्थिरामात्मानुभवरूपां निर्वृतिमाप्नोति । अयुक्तः आत्मव्यतिरिक्तफलेषु चपलः आत्मावलोकनविमुखः कामकारेण फले सक्तः कर्माणि कुर्वन् नित्यं कर्मभिर्बध्यते नित्यसंसारी भवति । अतः फलसङ्गरहित इन्द्रियाकारेण परिणतायां प्रकृतौ कर्माणि संन्यस्य आत्मनो बन्धमोचनायैव कर्माणि कुर्वीतेत्युक्तं भवति ॥ १२ ॥

अथ देहाकारेण परिणतायां प्रकृतौ कर्तृत्वसंन्यास उच्यते—

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥** १३

आत्मनः प्राचीनकर्ममूलदेहसम्बन्धप्रयुक्तमिदं कर्मणां कर्तृत्वम्, न स्वरूपप्रयुक्त-

ता॥नानुष्ठान पूर्वोक्तमिहार्थसिद्धं दर्शितम्। नैष्ठिकीं शान्तिमित्यनेन साक्षान्मोक्षप्रतीतिस्स्यात्, तद्व्युदासायाह स्थिरामिति।प्रकरणलब्धोऽयं विशेषः।निष्ठाया भवतीति नैष्ठिकी।'कामकारेण' इति न स्वैरचारो विवक्षितः, तस्य दूरनिरस्तत्वात्, अतः कामकर्तृकं प्रेरणं कामकारः, तेन यथाभिमतफलसङ्गमात्रं विवक्षितमित्याह—कामकारेण फले सक्त इति। निबध्यत इत्यत्रोपसर्गेण नितरां बन्धो विवक्षित इति दर्शयति —नित्यसंसारी भवतीति । वर्तमानव्यपदेशाद्वा तथा विवक्षा ॥ १२ ॥

'नैव किंचित्करोमि' इत्यादेः 'फले सक्तो निबध्यते' इत्यन्तस्य सङ्कलितार्थमुत्तरश्लोकसङ्गत्यर्थमाह—अत इति । अनन्तरश्लोकार्थमाह—अथेति। शरीराश्रितेन्द्रियप्राणेषु कर्तृत्वसंन्यासाभिधानादनन्तरं तदाश्रयं शरीरं एव कर्तृत्वसंन्यास उच्यत इति सङ्गतिः। शरीरे कर्तृत्वसंन्यासं प्रति करणत्वोक्तस्य मनसः करणीभावानुगुणव्यापारं दर्शयितुम्—आत्मन इत्याद्युक्तम् । नहि देवादिदेहसम्बन्धमात्रकृतं पुण्यपापकर्तृत्वं, तत्सम्बन्धमात्रस्य कर्मसम्बन्धेऽपि सद्भावात्, अतः —प्राचीनकर्ममूलेत्युक्तम्।

प्र. पा ॥ १ गी ५ ८ ॥ २. गी ५ १२ ॥

घ॥कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्याम् आप्नोति नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः।यस्तु पुनः अयुक्तः असमाहितः कामकारेण करणं कारः कामस्य कारः कामकारः,तेन कामकारेण कामप्रेरिततयेत्यर्थः,'मम फलाय इदं करोमि कर्म' इत्येवं फले सक्तः निबध्यते।अतः त्वं युक्तः भव इत्यर्थः॥

यस्तु परमार्थदर्शी सः—सर्वाणि कर्माणि सर्वकर्माणि मनसा संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च तानि सर्वाणि कर्माणि मनसा विवेकबुद्ध्या,कर्मादौ अकर्मदर्शनेन संन्यस्येत्यर्थः,आस्ते तिष्ठति सुखम्।त्यक्तवाङ्मनःकायचेष्टः निरायासः प्रसन्नचि-

आ॥युक्त इति । युक्तो योगयुक्तः ॥ १२ ॥

पुनः संन्यासशब्दार्थं स्पष्टयति—

ज्ञानान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तम्, इदानीं तु तावेव मोक्षसाधनम्, न तु तदुभयत्यागेनान्यदिति नियमज्ञापनाय योगसंन्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाहेत्यर्थः । युक्तशब्दस्य अहितार्थनिवारणायार्थमाह—युक्त इति ॥ १२ ॥

'सर्वकर्माणि' इत्यस्य स्वरूपेण कर्मत्यागोऽर्थ इति प्रतीतिनिवारणाय प्रतिपाद्यमाह—पुनरिति। प्राक् कर्तृत्वाभिमानत्याग उक्तः, इदानीं कारयितृत्वाभिमानत्यागोऽपीति स्पष्टनम् । स्वरूपेण कर्म-

रा॥मिति विवेकविषयेण मनसा सर्वाणि कर्माणि नवद्वारे पुरे सन्न्यस्य देही स्वयं वशी देहाधिष्ठानप्रयत्नमकुर्वन् देहं च नैव कारयन् सुखमास्ते ॥ १३ ॥

---

ता॥मुख्यैस्सप्तभिरर्वाग् द्वाभ्यां चाल नवद्वारता 'पुरमेकादशद्वारम्'इति श्रुतौ तु नाभिब्रह्मरन्ध्राभ्यां सहैकादशद्वारतोक्तिः।**पुरे संन्यस्येति**—पुरस्यसंन्यसनक्रियाधिकरणत्वेनान्वयः प्रकृतानुपयुक्त इतिभावः। 'नवद्वारे पुरे' इति निर्देशस्सावयवत्वानिरवयवत्वसच्छिद्रत्वनिश्छिद्रत्वपृथुत्वाणुत्वस्वतन्त्रत्वपरतन्त्रत्वनियन्तृत्वनियन्तव्यत्वादिभिर्देहात्मनोर्विवेकस्य प्रदर्शनार्थः। **स्वयमिति**—देहादिपारतन्त्र्यरहित इत्यर्थः; यद्वा परिशुद्धेन स्वेन रूपेणेति भावः। **वशी**—अभिमानबलात्काराद्यविषय इत्यर्थः। प्रयत्नाश्रयत्वशरीरस्पन्दनादिहेतुत्वयोरौपाधिकत्वात्—'नैव कुर्वन्' इत्याद्युक्तम्। **सुखमास्ते**—कर्तृत्वाभिमानप्रयुक्त-

---

प्र-पा॥१. कठोप. २-५-१ ॥ †'पुरमेकादशद्वारमजस्यावक्रचेतसः। अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते। एतद्वैतत् ॥' पुरमिति जननादिक्रियारहितस्य ऋजुबुद्धेर्विवेकिन. आत्मन एकादशेन्द्रियलक्षणबहिर्निर्गमद्वारोपेतं शरीराख्यं पुरं भवति। पुरस्वामिनो यथा पुरं विविक्तं भवति, तथा शरीरमपि स्वात्मनो विविक्तयज्ञातं भवति। अविवेकिनस्तु देह आत्मैव भवतीति भावः। अनुष्ठाय न शोचति-विविच्यज्ञानन् देहानुबन्धिभिर्दुःखैः, कामादिभिश्च विमुक्तो भवतीत्यर्थः। विमुक्तश्च विमुच्यते-जीवद्दशायाम् आध्यात्मिकादिदुःखरागद्वेषादिविमुक्त एव सन् 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' इति न्यायेन प्रारब्धकर्मावसाने देहादिना विरजां प्राप्य प्रकृतिसम्बन्धविमुक्तो भवतीत्यर्थः। एतद्वैतत्-एतन्मन्त्रप्रतिपाद्यमुक्तस्वरूपमपि परमात्मकमेवेत्यर्थः। इति रङ्गरामानुजीयम् ॥

---

शां॥स्तः आत्मनः अन्यत्र निवृत्तसर्वबाह्यप्रयोजनः इति'सुखम् आस्ते'इत्युच्यते।वशी जितेन्द्रिय इत्यर्थः। क आस्ते इति? आह—नवद्वारे पुरे। सप्त शीर्षण्यानि आत्मन उपलब्धिद्वाराणि, अर्वाक् द्वे मूत्रपुरीषविसर्गार्थे, तैः द्वारैः नवद्वारं पुरम् उच्यते शरीरं, पुरमिव पुरम्, आत्मैकस्वामिकं, तदर्थप्रयोजनैश्च इन्द्रियमनोबुद्धिविषयैः अनेकफलविज्ञानस्य उत्पादकैः पौरैरिव अधिष्ठितम्। तस्मिन् नवद्वारे पुरे देहे सर्वं कर्म संन्यस्य आस्ते॥

किं विशेषणेन? सर्वो हि देही संन्यासी असंन्यासी वा देहे एव आस्ते, तत्र अनर्थकं विशेषणम्। उच्यते—यस्तु अज्ञः देही देहेन्द्रियसङ्घातमात्रात्मदर्शी स सर्वोऽपि 'गेहे भूमौ आसने वा आसे' इति मन्यते। न हि देहमात्रात्मदर्शिनः 'गेहे इव देहे आसे' इति प्रत्ययः संभवति। देहादिसङ्घातव्यतिरिक्तात्मदर्शिनस्तु 'देहे आसे' इति प्रत्ययः उपपद्यते। परकर्मणां च परस्मिन् आत्मनि अविद्यया अध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते। उत्पन्नविवेकविज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेहे इव देहे एव नवद्वारे पुरे आसनं, प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देहे एव आस्ते इति अस्त्येव विशेषणफलं, विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात्॥

यद्यपि कार्यकरणकर्माणि अविद्यया आत्मनि अध्यारोपितानि संन्यस्य आस्ते इत्युक्तम्; तथापि कृतसंन्यासस्य आत्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यात् इति आशङ्क्य आह—नैव कुर्वन् स्वयं, न च कार्यकरणानि कारयन् क्रियासु प्रवर्तयन्। किं यत् तत् कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायि सत् संन्यासात् न सम्भवति, यथा गच्छतो गतिः? किं वा स्वत एव आत्मनः न अस्ति इति? अत्र उच्यते—न अस्ति

रा॥साक्षादात्मनः स्वाभाविकरूपमाह—

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४

अस्य देवतिर्यङ्मनुष्यस्थावरात्मना प्रकृतिसंसर्गेण वर्तमानस्य लोकस्य देवाद्यसाधारणं कर्तृत्वं तत्तदसाधारणानि कर्माणि तत्तत्कर्मजन्यदेवादिफलसंयोगं च अयं प्रभुरकर्मवश्यः स्वाभाविकस्वरूपेणावस्थित आत्मा न सृजति नोत्पादयति । कस्तर्हि ?

---

ता॥क्लेशादिरहित आस्त इत्यर्थः । पुरामिव शरीरं, पौरानिवेन्द्रियाणि, सार्वभौममिव परमात्मानं, भृत्यमिव स्वात्मानं पश्यतो भवति हि स्वास्थ्यम् । देहात्मभ्रमे हि पुरादिष्वासीनोऽहमिति मन्यते । तन्निवृत्तौ च देह एव पुरस्थानीयो भवतीति भावः ॥ १३ ॥

एवमौपाधिकस्य स्वरूपस्योपाधिषु संन्यास उक्तः । अथ स्वस्मिन्ननुसन्धेयस्वाभाविकरूपमुच्यत इति मत्वाभिप्रायेणाह—साक्षादिति । विचित्रकर्तृत्वविषयेण 'लोकस्य' इत्यनेनाभिप्रेतमुपाधिवैचित्र्यादिकं दर्शयितुम्—अस्येत्याद्युक्तम् । कर्तृत्वं प्रयत्नादिरूपम्, कर्माणि शरीरेन्द्रियादिचेष्टा । यद्यात्मना स्वाभाविकमिदं कर्तृत्वादिकं, तदा सर्वात्मैकरूपं तत्स्यात्, न च तथा दृश्यत इत्यभिप्रायेण देवाद्यसाधारणं कर्तृत्वमित्याद्युक्तम् । देवाद्यसाधारणं देवत्वादिजातिमत्पिण्डपरिग्रहदशाप्रतिनियतमित्यर्थः । फलसंयोगः फलानुभवः । प्रकरणवशात् प्रभुशब्दोऽत्र जीवविषय इति प्रदर्शनार्थम्—अयं प्रभुरित्युक्तम् । जीवे प्रभुशब्दाभिप्रेतमाह—अकर्मवश्यः स्वाभाविकस्वरूपेणावस्थित इति । अत्र हि प्रकरणे 'मायं सन्याण' इत्यादिना जीवस्य कर्तृत्वं परमात्मन्यभ्यस्यते, अतोऽत्रास्तु विषयः प्रभुशब्दो न परविषय इति भावः । न सृजतीत्यत्र 'सृज विसर्गे' इति धातोस्त्यागार्थत्वे कर्तृत्वादित्रयं स्वीकरोतीति वाक्यार्थः स्यादिति तद्व्युदासायाह—नोत्पादयतीति । कारणान्तरादर्शनात् तस्यैव कर्तृत्वमित्यभिप्रायेण चतुर्थपादस्य शङ्कामाह—कस्तर्हीति । सृजतीति शेषः । स्वभावशब्दः प्रकरणोपयुक्तविशेषे स्थाप

प्र० पा० ॥ १ औपाधिक उभयपरी ॥

---

शा॥आत्मनि स्वतः कर्तृत्वं कारयितृत्वं वा । उक्तं हि 'अविकार्योऽयमुच्यते' 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इति, 'ध्यायतीव लेलायतीव' इति श्रुतेः ॥ १३ ॥

विश्व—न कर्तृत्वं स्वयं कुरु इति नापि कर्माणि रथघटप्रासादादीनि ईप्सिततमानि लोकस्य सृजति उत्पादयति प्रभुः आत्मा । नापि रथादि कृतवतः तत्फलेन संयोगं कर्मफलसंयोगम् उत्पादयति । यदि किञ्चिदपि स्वयं न करोति न कारयति च देही, कः तर्हि कुर्वन् कारयंश्च प्रवर्तते इति ? उच्यते—स्वभावस्तु स्वो भावः स्वभावः अविद्या

---

आ॥सर्वकर्माणीति । मनसेति विशेषणादभिमानत्यागः ॥ १३ ॥

न च करोति वस्तुत इत्याह—

---

जा॥त्याग एवोच्यत इत्येतदभिप्रेत्याचष्टे—मनसेति । अन्यथा तद्वैयर्थ्यं स्यादिति भावः ॥ १३ ॥

ननु कर्तृत्वमिथ्येन त्यागः न तत्र विशिष्यत इत्यत आह—न चेति । दर्शनादिकं कुर्वन्नेव नैव किञ्चित्करोमि इति मन्येतेत्युक्तम्, तर्हि मिथ्याज्ञानी प्रसज्येतेत्याशङ्कानिरासाय परमेश्वरप्रेरितः कुर्वन् कारयन् वस्तुतः स्वातन्त्र्येण न करोति, न कारयति चेत्यनेनाहेत्यर्थः । अस्य जीवविषयत्वे प्रभुरित्येतदसम्भवी

र्या ॥ स्वभावस्तु प्रवर्तते-स्वभावः—प्रकृतिवासना ; अनादिकालप्रवृत्तपूर्वपूर्वकर्मजनितदेवाद्याकारप्रकृतिसंसर्गकृततत्तदात्माभिमानजनितवासनाकृतमिदं कर्तृत्वादिकं सर्वं न स्वरूपप्रयुक्तमित्यर्थः ॥ १४ ॥

नादत्ते कस्य चित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५

कस्यचित्-स्वसम्बन्धितयाऽभिमतस्य पुत्रादेः पापं-दुःखं नादत्ते-नापनुदति, कस्यचित् प्रतिकूलतयाऽभिमतस्य सुकृतं-सुखञ्च नादत्ते-नापनुदति ; यतोऽयं विभुः-न क्वाचित्कः न देवादिदेहाद्यसाधारणदेशः, अतएव न कस्यचित्सम्बन्धी, न कस्यचित् प्रतिकूलश्च । सर्वमिदं वासनाकृतम् । एवंस्वभावस्य कथमियं विपरीतवासनोत्पद्यते ?

ता ॥ किं तु वाच्यं तदाह—प्रकृतीति । ननु चेतनस्यात्मनः कर्तृत्वादिकं नास्ति, अचेतनायास्तु वासनाया अचेतनगुणमात्रभूतायाः कर्तृत्वादिकमिति कथमिदं शक्यते ; यद्यात्मनः स्वतश्शुद्धस्य न कर्तृत्वं, तर्हि तस्य वासनापि कुतस्समागता ; यदि न कुतश्चित्, तदा वासनैव स्वाभाविकीति तत्कृतकर्तृत्वादिकमपि स्वाभाविकं स्यात् ; यदि कुतश्चिद्धेतोः, तदा तस्यापि स्वाभाविकत्वे पूर्वदोषः ; औपाधिकत्वे तत्कर्तुरात्मनस्तदागमोऽपि कुतः ; यदि वासनया, तर्ह्यन्योन्याश्रयणम् ; यद्यन्यस्मात्कुतश्चित्, तत्रापि तथैवेत्यनवस्थेत्यादिचोद्यनिरसनाय तुशब्दः । तदाह —अनादिकालेति । बीजाङ्कुरन्यायादन्योन्याश्रयादिपरिहारः । वासनाहेतुवैचित्र्यसिद्ध्यर्थं —देवाद्याकारेत्याद्युक्तम् । यथा तप्तायःपिण्डे वह्निसंसर्गाद्वह्निबुद्धिः ; तथात्रेति दर्शयितुं —संसर्गकृतशब्दः । वासनाकृतं — वासनाख्यविशेषहेतूपाधिकमित्यर्थः ॥

आत्मनोऽकर्तृत्वादिकस्य, वासनायाः कर्तृत्वादिकस्य च विवरणं 'नादत्ते' इति श्लोकस्यार्धद्वयम् । परगतपापसुकृतयोरादानप्रसङ्गाभावात्तत्प्रतिषेधोऽनुचितः ; अतस्तत्कार्ये दुःखं सुखं च लक्ष्यते, तत्रापि परगतसुखदुःखयोस्स्वस्मिन्नाकर्षणस्य शक्यत्वात्तदपनयनमात्रं विवक्षितमित्यभिप्रायेणाह— कस्यचिदिति । कस्यचिदित्यनेन सूचितमपनोदनहेतुविशेषं दर्शयितुं-स्वसंबन्धितयाभिमतस्येत्याद्युक्तम् । 'आदत्ते' इत्यस्य करोत्याद्यर्थत्वानौचित्यादपहरणार्थत्वे च प्रयोगादपहरणनिषेधनैव तुल्यतया करणनिषेधसिद्धेः-नापनुदतीति व्याख्यातम् । विभुरिति न परिमाणविशेषाद्यभिप्रायम्, जीवस्याणुतया श्रुत्यादिसिद्धेः । नापि प्रभुत्वपरम्, अत्रानुपयुक्तत्वात् । अतस्तत्तत्कर्मानुकूलतत्तद्देहानुप्रवेशयोग्यतामात्रं प्रतिनियतदेशराहित्यं विवक्षितम् । अतएव आगन्तुकेषु मित्रामित्रादिषु सम्बन्धित्वं प्रतिकूलत्वं च आगन्तुकानां तत्तद्देहानामेव, न त्वात्मन इति सिध्यति । ततश्च चानुकूलप्रतिकूलपुरुषविषयदुःखाद्यपनयनमौपाधिकमित्यायातम् । तदेवं कार्याभावोऽर्थविकहेत्वभावप्रतिपादनपरो विभुशब्द इत्यभिप्रायेणाह—यतोऽयमिति । उत्तरार्धोत्थानाय शङ्कते—एवंस्वभावस्येति । विपरीतवासना —स्वभावविरुद्धवासनेत्यर्थः । अत्रोत्तरम्—

प्र-पा ॥ १. जायताति. पा ॥

---

सं ॥ लक्षणा प्रकृतिः माया प्रवर्तते 'दैवी ह्येषा गुणमयी' इति वक्ष्यमाणा ॥ १४ ॥

परमार्थतस्तु—न आदत्ते न गृह्णाति भक्तस्यापि कस्यचित् पापं । न चैव आदत्ते सुकृतं भक्तैः प्रयुक्तं विभुः । किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादि च सुकृतं प्रयुज्यते इति ? आह—अज्ञानेन आवृतं ज्ञानं विवेकविज्ञानं, तेन मुह्यन्ति 'क-

---

आ ॥ न कर्तृत्वमिति । प्रभुर्हि जीवो जडमपेक्ष्य ॥ १४ ॥ १५ ॥

---

ज ॥ तत आह—प्रभुर्हीति । अनेन विभुरित्युत्तरादित्यमायम् ॥ १४ ॥ १५ ॥

रा ॥ अज्ञानेनावृतं ज्ञानं ज्ञानविरोधिना पूर्वपूर्वकर्मणा स्वफलानुभवयोग्यत्वाय अस्य ज्ञानमावृतं-सङ्कुचितम्; तेन ज्ञानावरणरूपेण कर्मणा देवादिदेहसंयोगस्तत्तदात्माभिमानरूपमोहश्च जायते । ततश्च तथाविधात्माभिमानवासना, तदुचितकर्मवासना च; वासनातो विपरीतात्माभिमानः, कर्मारम्भश्चोपपद्यते ॥ १५ ॥

*'सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि' †'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा' ‡'नहि ज्ञानेन सदृशं पवित्रम्' इति पूर्वोक्तं स्वकाले सङ्गमयति—

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६

ता॥'अज्ञानेनावृतं ज्ञानम्' इति। 'अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा । संसारतापानखिलानवाप्नोत्यतिसंततान् । तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते ' इति भगवत्पराशरवचनमनुसरन्नाह—ज्ञानविरोधिनेति । अत्र नञस्तदन्यतदभावार्थत्वमावरणानुपयुक्तमितिभावः। स्वफलेत्यादि—न्यूनभावसङ्कुचितज्ञानस्संसारतापानुभवयोग्य इतिभावः।अत्यन्तविलोपपरिहारायावरणशब्दोपचरितमाह —संकुचितमिति। 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादिश्रुतिसिद्धमनेन स्मारितम्।देवादिदेहसंयोग इति जन्तुशब्दाभिप्रेतोऽर्थः। स च मोहजनने कर्मणो द्वारम्। शङ्कोत्तरत्वमाह—ततश्चेति। आत्मनि प्रतिषिद्धस्येश्वानिष्टाचरणस्यान्यहेतुतामाह—वासनात इति ॥ १५ ॥

एवं तृतीयाध्यायोक्ताकर्तृत्वानुसन्धानस्य प्रकारविशेषाः प्रतिपादिताः ; अथ चतुर्थाध्यायोक्तस्य ज्ञानविशेषस्य विशोधनं क्रियत इत्यभिप्रायेणाह—सर्वमिति । स्वकाले—अकर्तृत्वानुसन्धानप्रकारक्रम-प्रा॥ *गी.४-३६॥ †गी. ४-३७॥ ‡गी. ४ ३८॥

१ वि. पु ६-८-६१, ६२, ६३ ॥ † परा विष्णुशक्ति 'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।' (६-७-५६) इत्यादिनोक्ता, क्षेत्रज्ञाख्याऽपरा 'हिरण्यगर्भो भगवान्' (६ ७ ५६) इत्यादिनोक्ता-इत्याह—'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा' इति । अथ यागादिकर्माख्यमविद्यापर्यायं विष्णोः शक्त्यन्तरमाह—अविद्याकर्मसंज्ञान्येति ॥ ६१ ॥ तत्स्वरूपमाह—यया क्षेत्रज्ञशक्तिरिति । सर्वगा-कर्मनिमित्तनवशरीरगा ॥६२॥ तारतम्येन-ज्ञानानन्दतारतम्येन ॥६३॥ तारतम्यमेव दर्शयति-अप्राणवत्सु स्वल्पासा स्थावरेषु ततोऽधिका । सरीसृपेषु तेभ्योऽपि ह्यतिशक्त्या पतत्रिषु' इति । शिलाकाष्ठादिषु सा क्षेत्रज्ञशक्तिः स्वल्पा । ज्ञानानन्दादिना, न स्वरूपेण । सरीसृपेभ्योऽप्यभिवृद्धेति शेषः । अतिशक्त्या अतिज्ञानशक्त्याऽधिकत्वेन । अप्राणवत्सु-अनभिव्यक्तप्राणेषु ॥

२. बृ ६-३-३० ॥ † 'यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न (हि) विज्ञातुर्विज्ञातेः विपरिलोपो विद्यते अविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यत् विभक्तं यद्विजानीयात्'-सुषुप्तस्य प्रत्यगात्मनो बाह्यान्तरज्ञानाभावः किंनिबन्धन इत्याशङ्क्याह—यद्वैतमिति । तैतत्-बाह्यमान्तरं वा, स्वातिरिक्तं वस्तु सुषुप्तो जीवो न विजानातीति यत्, तत् विजानन्वै न विजानाति वै इत्यर्थः। सन्-विजानन् कथं विज्ञानवत्त्वमित्यत्राह—नहि विज्ञातुरिति । ज्ञातुर्धर्मभूतज्ञानस्य नित्यत्वात् विनाशो नास्तीत्यर्थः । तर्हि सुषुप्तौ कथमविज्ञानमिति तत्राह—न तु तद्द्वितीयमस्तीति । ज्ञानस्वरूपाभावनिबन्धनो बाह्यान्तरद्वितीयज्ञानाभावो न भवति, अपि तु ततो विभक्तस्य प्राज्ञात्मनः पृथक्सिद्धस्यान्यस्य बाह्यान्तररूपद्वितीयवस्तुनोऽभावादेवानुकूलपदार्थाज्ञानमित्यर्थः । अस्याः श्रुतेरर्थं विस्तरेणोपनिषद्भाष्ये द्रष्टव्यः ॥

द्या॥'रोमि कारयामि भोक्ष्ये भोजयामि' इत्येव मोहं गच्छन्ति अविवेकिनः संसारिणो जन्तवः ॥ १५ ॥

ग ॥ एवं वर्तमानेषु सर्वेष्वात्मसु येषामात्मनामुक्तलक्षणेनात्मयाथात्म्योपदेशजनितेन आत्मविषयेण अहरहरभ्यासाधेयातिशयेन निरतिशयपवित्रेण ज्ञानेन तज्ज्ञानावरणमनादिकालप्रवृत्तानन्तकर्मसंचयरूपमज्ञानं नाशितम्, तेषां तत्स्वाभाविकं परं ज्ञानमपरिमितमसंकुचितमादित्यवत्सर्वं यथावस्थितं प्रकाशयति । तेषामिति नष्टाज्ञानानां बहुत्वाभिधानादात्मस्वरूपबहुत्वम्; "न त्वेवाहं जातु नासम्" इत्युपक्रमावगतमत्र स्पष्टतरमुक्तम्। नचेदं बहुत्वमुपाधिकृतं, विनष्टाज्ञानानामुपाधिगन्धाभावात् । 'तेषामादित्यवज्ज्ञानम्' इति व्यतिरेकनिर्देशात्, ज्ञानस्य स्वरूपानुबन्धिधर्मत्वमुक्तम् ;

ता॥थनादनन्तरं ज्ञानस्वरूपकथनावसरइत्यर्थः। यद्वा 'तद्विद्धि प्रणिपातेन'इत्यत्र 'उपदेक्ष्यन्ति' इतिस्वेनैव निर्दिष्टे विपाककालइत्यर्थः । एवं वर्तमानेषु—मुह्यत्स्वपीत्यर्थः । यद्वा कर्मयोगनिष्ठेष्वित्यर्थः । अज्ञानेन ज्ञानमावृतं चेत्, कथं ज्ञानेन तस्य नाशइति शङ्कां व्यवच्छिन्दता तुशब्देन द्योतितं ज्ञानस्य विशेषं दर्शयितुम्—उक्तलक्षणेनेत्यादि निरतिशयपवित्रेणेत्यन्तमुक्तम् । आत्मनो ज्ञानेनेत्यन्वयः । आत्मविषयेणेति—'आत्मनः' इतिषष्ठ्याःसम्बन्धसामान्यमात्रपरत्वं, कर्तृविषयत्वचात्रानुपयुक्तमिति भावः । तच्छब्दपरामृष्टप्रकारमाह—ज्ञानावरणमिति। अज्ञानस्वरूपस्यातिगहनत्वसूचनार्थम्, निरतिशयपवित्रस्य ज्ञानभास्वतो निःशेषाज्ञानतिमिरकुक्षिंभरित्वप्रदर्शनार्थंच—अनादिकालेत्याद्युक्तम् । उत्तरार्धगततच्छब्दार्थः—स्वाभाविकमिति । सामानाधिकरण्यस्वारस्यात्परमिति ज्ञानविशेषणम्; तदर्थमाह—अपरिमितमसंकुचितमिति। ज्ञानस्य परत्वं ह्यनवच्छिन्नविषयत्वम् ;तत्र च हेतुस्संकोचाभाव इत्यभिप्रायः। सर्वमिति प्रकाशयतेरर्थसिद्धकर्मोक्तिः। अज्ञाननिवृत्तौ च ज्ञानस्य सर्वगोचरत्वं श्रौतमिति भावः । 'आदित्यवत्' इतिदृष्टान्तसामर्थ्यसिद्धमाह—यथावस्थितमिति । एतेन परमित्यत्र पदमिति विशेष्याध्याहारः।परमार्थतत्त्वमितिविवक्षा च परोक्ता निरस्ता। भेदव्यपदेशबलादद्वैतमतस्योपक्रमविरोधः प्रागुक्तः।मध्येऽपि सएव तात्त्विको भेदः स्पष्टमुपदिश्यतइति तस्य तात्पर्यविषयत्वं दर्शयति—तेषामिति। विनष्टाज्ञानानामिति—नहीदं बहुत्वं भ्रान्तिसिद्धमुपाधिसिद्धं वा वक्तुं शक्यमिति भावः।सत्यमिथ्योपाधिकृतभेदवादिनोर्भास्करशङ्करयोर्मतमनूद्य परिहरति—नचेदमिति । मिथ्याभूतस्याज्ञानाख्योपादानस्य विनाशे तदुपात्तमिथ्याभूतान्तःकरणाद्युपाधेरपि निवृत्तेरिति शङ्करं प्रति हेत्वर्थः। इतरं प्रत्यज्ञानशब्दवाच्यस्य कर्मादेर्विनाशे तन्निमित्तशरीरान्तःकरणाद्युपाधिनिवृत्तिरित्यर्थः । शंकरमतदूषणप्रसङ्गे तदुक्तं ज्ञानमात्रात्मवादं दूषयितुं शुद्धदशायां ज्ञातृत्वमत्र सिद्धमिति दर्शयति—तेषामिति । संबन्धविषयतया षष्ठी व्यतिरेकगर्भेति—व्यतिरेकनिर्देशादित्युक्तम्।विनष्टोपाधीनामात्मनां धर्मतया निर्देशात् ।

प्र-पा ॥ *गी. २-१२ ॥ १. गी. ४ ३४ ॥

शं॥ज्ञानेन तु येन अज्ञानेन आवृता मुह्यन्ति जन्तवः तत् अज्ञानं येषां जन्तूनां विवेकज्ञानेन आत्मविषयेण नाशितम् आत्मनः भवति,तेषां जन्तूनाम् आदित्यवत् यथा आदित्यः समस्तं वस्तुजातम् अवभासयति तद्वत् ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति तत् परं परमार्थतत्त्वम् ॥ १६ ॥

आ ॥ ज्ञानमेवाज्ञाननाशकमित्याह—

ज॥ननु ज्ञानस्याज्ञाननाशकत्वमर्थप्रकाशकत्वं च प्रसिद्धमेव, तत्किमर्थमुच्यत इत्यत आह—ज्ञानमेवेति। 'अज्ञानेनावृतं ज्ञानम्' इत्युक्तम्। एवं तर्हि तस्याविनाश एव स्यात् । तथा च न कदाचिद्ब्रह्मप्रकाशः ; विनाशकान्तराङ्गीकारे च ज्ञानार्थयोः सन्यासयोगयोर्वैयर्थ्यमित्याशङ्क्य ज्ञानमेवाज्ञाननाश-

या॥आदित्यदृष्टान्तेन च ज्ञातृज्ञानयो प्रभाप्रभावतोरिवावस्थान चा तत एव संसारदशाया ज्ञानस्य कर्मणा संकोचः मोक्षदशाया विकासश्चोपपन्न ॥ १६ ॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७

तद्बुद्धय तथाविधात्मदर्शनाध्यवसाया , तदात्मान तद्विषयमनस , तन्निष्ठा तदभ्यासनिरता , तत्परायणा तदेव परमप्रयोजनमिति मन्वाना , एवमभ्यस्यमानेन

ता॥ज्ञानस्य स्वरूपानुबन्धित्वासिद्धरागन्तुकचैतन्यवादोऽपि निरस्त । आदित्यशब्दोऽत्रादित्यप्रभापर , प्रभाद्वारणैवादित्यस्य प्रकाशकत्वात् धर्मभूतज्ञाने च सैव दृष्टान्तो भावनुमर्हति,'यथा न क्रियते ज्योत्स्ना मलप्रक्षालना मणे । दोषप्रहाणान्न ज्ञानमात्मन क्रियते तथा' इत्यादिसाम्याच्च, तदेतदभिप्रेत्य तत्स्तितमाह—आदित्यदृष्टान्तेनेति । तेन प्रस्तुतस्य किमित्यत्राह—तत एवेति । यथा प्रभाया आवारकसंनिधौ संकोचस्तन्निवृत्तौ पुनर्विकासश्च दृश्यते, तथा ज्ञानस्यापीति भाव । यद्वा तेषामादित्यवदवस्थितानां प्रभातुल्य ज्ञानमित्यर्थ । प्रभाया प्रदीपादित्याद्यपृथक्सिद्धतेनाद्रव्यत्वनिराकरण, ज्ञानस्यात्मधर्मत्वेऽपि द्रव्यत्व संकोचविकासयोगित्वादीनि च शारीरकभाष्ये प्रपञ्चितानि । एव प्रभातुल्यद्रव्यत्वापादनेन प्रकृतमावृतत्वादिक युज्यत इत्याह—तत एवेति ॥ १६ ॥

आत्मानुभवसौधसोपानस्य ज्ञानस्यारोहणक्रम दर्शयति— तद्बुद्धय इति श्लोकेन । तच्छब्देनात्र पूर्वप्रस्तुतस्वाभाविकस्वस्वरूप पूर्वश्लोकोक्त ज्ञान वा परामृश्यत इत्यभिप्रायेण—तथाविधात्मदर्शनाध्यवसाया इत्युक्तम् । 'तदात्मान' इत्यनेन द्रष्टव्यत्वाध्यवसायादनन्तरो दर्शनार्थप्रवृत्तियोग उच्यत इत्यभिप्रायेण—तद्विषयमनस इत्युक्तम् । तन्निष्ठ त्व विषयान्तरवैमुख्यात्तत्परायणत्वे हेतु । अयनशब्दोऽत्र कर्मणि ल्युडन्त प्राप्यपर । वाक्यार्थज्ञानादिमात्रव्यावृत्त्यर्थम्—एवमभ्यस्यमानेनेत्युक्तम् । प्रातिप्रतिबन्धककल्मषनिवृत्तिमुखेनान्त्यपर्व । अतोऽत्र तिम प्राप्यमत्रापुनरावृत्तिशब्देन विवक्षितम् ,

प्र पा ॥ १ वे गुभमें १०४ ५५ ॥ ८० पुं दृष्टव्यम् ।

---

श॥यत् पर परमार्थतत्त्व ज्ञानप्रकाशित—तस्मिन् ब्रह्मणि गता बुद्धि येषा ते तद्बुद्धय , तदात्मान तदेव पर ब्रह्म आत्मा येषा ते तदात्मान , तन्निष्ठा निष्ठा अभिनिवेश तात्पर्यं सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येव अवस्थान येषा ते तन्निष्ठा , तत्परायणा च तदेव परम् अयन परा गति येषा भवति ते तत्परायणा केवलात्मरता इत्यर्थ । ते गच्छन्ति एवंविधा अपुनरावृत्तिम् अपुनर्देहसम्बन्ध ज्ञाननिर्धूतकल्मषा य

---

आ ॥ ज्ञानेनेति ॥ प्रथमज्ञान परोक्षम् ॥ १६ ॥

---

ज॥कम्,अतो नोत्तदोष , किं तु स्वरूपज्ञानमविद्याऽऽवृतम्। वृत्तिज्ञाने त्वविद्या शिथिलयति । ब्रह्म प्रकाशयतीत्येतदनेनाहेत्यर्थ । अत्र कश्चिदेक एवादित्योऽन्धकार नाशयति, भूमण्डल च प्रकाशयति, तथैकमेव ज्ञानमज्ञाने निवर्तयति,पर च प्रकाशयतीति व्याचक्षते,तदसदिति भावेनाह—प्रथमेति।तृतीयान्तपदात् द्वितीयमपरोक्षमिति शेष अन्यथा द्वितीयग्रहण व्यर्थं स्यादिति भाव ॥ १६ ॥

तद्बुद्धीत्यादिक यद्यपुनरावृत्तिसाधनत्वेनोच्यते, तदाऽपरोक्षज्ञानादेव मोक्ष इति गत पक्ष ,अथ 'तद्बुद्धय ज्ञाननिर्धूतकल्मषा ' इति ज्ञानसाधनत्वेन तदसत्,ज्ञानेनेति परोक्षज्ञानस्यापरोक्षज्ञानसाध

गा॥ज्ञानेन निर्धूतप्राचीनकल्मषाः तथाविधमात्मानमपुनरावृत्तिं गच्छन्ति। यदवस्थादात्मनः पुनरावृत्तिर्न विद्यते,स आत्मा अपुनरावृत्तिः,स्वेनरूपेणावस्थितमात्मानं गच्छन्तीत्यर्थः॥

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥ १८**

**विद्याविनयसंपन्ने, केवलब्राह्मणे, गोहस्तिश्वश्वपचादिष्वत्यन्तविषमाकारतया प्र-**

ता॥स च यथावस्थित आत्मैवेत्यभिप्रायेण—तथाविधमात्मानमिति। अपुनरावृत्तिशब्दस्याक्षानुदिष्टावयवान्तरपरामर्शमपेक्ष्य भागान्तरव्युदासेनात्मविशेषणत्वायाह—यदवस्थादिति। नन्वात्मन एव 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति पुनरावृत्तिरुच्यते; यदवस्थादितिनायुक्त, मोक्षस्याप्यवस्थाविशेषत्वे नित्यत्वायोगात्पुनरावृत्तिप्रसङ्गादित्यत्राह—स्वेनरूपेणेति। औपाधिकसमस्ताकारनिवृत्तिरूपावस्थाविनाशकासम्भवात्परमतेऽपि प्रध्वंसरूपत्वादनिवर्त्येति भावः॥ १७॥

कीदृशोऽयमात्मसाक्षात्कार इत्याकाङ्क्षायां 'येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' इति प्रागुक्तं व्यनक्ति—'विद्याविनय' इतिश्लोकेन। 'विद्याविनयसम्पन्ने ब्राह्मणे' इति पदद्वयं न समानाधिकरणं, निर्विशेषणसमुदायसहपठितत्वाद्विद्याविनयसम्पन्नविशेषणप्रतियोग्यनुक्तेश्च। 'गवि हस्तिनि' इत्याकारवैषम्यं द्वाभ्यां दर्शितम्; श्वश्वपचशब्दाभ्यां वृत्त्या वैषम्यम्; तद्वत्पूर्वाभ्यामपि मिथो वैषम्यमेवाभिप्रेतम्; अतो 'ब्राह्मणे' इति ब्राह्मणत्वजात्याक्रान्ततामात्रं विवक्षितमिति दर्शयति—केवलब्राह्मण इति। सात्त्विकराजसतामसरूपानेकोदाहरणाभिमतमाह— अत्यन्तविषमेति। आत्मस्विति—शरीराणामन्योन्यवैषम्यनिषेधो दुश्शक इति भावः। अत्र समदर्शित्वोपयुक्तमूहापोहक्षमत्वं पण्डितत्वमिति दर्शयितुम्—आत्मयाथात्म्यविद इत्युक्तम्। समं द्रष्टुं शीलं येषां ते समदर्शिनः। ननु प्रत्यक्षसिद्धं शरीरवैषम्यम्; शरीरिणामपि तत्तद्विशिष्टत्वात्तत्कृतज्ञानादिवैषम्यं च दुरपह्नवम्;अतोऽत्यन्तविषमेषु पदार्थत्या-

प्र·पा॥ १. गी. ९-२१॥　　२ गी ४-३५॥

श॥ श्लोकेन ज्ञानेन निर्धूतः निहतः नाशितः कल्मषः पापादिसंसारकारणदोषः येषां ते ज्ञाननिर्धूतकल्मषाः यतयः इत्यर्थः॥ १७॥

येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्ति इति? उच्यते—विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ, विनयः उपशमः, ताभ्यां संपन्नः विद्वान् विनीतश्च यो ब्राह्मणः तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनः—विद्याविनयसंपन्ने उत्तमे संस्कारवति ब्राह्मणे सात्त्विके, मध्यमायां च राजस्यां गवि संस्कारहीनायाम्,अधमे च केवलतामसे हस्त्यादौ,सत्त्वादिगुणैः तज्जैश्च संस्कारैः तथा राजसैः तथा तामसैः च संस्कारैः अत्यन्तमेव असंस्पृष्टं समम्

आ॥ अपरोक्षज्ञानाव्यवहितसाधनमाह—तद्बुद्धय इति॥ १७॥

परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं

ज॥नन्वेनोक्तत्वादित्यत आह—अपरोक्षेति। सत्यम्,परोक्षज्ञानमपरोक्षज्ञानसाधनम्;किं तु व्यवहितम्, न हि श्रवणमननानन्तरमेवापरोक्षज्ञानमुत्पद्यते। इदं त्वव्यवहितसाधनमाहेत्यर्थः॥ १७॥

'विद्याविनय' इत्यादिप्रकृतानुपयुक्तमयुक्तं च कथमुच्यत इत्यत आह परमेश्वरेति।सर्वत्र ब्राह्मणादिषु स्थितानां सर्वत्र गुणेषु दोषाभावेषु वा साम्यं तारतम्याभावः।'तद्विद्धि' इत्यादिना सहास्य समुच-

रा॥नीयमानेष्वात्मसु पण्डिताः-आत्मयाथात्म्यविदः, ज्ञानैकाकारतया सर्वत्र समदर्शिनः; विषमाकारस्तु प्रकृतेः, नात्मनः; आत्मा तु सर्वत्र ज्ञानैकाकारतया सम इति पश्यन्तीत्यर्थः ॥ १८ ॥

इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९

इहैव, साधनानुष्ठानदशायामेव - तैस्सर्गो जितः - संसारो जितः, येषामुक्तरीत्या

ता॥ विवक्षितं सामान्यमभिव्यक्तुमित्यत्राह—विषमाकारस्त्विति । 'प्रकृतेः' इति सम्बन्धसामान्ये षष्ठी । तेन साक्षात्प्रकृतिगतं देवत्वादिकं, तत्प्रयुक्तं सुखित्वादिकञ्च कथञ्चित्सम्बन्धमात्रात्—प्रकृतेरित्युक्तम् । न शरीरगतं वैषम्यं प्रतिषिध्यते, किन्तु तदेवात्र प्रतिपाद्यते, न च तत्तच्छरीरविशिष्टत्वलक्षणं, तन्मूलज्ञानसङ्कोचादिलक्षणं वा वैषम्यमपह्नूयते ; अपि तु तस्यौपाधिकत्वमुच्यते। न च शरीरादिविशिष्टत्वविरोधि, स्वाभाविकस्वरूपसाम्यमात्रपरत्वात् । न चैतदत्यन्तस्थूलं, शुद्धानामात्मनां स्वरूपभेदस्य दुर्विवेचत्वात्स्फुटविशेषाकारान्तराभावादिति भावः । ननु तथापि ब्राह्मणादिषु पूज्यत्वादिसाम्यबुद्धौ अभोज्यान्नत्वादिदोषस्स्मृतस्तत्राह—आत्मा त्विति ॥ १८ ॥

इदानीं समदर्शित्वं न कालान्तरभाविफलसाधनमात्रं, किन्त्विदानीमेव निःश्रेयसकल्पां क्लेशनिवृत्तिं दिशतीति समदर्शिनां प्रशंसा क्रियते—इहैवेति श्लोकेन । साधनानुष्ठानदशायामेवेति—इहशब्दस्यात्र लोकपरत्वादपि स्वावस्थाविशेषपरत्वमेवोचितमिति भावः। संसारो जित इति—मुक्तप्राया इत्यर्थः। सृष्ट्यादेरजानन्त्यात्सर्गशब्दस्सृज्यत इति व्युत्पत्त्या संसारपरः। ब्राह्मणचण्डालादीनां स्पृश्यत्वादिसाम्यप्रसङ्गव्युदासाय—उक्तरीत्येत्युक्तम् । निरुपाधिकात्मस्वरूपं ज्ञानैकाकारतया सममिति

प्र पा ॥ १. न च शरीरादिविशिष्टत्वविरोध पा॥ २ दुर्विवेचत्वात् पा॥ ३ संसारवाचकः पा॥

शा॥एकम् अविक्रियं तत् ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः ॥ १८ ॥

ननु अभोज्यान्नाः ते दोषवन्तः, 'समासमाभ्यां विषमसमे पूजातः' इति स्मृतेः । न ते दोषवन्तः । कथम्?—इह एव जीवद्भिरेव तैः समदर्शिभिः पण्डितैः जितः वशीकृतः सर्गो जन्म, येषां साम्ये सर्वभूतेषु ब्रह्मणः समभावे स्थितं निश्चलीभूतं मनः अन्तःकरणम् । निर्दोषं—यद्यपि दोषवत्सु श्वपाकादिषु मूढैः तद्दोषैः दोषवत् इव विभाव्यते, तथापि तद्दोषैः असंस्पृष्टम् इति निर्दोषं दोषवर्जितं हि यस्मात्, नापि स्वगुणभेदभिन्नं, निर्गुणत्वात् चैतन्यस्य। वक्ष्यति च भगवान् इच्छादीनां क्षेत्रधर्मत्वम्, 'अनादित्वान्निर्गुणत्वात्' इति च । नापि अन्त्या विशेषा आत्मनो भेदकाः सन्ति, प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेः । अतः समं ब्रह्म एकं च । तस्मात् ब्रह्मणि एव ते स्थिताः । तस्मात् न दोषगन्धमात्रमपि तान् स्पृशति, देहादिसङ्घातात्मदर्शनाभिमानाभावात् तेषाम् । देहादिसङ्घातात्मदर्शनाभिमानवद्विषयं तु तत् सूत्रं 'समासमाभ्यां विषमसमे पूजातः' इति,

आ॥चापरोक्षज्ञानसाधनमित्याशयवानाह—विद्येति ॥ १८ ॥

ऊ॥नार्थश्शब्दः परमेश्वरविषयता 'निर्दोषं हि' इत्युत्तरवाक्यगम्या। अपरोक्षज्ञानसाधनता च प्रकरणगम्येत्यतः-आशयवानित्युक्तम्।पण्डितशब्दस्तु परोक्षज्ञानवचनः,'पाण्डित्यमागमज्ञानम्' इति वचनात्॥
ननूत्तरवाक्ये साम्यदर्शनं मुक्तिसाधनमेवोच्यते, तत्कथमुच्यते—अपरोक्षज्ञानसाधनमिति । प्रा-

रा॥सर्वेष्वात्मसु साम्ये स्थितं मनः। निर्दोषं हि समं ब्रह्म - प्रकृतिसंसर्गदोषवियुक्ततया सममात्मवस्तु हि ब्रह्म। आत्मसाम्ये स्थिताश्चेद्ब्रह्मणि स्थिता एव ते; ब्रह्मणि स्थितिरेव हि संसारजयः; आत्मसु ज्ञानैकाकारतया साम्यमेवानुसन्दधाना मुक्ता एवेत्यर्थः ॥ १९ ॥

येन प्रकारेणावस्थितस्य कर्मयोगिनस्समदर्शनरूपो ज्ञानविपाको भवति, तं प्रकारमुपदिशति—

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २०

यादृशदेहस्थस्य यदवस्थस्य प्राचीनकर्मवासनया यत्प्रियं भवति, यच्चाप्रियं, तदुभयं प्राप्य हर्षोद्वेगौ न कुर्यात्। कथं? स्थिरबुद्धिः - स्थिरे आत्मनि बुद्धिर्यस्य सः स्थिरबुद्धिः,असम्मूढः-अस्थिरेण शरीरेण स्थिरमात्मानमेकीकृत्य मोहः सम्मोहः,तद्रहितः;तच्च

ता॥पूर्वभाष्योक्तप्रकारेणेत्यर्थः। नन्वात्मन्येव स्थितिस्संसारजयहेतुः न तु तत्साम्ये;तत्राह—'निर्दोषं हि समंब्रह्म'इति। ब्रह्मत्वमेव विधेयम्,अन्यथा 'तस्माद्ब्रह्मणि ते स्थिताः'इत्यनन्वयात्; समदर्शिनो ब्रह्मणि स्थिताः, समस्य ब्रह्मत्वात्—इति ह्यन्वयस्स्यात्; ततश्चोक्तचोद्यपरिहार इत्यभिप्रायेणाह—आत्मवस्त्विति। ततः किं प्रकृतस्येत्यत्राह—ब्रह्मणिस्थितिरिति। ब्रह्मशब्दोऽत्र शुद्धात्मनि ब्रह्मसाम्यात्। अत्र फलित पिण्डितार्थमाह—आत्मस्विति ॥ १९ ॥

प्रियाप्रिये, तदधीनहर्षोद्वेगौ च देहतदवस्थाद्युपाधिभेदनिबन्धनाविति व्यञ्जयितुं—यादृशदेहस्थस्ययदवस्थस्येत्याद्युक्तम्। यदवस्थस्येत्येतद्देहादिकृतज्ञानसङ्कोचाद्यवस्थाविषयं वा। प्रियाप्रियरूपकारणागमे तत्कार्यहर्षोद्वेगनिवृत्तिर्दुश्शकेत्यभिप्रायेणाह—कथमिति। तत्रोत्तरं—स्थिरबुद्धिरिति। समानाधिकरणसमासादप्युपयोगातिशयादत्र व्यधिकरणसमास उपपन्न इत्यभिप्रायेणाह—स्थिरे आत्मनीति। 'असम्मूढः' इत्यत्र समित्युपसर्ग एकीकारपरः; एवंविधस्थिरबुद्धित्वासम्मूढत्वयोर्हेत्वाकाङ्क्षां दर्शयति—तच्चकथमिति। स्थिरबुद्धित्वासम्मूढत्वे द्वे अपि सङ्कलय्य तदिति परामृश्यते। 'ब्रह्मविद्ब्रह्मणि

शं॥पूजाविषयत्वेन विशेषणात्। दृश्यते हि 'ब्रह्मवित् षडङ्गवित् चतुर्वेदवित्' इति पूजादानादौ गुणविशेषसंबन्धः कारणम्। ब्रह्म तु सर्वगुणदोषसंबन्धवर्जितम् इत्यतः 'ब्रह्मणि ते स्थिताः' इति युक्तम्। कर्मिविषयश्च 'समासमाभ्याम्' इत्यादि। इदं तु सर्वकर्मसंन्यासविषयं प्रस्तुतं, 'सर्वकर्माणि मनसा' इत्यारभ्य आध्यायपरिसमाप्तेः ॥ १९ ॥

यस्मात् निर्दोषं समं ब्रह्म आत्मा,तस्मात्—न प्रहृष्येत् प्रहर्षं न कुर्यात् प्रियम् इष्टं प्राप्य लब्ध्वा। न उद्विजेत् प्राप्य च अप्रियम् अनिष्टं लब्ध्वा। देहमात्रात्मदर्शिनां हि *प्रियाप्रियं हर्षविषादौ कुर्वाते, न केवलात्मदर्शिनः, तस्य प्रियाप्रियप्राप्त्यसम्भवात्। किञ्च—'सर्वभूतेषु एकः समः निर्दोषः आत्मा' इति स्थिरा निर्विचिकित्सा बुद्धिः यस्य सः स्थिरबुद्धिः असंमूढः संमोहवर्जितश्च स्यात् यथोक्तब्रह्मवित् ब्रह्मणि स्थितः, अक

आ॥ तदेव स्तौति—इहैवेति ॥

ज॥ज्ञानिनोऽपि जन्मान्तरसद्भाव उक्तः, तत्कथमिहैवेति तद्देह एव मुक्तिरुक्तेत्यत आह—तदेवेति। स्तुतावधिकोक्तिः सम्भवतीति भावः ॥ १९ ॥

अत्र कश्चित्—आध्यायपरिसमाप्तेः ज्ञानिनः कर्माभावः प्रतिपाद्यत इत्याह,अपरस्तु—ज्ञानस्वरूपं तत्सहकारिसाधनं च प्रतिपाद्यत इति। तदुभयमसत्, अप्रवृत्तेरिति भावेनाध्यायशेषप्रतिपाद्यमाह—

पा॥ *प्रियाप्रियप्राप्ता ॥

रा॥कथम्?;ब्रह्मविद्ब्रह्मणि स्थितः-उपदेशेन ब्रह्मवित्सन् तस्मिन् ब्रह्मण्यभ्यासयुक्तः।एतदुक्तं भवति—तत्त्वविदामुपदेशेन आत्मयाथात्म्यविद्भूत्वा तत्रैव यतमानो देहात्माभिमानं परित्यज्य स्थिररूपात्मावलोकनप्रियानुभवे व्यवस्थितः अस्थिरे प्राकृते प्रियाप्रिये प्राप्य हर्षोद्वेगौ न कुर्यात्—इति ॥ २० ॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ २१

एवमुक्तेन प्रकारेण बाह्यस्पर्शेषु आत्मव्यतिरिक्तविषयानुभवेषु,असक्तमनाः*अन्तरात्मन्येव यत्सुखं विन्दति - लभते ; स प्रकृत्यभ्यासं विहाय ब्रह्मयोगयुक्तात्मा ब्रह्माभ्यासयुक्तमनाः ब्रह्मानुभवरूपमक्षयं सुखं प्राप्नोति ॥ २१ ॥

ता॥ स्थितः' इति शब्दाभ्या मिद्धमवान्तरदशाविशेषं विशदयति—उपदेशेनेत्यादिना। सन्नित्यनेनोपदेशजनितज्ञानमनूद्य विशिष्टविज्ञानं विधीयते इति सूचितम् । उक्तमेवार्थं समदर्शित्वरूपज्ञानविपाकाभिलाषिणामव्याकुलानुष्ठानपर्वक्रमप्रदर्शनार्थं श्लोकस्थपदानां हेतुकार्यभावेन महावाक्यान्वयं दर्शयति—एतदुक्तमिति । नाह्यकुदृष्ट्युपदेशनिवृत्त्यर्थं —तत्त्वविदामित्युक्तम् । भूत्वेत्यनेनदप्यनुवादत्वसूचनार्थम् ॥ २० ॥

एवं हर्षोद्वेगावकुर्वतस्समदर्शित्वप्रयुक्तं निरतिशयसुखं स्वयमापततीत्युच्यते—'बाह्य'इति श्लोकेन। 'सुखं विन्दति' इत्यस्य 'सुखमक्षयमश्नुते' इत्यतो भेदप्रदर्शनाय —लभत इत्युक्तम् । अक्षयसुखप्रारम्भोऽयमितिभावः। प्रकृत्यभ्यासं विहायेत्यर्थलब्धोक्तिः । प्रकृत्यभ्यासः—पुनः पुनः प्राकृतशब्दादिभोग्यचिन्ता। 'विन्दत्यात्मनि यत्सुखम्'इत्युपदेशादिजन्यज्ञानमूलं सुखमुक्तम्। 'सुखमक्षयमश्नुते' इति तु साक्षात्कारानन्तरभावि नित्यं सुखमुच्यतइति विशेषं दर्शयितुं—ब्रह्मानुभवरूपमित्युक्तम् ॥

प्र पा॥ *'असक्तात्मा - असक्तमना ' इति क्वचिद्दृश्यते ॥

शा॥मेकृत् सर्वकर्मसंन्यासी इत्यर्थः ॥ २० ॥

किं च, ब्रह्मणि स्थितः—बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः, स्पृश्यन्ते इति स्पर्शाः शब्दादयो विषयाः, तेषु बाह्यस्पर्शेषु असक्तः आत्मा अन्तःकरणं यस्य सः अयम् असक्तात्मा विषयेषु प्रीतिवर्जितः सन् विन्दति लभते आत्मनि यत् सुखं तत् विन्दति इत्येतत्। स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिः ब्रह्मयोगः, तेन ब्रह्मयोगेन युक्तः तस्मिन् व्यापृतः आत्मा अन्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा सुखम् अक्षयम् अश्नुते

आ॥संन्यासयोगज्ञानानि मिलित्वा प्रपञ्चयत्यध्यायशेषेण ॥ २० ॥

पुनर्योगस्याधिक्यं स्पष्टयति—बाह्यस्पर्शेष्विति । कामरहित आत्मनि यत्सुखं

ज॥संन्यासेति मिलित्वा मेलयित्वा । शङ्कानुसारेणैव ; न तु प्रकरणभेदेनेत्यर्थः। पुनरुक्तिपरिहारार्थं प्रपञ्चयतीत्युक्तम् । संन्यासस्यादौ ग्रहणेन 'न प्रहृष्येत्' इति सन्यासप्रपञ्चनमिति सूचितम् ॥ २० ॥

'प्रकृतस्य सन्यासिन एवाक्षयसुखप्राप्तिरुच्यते'इति परव्याख्यानमसदिति भावेनाह—पुनरिति । 'सन्यासस्तु' इत्यादिना प्रागुक्तत्वात्—पुनरिति।आधिक्यं सन्यासात् । प्राग्योगाभावे सन्यासस्य वैयर्थ्यमुक्तम्;इदमत्, कामाद्युपद्रवशान्ते स्वरूपसुखस्याविर्भावादित्याशङ्कानिराकरणात्स्पष्टनम्। नैतदत्र प्रतीयत इत्यतो व्याचष्टे—कामेति। 'बाह्यस्पर्शेष्वसक्तात्मा' इत्यस्यार्थः—कामरहित इति। आत्मस्वरूप-

रा॥प्राकृतस्य भोगस्य सुत्यजतामाह—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२

विषयेन्द्रियस्पर्शजाः ये भोगाः दुःखयोनयस्ते - दुःखोदर्काः । आद्यन्तवन्तः - अल्पकालवर्तिनो ह्युपलभ्यन्ते । न तेषु तद्याथात्म्यविद्रमते ॥ २२ ॥

ता॥अनादिकालं बाह्यस्पर्शरसिकस्य तत्परित्यागः कथमित्याकाङ्क्षायामार्जनरक्षणादिदोषदर्शनात्सोपरमश्चाक्य इति—'ये हि'इत्यादिश्लोकेनोच्यत इत्यभिप्रायेणाह —प्राकृतस्येति। 'संस्पर्शजाः'इत्यनेनाभिप्रेतमौपाधिकत्वं व्यञ्जयति —विषयेन्द्रियसंस्पर्शजा इति। स्पर्शोऽत्र सम्बन्धमात्रम्। एतेन सुखस्वरूपस्य क्षुद्रत्वमुक्तम् । 'दुःखयोनयः' इत्यत्र तत्पुरुषविवक्षां दर्शयितुं—दुःखोदर्का इत्युक्तम् । संस्पर्शजत्वात्परलोकेऽपि दुःखयोनित्वं स्वप्यवसानमित्येवकाराभिप्रायः । ननु हिरण्यगर्भभोगादभ्यधिकः प्राकृतभोगोऽस्ति;सोऽपि स्वमानेन शतसंवत्सरपरिमिततया मानुषादिसम इति,दर्शयितुम्—अल्पकालवर्तिन इत्युक्तम्। क्षणरुचिबुद्बुदादिष्विवाधान्तरस्थितिकालवैषम्यम्, आद्यन्तवत्त्वन्त्वविशिष्टमिति भावः । एवं 'संस्पर्शजाः'इत्यादिविशेषणत्रयेणाल्पत्वदुःखमिश्रत्वान्तवत्त्वानि दर्शितानि । प्रत्यक्षसिद्धेषु दोषेषु निपुणस्य किमुपदेशापेक्षयेति दर्शयितुम्—उपलभ्यन्त इत्युक्तम् । बुधशब्देनात्र पञ्चविधोपरमोपयुक्तविवेकज्ञानवत्त्वं विवक्षितमिति दर्शयितु—तद्याथात्म्यविदित्युक्तम् । न तेषु रमते, किन्तु क्रमादुपरमत इति भावः । सागरतरणराजसेवादिषु शरीरविनाशपर्यन्ता आर्जनदोषाः । सहस्रप्राकारपरिवृतगर्भगृहे निवेशितस्यापि रक्ष्यवस्तुनो राजदहनचोरमूषिकादयस्तन्निवारणक्लेशादयश्च रक्षणदोषाः । 'स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः'इत्यादयः क्षयदोषाः । 'न जातु कामः कामानामुपभो-

प्र॰पा॥ १॰ प्राकृतभोगः; सोऽपि॰ पा॥ २॰ वि पु ६-५-५० ॥ ३॰ वि. पु॰ ४-१०-२२ ॥

शं॥प्राप्नोति। तस्मात् बाह्यविषयप्रीतेः क्षणिकायाः इन्द्रियाणि निवर्तयेत् आत्मनि अक्षयसुखार्थी इत्यर्थः ॥ २१ ॥

इतश्च निवर्तयेत्—ये हि यस्मात् संस्पर्शजाः विषयेन्द्रियसंस्पर्शेभ्यो जाताः भोगा भुक्तयः दुःखयोनयः एव ते, अविद्याकृतत्वात् । दृश्यन्ते हि आध्यात्मिकानि दुःखानि तन्निमित्तान्येव । यथा इह लोके तथा परलोकेऽपि इति गम्यते, एवशब्दात् । न संसारे सुखस्य गन्धमात्रमपि अस्ति इति बुद्ध्वा विषयमृगतृष्णिकायाः इन्द्रियाणि निवर्तयेत्। न केवलं दुःखयोनय एव,आद्यन्तवन्तः च, आदिः विषयेन्द्रियसंयोगो भोगानाम् अन्तश्च तद्वियोग एव; अतः आद्यन्तवन्तः अनित्याः, मध्यमक्षणभावित्वात् इत्यर्थः । हे

आ॥ विन्दति, स एव ब्रह्मयोगयुक्तात्मा चेत्तदेवाक्षयं सुखं विन्दति । ब्रह्मविषयो योगो ब्रह्मयोगः। ध्यानादियुक्तस्यैवात्मसुखमक्षयम् ; अन्यथा नेत्यर्थः ॥ २१ ॥

ज॥स्यापि सुखस्य न निर्विशेषत्वमिति ज्ञापनाय—आत्मनीत्युक्तम् । स एव कामरहित एव। तदेव आत्मसुखमेव । ब्रह्मणा योग इति प्रतीतिनिरासायाह—ब्रह्मेति । कथमनेन सन्यासाद्योगस्याधिक्यं स्पष्टीकृतमित्यतो ब्रह्मयोगशब्दार्थं विवृण्वन् तात्पर्यमाह—ध्यानादीति । ज्ञानद्वारेति शेषः । अक्षयं पुनस्तिरोभावरहितम् । अन्यथा—सन्यासमात्रेण तिरोभावोपेतं स्वल्पत्वादफलमेवेत्युक्तमेव । व्याख्यान्तरे तु बहूनां पदानां वैयर्थ्यमिति भावः ॥ २१ ॥

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३

रा॥ शरीरमोक्षणात् प्रागिहैव - साधनानुष्ठानदशायामेव आत्मानुभवप्रीत्या कामक्रोधोद्भवं वेगं सोढुं निरोद्धुं यश्शक्नोति, स युक्तः आत्मानुभवायार्हः

ता॥गेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते''अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता' इत्यादिवदुत्तरोत्तररागप्रबन्धानर्थहेतुत्वयोग्यविषयप्रवृत्त्यादयो भोगदोषाः । सर्वस्य चास्य प्रायशः परहिंसागर्भत्वात्तदधीना ऐहिकामुष्मिकदुःखसन्ततयो हिंसादोषाः । पञ्चविधाश्चैते दोषाः प्रत्यक्षादिसिद्धा इति तद्भावनावता प्राकृतस्यानादिकालचीलितस्यापि सुत्यजत्वं सिद्धमिति भावः । उक्तं च तुष्टिप्रकरणे साङ्ख्यैरपि 'बाह्या विषयोपरमाः पञ्च' इति ॥ २२ ॥

एवं बाह्यस्पर्शेष्वसक्तस्यात्मनि सुखं विन्दतः प्राकृतभोगेषु दोषदर्शिनः स्वरसवाहिनीं दयामनुवदंस्तथाभूतस्यात्मसाक्षात्कारे तदधीनसुखे च योग्यतामाह—'शक्नोति' इति । आशरीरपातात्कामक्रोधौ दुर्जयावित्यभिप्रायेणाह—शरीरविमोक्षणात्प्रागिति। साक्षात्कारदशायां कामक्रोधप्रसङ्गो न विद्यत इति तत्प्रसङ्गनिवारणदशाज्ञापनाय 'इहैव' इत्यनेन साधनानुष्ठानदशोच्यते । 'विन्दत्यात्मनि यत्सुखम्' इति पूर्वोक्तहेतुं स्मारयति —आत्मानुभवप्रीत्येति । वेगोऽत्र मनोवाक्कायानामतित्वरिता प्रवृत्तिः। तत्रानुचितविषयाभिध्याननीचचाटुवचनपाणिस्पर्शोद्भ्रान्तप्रवेशादयः कामजा वेगाः। परहिंसानुपायचिन्तनपरुषभाषणप्रहारादयः क्रोधजा वेगाः । 'सोढुम्' इत्यस्य तितिक्षार्थत्वव्युदासायोक्तं—निरोद्धुमिति । शक्नोति - उत्सहत इत्यर्थः । युक्तशब्दोऽत्र समाधिलाभपर इत्याह—आत्मानुभवायार्ह इति । 'प्राक्शरीरविमोक्षणात्' इत्यस्य शरीरानन्तरमेव फलप्राप्तौ तात्पर्यम्, अन्यथा तद्वचनस्य

प्र पा॥ १ २ प्रबलानर्थ. पा ॥ ३ साङ्ख्यकारिका ॥

श॥कौन्तेय, न तेषु भोगेषु रमते बुधः विवेकी अवगतपरमार्थतत्त्वः; अत्यन्तमूढानाम् एव हि विषयेषु रतिः दृश्यते, यथा पशुप्रभृतीनाम् ॥ २२ ॥

अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुः दुर्निवारश्च इति तत्परिहारे यत्नः अधिकतरः कर्तव्यः इति आह भगवान्—शक्नोति उत्सहते इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक् पूर्वं शरीरविमोक्षणात् मरणात् इत्यर्थः । मरणसीमाकरणात् जीवतोऽवश्यं भावी हि कामक्रोधोद्भवो वेगः, अनन्तनिमित्तवान् हि सः,इति यावत् मरणं तावत् न विस्रम्भणीय इत्यर्थः। कामः, इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे वा अनुभूते सुखहेतौ या तृष्णा स कामः ; क्रोधश्च, आत्मनः प्रतिकूलेषु दुः-

आ॥ सन्यासार्थं कामभोगं निन्दयति—येहीति ॥ २२ ॥

तत्परित्यागं प्रशंसति—शक्नोतीति । कामक्रोधोद्भवं वेगं सोढुं शक्नोति । शरी-

ज॥ननूत्तरश्लोके सन्यासादिवित्वया-र्गत न किञ्चिदुच्यत इत्यत आह—सन्यसार्थमिति। निन्दयतीति । स्वार्थे णिच् । सन्यासार्थिनेति वा ॥ २२ ॥

उत्तरश्लोकस्यप्यन्तर्भावयितुमाह—तदिति । कामभोगपरित्यागं सन्यासार्थमिति वर्तते । इहयदशरीरविमोक्षणात्प्रागिति प्रशंसायामनुपयुक्तमिति भावेन तद्विहायान्ययोजयति—कामेति । वेग मनसोऽनवस्थानम्। एवं तर्हि 'इहैव शरीरविमोक्षणात् प्राक्' इति किमर्थमुक्तमित्यत्तस्तदनूद्य तात्पर्यमाह—

रा॥सपव शरीरविमोक्षोत्तरकालमात्मानुभवैकसुखस्संपत्स्यते ॥ २३ ॥

**योऽन्तस्सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्म निर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४**

**यो बाह्यविषयानुभवं सर्वं विहाय अन्तस्सुखः - आत्मानुभवैकसुखः अन्तरारामः**

ता॥निष्फलत्वप्रसङ्गादित्यभिप्रायेण—**सपवशरीरविमोक्षोत्तरकालमि**त्युक्तम् । 'सुखमक्षयमश्नुते' इत्याद्युक्तफलभूतभविष्यत्सुखयोगोऽत्रापि'स सुखी' इति व्यपदिश्यत इत्यभिप्रायेणाह—**आत्मानुभवैकसुखस्संपत्स्यत** इति ॥ २३ ॥

एवं परित्यक्तं प्राकृतभोग्यभोगोपकरणादिकं सर्वमात्मनि तदेकरसिकत्वाय कल्पयन् 'विन्दत्यात्मनि यत्सुखम्'इत्युक्तमुपायदशास्थं प्रपञ्चयति—'योऽन्तस्सुखः'इति श्लोकेन। अन्तश्शब्दाभिप्राय पूर्वोक्तं चानुसन्धायोक्तं—**योबाह्यविषयानुभवं सर्वं विहाये**ति । अन्तश्शब्दोऽत्र बाह्यव्यतिरेकादाश्मपरः। आत्मैवात्मन्येव वा सुखं यस्य सोऽन्तस्सुखः।तत्र फलितोक्तिः—**आत्मानुभवैकसुख** इति। अवधारणस्याविशेषेण सर्वत्रान्वयादेकशब्दः। 'अन्तरारामः'इत्यस्याभिप्रेत वस्तु पदार्थं तावदाह—आ-

प्र-पा॥ १. गी. ५-२१ ॥

गं॥स्वहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधः; तौ कामक्रोधौ उद्भवो यस्य वेगस्य सः कामक्रोधोद्भवः वेगः । रोमाञ्चनप्रहृष्टनेत्रवदनलिङ्गः अन्तःकरणप्रक्षोभरूपः कामोद्भवः वेगः, गात्रप्रकम्पप्रस्वेदसन्दष्टोष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगः । तं कामक्रोधोद्भवं वेगं यः प्रसहते सोढुं सहितुं, स युक्तो योगी सुखी च इह लोके नरः ॥ २३ ॥

**कथंभूतश्च ब्रह्मणि स्थितः ब्रह्म प्राप्नोति इति ? आह भगवान्—यः अन्तः आत्मनि सुखं यस्य सः अन्तस्सुखः, तथा अन्तरेव आत्मनि आरामः आरमणं क्रीडा यस्य सः**

आ॥रविमोक्षणात्प्राक् यथा मनुष्यशरीरे सोढुं सुशकः,तथा नान्यत्रेति भावः । ब्रह्मलोकादिस्तु जितकामानामेव भवति ॥ २३ ॥

**ज्ञानिलक्षणं प्रपञ्चयत्युत्तरैः श्लोकैः । आरामः परदर्शनादिनिमित्तं सुखम् । अत्र तु परमात्मदर्शनादिनिमित्तं तत् । सुखं तूपद्रवक्षये व्यक्तम् । अत्र तु कामादिक्षये व्य-**

ज॥शरीरेति । इहैवेत्यनुवादे ग्राह्यम्—अस्मिन्नेव लोक इति। अत एवोक्तं— **मनुष्यशरीर** इति । अतोऽत्रैव तत्सहनाय प्रयतितव्यमित्यभिप्रायशेषः । ननु ब्रह्मलोकादौ तत्सहनमत्यन्तसुशकम् ; तत्कथमेवमुच्यत इत्यत आह—**ब्रह्मे**ति । तथाचान्योन्याश्रय इति भावः—**अन्यत्रे**ति । पश्चादिशरीरं व्युदस्तमिति हृदयम् । एतेनात्र वाक्यभेदः कार्य इति सूचितम् । शरीरविमोक्षणपर्यन्तं, न सकृदिति कश्चित् ; तदसत् , तथा सत्याशरीरविमोक्षणादिति स्यात् ; इहैवेति च व्यर्थम् ॥ २३ ॥

ननु योगिनो ब्रह्माधिगतिः प्राक् उक्ता ; तत्किं पुनरुच्यत इत्यत आह—**ज्ञानी**ति । द्वितीये कथितत्वात्—**प्रपञ्चयती**त्युक्तम् । *यथा योगस्याधिक्यकथनं योगनिरूपणमेव सन्यासार्थे; निन्दास्तुती* च संन्यासनिरूपणमेव ; तथा ज्ञानिलक्षणकथनं च ज्ञाननिरूपणमिति । आरामशब्दार्थं तावदाह—**आराम** इति । इदानीमन्तरारामशब्दलब्धमर्थमाह—**अत्रत्वि**ति । तत्सुखम् । सर्हन्तःसुख इत्यनेनैव गतार्थमेतदित्याशङ्क्य सुखशब्दस्य तावदर्थभेदमाह—**सुखं त्वि**ति । व्यक्तमात्मसुखमिति सम्बन्धः ।

रा॥आत्मैकोद्यानः स्वगुणैरात्मैव सुखवर्धको यस्य स तथोक्तः तथान्तर्ज्योतिरात्मैकज्ञानो यो वर्तते, स ब्रह्मभूतो योगी ब्रह्मनिर्वाणमात्मानुभवसुखं प्राप्नोति ॥ २४ ॥

ता॥ त्मैकोद्यान इति। आरामो हि भोगस्थानभूतश्छायापल्लवपुष्पफलादिभिस्स्वगुणैस्सुखवर्धकः। तद्वदत्रापि स्वगुणैरपहतपाप्मत्वज्ञानानन्दादिभिः स्वविषयवादकरणग्रन्थकरणादिनीडोत्थापकैरात्मैव सुखवर्धक इत्यारामशब्देनोपचर्यत इत्याह—स्वगुणैरिति। एवं भोग्य भोगस्थानं च आत्मैवेत्युक्तम्; अथ भोगोपकरणादिकमपि स एवेति अन्तर्ज्योतिश्शब्देनोच्यत इत्यभिप्रायेणाह—आत्मैकज्ञानो योवर्तत इति। अन्येषां हि भोग्यानां स्वरूपादुपकरणस्य भिन्नत्वादुपकरणमपि हि तदर्थतया पृथक् ज्ञातव्यम्; अतस्तेषु तदेकज्ञानत्वं नास्तीति भावः। यद्वा प्रमाणान्तरनैरपेक्ष्यं बाह्यप्रकाशाभावमात्रं वात्र विवक्षितम्। पूर्वं शरीरात्माभिमानादेवमनुष्यादिभूतोऽयमिदानीं तु तन्निवृत्त्या यथावस्थितासङ्कुचितज्ञानादिस्वरूपेणावस्थित इति ब्रह्मभूतशब्दाभिप्रायः। ब्रह्मैव निर्वाणमिति वा, ब्रह्मणि निर्वाणमिति वा, समासार्थमभिप्रयन्नत्र विवक्षितमाह—आत्मानुभवसुखमिति। अत्र निर्वाणशब्दस्य परोक्षार्थत्वस्य सुखप्रकरणानौचित्यान्मन्दमिति भावः ॥ २४ ॥

शा॥अन्तरारामः,तथा एव अन्तः एव आत्मन्येव ज्योतिः प्रकाशो यस्य सः अन्तर्ज्योतिरेव यः ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षम् इह जीवन्नेव ब्रह्मभूतः सन् अधिगच्छति ॥ २४ ॥

आ॥क्रमात्मनः सुखम्, स्वयंज्योतिष्ट्वञ्च भगवत। तद्व्यक्तेरन्तर्ज्योतिः। सर्वेषामन्तर्ज्योतिष्ट्वेऽपि व्यक्तेर्विशेषः। असंप्रज्ञातसमाधीनां बाह्यादर्शनात्, दर्शनेऽप्यकिंचित्करत्वादेवशब्दः। उक्तंचैतत् 'दर्शनस्पर्शसंभाषाद्यत्सुखं जायते नृणाम्। आरामः स तु विज्ञेयः सुख कामक्षयोदितम्' इति नारदीये। 'स्वज्योतिष्ट्वान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थितः' इति च। अन्तःसुखत्वादेः कारणमाह—ब्रह्मणि भूत इति ॥ २४ ॥

ज॥तर्ह्यन्त सुख इति कथमित्यतस्तल्लभ्यार्थमाह—अत्र त्विति। अनेनारामसुखशब्दार्थान्तर्गतयो. परोपदयक्षयोरन्तरित्येतत् सामर्थ्याद्विशेषणमित्युक्त भवति। ज्योति.शब्दार्थं तावदाह—स्वयमिति। ज्योतिष्ट्वमिति शेषः। यद्यपि ज्योतिःशब्द. प्रकाशमात्रे प्रवर्तते, तथाऽपि भगवत एव परानपेक्ष्य प्रकाशत्वात् मुख्ये च समन्वयात् ॥ एव ज्योतिरित्यर्थः।इदानीमन्तर्ज्योति.शब्दार्थमाह—तद्व्यक्तेरिति। तस्य भगवतोऽन्तर्हृदये व्यक्तेरित्यर्थः। नन्वन्तर्ज्योतिर्वस्तुतः सावन्तर्ज्योतिः, व्यक्तेरिति तु कथ लभ्यत इत्यत आह—सर्वेषामिति। शब्दतः प्राप्तमन्तर्ज्योतिष्ट्व सर्वसाधारणम्, अत्र तु ज्ञानिनो विशेषणत्वेनोच्यते; तत्सामर्थ्यादिद लब्धमिति भावः। यद्वा तद्व्यक्तेरित्यध्याहारेण तात्पर्यमुक्तम्, अध्याहारस्येदानीं प्रयोजनमुच्यते। नन्वेवशब्दो यदि धर्मान्तरनिवृत्त्यर्थ., तदाऽन्त.सुखमित्यादि व्याहतम्। अथ वस्त्वन्तरदर्शननिवृत्त्यर्थः; तदाऽसम्भवित्वमित्यत आह—असम्प्रज्ञातेति। बाह्य भगवतोऽन्यत्। दर्शनेऽपि- अन्यदेति शेष.। अकिञ्चित्कराद्विक्षेपकरणाभावादित्यर्थः। एवशब्दः सम्भवदर्थ इति शेषः। एतेन लक्षमेवेद कथ लक्षणत्वेनोच्यत इति परिहृतम्, व्यवच्छेदप्रधानत्वात् एवशब्दस्य सामर्थ्याज्ज्योतिषा सम्बन्ध इति। आरामसुखशब्दयोरुक्तार्थत्वं कुत इत्यत आह—उक्तचेति। न केवल पुनरुक्तिरत्रादितिचार्थः। द्वन्द्वैरस्त्वादेकवचनम्। कामेत्युपद्रवोपलक्षणम्; उदित - व्यक्तम्। अन्तर्ज्योतिरित्यस्योक्तार्थत्वे प्रमाणमाह—स्वेति। स स्थितो यस्मिन्निति तत्स्थितः। अन्तरेव ज्योतिर्दर्शने यस्येत्येवं व्याख्यानेऽपि यद्यप्युक्तार्थो लभ्यते, तथाप्यार्थिकाच्छाब्द वरमित्येवं व्याख्यातम्। ब्रह्मैव भूत इत्यन्यथा प्रतीतिनिरासाय ब्रह्मभूतशब्दस्य विग्रह दर्शयन् प्रकृतसङ्गतिमाह—अन्तरिति।

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानस्सर्वभूतहिते रताः ॥ २५

रा॥ छिन्नद्वैधाः शीतोष्णादिद्वन्द्वैर्विमुक्ताः, यतात्मानः - आत्मन्येव नियमितमनसः, सर्वभूतहितेरताः - आत्मवत्सर्वेषां भूतानां हितेष्वेव निरताः,ऋषयः-द्रष्टारः आत्मावलो-

---

न्म॥समदर्शित्वरूपज्ञानविपाकसिद्ध्यर्थम् अनुष्ठानप्रकारो हि'नप्रहृष्येत्'इत्यादिनोच्यते । तत्र हर्षोद्वेगनिवृत्तिः,बाह्यविषयनिस्सङ्गत्व,तदर्थदोषदर्शन,कामक्रोधवेगनिवारणम्,आत्मन्येव सर्वविधभोग्यताकल्पने च क्रमाच्छ्लोकपञ्चकेनोक्तम्। अथ प्रागुक्तद्वन्द्वसहत्वादिसारणपूर्वकं सर्वभूतहितेरतत्वं नाम समदर्शित्वेऽत्यन्तान्तरङ्गं साधनमुपदिश्यते—'लभन्ते'इति श्लोकेन। 'छिन्नद्वैधाः'इत्यनेन भेदस्वरूपनिषेधभ्रमव्युदासायाह—शीतोष्णादिद्वन्द्वैर्विमुक्ताइति। द्वैधशब्दस्यात्र संशयाद्यर्थत्व चानुचितमिति भावः। नियन्तव्येषु प्रधान मन इहात्मशब्देनोच्यते । नियमनं च तस्यानिर्दिष्टविषयावस्थापनमित्यभिप्रायेण—आत्मन्येवनियमितमनसइत्युक्तम् । 'श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यवधार्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत्'इतिपञ्चमवेदद्रष्ट्रा परमर्षिणा निर्णीतोऽयमर्थ इति ज्ञापनाय—आत्मवदिति दृष्टान्तः,हितेष्वेवेत्यवधारणं च। सर्वशब्दोऽत्र दृष्टान्तभूतं स्वात्मानमात्मान्तरं च सङ्गृह्णातीति भावः । एवमवस्थितस्य परिशुद्धान्योन्यसदृशात्मस्वरूपसाक्षात्कारवत्त्वमृषिशब्देन विवक्षितमिति ज्ञापनायाह—द्रष्टारइति । एवंविधसाक्षात्कारसिद्धावनिष्टनिवृत्तिरिष्टप्राप्तिश्च 'क्षीणकल्मषाः' 'ब्रह्मनिर्वाणं लभन्ते'

प्र·पा॥ १. गी. ५·२० ॥ २. भारते.

---

शं॥गच्छति प्राप्नोति ॥ २४ ॥

किञ्च—लभन्ते ब्रह्मनिर्वाणं मोक्षम् ऋषयः सम्यग्दर्शिनः संन्यासिनः क्षीणकल्म-

---

आ॥पापक्षयाश्चैतद्भवतीत्याह—लभन्त इति । क्षीणकल्मषा भूत्वा छिन्नद्वैधायतात्मानः। द्वैधाभावो द्वैधं—संशयो विपर्ययो वा। तथोक्तं—'विपर्ययः संशयो वा यद्द्वैधं स्वकृतात्मनाम्। ज्ञानासिना तु तच्छित्त्वा मुक्तसङ्गः परिव्रजेत्'इति च। छिन्नद्वैधास्तु पयाय-

---

ज॥ब्रह्मणि भूत इत्येव विग्रहः, न तु ब्रह्मैव भूत इति, प्रमाणविरोधात् । ननु ब्रह्मणि भूतत्वं साधारणधर्मः; तत्कथ ज्ञानिलक्षणत्वेनोच्यते, नैव यतोऽन्तःसुखत्वादेः कारणत्वेनोच्यते । नन्वेवं सत्यर्थादिद ज्ञानसाधनत्वेनोच्यते; '[illegible] तद्बुद्धयः' इत्यनेनैवोक्तम्, सत्यम्, तद्बुद्धित्वादिकं ब्रह्मणि भूतत्वं यस्य कारणं तद्ज्ञानैनलक्षणक इत्येवं सङ्गतिसूचनार्थोऽयमनुवाद इति भावः । एव चाधिगच्छतीत्यस्य जानातीत्यर्थो ज्ञातव्यः ॥ २४ ॥

उत्तरश्लोके ज्ञानिनो ब्रह्मप्राप्तिः पुनः किमर्थमुच्यत इत्यत आह—पापेति । ब्रह्मभूतत्वेन सहास्य समुच्चयार्थश्चशब्दः ; एतदुक्तलक्षण ज्ञानम् । अतो लभन्त इत्यस्योपलभन्त इत्यर्थः । कथं तर्हि ज्ञानिलक्षणप्रपञ्चार्थत्वे श्लोकत्रयस्योक्तमिति; उच्यते—ज्ञानप्रतिबन्धकपापक्षयाख्यमसाधारण कारण कार्यस्य लक्षण भवत्येवेति। अत्र कार्यकारणभावो न प्रतीयत इत्यत आह—क्षीणेति। भवन्ति – ततो ब्रह्मोपलभन्त इत्यर्थः । छिन्नद्वैधशब्दार्थं ज्ञापयन् द्वैधशब्द व्याचष्टे—द्वैधेति । विषयापेक्षयाऽन्यप्रकारत्वमयथार्थत्वमिति यावत् । तेन च तद्ज्ञानमुपलक्ष्यत इति भावेनाह— संशय इति । वाशब्दश्चार्थे। अत्रैव प्रमाणमाह—तथेति । अकृतात्मनामशुद्धबुद्धीनाम् । छित्वेत्यादेः समासत्वमभिप्रेत्य विग्रहमाह—छिन्नेति । आयतशब्दस्य आत्मशब्दस्य चानेकार्थत्वात् आयतात्मन इत्येतद्व्याचष्टे—

रा॥कनपरा०,य एवभूतास्ते क्षीणाशेषात्मप्रातिविरोधिकल्मषा० ब्रह्मनिर्वाणं लभन्ते॥२५॥

उक्तलक्षणानां ब्रह्मात्यन्तसुलभमित्याह—

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विजितात्मनाम् ॥ २६

कामक्रोधवियुक्ताना यतीना यतनशीलाना यतचेतसा नियमितमनसां विजितात्मनां विजितमनसा ब्रह्मनिर्वाणमभितो वर्तते,एवभूताना हस्तस्थ ब्रह्मनिर्वाणमित्यर्थ ॥२६॥

ता॥इत्युभाभ्यामुच्यत इत्याह—एवभूताइति। 'न हि ज्ञानेन सदृश पवित्रमिह विद्यते' इति ज्ञानस्य कल्मषनिवर्तकत्व प्रागेवोक्तमिह स्मारितम् ॥ २५ ॥

एव षड्भि श्लोकैस्समदर्शित्वसाधकमनुष्ठानप्रकारमुपदिश्य तत्र शीघ्रप्रवृत्तिसिद्ध्यर्थं फलस्याविलम्बितत्वमनन्तरमुच्यत इत्यभिप्रायेणाह—उक्तलक्षणानामिति। कामक्रोधवियुक्ततोक्ति 'शक्नोति' इति श्लोकार्थानुवाद । क्रोधनिवृत्त्यैव सर्वभूतहितेरतत्वमितिसूचितम् । 'यतीनाम्' इत्यत्र रूढेरयुक्तत्वात् प्रकृतिप्रत्ययार्थवैशद्याय—यतनशीलानामित्युक्तम् । तेन 'नप्रहृष्येत्' इतिश्लोकद्वयार्थोऽनूदित.। 'यतचेतसाम्' इत्येतदात्मन्येव सर्वाकारस्थनानुवाद इति दर्शयितु—नियमितमनसामित्युक्तम् । 'विजितात्मनाम्' इत्यनेन दोषप्रदर्शनेनान्त करणावर्जनपरस्य 'ये हि' इतिश्लोकस्यार्थस्सूचित इति प्रदर्शनाय—विजितमनसामित्युक्तम् । एव पुनरुक्तिपरिहाराज्ञानाद्विदितात्मनामितिपरै. पठितम् । 'अभितो वर्तते' इत्यस्यानन्तरकालत्व विवक्षितमिति दर्शयति—एवभूतानामिति । हस्तस्थ, ननु हस्तोद्धृतदण्डादिप्राप्यफलादिवद्व्यवहितलाभमिति भाव ॥ २६ ॥

प्र पा॥ १. गी ४ ३८ ॥ २ गी ५ २० ॥ ३ गी ५ २२ ॥

श॥पा क्षीणपापा० निर्दोषा छिन्नद्वैधा० छिन्नसशया० यतात्मान० सयतेन्द्रियाः सर्वभूतहिते रता सर्वेषां भूताना हिते आनुकूल्ये रता० अहिंसका इत्यर्थ. ॥ २५ ॥

किञ्च—कामक्रोधवियुक्ताना कामश्च क्रोधश्च कामक्रोधौ ताभ्या वियुक्तानां यतीनां सन्यासिना यतचेतसा सयतान्त करणानाम् अभित० उभयत० जीवता मृताना च ब्रह्मनिर्वाण मोक्षो वर्तते विदितात्मना विदित० ज्ञात० आत्मा येषा ते विदितात्मान० तेषा सम्यग्दर्शिनाम् इत्यर्थ ॥ २६ ॥

आ॥तात्मान' दीर्घमनस० सर्वज्ञा इत्यर्थ । तत एव छिन्नद्वैधाः । तथोक्त—'क्षीणपापा महाज्ञाना जायन्ते गतसशया ' इति। छिन्नद्वैधा० यतात्मान इति वा ॥ २५ ॥

सुलभ च तेषा ब्रह्मेत्याह—कामक्रोधेति । अभित० सर्वत० ॥ २६ ॥

जा॥दीर्घेति। अणुनो मनस कथ दीर्घत्वमित्यत आह —सर्वज्ञा इति। बहुविषयत्वमुपलक्ष्यत इति भाव । श्रवणादिना विदितवेद्या इत्यर्थ । समासेनोक्तयोरप्यर्थयोर्बुद्ध्या विविक्तयोर्हेतुहेतुमद्भावोऽस्तीति भावेनाह—तत एवेति । अयतात्मत्वादेव क्षीणकल्मषत्वायतात्मत्वाच्छिन्नद्वैधत्वाना हेतुहेतुमद्भावे प्रमाणमाह—तथेति । व्यस्ते एवैते पदे इत्याह—छिन्नेति । नियतमनस इत्यर्थ ॥ २५ ॥

यतीना सर्वे ब्रह्मतत्त्वैव प्रतीयात इत्यन्यथाप्रतीतिनिरासायाह—सुलभचेति । न केवलम् उक्तलक्षणा इति चार्थ । इदं चासाधारणधर्मत्वात् ज्ञानिलक्षण भवत्येव । सौलभ्यवाचि किमप्यत्र न प्रतीयत इत्यनस्तदुपादाय व्याचष्टे—अभित इति । सर्वदेशकालेष्वित्यर्थ. ॥ २६ ॥

रा॥उक्तं कर्मयोगं सलक्ष्यभूतयोगशिरस्कमुपसंहरति—

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यस्सदा मुक्त एव सः ॥ २८

बाह्यान् विषयस्पर्शान् बहिः कृत्वा - बाह्येन्द्रियव्यापारं सर्वमुपसंहृत्य, योगयोग्यासने ऋजुकाय उपविश्य चक्षुषी भ्रुवोरन्तरे - नासाग्रे विन्यस्य नासाभ्यन्तरचारिणौ प्राणापानौ समौ कृत्वा - उच्छ्वासनिश्श्वासौ समगती कृत्वा आत्मावलोकनादन्यत्र

ता॥'ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते। आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते' इतिसङ्ग्रहमनुसन्दधान उत्तरश्लोकानां सङ्गतिमाह —उक्तं कर्मयोगमिति । स्पर्शशब्दस्यात्रानुभवपरस्यानुभाव्यार्थत्वज्ञापनाय —विषयस्पर्शानित्युक्तम्। फलितमाह —बाह्येन्द्रियव्यापारं सर्वमुपसंहृत्येति। 'उपविश्यासने' इत्यादिवक्ष्यमाणानुसन्धानेन —योगयोग्येत्याद्युक्तम्। 'चक्षुः' इत्येकवचनं करणाकारैक्यादिति दर्शयितुं—चक्षुषी इत्युक्तम् । 'सम्प्रेक्ष्य नासिकाग्रम्' इतिवक्ष्यमाणेन 'नासाग्रन्यस्तलोचनः' इत्यादिप्रकरणान्तरोक्त्या च 'भ्रुवोरन्तरे कृत्वा' इत्यस्यैकार्थ्यमाह —नासाग्रइति। नासाभ्यन्तरसञ्चारमात्रस्य स्वतस्सिद्धस्य विधेयत्वायोगात्, 'समे कृत्वा' इत्येतदेव विधेयमिति दर्शयितुं—नासाभ्यन्तरचारिणौ प्राणापानावित्यनुवादः। अपानस्य नासाभ्यन्तरसञ्चारव्यञ्जनाय—उच्छ्वासनिश्श्वासावित्युक्तम् । एक एव हि वायुर्नासापुटेन निष्क्रामन् प्रविशंश्च प्राणोऽपान इति चोच्यते । वृत्तिस्थानादिसाम्यायोगाद्गतिसाम्योक्तिः । न दीर्घमुच्छ्वसन्नापि निश्श्वसन्नित्यर्थः । साक्षात्कारात्यन्ताव्यवहितपू

प्र॰पा॥ १. गी. सं. २-श्लो ॥ ३ गी. ६-१३ ॥
२. गी. ६-१२ ॥ ४.

शा॥सम्यग्दर्शननिष्ठानां संन्यासिनां सद्यः मुक्तिः उक्ता । कर्मयोगश्च ईश्वरार्पितसर्वभावेन ईश्वरे ब्रह्मणि आधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षाय इति भगवान् पदेपदे अब्रवीत्, वक्ष्यति च । अथ इदानीं ध्यानयोगं सम्यग्दर्शनस्य अन्तरङ्गं विस्तरेण वक्ष्यामि इति तस्य सूत्रस्थानीयान् श्लोकान् उपदिशति स्म—स्पर्शान् शब्दादीन् कृत्वा बहिः बाह्यान् श्रोत्रादिद्वारेण अन्तः बुद्धौ प्रवेशिताः शब्दादयः विषयाः, तान् अचिन्तयतः शब्दादयो बाह्या बहिरेव कृताः भवन्ति, तान् एवं बहिः कृत्वा चक्षुश्चैव अन्तरे भ्रुवोः 'कृत्वा' इति अनुषज्यते । तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा, यतेन्द्रियमनोबुद्धिः यतानि संयतानि इन्द्रियाणि मनः बुद्धिश्च यस्य सः यतेन्द्रियमनोबुद्धिः, मननात् मुनिः सन्यासी, मोक्षपरायणः एवं देहसंस्थानात् मोक्षपरायणः

आ॥ध्यानप्रकारमाह—स्पर्शानित्यादिना।बाह्यान्स्पर्शान्बहिः कृत्वा श्रोत्रादीनि योगेन

ज॥ध्यायिनां मुक्तत्वं साक्षाद्वियमाणविरोधः, ज्ञानद्वारा चेत्पुनरुक्तिरित्यतः श्लोकद्वयतात्पर्यमाह-ध्यानेति। मुक्त एव स इति स्तुतिरिति भावः। पदानां व्यवहितत्वादन्वयमाह— बाह्यानिति। स्पृश्यन्त इति स्पर्शाः शब्दाद्याः । स्पर्शाः बाह्या एव तेषां किं बहिष्करणमित्यत आह—श्रोत्रादीनीति । योगेन

रा॥प्रवृत्त्यनर्हेन्द्रियमनोबुद्धिः तत एव विगतेच्छाभयक्रोधः मोक्षपरायणः मोक्षैकप्रयोजनः मुनिः-आत्मावलोकनशीलः यः,सदा मुक्त एव सः-साध्यदशायामिव साधनदशायामपि मुक्त एव स इत्यर्थः ॥ २७ ॥ २८ ॥

उक्तस्य नित्यनैमित्तिककर्मेतिकर्तव्यताकस्य कर्मयोगस्य योगशिरस्कस्य सुकरतामाह—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः
श्रीकृष्णाय परब्रह्मणे नमः.

---

ता॥बाह्यस्थानियत्वान्यतशब्दस्य प्रवृत्त्यनर्हत्वार्थं उक्तः।'स्पर्शान् कृत्वा बहिर्बाह्यान्' इत्यत्र प्रवृत्तिनिवारणम्;'यतेन्द्रियः'इत्यादौ तु तत्फलभूता प्रवृत्त्यनर्हतेत्यपुनरुक्तिरिति भावः। ज्ञानार्थधातो निष्पन्नस्य मुनिशब्दस्य योगावस्थायाम् आत्मसाक्षात्काररूपज्ञानविशेषे तात्पर्यमाह—आत्मावलोकनशील इति। अत्र वाच्यमर्थादप्यन्तरङ्गभूतोऽयमर्थ इति भावः। सदाशब्दाभिप्रेतं व्यनक्ति—साध्यदशायामिवेति। मुक्त एव मुक्तप्राय इत्यर्थः ॥ २७ ॥ २८ ॥

अध्यायारम्भे 'संन्यासं कर्मणां कृष्ण'[1] इत्यादिना वैषम्ये पृष्टे ज्ञानयोगस्य दुष्करत्वादिकं, कर्मयोगस्य सौकर्यं, शैघ्र्यं चोक्तम्। ततश्च सेतिकर्तव्यतास्सशिरस्ककर्मयोगो विशदीकृतः। अथानेपसंहारेऽपि प्राक्प्रश्नोत्तरतया प्रक्रान्तसौकर्यादिकमेव प्रकारान्तरेण स्थिरीक्रियत इत्यभिप्रायेणाह—उक्तस्येति। अत्र कर्मयोगशब्देन 'दैवमेव'[2] इत्याद्युक्तप्रातिस्विकप्रधानाद्यो गृहीतः। नित्यनैमित्तिककर्मेतिकर्तव्यताकस्येत्यनेन—सर्वकर्मयोगभेदनिष्ठानां ज्ञानयोगभक्तियोगनिष्ठानां चावर्जनीयस्या-

---

प्र पा॥ १ गी. ५-१ ॥ २ गी. ४-२५ ॥

---

श॥मोक्ष एव परम् अयनं परा गतिः यस्य स अयं मोक्षपरायणो मुनिः भवेत्॥विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः ते विगताः यस्मात् सः विगतेच्छाभयक्रोधः य एवं वर्तते सदा संन्यासी, मुक्त एव सः न तस्य मोक्षाय अन्यः कर्तव्यः अस्ति ॥ २७ ॥ २८ ॥

एवं समाहितचित्तेन किं विज्ञेयम् इति?उच्यते—भोक्तारं यज्ञतपसां यज्ञानां तपसां

---

आ॥ नियम्येत्यर्थः। चक्षुर्भ्रुवोरन्तरे कृत्वा भ्रुवोर्मध्यमवलोकयन्नित्यर्थः। उक्तं च 'नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधापयेत्' इति। प्राणापानौ समौ कृत्वा-कुम्भके स्थित्वेत्यर्थः॥

---

ज॥प्रत्याहारेण श्रोत्रादीनामनियमे पङ्क्त्यासादप्रत्ययवशाच्छब्दाद्या आन्तरा इव भवन्ति। तन्नियमे तु बाह्या बहिष्कृताः स्युरिति भावः। कृत्वेत्यस्यानुवृत्त्या योजयति—चक्षुरिति। दुर्घटमेतदित्यत आह—भ्रुवोरिति। चक्षुर्वृत्तौ चक्षुःशब्द इत्यर्थः। 'संप्रेक्ष्य नासिकाग्रं स्वम्' इति वक्ष्यमाणविरोध इत्यत आह—उक्तञ्चेति। न्यूनाधिकभावपरिहृत्य समीकरणमित्यन्यथाप्रतीतिनिरासायानूद्य व्याचष्टे—प्राणेति। कुम्भके प्राणायामे,ततश्च समौ निर्विकारौ निश्चलावित्यर्थः। इतरत्समीकरणं कुम्भकार्थमेवेति भावः॥

रा ॥ यज्ञतपसां भोक्तारं सर्वलोकमहेश्वरं सर्वभूतानां सुहृदं मां ज्ञात्वा शान्तिमृच्छति, कर्मयोगकरण एव सुखमृच्छति; सर्वलोकमहेश्वरं- सर्वेषां लोकेश्वराणामपीश्वरं *'तमीश्वराणां परमं महेश्वरम्' इति हि श्रूयते। मां सर्वलोकमहेश्वरं सर्वसुहृदं ज्ञात्वा मदाराधनरूपः कर्मयोग इति सुखेन तत्र प्रवर्तत इत्यर्थः; सुहृद आराधनाय हि सर्वे

---

ता॥धारणांशः। सुशकत्वम्—अनिर्वेदेन प्रवृत्तिविषयत्वम्। शान्तिशब्दोऽत्र न भगवत्प्राप्तिरूपमोक्षपरः जीवोपासनप्रकरणत्वात्; नापि कर्मयोगसाध्यफलपरः, ततोऽप्युपयुक्तस्य प्रसिद्धस्वारस्यानुरोधिनः कर्माङ्गोपशमस्य वक्तुमुचितत्वात्; 'ज्ञात्वा' इत्यत्रानुष्ठायेत्यध्याहारसापेक्षत्वप्रसङ्गात्; । अतः 'सुखं बन्धात्प्रमुच्यते' इत्यादिनोक्तं मनःक्लेशशान्त्यादिरूपं सुखमत्र शान्तिशब्देन विवक्षितमित्यभिप्रायेणाह—कर्मयोगकरण एव सुखमृच्छतीति । भगवत्समानाधिकरणतया सर्वलोकप्रतिसम्बन्धिकतया च महेश्वरशब्दस्यात्र न रूढिविशेषेण प्रवृत्तिरित्याह—सर्वेषां लोकेश्वराणामपीति । सर्वेषां लोकानाम्महान्तमीश्वरमित्येव तु समासार्थः। तत्र प्रमाणमाह—तमीश्वराणामिति । श्रुतावपि महेश्वरशब्दस्याप्रतिसम्बन्धिकत्वात्परमत्वविशेषणाच्च न रूढः, तद्वदत्रापि । सर्वशब्दासङ्कोचान्महत्त्वविशेषणाच्च रुद्रादिलोकेश्वरान्तरव्यवच्छेद उक्तः। 'सर्वलोकेश्वरः कृष्णः' इति हि स्मर्यते। कर्मयोगस्य दुःखरूपस्य अनुष्ठानदशायामेव कथं सुखमिति शङ्कां विशेषणत्रयेण व्युदस्यति —मामित्यादिना । महोदारसार्वभौमप्रियसखसेवायामिव कर्मयोगे सुखबुद्ध्यैव प्रवर्तत इति भावः। मदाराधनरूपः कर्मयोग इत्यनेन 'भोक्तारं यज्ञतपसाम्' इत्यस्यार्थो विवृतः । यज्ञास्तपांसि च कर्मयोगवर्गोपलक्षणमिति भावः। सौहार्दस्य प्रयोजनान्तरनिरपेक्षसमाराधनहेतुत्वे लोकदृष्टान्तमाह—सुहृद इति । सर्वे इति न केवलं शास्त्रनिष्ठाः; किं तु पामराः तिर्यञ्चोऽपि 'केचित् स्वेषु सौहार्दवन्तं पुरुषमिङ्गिताकारैरुपलक्ष्य तावन्मात्रेण

---

प्र-पा॥ 'ये ६-७' तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम्' । श्वे.उप. । महेश्वरशब्दस्य रुद्रादिव्युदासाय व्याचष्ट-सर्वेषामिति । महेश्वरशब्दस्तु परमात्मनि नारायणे रूढः । तदुक्तम्-पाद्मोत्तरे (२२६-अ.) अर्द्धेन 'योऽसावकारवाच्यो वै विष्णुर्नारायणो हरिः । स एव पुरुषो नित्यः परमात्मा महेश्वरः ॥ ७१ ॥ तस्याद्भुतमैश्वर्यं यस्मिन् कस्मिन् हि वर्तते । तस्मिन्नीश्वरशब्दादि प्रोच्यते मुनिभिस्तदा ॥ ७२ ॥ निरुपाधीश्वरत्वन्तु वासुदेवे प्रतिष्ठितम् । आत्मेश्वर इति प्रोक्तो वेदवादैः सनातनैः ॥ ७३ ॥ तस्मात् महेश्वरत्वन्तु वासुदेवे प्रतिष्ठितम् । असौ त्रिपाद्विभूतेस्तु लीलाया अपि चेश्वरः । विभूतिद्वयमैश्वर्यं तस्यैव सकलात्मनः ॥ ७४ ॥ श्रीभूलीलापतिर्योऽसौ ईश्वरः समुदाहृतः । तस्मात् महेश्वरत्वन्तु वासुदेवे प्रतिष्ठितम् ॥ ७५ ॥ इति ॥

१. परममोक्ष. पा ॥ २. गी. ५-३ ॥
३. विष्णुधर्मे. ७४-४४ ॥ १७ पुटे. व्याख्यातम् ॥
४. केचिदपि- पा ॥

---

शं॥ मां च कर्तृरूपेण देवतारूपेण च, सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तं ईश्वरं, सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिं

---

आ॥ध्येयमाह—

---

ज॥भगवज्ज्ञानस्य शान्तिसाधनत्वे पुनः किमर्थमुच्यत इत्यत आह—ध्येयमिति । ततश्च ज्ञात्वेत्यस्य

रा॥प्रयतन्ते ॥ २९ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

श्रीमते रामानुजाय नमः

---

ता॥सम्प्रीतास्तदनुवर्तनमतिप्रयत्नेन कुर्वन्तीत्यर्थः । पुरुषान्तरवदैश्वर्यमदनैमूल्यदौर्मुख्यादिवर्जनं चास्य सुहृत्त्वेन लभ्यते ॥ २९ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु भगवद्रामानुजविरचितश्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां पञ्चमोऽध्यायः ॥ ५ ॥

श्रीमते निगमान्तमहादेशिकायनमः.

---

शा॥गच्छति प्राप्नोति ॥ २९ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य गोविन्दभगवत्पादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्गीताभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

---

आ॥भोक्तारमिति ॥ २९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्गीताभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

---

ज॥प्याप्त्वेत्यर्थः । शान्तिसाधनज्ञानत्वमपि भोक्तृत्वादिवत् ध्येयविशेषणमेवेति भावः ॥ २९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितश्रीमद्गीताभाष्यटीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

श्रीः.

श्रियै नमः.

श्रीमते रामानुजाय नमः.

श्रीमद्यामुनमुनिप्रणीतः

# श्रीमद्गीतार्थसंग्रहः.

---

कर्मयोगस्य सौकर्यं शैघ्र्यं काश्चन तद्विधाः ।
ब्रह्मज्ञानप्रकारश्च पञ्चमाध्याय उच्यते ॥ ९ ॥

---

तृतीय चतुर्थाभ्यां यथावत् सङ्गतिप्रदर्शनपूर्वकमयं श्लोकः पञ्चमारम्भे व्याख्यातः—'चतुर्थेऽध्याये कर्मयोगस्य ज्ञानाकारतापूर्वकस्वरूपभेदः, ज्ञानांशस्य च प्राधान्यमुक्तम्। ज्ञानयोगाधिकारिणोऽपि कर्मयोगस्यान्तर्गतात्मज्ञानत्वादप्रमादत्वात्सुशकत्वान्निरपेक्षत्वाच्च ज्यायस्त्वं तृतीय एवोक्तम्; इदानीं कर्मयोगस्यात्मप्राप्तिसाधनत्वेज्ञाननिष्ठायाश्शैघ्र्यं, कर्मयोगान्तर्गताकर्तृत्वानुसन्धानप्रकारं च प्रतिपाद्य तन्मूलं ज्ञानं च विशोध्यते इति। सौकर्यस्यात्रानुद्धरणं पूर्वोक्तानुवादताज्ञापनार्थम्। सौकर्यशब्देनात्र 'सुखं बन्धात्प्रमुच्यते' इत्यस्य हेतुर्दर्शितः। शैघ्र्यं तु 'योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति' इत्युक्तम्। अत्र विधाशब्द इति कर्तव्यतापरः, तथा खलु 'नैव किञ्चित्करोमि' इत्यादेरधिष्ठिका—'यत्तत्सौकर्यशैघ्र्याभ्यां कर्मयोग एव श्रेयान्, तत्तदपेक्षितं शृणु' इति। अकर्तृत्वानुसन्धानप्रकारशब्दोऽप्येतत्परः। ब्रह्मशब्दोऽत्र ब्रह्मसमानाकारशुद्धात्मविषयः। ज्ञानशब्दश्चात्र समदर्शनरूपज्ञानविपाकविश्रान्तः। प्रकारशब्दस्तु तद्धेतुभूतप्रकारार्थः। अत एव हि 'येन प्रकारेणावस्थितस्य कर्मयोगिनस्समदर्शनरूपो ज्ञानविपाको भवति तं प्रकारमुपदिशति' इत्युक्त्वा 'न प्रहृष्येत्प्रियं प्राप्य' इत्यादिकमवतारितम्। षष्ठारम्भस्त्वेवं सङ्गमितः 'उक्तः कर्मयोगस्सपरिकरः, इदानीं ज्ञानयोगसाध्यात्मावलोकनरूपयोगाभ्यासविधिरुच्यते; तत्र कर्मयोगस्य निरपेक्षयोगसाधनत्वं द्रढयितुं ज्ञानाकारः कर्मयोगो योगशिरस्कोऽनूद्यते'—इति। एतेन 'योगी युञ्जीत' इत्यतः पूर्वस्य ग्रन्थस्यानुवादरूपत्वात्संग्रहे नोपन्यास इति व्यञ्जितम् ॥ ९ ॥

श्रीमते निगमान्तमहादेशिकाय नमः.

---

१. गी. भा. ५-अ. अवतारिका ॥
२. गी. ५ ३ ॥
३. गी. ५-६ ॥
४. गी. ५-८ ॥
५. गी. भा. ५-८. अव ॥
६. गी. भा. ५-२०. अव ॥
७. गी. ५-२० ॥
८. गी. भा. ६-अ. अव॥ ९. गी. ६-१० ॥

## षष्ठोऽध्यायः.

श्रीभगवानुवाच—

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्नचाक्रियः ॥ १

रा॥उक्तः कर्मयोगस्सपरिकरः, इदानीं ज्ञानयोगकर्मयोगसाध्यात्मावलोकनरूपयोगा-

ता॥षष्ठाध्यायोपक्रमस्य पूर्वोक्तार्थानुवादरूपतां दर्शयितु पूर्वेणाविच्छिन्नानुसंधानार्थमध्यायसंगतिवच-नात्पूर्वमेव व्याख्येयोपादानम् । वृत्तवर्तिष्यमाणाभिधानमुखेन संगतिदर्शयति—उक्तइति । कर्मयोग उ-क्तः,तत्साध्यतयोपक्षिप्तः समाधिलक्षणो योग एवात्र सानुबन्धः प्रतिपाद्यत इति संगतिः। योगाभ्यास विधिरुच्यत इति—'योगाभ्यासविधिर्योगी चतुर्धा योगसाधनम् । योगसिद्धिस्स्वयोगस्यपारम्यंषष्ठ उच्यते ' इति संग्रहश्लोके प्रथमं योगाभ्यासविधेरुपादानादन्येषां च तदर्थत्वात्स एवाध्यायप्रधानार्थत-या संगृहीत इति भावः । 'अनाश्रितः'इत्यादीनां 'समबुद्धिर्विशिष्यते' इत्यन्तानां नवानां श्लोकानां प्रा-

प्र-पा॥ १. गी. स. १० ॥ २. गी ६-९ ॥

शं॥अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रति अन्तरङ्गस्य सूत्रभूताः श्लो-काः 'स्पर्शान् कृत्वा बहिः' इत्यादयः उपदिष्टाः । तेषां वृत्तिस्थानीयः अयं षष्ठोऽध्यायः आरभ्यते । तत्र ध्यानयोगस्य बहिरङ्गं कर्म इति, यावत् ध्यानयोगारोहणसमर्थः, तावत् गृहस्थेन अधिकृतेन कर्तव्यं कर्म इत्यतः तत् स्तौति —अनाश्रित इति ॥

ननु किमर्थं ध्यानयोगारोहणसीमाकरणं, यावता अनुष्ठेयमेव विहितं कर्म याव-ज्जीवं—न, 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' इति विशेषात्, आरूढस्य च शमे-नैव सम्बन्धकरणात् । आरुरुक्षोः आरूढस्य च शमः कर्म च उभयं कर्तव्यत्वेन अभिप्रे-तं चेत्,स्यात् तदा 'आरुरुक्षोः' 'आरूढस्य' इति शमकर्मविषयभेदेन विशेषणं विभा-गकरणं च अनर्थकं स्यात् ॥

तत्र आश्रमिणां कश्चित् योगमारुरुक्षुः भवति, आरूढश्च कश्चित्, अन्ये न आरु-रुक्षवः न च आरूढाः, तानपेक्ष्य 'आरुरुक्षोः' 'आरूढस्य' इति विशेषणं विभागकरणं

आ॥ज्ञानान्तरङ्गं समाधियोगमाहानेनाध्यायेन । विवक्षितं संन्यासमाह योगेनसह—

अ॥संगतिं सूचयन्नेतदध्यायप्रतिपाद्यमर्थमाह—ज्ञानान्तरङ्गमिति । 'योगे त्विमां शृणु'इति प्रति-ज्ञाय द्वितीयषट्के वक्ष्यमाण भगवज्ज्ञाने प्रति कर्मयोगस्य बहिरङ्गत्वात्स प्राधान्येनातीते ग्रन्थे प्रतिपा-दितः । तत्साध्यत्वाज्ज्ञानान्तरङ्गत्वाच्चावसरप्राप्तं समाधियोगमाहानेन षष्ठाध्यायेनेत्यर्थः । आसनादीना-मङ्गानां वक्ष्यमाणत्वेऽपि तेषां समाध्यर्थत्वात् प्राधान्येन समाधियोगस्य ग्रहणम् । पञ्चमान्तोक्तस्य प्र-

रा॥भ्यासविधिरुच्यते , नन कर्मयोगस्य निरपेक्षसाधनत्व द्रढयितु ज्ञानाकार॰ कर्मयोगा योगशिरस्काऽनूद्यते , कर्मफल-स्वर्गादिकमनाश्रित कार्य कर्मानुष्ठानमेव कार्य, सर्वा

ता॥गुक्तानधिकार्थत्वान्निष्फयो नत्वमाशङ्क्याह—तत्रति। अभ्यासो हि तात्पर्यलिङ्गम्, अव्यवहितनिर्देश श्च नैरपेक्ष्य सूचयेदिति भाव । ज्ञानाकारोयोगशिरस्क इति पदाभ्या साधनस्य प्रागुक्तमन्तर्गता त्मज्ञानत्वादलक्षण पौष्कल्य, साध्यस्यात्मावलोकनस्याव्यवहितत्व चाभिप्रेतम्। 'अनाश्रित ' इतिश्लोके पूर्वार्धेन ज्ञानाकारकर्मयोगानुवाद , उत्तरार्धेन नैरपेक्ष्यदृढीकरणम्। ' भोक्तार यज्ञतपसाम् ' इत्यव्यव हितपूर्वश्लोकालोचनया सर्वात्मनास्मत्सुहृद्भूतेत्यादिकमुक्तम् । ततश्च कर्मफलमनाश्रित इत्युक्ते नि ष्फलप्रवृत्तिस्स्यादितशङ्काया कर्मस्वरूपफलत्वस्य वक्तुमुचितत्वात्कार्यशब्द प्रयोजनविषय इति दर्श यितु—कर्मानुष्ठानमेवकार्यमिति वचनव्यक्तिर्दर्शिता । कार्यशब्दस्य चोदितविषयत्वे म दप्रयोजनत्व

प्र पा ॥ १ गा ५२९ ॥

श॥च उपपद्यते एवति चत्—न, 'तस्यैव ' इति वचनात्, पुन योगग्रहणाच्च ' योगारू ढस्य'इति । आसात् पूर्व योगम् आरुरुक्षु तस्यैव आरूढस्य शम एव कर्त व्य कारण योगफल प्रति उच्यते इति । अतो न योगारूढस्य कर्तव्यत्वप्राप्ति कस्य चिदपि कर्मण ॥

यो ग विभ्रष्टवचनाच्च—गृहस्थस्य चेत् कर्मिणो योगो विहित षष्ठ अध्याये, स यो गविभ्रष्टोऽपि कर्मगति कर्मफल प्राप्नोति इति तस्य नाशाशङ्का अनुपपन्ना स्यात्। अवश्य हि कृत कर्म काम्य नित्य वा मोक्षस्य नित्यत्वात् अनारभ्यत्वे—स्व फलम् आरभत एव । नित्यस्य च कर्मण वेदप्रमाणावबुद्धत्वात् फलेन भवितव्यम् इति अवोचाम, अन्यथा वे दस्य आनर्थक्यप्रसङ्गात् इति । न च कर्मणि सति उभयविभ्रष्टवचनम् अर्थवत्, कर्मणो विभ्रंशकारणानुपपत्ते ॥

कर्म कृतम् ईश्वरे संन्यस्य इत्यत कर्तु कर्म फल नारभत इति चेत्—न, ईश्वरे संन्यासस्य अधिकतरफलहेतुत्वोपपत्त । मोक्षायैव इति चेत्—स्वकर्मणा कृतानाम् ईश्वर संन्यासो मोक्षायैव न फलान्तराय योगसहित योगात् च विभ्रष्ट इत्यत त प्रति नाशाशङ्का युक्तैव इति चेत् न, 'एकाकी यतचित्तात्मा निराशीरपरिग्रह ' ' ब्रह्मचा रिव्रते स्थित ' इति च कर्मसंन्यासविधानात् । न च अत्र ध्यानकाले स्त्रीसहायत्वाशङ्का, येन एकाकित्व विधीयते । न च गृहस्थस्य 'निराशीरपरिग्रह ' इत्यादिवचनम् अनुकूल- म् । उभयविभ्रष्टप्रश्नानुपपत्तेश्च ॥

'अनाश्रित 'इत्यनेन कर्मिण एव संन्यासित्व योगित्व च उक्त, प्रतिषिद्ध च निरग्न अक्रियस्य च संन्यासित्व योगित्व चेति चेत्—न, ध्यानयोग प्रति बहिरङ्गस्य सत कर्म

आ॥अनाश्रितइति। चतुर्थाश्रमिणोऽप्यग्नि क्रिया चोक्ता 'दैवमेव'इत्यादौ। 'अग्निर्ब्रह्म च

ज॥ एवोऽश्रमित्यदोष । गृहस्थस्यापि स्तुत्यर्थमुपचरितं संन्यासित्व योगित्व चानेन श्लोकेनोच्यत इति परकीयतात्पर्यकथनमसदिति भावेनाह—विवक्षितमिति। समाधियोग विधातु तत्राधिकारिणं ज्ञापयि ष्यन् सांख्याद्यभिमततदधिकारिनिरासाय तद्विशेषण प्रागिवक्षितं क्रमादिवर्जनलक्षण संन्यासमीश्वरा राधनस्वकर्मानुष्ठानलक्षणन योगेन सहाहेत्यर्थ । यदि हि संन्यासो यत्याश्रमोऽत्र विवक्षित स्यात् , यो गश्च कश्चित् गृहस्थासम्भवी स्यात्, तदोपचारेण तत् स्तुतिरियम् , नचैवमिति भाव । न केवलं निर-

रा॥त्मना ऽस्मत्सुहृत्तमपरमपुरुषाराधनरूपतया कर्मैव मम प्रयोजनं न तत्साध्यं किञ्चिदिति यः कर्म करोति ; स सन्न्यासी च-ज्ञानयोगनिष्ठश्च ; योगी च-कर्मयोगनिष्ठश्च; आत्मावलोकनरूपयोगसाधनभूतोभयनिष्ठ इत्यर्थः।न निरग्निर्नचाक्रियः-न चोदित यज्ञादि-

ता॥स्यादिति भावः। ननु कर्मयोगनिष्ठमनूद्य तस्यैव ज्ञानयोगनिष्ठत्वं कर्मयोगनिष्ठत्वं च विधातुमयुक्तम्; प्रथमे विरोधात् ; द्वितीये तूद्देश्योपादेयविभागाभाव पौनरुक्त्यनिष्प्रयोजनत्वेभ्य इति शङ्कायामाह—आत्मावलोकनेति । पृथक्साधनभूतोभयसाध्यं फलमनेन लब्धमित्युभयनिष्ठत्वमुपचारादुच्यते ; ततश्च कर्मयोगस्य निरपेक्षसाधनत्वं विवक्षितमिति भावः । यद्वा कर्मयोगान्तर्भूतज्ञानक्रियाभेदेन परिहार इति भावः। अग्निशब्दस्याग्निसम्बन्धिकर्मलक्षकत्वव्यञ्जनाय यज्ञादिशब्दः । एवकारार्थो लब्धाहकं चोदितत्वम्।'निरग्निः'इत्यनेनैव कर्मनिवृत्तेरुक्तत्वादक्रियशब्दः क्रियानिवृत्तिमुखेन क्रियाव्यतिरिक्तनिष्ठत्वलक्ष-

शं॥णः फलाकाङ्क्षासंन्यासस्तुतिपरत्वात्। न केवलं निरग्निः अक्रियः एव संन्यासी योगी च—किं तर्हि ?—कर्म्यपि, कर्मफलसङ्गं संन्यस्य कर्मयोगम् अनुतिष्ठन् सत्त्वशुद्ध्यर्थं संन्यासी योगी च भवतीति स्तूयते । न च एकेन वाक्येन कर्मफलासङ्गसंन्यासस्तुतिः चतुर्थाश्रमप्रतिषेधश्च उपपद्यते । न च प्रसिद्धं निरग्नेः अक्रियस्य परमार्थसंन्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रेषु विहितं संन्यासित्वं योगित्वं च प्रतिषेधति भगवान् । स्ववचनविरोधाच्च—' सर्वकर्माणि मनसा संन्यस्य .नैव कुर्वन्न कारयन् ' 'आस्ते' 'मौनी सन्तुष्टो येन केन चित् । अनिकेतस्स्थिरमतिः ' 'विहाय कामान् यः सर्वान् पुमांश्चरति निस्स्पृहः ' ' सर्वारम्भपरित्यागी ' इति च तत्रतत्र भगवता स्ववचनानि दर्शितानि; तैः विरुध्येत चतुर्थाश्रमविप्रतिषेधः। तस्मात् मुनेः योगम् आरुरुक्षोः प्रतिपन्नगार्हस्थ्यस्य अग्निहोत्रादिकर्म फलनिरपेक्षम् अनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं सत्त्वशुद्धिद्वारेण प्रतिपद्यते इति ' स संन्यासी च योगी च ' इति स्तूयते ॥

अनाश्रितः न आश्रितः अनाश्रितः—किं ?—कर्मफलं कर्मणां फलं यत् तत् अनाश्रितः, कर्मफलतृष्णारहित इत्यर्थः। यो हि कर्मफले तृष्णावान् सः कर्मफलम् आश्रितः भवति, अयं तु तद्विपरीतः, अतः अनाश्रितः कर्मफलम् । एवंभूतः सन् कार्यं कर्तव्यं नित्यं काम्यविपरीतम् अग्निहोत्रादिकं कर्म करोति निर्वर्तयति यः कश्चित् । यः ईदृशः कर्मी स कर्म्यन्तरेभ्यो विशिष्यते इत्येतमर्थम् आह—स संन्यासी च योगी च इति । संन्यासः परित्यागः यस्य अस्ति स योगी च—इत्ययं गुणसंपन्नः अयं मन्तव्यः, न केवलं निरग्निः अक्रिय एव संन्यासी योगी च इति मन्तव्यः । निर्गताः अग्नयः कर्माङ्गभूताः यस्मात् स निरग्निः अक्रियश्च अनग्निसाधना अपि अविद्यमानाः क्रिया तपोदानादिकाः यस्य असौ अक्रियः ॥

आ॥तत्पूजा क्रिया न्यासाश्रमे स्मृता ' इतिच । तस्मान्निरग्निरक्रियः संन्यासी योगी च

ज॥निरक्रियश्चतुर्थाश्रमीसंन्यासी योगी च,किं त्वनाश्रितइत्याद्युक्तो गृहस्थोऽपीति परकीया योजना निराकरोति—चतुर्थेति । अनेन स्पष्टं वाक्यान्तरं पठति—अग्निरिति । चस्त्वर्थः । अतो न परकीया योजना युक्तेति शेषः । तर्हि कथमित्यत आह—तस्मादिति । प्रकृतयोजनायाः निरस्तत्वात् । ननु नि-

गा॥कर्मस्वप्रवृत्तः, न च केवलज्ञाननिष्ठः; तस्य हि ज्ञाननिष्ठैव, कर्मयोगनिष्ठस्य तूभयमस्तीत्यभिप्रायः ॥ १ ॥

उक्तलक्षणकर्मयोगे ज्ञानमप्यस्तीत्याह—

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ २

ता॥क., व्यतिरिक्तश्चानाख्यो ज्ञानयोग इति दर्शयितु—केवलज्ञाननिष्ठ इत्युक्तम्। यद्वा, 'ननिरग्निर्न-चाक्रिय' इत्युभाभ्यां श्रौतस्मार्तक्रियाविशेषनिषेधपराभ्यां फलितमाह—नचेदितीत्यादि । तदभिप्रेतमाह—न केवलं ज्ञाननिष्ठ इति । 'अनग्निरनिकेतस्स्यात्' 'त्यक्त्वा द्रव्याग्निसाध्यानि कर्माणि' इत्यादिप्रतिपादित सन्न्यासाश्रमव्यवच्छेद इहाभिप्रेत इति भाव. ॥ १ ॥

सन्यासमनूद्य योगत्वे विधीयमाने ज्ञानयोगे कर्मयोगसद्भावप्रतिपादनभ्रमस्स्यात्, तच्च 'नह्यसन्यस्त' इत्युपपादनविरुद्धम्, अत्रानुपयुक्तञ्चेत्यभिप्रायेणाह—उक्तलक्षणेति । योगोद्देशेन सन्यासत्वविधिपर

प्र-पा॥१ मनुस्मृ.६-२५॥ †'अग्नींश्चात्मनि वैतानान् समारोप्य यथा विधि।अनग्निरनिकेतः स्यात् मुनिर्मूलफलाशन' इति । अग्नीन् कर्मीन् वैतानसञ्चारविधानेन भस्मपानादिना आत्मनि समारोप्य लौकिकाग्निगृहशून्य, यथा तत्रैव 'वृक्षमूलनिकेतन' ६-२६ इति, मुनि मौनव्रतचारी । कन्दमूलाद्यशी एव स्यात् । नीवारादपि नाश्नीयात्। ततश्चोर्ध्वं षण्मासेभ्योऽप्युपरि अनग्निरनिकेतन' इति वसिष्ठवचनात् षण्मासोपरि अनग्नित्वम् अनिकेतनत्वञ्च'इति कुल्लूकभट्टीयम् । तत्रैव—६ ४३ 'अनग्निरनिकेतस्स्यात् ग्राममन्नार्थमाश्रयेत् । उपेक्षकोऽसङ्कुसुको मुनिर्भावसमाहित 'अनग्निरिति । अनग्नि लौकिकाग्निनयागरहित, शास्त्रीयाग्नि समारोप्य पूर्वमुक्तत्वात्, अनिकेतः-गृहशून्य, उपधृत शरीरस्य व्याध्याद्युत्पत्तौ तत्प्रतीकाररहित, असङ्कुसुक स्थिरमति, 'असञ्चयिकः' इत्यन्ये पठन्ति । मुनि ब्रह्ममननशील, मौनस्य पूर्वमुक्तत्वात् । भावसमाहित भावेन ब्रह्मणि समाहित, तदेकतानमना, अरण्येन दिवारात्रौ वसन् भिक्षार्थमेव ग्राम प्रविशेत्' इति ॥

शा॥ननु च निरग्नेः अक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धम्। कथम् इह साग्नेः सक्रियस्य च सन्यासित्वं योगित्वं च अप्रसिद्धम् उच्यते?—नैष दोषः, कयाचित् गुणवृत्त्या उभयस्य सम्पिपादयिषितत्वात् । तत् कथम्? कर्मफलसङ्कल्पसंन्यासात् संन्यासित्वम्, योगाङ्गत्वेन च कर्मानुष्ठानात् कर्मफलसङ्कल्पस्य च चित्तविक्षेपहेतोः परित्यागात् योगित्वं च इति गौणम् उभयम्, न पुनः मुख्यं संन्यासित्वं योगित्वं च अभिप्रेतम् इति ॥ १ ॥

*यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासं संन्यासम् इति प्राहुः श्रुतिस्मृतिवादाः, योगं कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि जानीहि हे पाण्डव। कर्मयो-

आ ॥ न भवत्येव ॥ १ ॥

ज॥स्मैपक्रियस्य चतुर्थाश्रमिणोऽपि सन्यासित्वाद्योगित्वाच्च कथं न निरग्निरित्याशुक्तमित्यत आह—चतुर्थाश्रमिणोऽपीत्यादि । न भवत्येवेति युक्तमिति शेषः । अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबन्धन इति भावः ॥ १ ॥

पा ॥ *एतमर्थं दर्शयितुमाह—य सन्यासमिति । य सर्वं ॥ † विद ॥

रा॥यंसन्न्यासइति—ज्ञानयोगइति आत्मयाथात्म्यज्ञानमिति प्राहुस्तं कर्मयोगमेव विद्धि। तदुपपादयति—नह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चनेति। आत्मयाथात्म्यानुसन्धानेन अनात्मनि प्रकृतावात्मसङ्कल्पः सन्न्यस्तः परित्यक्तो येन स सन्न्यस्तसङ्कल्पः अनेवम्भूतः असन्न्यस्तसङ्कल्पः, नह्युक्तेषु कर्मयोगिष्वनेवम्भूतः कश्चन कर्मयोगी भवति "'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः' इति ह्युक्तम् ॥ २ ॥

ता॥वाक्यमित्यर्थः,सन्यासशब्दस्याभिप्रेतं वक्तुं प्राकरणिकं वाच्यं तावदाह—ज्ञानयोगइति। अत्र तदभिप्रेतमाह—आत्मयाथात्म्यज्ञानमितिसमुदायवाचकशब्दस्तदंशेऽपि प्रयुज्यत इति भावः। तंकर्मयोगमेव विद्धीति - कर्मयोगान्तर्गतमेव विद्धीत्यर्थः। आत्मयाथात्म्येत्यादेरयमभिप्रायः—सङ्कल्पशब्दो न तावदत्र कुर्यामिति सङ्कल्पविषयः, तदभावे कर्मकरणस्यैव अशक्यत्वात्। नापि फलाभिसन्धिविषयः, तथात्वेऽपि कर्मयोगे ज्ञानयोगान्तर्भावप्रतिज्ञाया उपपादकत्वाभिद्धेः। अतएव 'सङ्कल्पमूलः कामो हि यज्ञास्सङ्कल्पसम्भवाः' इत्यादिस्मृतिपठितः कामस्य कर्मणा च हेतुस्सङ्कल्पोऽत्र न विवक्षितः। तस्मादेकीकृत्य कल्पोऽत्र सङ्कल्पः। सचात्र देहात्मगोचरः। तत्परित्यागश्च तत्त्वज्ञानात्। एवं सत्येव 'नहि' इत्यादेरुक्तोपपादकत्वमुपपद्येत - इति। 'कश्चन' इति निर्देशः प्रागुक्तकर्मयोगनिष्ठवैविध्यसूचक इत्यभिप्रायेण - उक्तेषु कर्मयोगिष्वित्युक्तम्। सिद्धो ह्यतोपपादको भवति। तत्सिद्धिरत्र कुत इत्याकाङ्क्षायां हिशब्दाभिमेतमाह - यस्येति ॥ २ ॥

प्र पा॥ [1]गी ४·१९॥ इच्छा स्मृता. ॥[3] व्रतानि अनुर्धरश्च [illegible], यमधर्माः-
१. मनुस्मृ. २·३॥ [2]'सङ्कल्पमूलः कामो हि प्रतिषेधार्थकाः ॥
यज्ञाः सङ्कल्पसम्भवाः। व्रतानियमधर्माश्च सर्वे सङ्-

शं॥अस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसंन्यासेन कीदृशं सामान्यम् अङ्गीकृत्य तद्भावः उच्यते इत्यपेक्षायाम् इदम् उच्यते -अस्ति हि परमार्थसंन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य। यो हि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं सङ्कल्पं प्रवृत्तिहेतुकामकारणं संन्यस्यति। अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं सङ्कल्पं संन्यस्यति इत्येतम् अर्थं दर्शयिष्यन् आह—न हि यस्मात् असंन्यस्तसङ्कल्पः असंन्यस्तः अपरित्यक्तः फलविषयसङ्कल्पः अभिसन्धिः येन सः असंन्यस्तसङ्कल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान् भवति न सम्भवतीत्यर्थः। फलसङ्कल्पस्य चित्तविक्षेपहेतुत्वात्। तस्मात् यः कश्चन कर्मी संन्यस्तफलसङ्कल्पः भ

आ॥संन्यासोऽपि योगान्तर्भूत इत्याह—यं संन्यासमिति। कामसङ्कल्पाद्यपरित्यागे कथमुपायतान्स्यादित्याशयः ॥ २ ॥

ज॥ननु सन्यासयोगौ भिन्नलक्षणौ, तत्कथं तयोरैक्यमुच्यत इत्यत आह — संन्यासोऽपीति। 'संन्यासी च योगी च' इत्युक्त्या प्रागत्यन्तभेदशङ्कानिवृत्त्यर्थमिति शेषः।अमुख्ययोगापेक्षया पृथगुक्तोऽपीत्यपेरर्थः। योगशब्देन मुख्योऽत्राभिहितः। अतएव वक्ष्यति —उपायतामिति। अन्तर्भूतत्वादैक्योक्तिरित्यर्थः। सन्यासस्य योगान्तर्भूतत्वमुपपादयते - न हीति। तदसत्, सङ्कल्पत्यागमात्रस्यासंन्यासत्वात्, ईश्वराराधनाय स्वकर्मकरणमात्र योगः, तस्य सन्यासाभावेऽप्युपपत्तेरिति अत आह—कामेति। सङ्कल्पशब्दस्य कामाद्युपलक्षणत्वाद्योगशब्दस्य ज्ञानोपायरूपमुख्ययोगार्थत्वाच्चानुपपत्तिरिति भावः ॥ २ ॥

रा॥कर्मयोग एवाप्रमादेन योगं साधयतीत्याह—

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥** ३

योगम्—आत्मावलोकनं प्राप्तुमिच्छोर्मुमुक्षोः कर्मयोग एव कारणमुच्यते । तस्यैव योगारूढस्य प्रतिष्ठितयोगस्यैव, शमः-कर्मनिवृत्तिः, कारणमुच्यते ।

---

त॥'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते' इत्यत्र विशेषविधिविरोधनिषेध इत्यभिप्रायेणाह—कर्मयोगएवेति । कर्मयोगमात्रसाध्यो हि योगो न परमात्मावलोकनमित्यभिप्रायेणाह आत्मावलोकनमिति । आमोक्षाद्यावत्किञ्चित्कर्म कर्तव्यमित्यभिप्रायेणाह—मुमुक्षोरिति । आत्मावलोकनस्यात्र मोक्षकल्पतया मोक्षशब्दोपचारः । 'योगारूढस्य' इति युक्तावस्थाविषयत्वभ्रमव्युदासाय—प्रतिष्ठितयोगस्येत्युक्तम् । 'कर्म कारणम्' इत्युक्तकर्मप्रतियोगिकस्शमस्तन्निवृत्तिरेवात्र भवितुमर्हतीत्यभिप्रायेण—शमःकर्मनिवृत्तिरित्युक्तम् । एतेन—'मुनिरत्र परिव्राजकः, शमश्च पारिव्रज्यारूपः' इति परोक्तं निरस्तम् ।

---

शा॥येत् स योगी समाधानवान् *अविक्षिप्तचित्तः भवेत्, चित्तविक्षेपहेतोः फलसङ्कल्पस्य संन्यस्तत्वात् इति अभिप्रायः† ॥ २ ॥

एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं संन्याससामान्यम् अपेक्ष्य 'यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव' इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वं उक्तम् । ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गसाधनम् इति तं संन्यासत्वेन स्तुत्वा अधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति—आरुरुक्षोः आरोढुम् इच्छतः, अनारूढस्य, ध्यानयोगे अवस्थातुम् असमर्थस्य इत्यर्थः । कस्य तस्य आरुरुक्षोः? मुनेः, कर्मफलसंन्यासि[illegible] इत्यर्थः । किम् आरुरुक्षोः? योगम् कर्म कारणं साधनम् उच्यते । योगारूढस्य पुनः तस्यैव शमः उपशमः सर्वकर्मभ्यः निवृत्तिः कारणं, योगारूढत्वस्य साधनम् उच्यते इत्यर्थः ।

---

आ॥कियत्कालं कर्म कर्तव्यमित्यत आह—आरुरुक्षोर्मुनेरिति । योगमारुरुक्षोरुपायसम्पूर्तिमिच्छोः । योगमारूढस्यसम्पूर्णोपायस्य । अपरोक्षज्ञानिन इत्यर्थः । कारणं—पर

---

ज॥नन्वेवं समाधियोगस्याधिकारिणि निरूपिते तं प्रति समाधिरभिधेयः, 'आरुरुक्षोः' इत्यादि किमर्थमुच्यत इत्यत आह—कियदिति । समाधियोगाधिकारित्वेनोक्तं कर्म किं सकृदनुष्ठेयम्, उतापलप्राप्तेरिति प्रश्नार्थः । ननु योगो नाम नाश्वादिरिवारोढव्यः । तत्कथमुच्यते योगमारुरुक्षोर्योगारूढस्येति? तत्राह - योगमिति । उपरिभवनसादृश्यादुपचार इत्यर्थः । उपायः समाधिरेव । समाधेः फलपरिमाणाद्यवच्छेदाभावात् कीदृशी सपूर्णतेत्यत आह—अपरोक्षेति । साधनस्य हि पूर्णता साध्याय पर्याप्तत्वम् । अतो यावताऽपरोक्षज्ञानं सपद्यते तावत्त्वं सपूर्णत्वमिति भावः । ननु योगमारुरुक्षोः कर्म कारण मन्निधानाद्योगारोहस्येति लभ्यते, कारणत्वाच्च तत्पर्यन्तं कर्तव्यमिति, कार्यापेक्षया नियतपूर्वक्षणभावित्वात्कारणस्य, योगारूढस्य तु शमः किं प्रति कारणं ज्ञानस्य तत एव सिद्धेरित्यत आह—कारणमिति । परममुक्तं मुक्तिगतम् । नन्वयं प्रश्नो 'यदा ते मोहकलिलम्' इति परिहृतः, मैवम्, तत्र ज्ञाना-

---

पा ॥ *भवति; न विक्षिप्तचित्तो भवति; चित्तविक्षेपहेतो ॥　　　†योगारूढत्वेन कर्मानुष्ठानात् कर्मफलसङ्कल्पस्य वा चित्तविक्षेपहेतोः परित्यागात् योगित्वं संन्यासित्वं चेति अभिप्रेतमुच्यते ॥

शा॥यावदात्मावलोकनरूपमोक्षावाप्ति कर्म कार्यमित्यर्थः ॥ ३ ॥

कदा प्रतिष्ठितयोगो भवतीत्यत्राह—

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४**

यदाऽयं योगी स्वात्मैकानुभवस्वभावनया इन्द्रियार्थेषु - आत्मव्यतिरिक्तप्राकृतवि-

---

ना॥ननु प्रतिष्ठितयोगस्य किं कारणापेक्षया,न ह्यन्यदस्य कार्यमस्तीति शङ्कायां 'योगारूढस्य' इत्यादिना कर्मनिवृत्तिविधानं ततः पूर्वमनिवृत्त्यभिप्रायमिति दर्शयति—यावदिति ॥ ३ ॥

सङ्गमयति—कदेति । अयं योगीत्यिति । यावदात्मावलोकनं कर्मयोगे वर्तमान इति भावः । अर्थसिद्धं हेतुमाह—आत्मैकानुभवस्वभावतयेति । अनित्यत्वहेयत्वादिसूचनाय प्राकृतशब्दः । कर्मस्विति—न चोदितकर्ममात्रविषयम्, तस्य स्वारसिकसङ्गास्पदत्वाभावेन निषेधायोगात्। नापि प-

---

श॥यावद्यावत् कर्मभ्यः उपरमेत तावत्तावत् निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते। तथा सति स योगारूढो भवति। तथा चोक्तं व्यासेन—'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च। शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः' इति ॥ ३ ॥

अथ इदानीं कदा योगारूढो भवति इति ? उच्यते—यदा समाधीयमानचित्तो

---

आ॥मसुखकारणम्। अपरोक्षज्ञानिनोऽपि समाध्यादिफलमुक्तम्।तस्य सर्वोपशमेन समाधिरेव कारणं प्राधान्येनेत्यर्थः । तथाऽपि यदा भोक्तव्योपरमस्तदैव सम्यगसम्प्रज्ञातसमाधिर्जायते; अन्यदा तु भगवच्चरितादौ स्थितः । तथोक्तं 'ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम् । तेषामेव तु संक्रम्य समाधिर्जायते नृणाम् । भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा । वर्तयन्ति महात्मानस्त्वद्भक्तास्त्वत्परायणाः' इति ॥ ३ ॥

योगारूढस्य लक्षणमाह —यदेति । सम्यगननुषङ्गस्तस्यैव भवति । उक्तञ्च ' स्वतो

---

ज॥र्थिनाऽत्र तु योगारोहार्थिनेति भेदात् ,तयोश्च साध्यसाधनयोः पृथक्त्वात्,अपरोक्षज्ञानिन इति चानतिविप्रकर्षेणोक्तत्वात्।तथोक्तम् -'ऐहिकमप्रस्तुतप्रतिबन्धे'इति। अथवा योगारूढस्यापि कर्तव्यं वक्तुं प्रश्नोत्तरानुवादोऽयमिति । नन्वपरोक्षज्ञानिनोऽनाधेयातिशयस्य कथं शमः परमसुखकारणमुच्यत इत्यत आह —अपरोक्षेति। उक्तं समर्थितं द्वितीये । सर्वोपशमेनेत्यनेन शमशब्दार्थः समाधिरिति सूचितम्। तर्हि तस्यान्यत्कर्तव्यमेव नास्तीत्यत आह —तस्येति।सर्वोपशमेन सर्वोपरतिलक्षणेनेति समाधौ शमशब्दं समर्थयितुमुक्तम् । कारणं सुखाभिवृद्धेः । तदविरोधेनान्यत्कार्यमिति भावः। यदि ज्ञानिनः समाधिरानन्दवृद्धेः कारणं, तर्हि तमेव कुतो न कुर्युः; कुतश्च व्याख्यानादौ प्रवर्तन्त इत्यत आह —तथापीति । भोक्तव्योपरमः प्रतिबन्धकप्रारब्धकर्मोपरमः । अन्यदा—सम्यक्समाधिप्रतिबन्धककर्मानुपरमकाले । अत्रागमसम्मतिमाह—तथोक्तमिति । परं-केवलम्। तेषामेव सम्यगेव समाधिश्च जायत इति योजना । वर्तयन्ति-वर्तन्ते कालं नयन्तीति वा ॥ ३ ॥

स्फुटमपि तात्पर्यं मन्दानुजिघृक्षयाऽऽह—यदेति। अपरोक्षज्ञानं तु योगारोहस्य कार्यं सति प्रतिबन्धे विलम्बत इति न लक्षणम्। नन्विदं साधकेऽपि विद्यते 'वशे हि यस्येन्द्रियाणि'इत्यादेः; अतोऽतिव्यापकमित्यत आह—सम्यगिति । प्रयत्नं विनेत्यर्थः । तस्यैव योगारूढस्यैव । अत्र प्रमाणमाह

रा॥र्थेषु तत्सम्बन्धिषु च कर्मसु नानुषज्जते न सङ्गमर्हति, तदा हि सर्वसङ्कल्पसन्न्यासी योगारूढ इत्युच्यते। तस्मादारुरुक्षोर्विषयानुभवार्हतया तदननुषङ्गाभ्यासरूपः कर्मयोग एव योगनिष्पत्तिकारणम्। अतो विषयाननुषङ्गाभ्यासरूपं कर्मयोगमेवारुरुक्षुः कुर्यात् ॥

तदेवाह—

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५

ता॥रोक्तप्रक्रियया महोत्सवादिनिन्यनैमित्तिकविषयम्, वैदिकस्य तत्र निस्सङ्गत्वायोगात्। अतो यो हि य दिच्छति, तस्य तस्मिंस्तत्साधने वा कार्यताबुद्धिरिति न्यायादिन्द्रियार्थेषु सक्तिना तदुपायभूतेषु विहितेषु निषिद्धेष्वनुभवेषु च कर्मसु यथासम्भवं सङ्गः स्यादिति तन्निषेध एवान्वित इत्यभिप्रायेण—तत्सम्बन्धिषु च कर्मस्वित्युक्तम्। मज्जत्यन्वेति निवर्ततेत्यादिषु प्रयोगेषु जायमानस्य सङ्गस्य नत्नाभिधर्तेन प्रतीयते, अत्र तु नानुषज्जते इत्युक्तम्। सङ्गस्स्वयमेव न जायत इत्यर्थः। तत फलितमाह—नसङ्गमर्हतीति। हिशब्दस्य वाक्यार्थान्वयौचित्यात्—तदा हीत्युक्तम्। तदा ह्यसौ सर्वसङ्कल्पसन्न्यासी योगारूढो भवति, ननु सङ्गकाल इति भावः। व्याख्यातश्लोकद्वयतात्पर्यार्थमाह—तस्मादिति। इष्टकारणत्वोपदेशो हि तत्र प्रवृत्त्यर्थ इति तात्पर्येणाह— अत इति ॥ ४ ॥

श्लोकद्वयाभिप्रेतमर्थं विवृणोतीत्याह—तदेवाहेति। 'आत्मना' इत्यस्य करणार्थत्वौचित्यात्

शा॥यागी हि इन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या न अनुषज्जते अनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः। सर्वसङ्कल्पसन्न्यासी सर्वान् सङ्कल्पान् इहामुत्रार्थकामहेतून् सन्न्यसितुं शीलम् अस्येति स सर्वसङ्कल्पसंन्यासी योगारूढः प्राप्तयोग इत्येतत्, तदा तस्मिन् काले उच्यते, 'सर्वसङ्कल्पसन्न्यासी' इति वचनात् सर्वांश्च कामान् सर्वाणि च कर्माणि सन्न्यसेत् इत्यर्थः। सङ्कल्पमूला हि सर्वे कामाः, 'सङ्कल्पमूलः कामो वै यज्ञास्सङ्कल्पसम्भवाः' 'काम जानामि ते मूलं सङ्कल्पात्त्वं हि जायसे ॥ न त्वां सङ्कल्पयिष्यामि तेन मे न भविष्यसि' इत्यादिस्मृतेः। सर्वकामपरित्यागे च सर्वकर्म*परित्यागः सिद्धो भवति 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते' इत्यादिश्रुतिभ्यः 'यद्यद्धि कुरुते जन्तुः तत्तत् कामस्य चेष्टितम्' इत्यादिस्मृतिभ्यश्च। न्यायाच्च—न हि सर्वसङ्कल्पसन्न्यासे कश्चित् स्पन्दितुमपि शक्तः। तस्मात् 'सर्वसङ्कल्पसन्न्यासी' इति वचनात् सर्वान् कामान् सर्वाणि च कर्माणि त्याजयति भगवान् ॥ ४ ॥

यदा एवं योगारूढः तदा आत्मा आत्मना उद्धृतः भवति संसारानर्थजातात्। अतः—उद्धरेत् संसारसागरे निमग्नम् आत्मानम् आत्मना ततः ऊर्ध्वं हरेत्, योगारूढताम् आपादयेत् इत्यर्थः। न आत्मानम् अवसादयेत् न अधः नयेत्। आत्मैव हि यस्मात् आत्मनः

आ॥ दापल्यां दृष्ट्वा त्वितरयां प्रयत्नतः ' इति ॥ ४ ॥

ज॥—उक्तं चेति। परमात्मानं दृष्ट्वा त्याज्यत इति शेषः। मुख्य एव चानुषङ्गोऽत्र विवक्षित इति भावः ॥ ४ ॥

पा॥ *सन्न्यास ॥

ग॥आत्मना-मनसा विषयाननुषक्तेन मनसा आत्मानमुद्धरेत्। तद्विपरीतेन मनसा आत्मानं नावसादयेत्। आत्मैव मनएव ह्यात्मनो बन्धुस्तदेवात्मनो रिपुः ॥ ५ ॥

बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६

येन पुरुषेण स्वेनैव स्वमनो विषयेभ्यो जितं,तन्मनस्तस्य बन्धुः। अनात्मनः-अजितमनसः स्वकीयमेव मनः शत्रुवत् शत्रुत्वे वर्तेत स्वनिश्श्रेयसविपरीते वर्तेतेत्यर्थः। यथो-

ता॥मनसेत्युक्तम् । विषयाननुषक्तेनतद्विपरीतेनेत्युभय क्रियाद्वयसामान्यात्पूर्वोत्तरानुसन्धानाद्योक्तम् । उद्धरेत् —योगारूढतापादनेन संसारसमुद्रादुत्तारयेत्; न पुनरधो नयेदित्यर्थः । आत्मोद्धरणावसादयोर्द्वयोरपि मनसो हेतुत्वं प्रपञ्चयते —आत्मैवेति । अन्ये बन्धवोऽपवर्गविरोधित्वादबन्धवः । अन्ये च रिपव आत्मप्रवृत्तिमूला इत्यवधारणाभिप्रायः ॥ ५ ॥

एकस्यैवैकप्रति बन्धुत्वं रिपुत्वं च व्याहतमिति शङ्का परिह्रियते— बन्धुरात्मा इतिश्लोकेन ।स्वेनैवेति—स्वात्मनेत्यर्थः । *मनसो विजयो नाम विषयेभ्यो व्यावर्तनमित्यभिप्रायेणोक्तम्—विषयेभ्यो* जितमिति ।बन्धुत्वोपपादन हि मनसो विजयेनोक्तम् । शत्रुत्वोपपादनमपि हि तदभावेनेत्यभिप्रायेणोक्तम्—अनात्मनः अजितमनस इति। 'आत्मैव' इत्येवकाराभिप्रेतमाह—स्वकीयमेवमनइति।स्वशेषभूतमेव हि विरोधि सञ्जातमितिभावः। शत्रुशब्दयोः पुनरुक्तिभ्रमव्युदासायान्वयमाह—शत्रुवच्छत्रुत्वे वर्तेतेति । सप्रतियोगिको ह्ययमत्रुरिह दृष्टान्तितः। शत्रुकृत्यमिह शत्रुत्वं विवक्षितमित्याह– स्वनि-

श॥बन्धुः। न हि अन्यः कश्चित् बन्धुः यः संसारमुक्तये भवति। बन्धुरपि तावत् मोक्षं प्रति प्रतिकूल एव, स्नेहादिबन्धनायतनत्वात् । तस्मात् युक्तं अवधारणं 'आत्मैव ह्यात्मनो बन्धुः'इति । आत्मैव रिपुः शत्रुः । यः अन्यः अपकारी बाह्यः शत्रुः सोपि आत्मप्रयुक्तः एव इति युक्तमेव अवधारणं 'आत्मैव रिपुरात्मनः'इति ॥ ५ ॥

आत्मैव बन्धुः आत्मैव रिपुः आत्मनः इत्युक्तम् । तत्र किंलक्षण आत्मा आत्मनो रिपुः इति ? उच्यते बन्धुः आत्मा आत्मनः तस्य, यस्य आत्मनः स आत्मा बन्धुः येन

आ॥स च योगारोहः प्रयत्नेन कर्तव्य इत्याह—उद्धरेदित्यादिना ॥ ५ ॥

कस्य बन्धुरात्मेत्याह—बन्धुरात्मेति । आत्मा-मनः आत्मनो जीवस्य । आत्मना म-

ज॥नन्वेव विरुद्धमयुक्तमुक्त्वा समाधियोगं विधत्ते किमर्थमात्मोद्धारकर्तव्यतोच्यते —इत्यतोऽनया वचोभङ्ग्या योग एव विधीयत इत्याह स चेति । तस्याधिकार्यादिकमुक्तः स एव च योग इति वक्तव्ये यदारोहग्रहणं कृत, तेन तावत्पर्यन्त योगः कर्तव्यः, न मध्य एव त्याज्य इति ज्ञापितम् । प्रयत्नेन—अभियोगेन ॥ ५ ॥

'आत्मैव हि' इत्युक्तमेवोत्तरश्लोके किमिति कथ्यत इति मन्दाशङ्कानिरासार्थमाह—कस्येति । किंविशेषणश्चेत्यपि ग्राह्यम् । तस्यैव तमेव प्रति बन्धुत्वं रिपुत्वं च विरुद्धम् तद्विशेषणभेदेन व्यवस्थाप्यम्। तथा च किंविशेषणस्यात्मनः, किंविशेषणो वाऽऽत्मा बन्धुः, रिपुश्चेत्यर्थः। इति पृच्छायामिति शेषः । 'आत्मा, आत्मनः' इतिपदद्वयम् आत्मशब्दस्यानेकार्थत्वाद्व्याचष्टे आत्मेति । नन्वाद्यश्लोके स्वपर्याय एवात्मशब्दः प्रकृतः, तदुपपादकद्वितीये कथमन्योऽर्थ इत्यत आह—आत्मनेति । अनयैव

यथोक्तं भगवता पराशरेणापि "'मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः।' इति ॥ ६॥

योगारम्भयोग्यावस्थोच्यते—

ता॥श्रेयसविपरीतमिति। नन्वनात्मनेत्यादीनां मनोविषयत्वं कथम्, कार्यकरणसङ्घातविषयत्वं हि परैरुक्तम्, ऐकरूप्येण सर्वेषामात्मशब्दानां स्वात्मविषयत्वं किं न स्यात्, कथं च मनसो जयादिः विपक्षव्यावर्तनादिरूप इतिशङ्कायां कर्मकर्त्रादिभेदव्यपदेशौचित्यात्पूर्वोत्तरानुसन्धानाच्च सिद्धमेवार्थं सवादेन द्रढयति—यथोक्तमिति ॥ ६ ॥

प्रतिष्ठितयोगस्यावस्था, तदारोहणोपायश्चोक्तौ, अथ योगप्रक्रियां वक्तुं तदारम्भदशा शिष्यत इत्याह—योगारम्भेति। मतभ्या 'समाहित.' इत्यनेन अन्वयभ्रमव्युदासायान्वयं पदार्थांश्च व्यञ्जयति—

४ पा ॥ १वि. पु ६ ७ २८ ॥ १ वमकर्तृत्व पा ॥

शां॥आत्मना आत्मैव जितः, आत्मा कार्यकरणसङ्घातो येन वशीकृतः, जितेन्द्रिय इत्यर्थः। अनात्मनः तु अजितात्मनः तु शत्रुत्वे शत्रुभावे वर्तेत आत्मैव शत्रुवत्, यथा अनात्मा शत्रुः आत्मनः अपकारी तथा आत्मा आत्मनः अपकारे वर्तते इत्यर्थः ॥ ६ ॥

आ॥मनसा आत्मानं जीवम् आत्मैव मनः आत्मना बुद्ध्या जीवेनैव वा। स हि बुद्ध्या विजयति, उक्तं च 'मनः परं कारणमामनन्ति' 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' "उद्धरेन्मनसा जीवं न जीवमवसादयेत्। जीवस्य बन्धुः शत्रुश्च मन एव न संशयः।' 'जीवेन बुद्ध्या हि यदा मनो जितं तदा बन्धुस्तदात्र्यन्यथा चास्यास्ततो जयेद्बुद्धियलो नरस्तद्धे च भक्त्या मधुकैटभारौ' इत्यादि ब्रह्मकैवर्ते। अनात्मनः अजितात्मनः पुरुषस्य अजितमनस्कस्य। सदरि मनोऽनुपकारीत्यनात्मा। सद्यपि भृत्यो न यस्य भृत्यपदे वर्तते सदाभृत्यः। तस्यात्मन एव शत्रुवच्छत्रुत्वे वर्तते ॥ ६ ॥

ज॥पीत्यादश्लोकोपायधर्मतात्मशब्दव्याख्यानं द्रष्टव्यम्। 'येनात्मैवात्मना जितः' इत्यत्रात्मशब्दौ व्याचष्टे—आत्मैवेति। एवशब्दोपादानं व्याख्येयनिवेशार्थम्। जीवेनैवेत्यवधारणं प्राधान्यज्ञापनार्थम्। यदाऽऽत्मशब्दो जीवे, तदा कर्तरि तृतीया, यदा बुद्धौ, तदा करणं इति ज्ञापयन्नुपपादयति—स हीति। विजयति विजयते, मन इति शेषः। येनेत्यादिव्याख्याननियमार्थमुक्तेऽर्थे प्रमाणान्याह—उक्तं चेति।

अनात्मनः' इति नञ्समासो बहुव्रीहिर्वा स्यात्, नाद्यः, आत्मन आत्मान्यत्वानुपपत्तेः, आत्मान्तरादन्यत्वस्य च प्रकृतानुपयोगात्। न द्वितीयः, आत्मशब्दस्य जीववाचित्वे वा मनोवाचित्वे वा सत्यपि तदभावस्यासम्भवादित्यत आह—अनात्मन इति। बहुव्रीहिपरिग्रहसूचनाय पुरुषस्येत्यन्यपदार्थो दर्शितः। अनात्मशब्दार्थं दर्शयितुमाह—अजितेति। नन्वविद्यमानः आत्मा यस्यासावनात्मा तत्कथमुच्यतेऽजितात्मन इति तत्राह—सदरीति। विद्यमानमपि मनोऽजितमनुपकारीति। अविद्यमानसादृश्यादविद्यमानतामुपचर्य अजितात्मा अनात्मोक्त इत्यर्थः। गौणप्रयोगे किं प्रयोजनमिति चेत्—न, रूढोपचारे प्रयोजनानपेक्षणात्—इति भावेनाह—सद्यपीति। भृत्यपदे सेवादौ। पदानां व्यवहितत्वादनात्मन इत्यर्थं व्याचष्टे—तस्येति। तस्याजितमनस्कस्य बन्धुरेवेत्येवार्थः। शत्रुवत्प्रसिद्धशत्रुरिव शत्रुत्वे—अपकारित्वे ॥ ६ ॥

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७**

**रा॥शीतोष्णसुखदुःखेषु मानापमानयोश्च जितात्मनः जितमनसः विकाररहितमनसः प्रशान्तस्य मनसि परमात्मा समाहितः सम्यगाहितः। स्वरूपेणावस्थितः प्रत्यगात्मात्र परमात्मेत्युच्यते, तस्यैव प्रकृतत्वात्। तस्यापि पूर्वपूर्वावस्थापेक्षया परमात्मत्वात् आत्मा परं समाहित इति वान्वयः ॥ ७॥**

---

ता॥शीतोष्णेति। एतेन 'मानापमानयोस्समस्य' इति प्रोक्ताध्याहारोऽनपेक्षित इति दर्शितम्। शीतोष्णादिषु द्वन्द्वेष्वनुभूयमानेषु कथं मनसो विजय इत्यत्राह - **विकाररहितमनस इति** । विकारश्च हर्षोद्वेगादिरूपः प्रागुक्तः । 'प्रशान्तस्य' इत्येतद्बाह्येन्द्रियव्यापारनिवृत्तिपरम्, मनोविकारनिवृत्तेरुक्तत्वात्। असन्निहितफलाभिसन्ध्यादिराहित्यपरं वा । 'समाहितः' इत्यस्याकाङ्क्षितं प्रकृतमुचितं चाधिकरणमाह— **मनसीति**। **सम्यगाहित इति** —विशदानुसन्धानयोग्यो जात इत्यर्थः। जीवात्मप्रकरणे परमात्मा कथमुच्यत इत्यत्राह —**स्वरूपेणेति** । अत्रेति प्रकरणौचित्यसूचनम्। तदेव दर्शयति—**तस्यैवेति**। एवकारेण प्रासङ्गिको हि पूर्वं परमात्मप्रसङ्ग इति ज्ञापितम्। अपरस्य जीवस्य परमात्मशब्दविषयस्य कथमित्यत्राह—**तस्यापीति** । तथापि परमात्मशब्दस्य प्रसिद्धार्थः परित्यक्तस्स्यात्, परत्वं च सङ्कुचितम्, परमशब्दनिर्वचनं च न घटते ; परो मा अस्मादिति हि तत्। नच पूर्वपूर्वावस्थापेक्षया परो मा अस्मादित्यन्वयस्सिध्यतीत्यरुचेरन्वयान्तरमाह **आत्मा परमिति** । अत्र चाधिकं केवलमिति वा परशब्दार्थः ॥

---

**शा॥जितात्मनः कार्यकरणसङ्घात आत्मा जितो येन सः जितात्मा तस्य जितात्मनः प्रशान्तस्य उपशान्तस्य परमात्मा समाहितः साक्षात् आत्मभावेन वर्तते इत्यर्थः किञ्च । शीतोष्णसुखदुःखेषु तथा माने अपमाने च मानापमानयोः पूजापरिभवयोः समः॥ ७ ॥**

---

**आ॥जितात्मनः फलमाह—जितात्मन इति । जितात्मा हि प्रशान्तो भवति । न तस्य मनः प्रायो विषयेषु गच्छति । तदा च परमात्मा सम्यगाहितः हृदि सन्निहितो भवति अपरोक्षज्ञानी भवतीत्यर्थः । अपरोक्षज्ञानिनो लक्षणं स्पष्टयति—शीतोष्णेत्यादिना ।**

---

ज॥योगो विहितः, तत्किं 'जितात्मनः' इत्यनेनेत्यत आह—**जितात्मन इति**। उपकारी हि बन्धुरुच्यते। तत्र जितं मनः कमुपकारं करोति, येन बन्धुः स्यात् ; आत्मोद्धारं करोतीति चेत् —स एव च क इत्याशङ्क्येति शेषः। जितात्मनः फले वक्तव्ये प्रशान्तस्येत्यनुवादः किमर्थ इत्यत आह —**जितात्मा हीति**। वाक्यभेदेनेदमेव फलकथनमिति भावः । ननु जितात्मत्वमेव प्रशान्तत्वं, तत्कथं तत्फलं स्यादित्यत आह—**नेति** । **तस्य** जितात्मनः। स्वत एवेति शेषः। तर्हि निराकाङ्क्षत्वादुत्तरं वाक्यं व्यर्थमित्यतः परमफलं दर्शयितुं तदिति भावेन न्यूनमध्याहारेण पूरयन्व्याचष्टे - **तदा चेति** । प्रशान्तत्वे सति परमात्मा सर्वेषां हृदि सन्निहित एव, तत्कुतः प्रशान्तस्य विशेष इत्यतः सम्यक्पदसूचितार्थं विवृणोति—**अपरोक्षेति**। योगारूढ इत्यर्थः। 'यदा हि' इति योगारूढस्य लक्षणमुक्तं तत्किमर्थं पुनरुच्यत इत्यत आह —**अपरोक्षेति**। सार्धश्लोकद्वयग्रहणायादिपदम्। अत्र सप्तम्या अन्वयो न दृश्यते, अत आह—**शीतेति**। अत्र भास्करोऽन्वयमपश्यन् 'परमात्मा समाहितः' इति सम्प्रदायागतं पाठं विसृज्य 'परात्मसुसमा मतिः' इति पाठान्तरं प्रकल्प्य समा मतिरिति तु आवर्त्य सप्तम्या अन्वयमुक्त्वा पूर्वपाठेऽन्वयाभाव इ-

रा॥ निमित्ततोऽनर्थेच्छव , उभयहेत्वभावात् उभयरहिता उदासीना , जन्मत एवोभयर हिता मध्यस्था , जन्मतएवानिष्टेच्छवो द्वेष्या , जन्मत एव हितैषिणा बन्धव , साधवो

ता॥नरानविषय प्राप्त ततोऽन्यापि पारिशेष्याददीनान्द कृत्रिमशत्रुविषयमाह—अन्यो निमित्ततोऽनर्थच्छव इता मध्यस्थशब्दोऽपि द्वयर धुरान्दासत्वेर्हेतुतो हिताहितप्रवृत्तियोग्येषु प्रयोगाभावाच ज न्मत एवोभयरहितविषय उचित । तत पारिशेषादौदासीन्यस्य प्रवृत्तिर्प्रति रन्धकत्वेन तत्स्मारकत्वात्का रणाग्मे हिताहितप्रवृत्तियाम्यास्तदभावमानण तद्रहिता उदासीना इत्यभिप्रायेणाह —उभयेति । उभय हितैषित्वमाहतैषित्वञ्च जन्मतस्सम्बन्धिनो र एव इत्येताकन्यात्रस्य दुर्योधनादिष्वतिव्याप्ते —जन्मत एव हितैषिणोबन्धव इत्युक्तम्।एव स्वप्रतिसम्बन्धिन पुरुषा उक्ता ,अथ साधारण्येन श्लाघ्यत्वनित्य

प्र पा ॥ १ प्रातमरवधिकत्वेन पा ॥

श॥षु शास्त्रानुवर्तिषु अपि च पापषु प्रतिषिद्धकारिषु सर्वेषु एतषु समबुद्धि 'क कर्ता किं कर्म' इति ध याभृतबुद्धि इत्यर्थ । विशिष्यते—'विमुच्यते' इति पाठान्तरम् ,

आ॥स्य तन्निमित्तकत्वस्य च सर्वेषेकरूप्यण चिद्रूपा एव हि जीवा , विशेषस्त्वन्त करण कृत ,सर्वेषा साधुत्वादिक सर्वमीश्वरकृतमेव, स्वतो न किञ्चिदपि। उक्त चैतत्सर्वम् 'स्व त सर्वेऽपि चिद्रूपा सर्वदोषविवर्जिता । जीवास्तेषा तु ये दोषास्त उपाधिकृता मता । सर्व चेश्वरतस्तेषा न किञ्चित्स्वत एव तु। समा एव ह्यत सर्वे वैषम्य भ्रान्तिसम्भवम् । एव समानजीवास्तु विशेषा देवतादिषु । स्वाभाविकस्तु नियमादत एव सनातना ॥ असुरादस्तथा दोषा नित्या स्वाभाविका अपि। गुणकर्मा मानवाना नित्यौ स्वाभाविकौ मतौ॥ गुणकर्मानुरूपास्तु देवा एव सदा मता ' इति प्राह्य। न तु साधुपापादीना पूजा

ज॥त्यर्थ । तत्राद्य प्रकार विवृणोति—चिद्रूपा एवेति । मनुष्येषु यदेक एकं प्रति मुद्वदित्यादि तत् न जीवस्वभावान्तगत किन्तु चिद्रूपत्वादिकमेवेत्यर्थ । तर्हि सु॰ादिधर्म किमात्मक इत्यत आह—विशेषास्त्विति । अन्त करणोपादानको वाह्यधम । एतदुक्त भव ति—मुक्तावनदिष्यमाण यज्जीवरूप तत् 'त्रिविधा जीवसङ्घा 'इत्यादिप्रमाणाद्विषमम । कि तु दहेन्द्रियान्त करणधर्म यद्वैरम्य तत्तत्स्वरूप ए तारोप्य विषमत्वादत्वे यागारूढस्य नास्तीति । द्वितीय प्रकार स्फुट । तृतीय विवृणोति—सर्वेषा मिति । स्वत —स्वातन्त्र्येण। अत्र प्रमाणमाह—उक्तचेति । स्वत स्वरूपेण । दोषैररित्वादिभि । एव मुहृत्त्वादिगुणैरित्यपि ग्राह्यम् । आगन्तुकधर्मा न स्वरूपान्तर्गता इत्यर्थ । कि तर्हि इत्यत आह—तेषात्विति । दोषा गुणाश्च। उपाधि —अन्त करणादि । सर्व—सुहृत्त्वादिकम् । अतएव प्रकारद्वयेन यदना मध्यमानामस्वन्तर्भाव्य वैषम्यम् , यच्च क्वचित् परमेश्वराधीनरूपत्व तद्भ्रान्तिप्रतीतम् । योगे प्र-वर्तमान प्रति यत्सुहृत्त्वादिकं तन्मनुष्येष्वेव स्वरूपवैषम्यकारणं न भवति न तु देवादिष्वित्युच स्याप वादमाह —एवमिति । तुशब्दोऽवधारणे । अवधारणार्थ विवृणोति—विशेष इति । विशेषा योगि न प्रति सुहृत्त्वादि । तदव प्रपञ्चयति—असुरादरिति । तथाशब्दो वक्ष्यमाणसमुच्चय । दोषा योगनं प्रति अरित्वाद्या । तथा चाक्त ' विरोधेनमिह वैरिणम् ' इति । गुणदोषौ मुहृत्त्वारित्वादी अनाग न्तुकौ। गुणे सुहृत्त्वादिभिरेकमात्र गुणेकमात्रम्,तथा च श्रुति —'यथा ह वै बहव पशव 'इत्यादिका । सुहृदित्यादिश्लाकस्य प्रतीत एवार्थ कि न स्यादित्यत आह—न हीति । समशब्दपर्यायस्य सम श्दस्यैव सवनामसंज्ञा, न साधारणार्थस्य, समे देश यजतीति। तथा न केवल समपूजाया दोष , कि तु

रा॥धर्मशीलाः; पापाः पापशीलाः; आत्मैकप्रयोजनतया सुहृन्मित्रादिभिः प्रयोजनाभावाद्विरोधाभावाच्च तेषु समबुद्धिर्योगाभ्यासार्हत्वे विशिष्यते ॥ ९॥

**योगी युञ्जीत सततं आत्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १०**

ता॥त्वाद्याश्रयाः पुरुषास्साधुपापशब्दाभ्यामभिधीयन्त इत्यभिप्रायेणाह—साधुष्विति। वाक्यार्थमाह-आत्मैकेति।सुहृदादिभिः प्रयोजनाभावादितरैर्विरोधाभावाच्चेत्यर्थः।ननु युक्तं नाम सुहृदादिषु समबुद्धित्वम्, न तु साधुषु पापेषु च योगिना समं प्रायोजनम्, सत्सङ्गमादेरसत्परित्यागादेश्च ज्ञानवृद्धिहेतुत्वेन तेषामवश्यापेक्षितत्वात्। उच्यते—नेदानीमुपजीवकदशापन्नोयोगी निर्दिश्यते; किन्तु श्रुतसकलश्रोतव्यः कृतसकलकर्तव्यः साक्षात्कारात्यन्तयोग्यदशापन्नः; तथाविधस्य च तस्य साधुभिः पापैश्च प्रयोजनाभावस्समः; केवलं योगोपयुक्तरहस्यस्थानादेरेवोपादेयत्वादिति भावः। योगाभ्यासार्हदशा हि प्रागप्युक्ता; इयं तु तत्र काष्ठाप्राप्तावस्थेति 'विशिष्यते' इत्यस्य भावः। तदाह—*योगाभ्यासार्हत्वे विशिष्यते* इति। अत्र विमुच्यत इति परैः पठितात्पाठविकल्पादयमेव पाठ उचित इति भावः ॥ ९॥

अथाध्यायप्रधानार्थभूतयोगाभ्यासविधिरुच्यते - 'योगी युञ्जीत' इत्यादिना।युञ्जीतेति साक्षात्काररूप-

---

ग॥योगारूढानां सर्वेषाम् अयम् उत्तम इत्यर्थः ॥ ९॥

आ॥विसाम्यम्, तत्र दोषस्मृतेः; 'समानां विषमा पूजा विषमाणां समा तथा। क्रियते येन देवोऽपि स्वपदाद्भ्रश्यते पुमान्' इति ब्राह्मे।'वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी। एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम्' इति मानवे 'गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः। सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति॥ वैषम्यमुत्तमत्वं तु ददाति नरसञ्चयात्। पूजाया विषमा दृष्टिः समा साम्यं विदुःस्वजम्' इति ब्रह्मकैवर्ते। सुहृदादिषु शास्त्रोक्तपूजादिकृतिः अन्यूनानधिका या साऽपि समता। तदप्याहुः—'यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च। तथा करोति पूजादि समबुद्धिः स उच्यते' इति गारुडे। प्रत्युपकारनिरपेक्षयोपकारकृत्सुहृत्।क्लेशस्थानं निरूप्य यो रक्षां करोति स मित्रम्। अरिर्धघातिकर्ता। कर्तव्ये उपकारे अपकारे च य उदास्ते,स उदासीनः। कर्तव्यमुभयमपि यः करोति, स मध्यमः। अयाचितकृद्द्वेष्यः। आह चैतत्' द्वेष्योऽयाचितकृत्कार्यमात्रकारी तु मध्यमः। प्रियकृत्प्रियो निरूप्यापि क्लेशं यः परिरक्षति। स मित्रमुपकारं तु अनपेक्ष्योपकारकृत्। यस्ततः स सुहृत्प्रोक्तः शत्रुश्चापि वधादिकृत्' इति ॥ ९॥

---

ज॥विषमपूजाविधानं नास्तीत्याह —वित्तमिति। बन्धुरिति बन्धुत्वम्।मान्यानि च तानि स्थानानि च। वित्तादिशब्दैः तद्वन्त उपलक्ष्यन्ते,दृष्टिरेवोक्तप्रकारत्रयेण समा कार्या;पूजा तु विषमैवेत्यत्र प्रमाणान्तरमाह—गुणेति। या विषमा पूजा, सा वैषम्यम्; तस्यैव व्याख्यानमुत्तमत्वम्। साम्य ददाति विदुःस्वस्वनिमित्तम्। समबुद्धित्वं प्रकारान्तरेण व्याचष्टे—सुहृदादिष्विति। एतच्च योगारूढविषयमिति तत्रैवनोक्तम्; न हि योगारूढो लौकिकेष्वरिष्वपकारं करोति; करोति यः। सुहृन्मित्रशब्दयोररिद्वेष्यशब्दयोरुदासीनमध्यस्थशब्दयोश्चार्थभेदो न प्रतीयते, अत आह—प्रत्युपकारेति। निरपेक्षयाऽनपेक्षया अयाचितमप्रियम्; ततः उपक्रियमाणात् ॥ ९॥

रा॥योगी उक्तप्रकारकर्मयोगनिष्ठः, सततम् अहरहर्योगकाले, आत्मानं युञ्जीत-आत्मानं युक्तं कुर्वीत, स्वदर्शननिष्ठं कुर्वीतेत्यर्थः ; रहसि-जनवर्जिते निःशब्दे देशे स्थितः एकाकी तत्रापि न सद्वितीयः यतचित्तात्मा—यतचित्तमनस्कः,निराशीः-आत्मव्यतिरिक्ते कृत्स्ने वस्तुनि निरपेक्षः, अपरिग्रहः तद्व्यतिरिक्ते कस्मिंश्चिदपि ममतारहितः ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥ ११
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२

शुचौ देशे-अशुचिभिः पुरुषैरनधिष्ठिते अपरिगृहीते चाशुचिभिर्वस्तुभिरसंस्पृष्टे च

ता॥स्य योगस्य विधीयमानत्वाद्योगीत्यनेन कर्मयोगनिष्ठस्यानुवादः क्रियत इत्यभिप्रायेणाह-उक्तप्रकारेति।'सततम्'इत्येतत्र सर्वकालविषयम्,तथा योगशास्त्रैः अनभिहितत्वात्,अशक्यत्वाच्च।अतःप्रतिदिवस योगयोग्यतया विहितकर्मोत्तरकालमात्रस्यपरमित्यभिप्रायेणाह-अहरहर्योगकाल इति। 'युञ्जीत' इत्यत्र विवक्षितमर्थं वक्तुं प्रकृतिप्रत्ययार्थभेदं दर्शयति—युक्तंकुर्वीतेति। तत्र'युज् र् समाधौ'इति प्रकृत्यर्थस्य विवक्षितं व्यनक्ति —स्वदर्शनेति। आत्मात्र मनः, स्वात्मा वा। जनवर्जितेऽपि देशे बाह्यदेशस्थितानां शब्दस्यागमे सति मनस्समाधानं न स्यादिति तन्निवृत्त्यर्थमुक्तं—निःशब्द इति । ' रहसि ' इति विजनदेशाभिधानेऽपि पुनः ' एकाकी ' इति पदं रहस्याहीत्यासन्नशिष्यसब्रह्मचार्यादिसन्निधिपरित्यागार्थमित्यभिप्रायेणाह —तत्रापिनसद्वितीय इति। यद्वा रहश्शब्देन जनवर्जनद्वारा निःशब्दत्वं लक्ष्यते। एकाकिशब्देन तु जनवर्जनमेवोच्यत इति भावः। व्युत्थानकालेऽपि एकाकित्वमनेनोच्यत इत्येके। ततोऽप्यस्यार्थस्यात्यन्तोपकारित्वादेव योजना। एतेन'रहसिस्थितः' 'एकाकीच'इति विशेषणात् संन्यासं कृत्वेत्यर्थः'इति शङ्करोक्तमप्युक्तम्।आत्मशब्देन मनसोऽभिधानेऽपि तस्यैव चिन्तारूपवृत्त्यपेक्षया तद्विशिष्टापेक्षया वा चित्तशब्द इत्यभिप्रायेणाह—यतचित्तमनस्कइति । आशीश्शब्दस्यानेकार्थत्वादिह निरपेक्ष्यविशेषव्यक्त्यर्थमुक्तं निरपेक्ष इति । अपरिग्रहशब्देन बुद्ध्या स्वीकारपर्यायः परिग्रहोऽत्र निषिध्यत इत्यभिप्रायेणाह—ममतारहित इति ॥ १० ॥

बाह्योपकरणनियममाह—शुचौदेश इत्यादिना । शुचिशब्दस्मरणोचकाभावात्संसर्गजं स्वाभाविकं चाशुचित्वं निवर्तयतीत्यभिप्रायेणाह—अशुचिभिरिति।अशुचयः पुरुषाः पाषण्डिपतितादयः।अन

प्र पा ॥ १. अविहितसाद पा ॥ २०

श्री॥अत एवम् उत्तमफलप्राप्तये—योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदा आत्मानम् अन्तःकरणं रहसि एकान्ते गिरिगुहादौ स्थितः सन् एकाकी असहायः—'रहसि स्थितः एकाकी च' इति विशेषणात् संन्यासं कृत्वा इत्यर्थः। यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा देहश्च संयतौ यस्य सः यतचित्तात्मा निराशीः वीततृष्णः अपरिग्रहः परिग्रहरहितश्च । संन्यासित्वे ऽपि त्यक्तसर्वपरिग्रहः सन् युञ्जीत इत्यर्थः ॥ १० ॥

आ ॥ समाधियोगप्रकारमाह—योगीयुञ्जीत समाधियोगयुक्तं कुर्यात् ।

आ॥ननु 'उद्धरेत्' इत्यनेनैव योगो विहितः, तत्किं पुनर्विधीयत इत्यत आह —समाधीति ।प्रकारकथनाय विध्यनुवाद इत्यर्थः। युञ्जीतेति योगमात्रमुच्यते,तच्च समाधीत्युक्तमित्यत आह— युञ्जीतेति

रा ॥ पवित्रभूते देशे, दार्वादिनिर्मितं नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरमासनं प्रतिष्ठाप्य तस्मिन्मनःप्रसादकरे सापाश्रय उपविश्य योगैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः - सर्वात्मनोपसंहृतचित्तेन्द्रियक्रियः आत्मविशुद्धये—बन्धनिवृत्तये यो-

---

ता॥अधिष्ठिते अपरिग्रहाले चेति अधिष्ठानं-परकीयेषु निर्वाहकत्वादिरूपेण संसर्गः;परिग्रहः—स्वकीयत्वाभिमानः;तदुभयवर्जितेऽशुचिशब्दः शास्त्रान्तरोक्तं शोधकत्वमपि लक्षयतीत्यभिप्रायेणोक्तं— पवित्रभूत इति।च्विप्रत्ययरहितप्रयोगात्स्वतश्शुद्धिरुक्ता;'नात्युच्छ्रितं नातिनीचम्'इत्यादिदृष्टसौकर्यार्थम्।स्थिरत्वे हेतुर्दार्वादिनिर्मितत्वम्; तस्य कठिनत्वान्मृदुत्वार्थं चेलम्, तत्रापि निस्तरङ्गत्वार्थं शुद्ध्यर्थंचाजिनम्,सर्वस्योपरिशुद्ध्यर्थंसत्त्वोन्मेषार्थं च कुशाः। 'कुशाजिनचेलोत्तरम्' इति कश्चिद्भाष्यपाठः; तथा सत्युत्तरोत्तरमादेयमित्यर्थमुक्तमिति मन्तव्यम्।'विपरीतोऽत्र क्रमश्चेलादीनाम्'इति च शाङ्करम्। केचित्त्वव्यवस्थितक्रमत्वमूचुः।प्रतिष्ठाप्य—दृढं स्थापयित्वा।तत्रासन उपविश्येत्यन्वयव्यक्त्यर्थं तस्मिन्नित्यादिकमुक्तम्। उक्तानां शुचिदेशादीनां दृष्टादृष्टद्वारा योगोपयोगं दर्शयितुं—मनःप्रसादकर इत्युक्तम्। सापाश्रय उपविश्येति - अन्यथा पाश्चात्यधारणप्रयत्नस्समाधिविरोधी स्यादितिभावः। उपविश्य न तु तिष्ठञ्छयानो वा। तथाच सूत्रम्'आसीनस्सम्भवात्'इति। स्थानशयनयोश्च आयासनिद्रादिप्रसङ्गेन योगो न संभवेत्। तत्रैकाग्रम् इत्यन्वयभ्रमव्युदसाय—योगैकाग्रमित्युक्तम्। विरुद्धान्यवृत्तेरेतद्वृत्तिप्रधानत्वमिहैकाग्रत्वम्।'अव्याकुलमेकाग्रम्'इति केषुचिद्भाष्यकोशेषु पाठः; आत्मावलोकनोन्मुखं कृत्वेत्यर्थः। सार्वभौमोहि चित्तस्य वृत्तिनिरोधो योगतया योगशास्त्रेऽभिहित इत्यभिप्रायेण - सर्वात्मनोपसंहृतचित्तेन्द्रियक्रिय इत्युक्तम्। चित्तमिह चिन्तावृत्तिः, इन्द्रियाणि च बाह्यानि, 'एकाग्रं मनः कृत्वा' इति वचनात्। बाह्यविषयेष्वे एवायमुपसंहारः; अन्यथात्मावलोकनमपि न स्यात्। एतेन 'मनसो निश्शेषवृत्तिविलयो योगः' इति पक्षो निरस्तः। शुद्धान्तःकरणस्य साक्षात्कारसाध्या ह्यात्मविशुद्धिर्मोक्ष एवेत्यभिप्रायेण—बन्धनिवृत्तय इत्युक्तम्। 'अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः' इति कर्म-

---

प्र-गा॥१. शारी. ४-१-७॥ आसीन उपासनं कुर्यात्, तस्यैवैकाग्र्यसंभवात् ॥ २. वि पु. ६ ७ ७७ ॥ 'अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः । अशुद्धास्ते... कर्मयोनयः ॥

---

दा॥अथ इदानीं योगं युञ्जानस्य आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य लक्षणं, तत्फलादि च,इत्यत आरभ्यते। तत्र आसनमेव तावत् प्रथमम् उच्यते—शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरम् अचलम् आत्मनः आसनं नात्युच्छ्रितं नातीव उच्छ्रितं न अपि अतिनीचं,तच्च चेलाजिनकुशोत्तरं चेलम् अजिनं कुशाश्च उत्तरे यस्मिन् आसने तत् आसनं चेलाजिनकुशोत्तरम्। पाठक्रमात् विपरीतः अत्र क्रमः चेलादीनाम् ॥ ११ ॥

प्रतिष्ठाप्य किम्? तत्र तस्मिन् आसने उपविश्य योगं युञ्ज्यात्; कथं? सर्वविषयेभ्यः उपसंहृत्य एकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः चित्तं च इन्द्रियाणि च

---

आ ॥ आत्मानं मनः ॥ १०-११ ॥

---

ज॥सामान्यशब्दोऽपि प्रकरणाद्विशेषेऽवतिष्ठत इत्यर्थः।आत्मशब्दस्यात्र विवक्षितमर्थमाह—आत्मानमिति ॥ १०-११ ॥

रा ॥ गं युञ्ज्यात्-आत्मावलोकनं कुर्वीत ॥ ११ ॥ १२ ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरम् ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३
प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितः ।
मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४

कायशिरोग्रीवं समम्-अचलं मापाश्रयतया स्थिरं धारयन्, दिशश्चानवलोकयन्, स्वनासिकाग्रं सम्प्रेक्ष्य, प्रशान्तात्मा-अत्यन्तनिर्वृतमनाः, विगतभीर्ब्रह्मचर्ययुक्तो मनस्सं-

ता॥बन्धो ह्यात्मनामशुद्धिरुच्यते; 'योग युञ्जीत' इत्येतत् 'ओदनपाक पचति' इतिवदित्यभिप्रायेण —आत्मावलोकनं कुर्यादित्युक्तम् ॥ ११, १२ ॥

एवं शुचिदेशासनादिरूपं बाह्यं योगोपकरणं मनसश्चैकाग्र्यमुक्तम् अथान्तरान्तरतमयोः कायमनसोः क्रमात्कर्तव्यनियमविशेषा उच्यन्ते-'समम्' इत्यादिश्लोकद्वयेन। 'कायशिरोग्रीवम्' इति द्वन्द्वैकवद्भावः; तत एव नपुंसकता। अत्र सिद्धापरनामा शरीरस्य मध्यमप्रदेशः कायशब्देन विवक्षितः। 'समम्, अचलं, स्थिरम्' इति धारणक्रियाविशेषणानि, समत्वमन्यत्रार्जवं विवक्षितम्; अचलशब्देन निष्कम्पत्वेऽभिहितेऽपि स्थिरमित्येतदङ्गकम्पकरश्रमहेतुभूतपश्चाद्धारणप्रयत्ननिवृत्तिहेत्वभिप्रायमिति दर्शयितुं—मापाश्रयतया स्थिरमित्युक्तम्। अनेनाचलत्वस्य चिरानुवर्तनयोग्यत्वमुक्तं भवति। बाह्येभ्यो व्यावर्तनं नासिकाग्रे स्थापनं चेति क्रमप्रदर्शनाय —'दिशश्चानवलोकयन्' 'स्वनासिकाग्रं सम्प्रेक्ष्य' इति व्युत्क्रमेणोक्तम्। यद्वा चतुरत्र हेत्वर्थत्वादिक्छब्दोपलक्षितबाह्यसकलपदार्थावलोकननिवृत्त्यर्थं योगारम्भक्षणे स्वनासिकाग्रप्रेक्षणमितिभावः। भोग्येतरानुपयुक्तविषयनिरीक्षणमपि निवर्तनीयमित्यभिप्रायेण—दिशश्चेत्युक्तम्। निमीलनेनापि बाह्यानवलोकनसिद्धौ स्वनासिकाग्रावेक्षणं निद्रादिनिवृत्त्यर्थम्। 'सम्प्रेक्ष्य नासिकाग्रम्' इत्येतावत्यभिहिते परनासिकाग्रप्रेक्षणमपि शङ्क्येतेति तद्व्यवच्छेदार्थमुक्तं—'स्वम्' इति। मनस्यन्तर्मुखे नासासम्प्रेक्षणस्यासम्भवाच्चक्षुषो दृष्टिसन्निपातमात्रमिह विवक्षितम्। अतस्सम्प्रेक्ष्येत्यत्र 'इवशब्दो लुप्तो द्रष्टव्य' इति शाङ्करम्। नायनस्य तेजसस्स्वच्छन्दवृत्त्या नासाग्रसन्निपातमात्रमिह विवक्षितम्, 'मनस्संयम्य' इति संयमस्याभिधानात् प्रशान्तात्मशब्दोऽत्र योगोपयुक्तमनस्सन्तोषपर इत्यभिप्रायेण —अत्यन्तनिर्वृतमना इत्युक्तम्। 'ब्रह्मचारिव्रते स्थितः' इत्यनेन ब्रह्मचर्याश्रमप्रतीतिः, शङ्करोक्तप्रक्रियया वा ब्रह्मचर्यगुरुशुश्रूषाभिक्षान्नभोजनादिधीस्स्यादिति तद्व्यवच्छेदायाह—ब्रह्मचर्ययुक्त इति। ब्रह्मचर्यं च स्तन-

शा॥चित्तेन्द्रियाणि तेषां क्रिया संयता यस्य सः यतचित्तेन्द्रियक्रियः। स किमर्थं योगं युञ्ज्यात् इति? आह—आत्मविशुद्धये अन्तःकरणस्य शुद्ध्यर्थम् इत्येतत् ॥ १२ ॥

बाह्यम् आसनम् उक्तम्; अधुना शरीरस्य धारणं कथम् इति? उच्यते—समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन् अचलं च, समं धारयतः चलनं सम्भवति; अतः विशिनष्टि—अचलम् इति। स्थिरः स्थिरो भूत्वा इत्यर्थः। स्वं नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वा इव इति; इवशब्दो लुप्तः द्रष्ट-

आ ॥ योगं समाधियोगं युञ्ज्यात् ॥ १२ १३ - १४ ॥

जा॥उपविश्यासन इत्यत्रापि योगशब्द एवमेव व्याख्येय इत्याह—योगमिति। स्थाननिवेकार्थे युञ्ज्यादित्युक्तम्; कुर्यादिति यावत् ॥ १२ - १३ - १४ ॥

रा॥यस्य मच्चित्तो युक्तः अवहितो मत्पर आसीत-मामेव चिन्तयन्नासीत ॥१३॥ १४॥

**युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥** १५

**एवं मयि परस्मिन् ब्रह्मणि पुरुषोत्तमे मनसश्शुभाश्रये सदा आत्मानं मनो युञ्जन् नियतमानसः**— मत्स्पर्शपवित्रीकृतमानसतया निश्चलमानसः मत्संस्थां निर्वाणपरमां शा-

ता॥इति पिशितपिण्डे भोग्यताधीगर्भस्मरणालोकनालापादिरहितत्वमत्र विवक्षितम्। स्मरन्ति च—'ब्रह्मचर्यं च योषित्सु भोग्यताबुद्धिवर्जनम्' इत्यादि। तथा 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' इति । युक्तशब्दस्य पूर्वोत्तरप्रतिपन्नात्मावलोकनाभिधानादपि तदुपयुक्तावधानविषयत्वमत्रोचितमित्यभिप्रायेण—**अवहित** इत्युक्तम् । मच्चित्तशब्दो भगवति चित्तस्यानुप्रवेशपरः । मत्परशब्दस्तु तदेकचित्तत्वपरः, तदनुवृत्तिपरो वेत्यपौनरुक्त्यमाह—**मामेव**ति । यद्वा स्त्र्यादौ भोग्यचिन्ता, राजादौ च महति परधीर्लोके विभक्ता, मयि तु तदुभयमित्यपुनरुक्तिः ॥ १३ - १४ ॥

जीवात्मयोगप्रकरणे 'मच्चित्तो मत्परः' इति परमात्मचिन्तनं किमर्थं विधीयत इत्यत्रोच्यते—'युञ्जन्नेवम्' इति । एवमित्यनुवादे 'मच्चित्तः' 'मत्परः' इत्युक्तमच्छब्दाभिप्रेतं परत्वादिकं विवृण्वन्नाह—**एवं मयी**ति । परस्मिन् ब्रह्मणीत्यनेन सर्वकारणत्वेन सर्वोत्तमत्वादिकं विवक्षितम्। तथात्वेऽपि समस्तवैलक्षण्येन तद्गतदोषासंस्पर्शो देवताविशेषनिष्कर्षश्च—**पुरुषोत्तम**शब्दाभिप्रेतः । उक्ताकारविशिष्टत्वाच्च मनसश्शुभाश्रयत्वम् । एतेन शुभाश्रयप्रकरणान्तरोक्तदिव्यमङ्गलविग्रहविशिष्टत्वमप्यभिप्रेतम्।तत्रात्मशब्दः प्रकृतानुवादपरतया मनोविषयः।युञ्जन्नित्यस्य प्रयोजनं नियतमानसत्वम्,तच्च निश्चलमानसत्वम्।तदुत्पत्तौ हेतोरवान्तरव्यापारोऽयमित्यभिप्रायेणाह—**मत्स्पर्शे**ति। मत्संस्थाम्' इत्यादिपर-

प्र-पा ॥ १. २. आग्नेयपुराणम्. ३७२-अ, १०-११. श्लो. बृहस्पतिस्मृतौ च ॥

शं॥द्यः। न हि स्वनासिकाग्रसंप्रेक्षणम् इह विधित्सितम्। किं तर्हि[1] चक्षुषोः दृष्टिसन्निपातः । स च अन्तःकरणसमाधानापेक्षः विवक्षितः । स्वनासिकाग्रसम्प्रेक्षणमेव चेत् विवक्षितम्, मनः तत्रैव समाधीयेत, न आत्मनि । आत्मनि हि मनसः समाधानं वक्ष्यति 'आत्मसंस्थं मनः कृत्वा' इति । तस्मात् इवशब्दलोपेन अक्ष्णोः दृष्टिसन्निपात एव 'सम्प्रेक्ष्य' इत्युच्यते । दिशश्च अनवलोकयन् दिशां च अवलोकनम् अकुर्वन् इत्येतत् ॥१३॥

किञ्च—प्रशान्तात्मा प्रकर्षेण शान्तः आत्मा अन्तःकरणं यस्य सोऽयं प्रशान्तात्मा विगतभीः विगतभयः ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचारिव्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षान्नभुक्त्यादि, तस्मिन् स्थितः, तदनुष्ठाता भवेत् इत्यर्थः । किञ्च—मनः संयम्य मनसः वृत्तीः उपसंहृत्य इत्येतत्, मच्चित्तः मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तो युक्तः समाहितः सन् आसीत उपविशेत् मत्परः अहं परो यस्य सोऽयं मत्परो भवति । कश्चित् रागी स्त्रीचित्तः, न तु स्त्रियम् एव परत्वेन गृह्णाति; किं तर्हि? राजानं, महादेवं वा । अयं तु मच्चित्तो मत्परश्च ॥ १४ ॥

अथ इदानीं योगफलम् उच्यते—*युञ्जन्* समाधानं कुर्वन् *एवं* यथोक्तेन विधानेन *सदा आत्मानं* सर्वदा *योगी नियतमानसः* नियतं संयतं मानसं मनो यस्य सोऽयं निय-

रा॥न्तिमधिगच्छति निर्वाणकाष्ठारूपां मत्संस्थां—मयि संस्थितां शान्तिमधिगच्छति॥१५॥

एवमात्मयोगमारभमाणस्य मनोनैर्मल्यहेतुभूतां मनसा भगवति शुभाश्रये स्थिति मभिधायान्यदपि योगोपकरणमाह—

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७

अत्यशनानशने योगविरोधिनी, अतिविहारोविहारौ च, तथाऽतिमात्रस्वप्नजागर्ये,

न॥समयाननम्। 'निर्वाणपरमाम्' इत्यत्र निर्वाणं परमं यस्या इति समासे विशेषणत्वस्यास्वारस्यम्, निर्वाणहेतुशान्तेश्च 'नियतमानस' इत्यनेन सिद्धत्वात् पुनरुक्तिश्च स्यात्, परमशब्दश्चास्वरस । अतो निर्वाणस्य परमामिति समास, परमशब्दश्च परमाख्याविषय इत्यभिप्रायेणाह—निर्वाणकाष्ठेति । परमात्मनि संस्थिता च शान्तरशनायादिषड्‌र्मिराहित्यरूपा । यद्वा मयि संस्थिता शान्तिमित्येतदेव 'शुभाश्रय स्थितिम्' इत्यनेन विवृतम् ॥ १५ ॥

उचितदेशप्रभृति परमात्मचिन्तनपर्यन्तं सर्व योगोपकरणमेव, अत —अन्यदपीत्युक्तम् । योगोपकरणं योगोपकारकम् । अत्यशनादयोगविरोधित्वं 'नात्यश्नत' इति श्लोकस्यार्थ । मिताहारादिस्तु योगोपयुक्तत्व 'युक्ताहार' इति श्लोकेनोच्यत इति व्यतिरेकतोऽन्वयतश्च एक एवार्थः स्थिरीक्रियत इति विभागमभिप्रेत्याह—अत्यशनेति । 'युक्ताहार' इति श्लोके विहारायासयोरपि

म॥तमानस शान्तिम् उपरतिं निर्वाणपरमां निर्वाणं मोक्ष तत्परमा निष्ठा यस्या शान्ते० सा निर्वाणपरमा तां निर्वाणपरमां मत्संस्थां मदधीनाम् अधिगच्छति प्राप्नोति ॥ १५ ॥

इदानीं योगिन आहारादिनियमः उच्यते—न अत्यश्नत० आत्मसम्मितम् अन्नपरिमाणम् अतीत्याश्नत अत्यश्नत योग अस्ति । न च एकान्तम् अनश्नत योग० अस्ति । 'यदु ह वा आत्मसम्मितम् अन्न तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयोऽन्न न तदवति' इति श्रुत । तस्मात् योगी न आत्मसम्मितात् अन्नात् अधिकं न्यूनं वा अश्नीयात्। अथ वा—योगिन योगशास्त्रे परिपठितात् अन्नपरिमाणात् अतिमात्रम् अश्नत० योग नास्ति । उक्तं हि—'अर्धं सव्यञ्जनान्नस्य तृतीयमुदकस्य च । वायोस्सञ्चरणार्थं तु

आ॥निर्वाणपरमां शरीरत्यागोत्तरकालीनाम् ॥ १५ ॥

अनशनादानयो गोऽशक्तस्य । उक्तं हि 'निद्राशनभयश्वासचेष्टातन्द्रादिवर्जनम् । कृत्वाऽनिमीलिताक्षस्तु शक्तो ध्याय-प्रसीदति' इति नारदीय ॥ १६ ॥

ज॥ननु शान्तिर्निर्वाणमिति मोक्षपर्यायौ, तत्कथं शान्तेर्निर्वाणपरमत्वमित्यत आह—निर्वाणेति । न जीवन्मुक्तिमात्रमित्यर्थ । उपशान्तेर्योगकारणत्वात् योगफलत्वमनुपपन्नम् ॥ १५ ॥

नचैकान्तमनश्नत जाग्रतो नैव चेति सुखासनस्थानशनजागरणनिषेध० क्रियते, स सर्वविषय इति प्रतीतिनिरासार्थमाह—अनशनादीति। कुत इत्यत शक्तस्य तद्विधानादित्याह—उक्तं हीति । आनिमीलिताक्ष० ईषन्निमीलिताक्ष, शक्तस्त्विति सम्बन्ध ॥ १६ ॥

रा॥तथाचात्ययासानायासौ,मिताहारविहारस्य मितायासस्य मितस्वप्नावबोधस्य सकलदुःखहा बन्धनाशनो योगस्सम्पन्नो भवति ॥ १६ ॥ १७ ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निस्स्पृहस्सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८

यदा प्रयोजनविषयं चित्तमात्मन्येव विनियतं-विशेषेण नियतं निरतिशयप्रयोजनत-

ता॥उक्तत्वात्पूर्वश्लोकेऽपि हि तावभिप्रेताविति दर्शयितुम्-अतिविहाराविहारावत्यायासानायासावित्युक्तम्।'जाग्रतः' इत्यत्राप्यतिरनुषञ्जनीयः।पूर्वश्लोकोक्तातिशब्दप्रतियोगिकरा।युक्तशब्दो मितपर इत्यभिप्रायेण --मिताहारेत्यादिकमुक्तम्।श्रूयते हि'य उ ह्यात्मसम्मितमन्नं तदवति तन्न हिनस्ति, यद्भूयो हिनस्ति, यत्कनीयो न तदवति'इति,स्मरन्ति च'उदरस्यार्धमन्नस्य तृतीयमुदकस्य तु।वायोस्सञ्चरणार्थं तु चतुर्थमवशेषयेत्'इति। अतो न्यूनाधिकादिसमस्तदोषराहित्यं युक्तशब्देनाभिप्रेतम् । द्वन्द्वात्पूर्वमपि परमेव प्रत्येकमन्वेतव्यम् । विहारशब्दस्सञ्चारपरः ; तन्द्रीपरिहारार्थविनोदनपरो वा। पारिशेष्यादौचित्याच्च चेष्टाशब्दार्थोऽत्र श्रमहेतुरायासः । दुःखहाशब्दासङ्कोचाद्योगसामर्थ्याच्च --सकलेति विशेषितम् । तत्फलितमाह --बन्धनाशन इति। एवंविधस्य योगो दुःखहा भवतीत्यन्वये योगस्य पूर्वसिद्धताभ्रमः स्यात्; तद्व्युदासाय-- सम्पन्नो भवतीत्युक्तम् ॥ १६, १७ ॥

' एव परिकरोक्तिसमनन्तरं योगदशां प्रदर्शयितुं ततः पूर्वां प्रागुक्तैव योगयोग्यदशा परामृश्यते- 'यदा विनियतम्' इति श्लोकेन । 'आत्मन्येव' इत्येवकारव्यवच्छेद्यक्षुद्रप्रयोजनान्तरज्ञापनाय सामान्यतः --प्रयोजनविषयमित्युक्तम् । प्रयोजनान्तरेषु सत्सु क्वचित् विशेषेण नियतत्वे को हेतुरित्यत्राह-- निरतिशयेति। 'युक्तः' इत्येतावतोऽत्र विधेयत्वात् 'निःस्पृहः' इत्यस्याप्युद्देश्यकोट्यनुप्रवेशाय-- निः'

प्र-पा ॥ १. २.

शा॥चतुर्थमवशेषयेत्' इत्यादिपरिमाणम।तथा--न च अतिस्वप्नशीलस्य योगो भवति नैव च अतिमात्रं जाग्रतो योगो भवति च अर्जुन ॥ १६ ॥

कथं पुनः योगः भवति इति? उच्यते—युक्ताहारविहारस्य आह्रियते इति आहारः अन्नं, विहरणं विहारः पादक्रमः, तौ युक्तौ नियतपरिमाणौ यस्य सः युक्ताहारविहारः तस्य; युक्तचेष्टस्य तथा अन्या च युक्ता नियता चेष्टा यस्य कर्मसु; तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्च अवबोधश्च तौ नियतकालौ यस्य तस्य , युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृत् योगः भवति इत्यर्थः ॥ १७॥

आ ॥ युक्ताहारविहारस्य सोपायाहारादेः । यावता श्रमाद्यभावो भवति, तावदाहारादेरित्यर्थः ॥ १७ ॥

ज॥आहारादीनां केन युक्तत्वमित्यत आह—युक्तेति । उपायः समाधिः । समाधिर्हि धात्वर्थः । तद्वत्ता च प्रत्ययार्थः । अतः सोपायेत्युक्तम् । आहारादेः सोपायत्वं नाम कीदृशमित्यत आह—यावतेति । आदिपदेनेन्द्रियोत्सेकालस्यादेः सङ्ग्रहः । उपायेन साहित्यं नाम तदविरोधित्वम् , तच्चैवंभूतमित्यर्थः ॥ १७ ॥

रा॥या तत्रैव नियतं निश्चलमवतिष्ठते;तदा सर्वकामेभ्यो निस्स्पृहस्सन् युक्त इत्युच्यते—योगार्ह इत्युच्यते ॥ १८ ॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥** १९

निवातस्थो दीपो यथा नेङ्गते—न चलति; अचलस्सप्रभस्तिष्ठति; यतचित्तस्य-निवृत्तसकलेतरमनोवृत्तेर्योगिनः—आत्मनि योगं युञ्जतः आत्मस्वरूपस्य सोपमा; निवातस्थतया

ता॥स्पृहस्साधिस्युक्तम् । सर्वकामेभ्यो निर्गता स्पृहा यस्य स तथोक्तः सर्वकामेषु निःस्पृह इत्यर्थः ॥

अथ योगदशा लक्ष्यते—'यथा' इत्यादिना। दीपस्याचलत्वे हेतुर्निवातस्थत्वम् । इङ्गतेश्चेष्टार्थत्वे विवक्षिते दीपे तदनन्वयात्साधारण्यासिध्यर्थमाह—नचलतीति ।निश्चलत्वे पर्वतादिनिदर्शनसद्भावेऽपि दीपदृष्टान्ताभिप्रतमर्थं दर्शयितुमाह—अचलस्सप्रभस्तिष्ठतीति । 'यतचित्तस्य' इत्यनेन चिन्तारूपवृत्तिनियमनवचनमुपलक्षणमित्याह —निवृत्तेति । मनोमात्रपर्यायो वात्र चित्तशब्दः । इतरशब्देनात्मविषयवृत्तिरस्तीति सूचितम् । अन्यथा 'युञ्जतो योगम्' इत्येतद्याहन्येतेत्यभिप्रायेणाह—आत्मनि योगं युञ्जत इति । आत्मनि विषये साक्षात्कारं कुर्वत इत्यर्थः ।'नेङ्गते' इति न शरीरस्य निष्कम्पत्वमुदाह्रियते, 'समं कायशिरोग्रीवं धारयन्नचलं स्थिरम्' इति तस्योक्तत्वात् , ध्यानदशासाधारणत्वेन समाधिदशाविशेषकत्वानुपपत्तेश्च । नापीन्द्रियाणां निष्कम्पत्वम् , 'योगिनः सोपमा' इत्यन्वयायोगात् । नाप्यात्मस्वरूपस्य निश्चलत्वम् , अवस्थान्तरेऽपि तत्सिद्धेः । अतस्स्वयंप्रकाशज्ञानप्रभानिरस्तसमस्तदृश्यान्तरपरिशुद्धात्मस्वरूपप्रदर्शनार्थोऽयं दृष्टान्त इति सूचयितुं 'योगिनः' इत्युक्तेऽपि पुनरपि 'आत्मनः' इत्युक्तमित्यभिप्रायेण—आत्मस्वरूपस्य सोपमेत्युक्तम्। 'योगिनः आत्मनः' इति व्यधिकरणे षष्ठ्यौ। ननु, 'सोपमा' इत्यत्र उपमाशब्द उपमितिपरो वा, दृष्टान्तपरो वा । उभयथापि न सम्भवति, यथेति निर्दिष्टप्रकारपरामर्शित्वात्तच्छब्दस्य उपमाशब्दस्य च तत्समानाधिकरणत्वात् 'सप्रभस्तिष्ठति' इत्येतच्च कथं दार्ष्टान्तिके निर्वाह्यम्,अयोगिनामप्यात्मस्वरूपस्य चलत्वप्रतीत्यभावात् किमर्थं च निश्चलत्वोपदेश इत्यत्राह—निवातस्थतयेति । अयमभिप्रायः—उपमेति दृष्टान्तगतं साधर्म्यमत्र निर्दिश्यते ।

प्र-पा॥ १. गी ६ १३.

शं॥अथ अधुना कदा युक्तो भवति इति? उच्यते—यदा विनियतं विशेषेण नियतं संयतम् एकाग्रताम् आपन्नं चित्तं हित्वा बाह्यार्थचिन्ताम् आत्मन्येव केवले अवतिष्ठते,स्वात्मनि स्थितिं लभत इत्यर्थः । निस्स्पृहः सर्वकामेभ्यः निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः स युक्तः समाहितः इत्युच्यते तदा ॥ १८ ॥

योगिनः समाहितं यत् चित्तं तस्य उपमा उच्यते —यथा दीपः प्रदीपः निवात-

आ ॥ आत्मनि भवति ॥ १८ ॥
आत्मनो भगवद्विषयं योगम् ॥ १९ ॥

ज॥'आत्मन्येवावतिष्ठते' इत्यत्र स्वस्मिन्नेवेति प्रतीतिनिरासायाह —आत्मनीति। अन्यथा 'शात्मानम्'इत्यादिविरोधः ॥ १८ ॥

'युञ्जतो योगमात्मनः' इत्यात्मशब्दस्य षष्ठ्याश्च विवक्षितमर्थमाह—आत्मन इति । योगिन आत्मन इति अन्वयनिरासाय योगमित्युक्तम् , अन्यथार्वैयर्थ्यात् ॥ १९ ॥

रा॥निश्चलसप्रभदीपवन्निवृत्तसकलेतरमनोवृत्तितया निश्चलो ज्ञानप्रभ आत्मा तिष्ठतीत्यर्थः॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २०
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३

**योगसेवया हेतुना सर्वत्र निरुद्धं चित्तं यत्र योगे उपरमते-अतिशयितसुखमिदमिति**

ता॥तस्माद्विधेयत्वेन योगमेवास्यान्वय उपदत्तः। स्वभावाश्च प्रतिधर्मोऽत्र ज्ञानम्। आत्मनो निश्चलत्वं चात्र स्वप्रभाभूतज्ञानस्य विविधप्रसरणनिवृत्तिः। सा च बाह्यविषयेषु मनोवृत्तेरेवाभावात् संसारदशायां च ज्ञानस्येन्द्रियद्वारैव प्रसरणादिति। 'स्मृता' —समाधिदशासन्दर्शिभिर्योगिभिरिति शेषः ॥ १९ ॥

पुनरपि योगदशैव आदरातिरेकाय निरतिशयपुरुषार्थत्वप्रतिपादनेन प्रपञ्च्यते —'यत्र' इत्यादिभिः। 'निरुद्धम्' इत्यत्र परिगृहीतत्वनिरुद्धत्वादिभ्रमव्युदासाय योगसेवया हेतुना सर्वत्र निरुद्धमित्युक्तम्। सर्वतो निरुद्धमित्युक्ते प्रवृत्तस्य निवारणमात्रं प्रतीयेत; सर्वत्रेत्युक्ते तूत्पत्तिप्रवृत्त्यनुदयोऽपि सिध्यतीति सप्तमीनिर्देशः। 'योगसेवया निरुद्धं यत्रोपरमते' इत्युक्ते योगस्य पृथगुपादानात्, यच्छब्दार्थस्य योगाद्व्यतिरेकः प्रतीयेतेति तद्व्युदासाय 'योगसंज्ञितम्' इति वक्ष्यमाणान्वयेन —यत्र योगे इत्युक्तम्। 'यत्र यस्मिन् काले' इति परोक्तमयुक्तम्, उपरितनयच्छब्दाभिधार्थत्वप्रसङ्गात्, प्रतिनिर्देश्यस्य योगशब्दानन्वयाच्चेति भावः। 'यत्रोपरमते' इत्यत्र यतो विच्छिद्यत इति भ्रमापाकरणायाह—अतिशयितेति। यत्र सिद्धेऽन्यत उपरमत इत्यध्याहारेण योजना न युक्ता, तथा सति निरुद्धमित्यनेन पुनरुक्तिश्च

शा॥स्थः निवाते वातवर्जिते स्थाने स्थितो न इङ्गते न चलति, सा उपमा उपमीयते अनया इत्युपमा योगज्ञैः चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगम् अनुतिष्ठतः आत्मनः समाधिम् अनुतिष्ठतः इत्यर्थः ॥ १९ ॥

एवं योगाभ्यासबलात् एकाग्रीभूतं निवातप्रदीपकल्पं सत्—यत्र यस्मिन् काले उपरमते चित्तम् उपरतिं गच्छति निरुद्धं निवारितं योगसेवया सर्वतो निवारितप्रचारं योगानुष्ठानेन, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेन अन्तःकरणेन आत्मानं परं चैतन्यं ज्योतिस्स्वरूपं पश्यन् उपलभमानः स्वे एव आत्मनि तुष्यति तुष्टिं भजते ॥ २० ॥

आ॥आत्मना मनसा। आत्मनि देहे। आत्मानं भगवन्तं पश्यन् ॥ २० ॥

ज॥'यत्र चैवात्मना' इत्यत्र पदत्रयं व्याख्याति—आत्मनेति। अन्वयापेक्षया व्युत्क्रमः। पश्यन्निति ध्यानविवेकार्थमुक्तम् ॥ २० ॥

रा॥रमते, यत्र च योगे आत्मना-मनसा आत्मानं पश्यन् अन्यनिरपेक्षमात्मन्येव तुष्यति, यत्तदतीन्द्रियमात्मबुद्ध्येकग्राह्यमात्यन्तिकं सुखम्, यत्र च योगे वेत्ति-अनुभवति, यत्र च योगे स्थितः सुखातिरेकेण तत्त्वतस्तद्भावान्न चलति, यं योगं लब्ध्वा योगाद्विरतस्तमेव

ता॥स्यात्।उपसर्गाणा च नानार्थत्वादयमेवातिशयितार्थ उपपन्नः।आपत्तिप्रतिपादनद्वारा तात्पर्येण वायमर्थस्सिध्यतीति भावः। यत्र चैवेत्येवकारस्य यथाक्रमान्वये प्रयोजनाभावात्, उचितान्वयप्रदर्शनाय—आत्मन्येव तुष्यतीत्युक्तम्। अन्यनिरपेक्षमित्यवधारणतोऽर्थशब्दाभ्याम् अर्थसिद्धोक्तिः। यद्वा 'आत्मानं पश्यस्तुष्यति' इत्येतावतैव विवक्षितसिद्धौ पुनरात्मनीति निर्देशः तदन्यव्युदासार्थ इत्यभिप्रायः। आत्मनि परमात्मानमिति योजना तु जीवयोगविषयत्वादिहासङ्गता। अतीन्द्रियमित्युक्तत्वात्, परिशेषात्, औचित्याच्च 'बुद्धिग्राह्यम्' इत्यत्र बुद्धिं विशिनष्टि—आत्मबुद्ध्येकग्राह्यमिति। आत्यन्तिकं—पुनर्दुःखसम्भेदरहितमित्यर्थः। यदेवंविधं सुखं तदत्र वेत्तीत्यन्वयः। यद्वा यत्तदिति पिण्डितं प्रसिद्ध्यतिशयार्थं तदित्येतदर्थः। केचित्तु यत्तच्छब्दान्वयप्रकारमजानन्तः 'सुखमात्यन्तिकं यत्र' इति पठन्ति। 'वेत्ति यत्र' इति यत्रशब्दः पूर्वोत्तरवाक्यसाधारणतया मध्ये प्रयुक्तः। वेत्तीत्यस्यापवर्गदशानुभाव्यसुखप्रतिसन्धानपरत्वव्युदासाय योगकालापरोक्ष्याभिप्रायेण—अनुभवतीत्युक्तम्। 'आत्मनि तुष्यति' इति पूर्वमितरसुखनिरपेक्षत्वपरम्।'सुखमात्यन्तिकम्' इत्यादिकं तु स्वरूपसुखानुभवपरमित्यपौनरुक्त्यम्। सुखातिरेकेणेति—उक्त एवाचलत्वहेतुरुचित इति भावः। प्रामाणिकार्थान्न चलतीति वा, सम्यङ्न चलतीति वा, निर्वहणं मन्दम्। योगदशायां च सुखातिरेकेण स्वरसतस्तदनन्तस्यैव चिरतरावस्थानाभिधानमुचितमपेक्षितं चेत्यभिप्रायेण 'तत्त्वतः' इत्यस्य तद्भावादिति प्रतिपदमुक्तम्। इतरविषयनिरोधनैरपेक्ष्ये 'यत्र' इति श्लोकेनोक्ते। तत आत्मस्वरूपसुखानुभवस्तस्य स्वरसवाहितया तु विच्छेदत्वं च'सुखम्'इति श्लोकेनाभिहिते।अथ 'य लब्ध्वा'इति श्लोकेन योगविरतिकालेऽपि तस्यैवाभिलापपदत्वाद्बाह्यसुखाभिलाषेण दुःखेन चानास्कन्दनमुच्यत इति विभागज्ञापनाभिप्रायेण—योगाद्विरत इत्यादिकमुक्तम्। योगदशायां तु लाभान्तरप्रतिसन्धानमेव नास्तीति भावः। 'गुरुणापि' इत्यु-

प्र॰पा॥ १. योगरूपा. पा॥

शा॥किञ्च सुखम् आत्यन्तिकम् अत्यन्तमेव भवति इत्यात्यन्तिकम् अनन्तम् इत्यर्थ, यत् तत् बुद्धिग्राह्यं बुद्ध्यैव इन्द्रियनिरपेक्षया गृह्यते इति बुद्धिग्राह्यम् अतीन्द्रियम् इन्द्रियगोचरातीतम् अविषयजनितम् इत्यर्थः,वेत्ति तत् ईदृशं सुखम् अनुभवति यत्र यस्मिन् काले,न च एव अयं विद्वान् आत्मस्वरूपे स्थितः तस्मात् नैव चलति तत्त्वतः तत्त्वस्वरूपात् न प्रच्यवते इत्यर्थः॥ २१॥

किञ्च—यं लब्ध्वा यम् आत्मलाभं लब्ध्वा प्राप्य च अपरं लाभम् अन्यत् लाभान्तरं ततः अधिकम् अस्ति इति न मन्यते न चिन्तयति। किञ्च—यस्मिन् आत्मतत्त्वे स्थितः दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महता अपि न विचाल्यते॥ २२॥

'यत्रोपरमते' इत्यारभ्य यावद्भिः विशेषणैः विशिष्ट आत्मावस्थाविशेषः योग उक्तः—तं विद्यात् विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगः दुःखसंयोगः, तेन वियोगः दुःखसंयोगवियोगः, तं दुःखसंयोगवियोगं योग इत्येवं संज्ञितं विपरीतलक्षणेन

आ॥तत्त्वतो भगवद्रूपात्॥ २१॥ २२॥

ज॥तत्त्वतः तद्भावात् महत्त्वादिति प्रमाणविरुद्धं व्याख्यानं व्यावर्तयितुमाह-तत्त्वतइति॥२१-२२॥

धा॥निश्चलसप्रभदीपवन्निवृत्तसकलेतरमनोवृत्तितया निश्चलो ज्ञानप्रभ आत्मा तिष्ठतीत्यर्थः॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २०
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३

योगसेवया हेतुना सर्वत्र निरुद्धं चित्तं यत्र योगे उपरमते-अतिशयितसुखमिदमिति

गा॥तस्मात्सर्वात्मना योगमभ्यस्यतामेव उपरतःस्वभावाभ प्रतिपर्योऽत्र ज्ञानम्॥आत्मनो निश्चलत्वं चाथ स्वप्रभाभूतज्ञानस्य त्रिविधप्रसरणाभिवृत्तिः । सा च चार्वाकरीत्या मनोवृत्तेरेवाभावात् संसारदशायां च ज्ञानस्येन्द्रियद्वारैव प्रसरणादिति। 'स्मृता' मर्वाभिदर्शनाभदर्शिभिर्योगिभिरिति शेषः ॥ १९ ॥

पुनरपि योगदशेव आत्मातिशयाय निरतिशयसुखपरिप्रतिपादनेन प्रपञ्चयति — 'यत्र' इत्यादिभिः । 'निरुद्धम्' इत्यत्र परिशीलितार्थानङ्गआदिश्रमब्युदासाय योगसेवया हेतुना सर्वत्र निरुद्धमित्युक्तम् । सर्वतो निरुद्धमित्युक्ते प्रकृतस्य निमित्तमात्र प्रतीतेः; सर्वत्रेत्युक्ते तूनयोरप्युपरत्नुद्योऽपि सिद्धीति सप्तमीनिर्देशः। 'योगसेवया निरुद्ध यत्रोपरमते' इत्युक्ते योगस्य पृथगुपादानात्, यच्छब्दार्थस्य योगाद्व्यतिरेकः प्रतीयेतेति तद्व्युदासाय'योगसंज्ञितम्'इति वक्ष्यमाणान्वयेन — यत्र योग इत्युक्तम्। 'यत्र यस्मिन् काले'इति भाष्यमयुक्तम्, उपरितनयच्छब्दस्याप्यर्थस्य प्रसङ्गात्,प्रतिनिर्देशस्य योगशब्दानन्वयाश्चेति भावः। 'यत्रोपरमते' इत्यत्र यतो निवृत्तिरत इति भ्रमावारणायाह—अतिशयितेति । यत्र निरुद्धे स्थितं उपरमत इत्यध्याहारेण योजना न युक्ता; तथा सति निरुद्धमितरोनेन पुनरुक्तिश्च

शा॥स्थः निवाते वातवर्जिते स्थाने स्थितो न इङ्गते न चलति, सा उपमा उपमीयते अनया इत्युपमा योगज्ञैः चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगम् अनुतिष्ठतः आत्मनः समाधिम् अनुतिष्ठतः इत्यर्थः ॥ १९ ॥

एवं योगाभ्यासबलात् एकाग्रीभूतं निवातप्रदीपकल्पं सत्—यत्र यस्मिन् काले उपरमते चित्तम् उपरतिं गच्छति निरुद्धं निवारितं योगसेवया सर्वतो निवारितप्रचारं योगानुष्ठानेन, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेन अन्तःकरणेन आत्मानं परं चैतन्यं सर्वतो ज्योतिःस्वरूपं पश्यन् उपलभमानः स्वे एव आत्मनि तुष्यति तुष्टिं भजते ॥ २० ॥

आ॥आत्मना मनसा । आत्मनि देहे । आत्मानं भगवन्तं पश्यन् ॥ २० ॥

ज्ञा॥'यत्र चैवात्मना' इत्यत्र पदत्रयं व्याख्याति—आत्मनेति । अन्वयापेक्षया व्युत्क्रमः। पर्यायेति मानविवक्षार्थमुक्तम् ॥ २० ॥

या॥काङ्क्षमाणो नापरं लाभं मन्यते,यस्मिंश्च योगे स्थितो विरतोऽपि गुणवत्पुत्रवियोगादिना गुरुणापि दुःखेन न विचाल्यते, तं दुःखसंयोगवियोगं-दुःखसंयोगप्रत्यनीकाकारं योगशब्दाभिधेयं विद्यात्; स एवंरूपो योग इत्यारम्भदशायां निश्चयेनानिर्विण्णचेतसा-हृष्टचेतसा योगो योक्तव्यः ॥ २०, २१, २२, २३ ॥

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४

ता ॥ लाघवगौरवव्यञ्जनाय—गुणवत्पुत्रवियोगादिनेत्युक्तम्।'पुत्रजन्मविपत्तिभ्यां न परं सुखदुःखयोः' इति ह्याहुः।न विचाल्यते—योगप्रतिकूलमवसादं न गच्छतीत्यर्थः। दुःखसंयोगस्य वियोगस्तस्यासम्बन्धः अभाव इत्यर्थः, स च भावान्तरमितिज्ञापनायाह—दुःखसंयोगप्रत्यनीकाकारमिति।दुःखसंयोगस्य वियोगो यत्रेति व्यधिकरणबहुव्रीहौ फलितोक्तिरियम्।अथवा, वियोगशब्दोऽत्र वियुज्यतेऽनेनेति करणार्थघनन्तो वियोगहेतुपर इति भावः । निर्विण्णचेतसेति पदच्छेदे सकारे तापत्रयेणेत्यध्याहारस्स्यात्; तत्तु सप्रयोजने योजनान्तरे सम्भवति न युक्तम्; तस्मादनिर्विण्णचेतसेति पदच्छेदः। निश्चयशब्दोऽपि तेनैव हेतुसमर्पणेनान्वितः; न तु 'योक्तव्यः' इत्यनेन, निरर्थकान्वयप्रसङ्गात्।अनिर्विण्णत्वहेतुश्च निश्चयः पूर्वोक्तनिरतिशयपुरुषार्थत्वेनैव स्यात्; तदेतदखिलमभिसन्धायाह – स एवमिति। एवं रूपः—निरतिशयपुरुषार्थरूप इत्यर्थः । 'योक्तव्यः' इत्युक्तत्वात् आरम्भोपकारकत्वद्योतनाय—आरम्भदशायामित्युक्तम्। 'मनसा क्लिश्यमानस्तु समाधाने च कामयेत् । अनिर्वेद मुनिर्गच्छन् कुर्यादेवात्मनो हितम्' इति ह्युच्यते। अतो विरक्तयुपयुक्तनिर्वेदोऽन्यः; अयं त्वन्यादृश इति —हृष्टचेतसेत्युक्तम्। योक्तव्यः-कर्तव्य इत्यर्थः ॥ २०, २१, २२, २३ ॥

अथ ममकारपरित्यागादिकं प्राग्विप्रकीर्णोक्तमखिलमिदानीं सुग्रहणायेह सौकर्यप्रदर्शनाय च सङ्कलय्य योगदशापर्यन्ततया स्मार्यते 'सङ्कल्प' इत्यादिभिः श्लोकैः । 'सङ्कल्पप्रभवान्सर्वान् कामांस्त्य-

प्र·पा ॥ १. २ मनुः ६ ॥

शं॥विद्यात् विजानीयात् इत्यर्थः॥योगफलम् उपसंहृत्य पुनः अन्वारम्भेण योगस्य कर्तव्यता उच्यते निश्चयानिर्वेदयोः साधनत्वविधानार्थं—स यथोक्तफलो योगः निश्चयेन अध्यवसायेन योक्तव्यः अनिर्विण्णचेतसा न निर्विण्णम् अनिर्विण्णं—किं तत्?—चेतः तेन निर्वेदरहितेन चेतसा चित्तेन इत्यर्थः ॥ २३ ॥

आ॥दुःखसंयोगो येन वियुज्यते स दुःखसंयोगवियोगः । न केवलमुत्पन्नं दुःखं नाशयति । उत्पत्तिमेव निवारयतीति दर्शयति संयोगशब्देन निश्चयेन योक्तव्यः योक्तव्य एव बुभूषुणेत्यर्थः ॥ २३ ॥

ज॥ननु दुःखसम्बन्धस्य वियोगो ध्वंसः, स कथं योगः स्यादित्यत आह—दुःखेति । करणेऽपि घञः स्मरणात् । एवं तर्हि दुःखवियोगमित्येव वक्तव्यम्, किं संयोगशब्देनेत्यत आह—नकेवलमिति । वियोगशब्दो निवारणे वर्तत इति भावः। एतच्च पदाधिक्यादेव लभ्यते, नान्यथा। ननु'स निश्चयेन योक्तव्य'इति पुनर्विधानं किमर्थम्,निश्चयेनेत्यादिविशेषविधानार्थमिति चेत्— न,महाफले संदेहात् प्रवृत्त्यभावेन निश्चयेनेत्यस्य वैयर्थ्यादित्यत आह—निश्चयेनेति । अयोगव्यवच्छेदे निश्चयशब्द इत्यर्थः । कुत्रायोगो व्यवच्छिद्यते इत्यत उक्तं—बुभूषुणेति । मुमुक्षुणेत्यर्थः ॥ २३ ॥

शनैश्शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५

रा॥स्पर्शजास्सङ्कल्पजाश्चेति द्विविधाः कामाः, स्पर्शजाः-शीतोष्णादयः, सङ्कल्पजाः-पुत्रक्षेत्रादयः, तत्र सङ्कल्पप्रभवान् स्वरूपेणैव त्यक्तुं शक्याः, तान्सर्वान्मनसैव तदनन्वयानुसन्धानेन त्यक्त्वा स्पर्शजेष्ववर्जनीयेषु तन्निमित्तहर्षोद्वेगौ त्यक्त्वा समन्ततः सर्वस्माद्विषयात्सर्वमिन्द्रियग्रामं विनियम्य शनैश्शनैर्धृतिगृहीतया विवेकविषयया बुद्ध्या सर्वस्मादात्मव्यतिरिक्तादुपरम्य आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥२४॥२५॥

ता॥त्यक्त्वे'त्येतावतैव सिद्धौ पुनः 'अशेषतः' इति पदं निश्शेषत्यागानर्हाणां विषयाणां सूचकम्। नचोत्तरवाक्ये तदन्वयः, ग्रामशब्देन पर्याप्तत्वात्। अतः प्रयुक्तपदवैयर्थ्यपरिहाराय 'शेषतश्च कामांस्त्यक्त्वे'ति चकाराभावेऽपि योज्यम्। अपि च सङ्कल्पप्रभवत्वेन विशेषणमेव असङ्कल्पप्रभवकामसूचकमित्यभिप्रायेण विभजते—स्पर्शजा इति। 'मनसैव' इति पदं मध्यस्थितत्वादपेक्षितत्वाच्च काकाक्षिन्यायेन पूर्वोत्तरान्वितमिति दर्शयितुं तान् सर्वान् मनसैवेत्यादिकमुक्तम्। कामत्यागकरणस्य मनसोऽन्तरव्यापारस्तदनन्वयानुसन्धानम्, कर्मोपाधिकशरीरान्विता हि पुत्रादयः, न त्वात्मस्वरूपान्विताः इत्यनुसन्धानेनेत्यर्थः। 'न प्रहृष्येत्' इत्यादिभिः प्रागुक्तं स्मारयति—स्पर्शजेष्वित्यादिना। 'समन्ततः' इत्यत्र पदच्छेदादिभ्रमव्युदासायाह—सर्वस्माद्विषयादिति। प्रक्रान्तार्थशैथिल्यरूपायाः धृतेहेतुमाह—विवेकविषययेति। उपरम्य बाह्यलाभार्थं मानसमुद्योगं वारयित्वेत्यर्थः, उपरम्येतिव्याख्यानमङ्गत्वद्योतनाय। किञ्चिदपीति—आत्मव्यतिरिक्तमनुकूलप्रतिकूलोदासीनं सर्वमित्यर्थः ॥ २४ २५ ॥

प्र पा॥ १ गी ५ २०

शा॥किञ्च—सङ्कल्पप्रभवान् सङ्कल्पः प्रभवः येषां कामानां ते सङ्कल्पप्रभवाः कामाः तान् त्यक्त्वा परित्यज्य सर्वान् अशेषतः निर्लेपेन। किं च—मनसैव विवेकयुक्तेन इन्द्रियग्रामम् इन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात् ॥ २४ ॥

शनैश्शनैः न सहसा उपरमेत् उपरतिं कुर्यात्। कया? बुद्ध्या। किंविशिष्टया? धृतिगृहीतया—धृत्या धैर्येण युक्तया इत्यर्थः। आत्मसंस्थम्—आत्मनि संस्थितम् 'आत्मैव सर्वं न ततः अन्यत् किञ्चित् अस्ति' इत्येवम् आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्। एष योगस्य परमः विधिः ॥ २५ ॥

आ॥सर्वान्सर्वविषयान् अशेषतः एकैकविषयोऽपि कामः स्वल्पः कादाचित्कोऽपि न कर्तव्य इत्यर्थः। मनसैव नियन्तुं शक्यते नान्येनेत्येवशब्दः ॥ २४ ॥

बुद्धेः कारणत्वं मनोनिग्रहे आत्मरमणे च ॥ २५ ॥

ज॥'सर्वानशेषतः' इत्यनयोस्तात्पर्यमाह—सर्वानिति। कामः स्वल्पः कादाचित्कोऽपीति मूलपाठः। ननु इन्द्रियग्रामनियमनमेवावश्यकं, न तु करणनियमः, कथमुच्यते 'मनसैवेन्द्रियग्रामम्' इति, तत्राह—मनसैवेति। स्वरूपकथनमेतदिति भावः। इति ज्ञापयितुमिति शेषः ॥ २४ ॥

'शनैः शनैरुपरमेद्बुद्ध्या' इति बुद्धेरपीन्द्रियग्रामनियमने कारणत्वस्य वक्ष्यमाणत्वात् कथमेतदित्यत आह—बुद्धेरिति। अनेनोपरमेदित्यस्यार्थद्वयमुक्तं भवति ॥ २५ ॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६

रा॥चलस्वभावतयात्मन्यस्थिरं मनः यतोयतो विषयप्रावण्यहेतोर्बहिर्निश्चरति, ततस्ततो यत्नेन मनो नियम्यात्मन्येव अतिशयितसुखभावनया वशं नयेत् ॥ २६ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७

प्रशान्तमनसम् आत्मनि निश्चलमनसम् आत्मन्यस्तमनसम् अत एव दग्धाशे-

ता॥पूर्वोक्तक्रमेण दुर्ग्रहस्य चेतसो ध्यानविधानाय च प्रपञ्चयति—यतोयतः इति। 'चञ्चलम्' 'अस्थिरम्' इत्यनयोः पौनरुक्त्यनिरासायोक्तं— चलस्वभावतयात्मन्यस्थिरमिति। सामान्यविशेषविषयत्वाद-पुनरुक्तिः। 'चञ्चलम्' इति स्वभावातिरिक्तहेतुनिवृत्तिपरं वा। 'यतोयतो निश्चरति' येनयेनेन्द्रियद्वारेण निश्चरतीत्यर्थः। यद्वा येन विषयमभिमुखीकृत्येत्यर्थः। प्रयोजनतया वा हेतौ पञ्चमी। तद्व्यञ्जनायाह—विषयप्रावण्यहेतोरिति। विषयसम्बन्धार्थमित्यर्थः। विषयप्रावण्यस्य हेतोरिति वा। सम्भवन्ति ह्यतर्कितोपनता विषयसन्निधानतत्कीर्तनादयो विषयप्रावण्यहेतवः। सुखभावनया वशीकरणं शक्यमित्युच्यते—अतिशयितसुखभावनयेति ॥ २६ ॥

आत्मनि वशीकरणोपायः प्रागुक्तः, अनन्तरं च तदेवाह —'प्रशान्तमनसम्' इतिश्लोकेन। तत्र विप्रकीर्णावस्थितानां पदानामन्वयक्रममर्थं च दर्शयति प्रशान्तमनसमित्यादिना। 'योगिनम्, अकल्मष

प्र पा॥ १

शा॥तत्र एवम् आत्मसंस्थं मनः कर्तुं प्रवृत्तो योगी यतोयतः यस्माद्यस्मात् निमित्तात् शब्दादेः निश्चरति निर्गच्छति स्वाभाविकदोषात् मनः चञ्चलम् अत्यर्थं चलम् अत एव अस्थिरं, ततस्ततः तस्मात्तस्मात् शब्दादेः निमित्तात् नियम्य तत्तन्निमित्तयाथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतत् मनः आत्मन्येव वशं नयेत् आत्मवश्यताम् आपादयेत् । एवं योगाभ्यासबलात् योगिनः आत्मन्येव प्रशाम्यति मनः ॥ २६ ॥

प्रशान्तमनसं प्रकर्षेण शान्तं मनः यस्य सः प्रशान्तमनाः तं प्रशान्तमनसं हि एनं योगिनं सुखम् । उत्तमं निरतिशयम् उपैति उपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसम् इत्यर्थः, ब्रह्मभूतं जीवन्मुक्तम् 'ब्रह्मैव सर्वम्' इत्येवं निश्चयवन्तं ब्रह्मभूतम् अकल्मषं धर्माधर्मादिवर्जितम् ॥ २७ ॥

आ॥यतो यतो यत्र यत्र, यतोयतो धावतीत्यादिप्रयोगात् । आत्मन्येव वशं नयेत्—आत्मविषय एव वशीकुर्यादित्यर्थः ॥ २६ ॥ २७ ॥

ज॥यतो यतः श्रोत्रादेरिति प्रतीतिनिरासायाह—यत इति । शब्दादावित्यर्थः । कुतः सप्तम्यर्थे तसिर्लभ्यत इत्यत आह—यत इति । तथा चोक्तम् 'आद्यादिभ्य उपसंख्यानम्' इति । अन्यथा द्वारमात्रनियमे स्मरणस्य को निवारयिता । पञ्चमी ह्यत्र भाव्या, सप्तमी तु कथमित्यत आह—आत्मनीति ॥ २६ ॥ २७ ॥

रा॥अकल्मषम्, तत एव शान्तरजसं विनष्टरजोगुणम्, तत एव ब्रह्मभूतं स्वस्वरूपेणावस्थितमेनं योगिनम्, आत्मानुभवरूपमुत्तमं सुखमुपैति; हीति हेतौ; उत्तमसुखरूपत्वादात्मस्वरूपस्येत्यर्थः ॥ २७ ॥

एवं युञ्जन् सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८

एवमुक्तप्रकारेणात्मानं युञ्जन् तेनैव विगतप्राचीनसमस्तकल्मषो ब्रह्मसंस्पर्शं ब्रह्मानुभवरूपं सुखमत्यन्तमपरिमितं सुखेनानायासेन सदाश्नुते ॥ २८ ॥

अथ योगविपाकदशा चतुष्प्रकारोच्यते—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९

ता॥ शान्तरजसं शान्तमनसं ब्रह्मभूतमनघम्' इति हेत्वर्थभावेनान्वयनम्। स्वविषयेभ्योऽन्यत्र स्वरूपमपनिर संकल्प पञ्चाग्न्यभ्यासनादेरिव परतद्भुल्याथ्यम्। ब्रह्मभूतमित्व देहात्मभ्रमादिप्रयुक्तक्लेशादिदशान्यपाय-भूतत्वव्यवच्छेदार्थम्। तदाह—स्वस्वरूपेणावस्थितमिति। अणोरपि हि जीवस्य 'सचानन्त्याय कल्पते' इति श्रुतधर्मतो बृहत्त्वमस्त्येव। उत्तमशब्देन वैषयिकसुखव्यवच्छेदो विवक्षित इति व्यञ्जनाय—स्वरूपानुभवरूपमित्युक्तम्। 'ब्रह्मसंस्पर्शम्' इति ह्यनन्तरमुच्यते। निरतिशयत्वाद् सुखभेदविरहादुत्तमत्वम्। पूर्वश्लोकोक्तमनोवशीकरणे वैतच्छ्लोकोक्तसुखोपगमे वा हेतुरयं हिशब्द इत्याह—हीति हेताविति। हेतुस्वरूपं विशदयति—उत्तमेति ॥ २७ ॥

एवं योगप्रभावादाविर्भवत्सुखस्यात्मानुभवरूपस्य साक्षात्कारात्तरकालं निरतिशयत्वमनिवर्तनीयत्वमनायाससाध्यत्वं चोच्यते—'एवं युञ्जन्' इति। एवं शब्देन 'योगी युञ्जीत' इत्यारभ्योक्तः प्रकारः परामृश्यत इत्यभिप्रायेण—उक्तप्रकारेणेत्युक्तम्। संस्पर्शशब्दोऽनुभवलक्षकः, बुद्ध्या सह सम्बन्धपरो वेत्यभिप्रायेण—ब्रह्मानुभवरूपमित्युक्तम्। 'एवं युञ्जन्' इत्यनेनैव सर्वयोक्तत्वात्तत्रच नियतकाले सदाशब्दान्वयायोगात्सुखस्य चाविनाशित्ववचनस्यापेक्षितत्वात्सदाश्नुत इत्यन्वयः। ततश्चात्यन्तशब्दोऽपि सावधिकत्वरूपान्तिनिवृत्तिद्वारा निरतिशयत्वपर इत्यभिप्रायेण—अपरिमितमित्युक्तम्। 'सुखेन सुखमश्नुते' इति सुखसाधनसुखान्तराभावात्सुखेनेत्यनायासत्वं विवक्षितम् ॥ २८ ॥

एवं योगाभ्यासविधिः प्रपञ्चितः, 'आत्मलाभसुखं यावत्तावद्ध्यानमुदाहृतम्' इत्याद्युक्तफलपर्यन्तत्वं चोक्तम्, अथ चतुर्धा योगी प्रतिशाखं इति चतुर्णां श्लोकानामर्थमाह—अथेति। समदर्शित्वरूपयोगविपाकस्य पर्वक्रमेण तारतम्याच्चतुष्प्रकारत्वम्। अत्र प्रथमदशोच्यते—'सर्वे-

प पा ॥ १ श्वेता. ५ ९ बालाग्रशतभागस्य शतधाकल्पितस्य च। भागो जीवः स विज्ञेयः स चा- | नन्त्याय कल्पते' २ गी ६-२८. ३ गी. ६ १ ४

शं॥युञ्जन् एवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदा आत्मानं युञ्जन् विगतकल्मषः विगतपापः, सुखेन अनायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तत् ब्रह्मसंस्पर्शम् अत्यन्तम् उत्कृष्टं निरतिशयं सुखम् अश्नुते व्याप्नोति ॥ २८ ॥

आ॥पूर्वश्लोकोक्तं प्रपञ्चयति—एवं युञ्जन्निति ॥ २८ ॥

ज॥'प्रशान्तमनसम्' इत्युक्तमेव पुनः कस्मादुच्यत इत्यत आह—पूर्वेति ॥ २८ ॥

रा॥स्वात्मनः परेषां च भूतानां प्रकृतिवियुक्तस्वरूपाणां ज्ञानैकाकारतया साम्याद्वैषम्यस्य च प्रकृतिगतत्वाद्योगयुक्तात्मा प्रकृतिवियुक्तेष्वात्मसु सर्वत्र ज्ञानैकाकारतया समदर्शनः सर्वभूतस्थं स्वात्मानं सर्वभूतानि च स्वात्मनीक्षते। सर्वभूतसमानाकारं स्वात्मानं स्वात्मसमानाकाराणि च सर्वभूतानि पश्यतीत्यर्थः, एकस्मिन्नात्मनि दृष्टे सर्वस्यात्मवस्तुनस्तत्साम्यात्सर्वमात्मवस्तु दृष्टं भवतीत्यर्थः, "सर्वत्र समदर्शनः' इतिवचनात् †'यो यं योगस्त्वया प्रोक्तस्साम्येन' इत्यनुभाषणाच्च, ‡'निर्दोषं हि समं ब्रह्म' इतिवचनाच्च॥२९॥

ता॥भूतस्थम्' इति श्लोकेन। समदर्शनत्वोपपत्तये स्वरूपतस्साम्यं प्रकारवैषम्यस्य चौपाधिकत्वं दर्शयति —स्वात्मन इत्यादिना गतत्वादित्यन्तेन। भूतशब्दोऽत्राचिद्विशिष्टचेतनवाचकोऽपि 'सत्वं भूतहितं प्रोक्तम्' इत्यादिष्विव चेतनाशपरः। योगयुक्तात्मा योगविनियुक्तमनाः, यद्वा योगसमधिगतात्मस्वरूप इत्यर्थः। योगयुक्तात्मत्वं समदर्शनत्वे हेतुः। समदर्शनस्यैव प्रतियोगिविशेषनिर्देशेन प्रपञ्चनं सर्वभूतस्थम् इत्यादि। आत्मशब्दस्यात्मसामान्यविषयत्वपरमात्मविषयत्वव्यावर्तनेन स्वपर्यायत्वद्योतनाय —स्वात्मशब्दः। नन्वन्योन्याधाराधेयभावः कथमुपपद्यते? कथञ्चाणोः स्वात्मनस्सर्वभूतस्थत्वं? विप्रकीर्णदेशावस्थितानां च सर्वभूतानां कथमेकदेशस्थिते स्वात्मनि स्थितिः; अतोऽयमात्मशब्दः परमात्मविषयस्स्यादिति; तत्राह—सर्वभूतसमानाकारमिति। नन्वसौ स्वात्ममात्रानुसन्धानरूपे योगे प्रवृत्तः कथं स्वगतसाम्यप्रतियोगितया स्वप्रतियोगिकसाम्याश्रयतया च स्वव्यतिरिक्तात्मवर्गमीक्षेतेत्यत्राह— एकस्मिन्निति। एकजातीयेषु पदार्थेष्वेकव्यक्तिदर्शनेनैव स्थालीपुलाकन्यायात्तज्जातीयं सर्वमपि तथात्वेनानुमहितं हि भवतीति भावः। 'सर्वभूतस्थम्' इत्यादेस्साम्यमेव विवक्षितमिति दर्शयितुमेतद्ग्रन्थैकदेशं पूर्वोत्तरप्रकरणग्रन्थं चोदाहरति – सर्वत्रेति। अयमभिप्रायः—'सर्वत्र समदर्शनः' इति सर्वेषामात्मनां परस्परसाम्यदर्शनमुच्यते; तदेव 'सर्वभूतस्थम्' इति प्रपञ्च्यते। अत एव च तत्प्रभूतेष्वात्मतत्त्वस्य, तस्मिंश्च तेषां स्थितिदर्शनमिहालङ्कृतम्। नचेदं परमात्मयोगप्रकरणम्; येन तथाविधपरमात्मानुसन्धानमुपदिश्येत। नच जीवात्मयोगोपयुक्त परमात्मध्यानमिदमुच्यते, समाधिदशाभेदाविवक्षितत्वात्। नच जीवानां परमात्मनश्च साम्यमिहोच्यते, तस्यापि 'यो माम्' इति विशेषनिर्देशादुक्ते श्लोकद्वये प्रतिपादयितुमुचितत्वात्, अस्य परमात्मविषयत्वे 'यो माम्' इति श्लोकद्वयेन स्वतरां पौनरुक्त्यं च स्यात्। †'योयं योगः' इत्येतदनुवादे च साम्यमात्रमेवोच्यते, न तु परस्पराधाराधेयभावः। प्रागपि ‡'विद्याविनय' इत्यादौ साम्यमात्रमेवोक्तम्। अतोऽत्र जीवानां परस्परसाम्यमेव विवक्षितमिति॥ २९ ॥

प्र-पा ॥*योग याज्ञवल्क्यस्मृतौ ॥ †गी. ६-३३ ॥ १.

‡गी. ५-१९ ॥ २. गी ५-१८॥

शं॥इदानीं योगस्य यत् फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत् प्रदर्श्यते— सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वम् आत्मानं सर्वभूतानि च आत्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतानि आत्मनि एकतां गतानि ईक्षते पश्यति योगयुक्तात्मा समाहितान्तः-

आ॥ध्येयमाह—सर्वभूतस्थमिति। सर्वभूतस्थमात्मानम् परमेश्वरम्, सर्वभूतानि चात्मनि परमेश्वरे तं च परमेश्वरं ब्रह्म तृणाद्यैश्वर्यादिना साम्येन पश्यति। तथोक्तम्—

ज॥एवं युञ्जन्निति योगप्रकरणस्य फलकथनेनोपसंहृतत्वात्किमुत्तरेणेत्यत आह—ध्येयमिति। ननु 'मच्चित्तो युक्तः' इत्यादिना ध्येयमुक्तमेव; सत्यम्, तथाऽप्युत्तमाधिकारिणां ध्येयमनेनोच्यत इत्यदोषः। आत्मानं स्वात्मानमित्यादिप्रतीतिपराकरणार्थमाह—सर्वेति। कुतोऽयमर्थ इत्यतः 'पुराणसमाख्याना-

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३०

रा॥ततो विपाकदशापन्नो मम साधर्म्यमुपागतः* 'निरञ्जनः परमं साम्यमुपैति' इत्युच्यमानं सर्वस्यात्मवस्तुनो विधूतपुण्यपापस्य स्वरूपेणावस्थितस्य मत्साम्यं पश्यन् यस्सर्वत्रात्मवस्तुनि मां पश्यति, सर्वमात्मवस्तु च मयि पश्यति ; अन्योन्यसाम्यादन्यतरदर्शनेन अ-

ता॥ एवं देवमनुष्यादिप्रकृतिपरिणामविशेषरूपभेदनिरसनेन ज्ञानैकव्यतयैकरूपत्वानुसन्धानमुक्तम् । अथ तस्यैव देवादिभेदहेतुभूतपुण्यपापतारतम्यविधूननेन परमात्मना परमसाम्यानुसन्धानमुच्यते—'यो माम्' इति । अस्यापि श्लोकस्य साम्यविषयत्वे हेतुः प्रागेवोक्तः। ततोऽपि विपाकदशापन्नः—प्रथमदशातोऽधिका विपाकदशा प्राप्त इत्यर्थः । जीवात्मना परमात्मनश्च साधर्म्यं वक्ष्यमाणं स्मारयति—ममसाधर्म्यमिति । उपागतः बुध्या प्राप्त इत्यर्थः । नह्ययमिदानीं मुक्तः, पुण्यपापविधूननेन साम्यप्रतिपादनाय 'निरञ्जनः' इति श्रुतिरुपात्ता । 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति हि सा; 'यो मां पश्यति' इत्यनुवादः तत्सिद्धौ हि भवति , सा कुत इति शङ्कायां साम्यं तावदुपात्तश्रुत्यादिसिद्धम् । तदनुसन्धानं च विहितम् ; ततश्च तदनुवादोऽप्युपपन्न इति ज्ञापनाय मत्साम्यं पश्यन् यस्सर्वत्रात्मवस्तुनि मां पश्यतीत्यन्तरवचनव्यक्तिभेदो दर्शितः । परमात्मनः सर्वव्यापितया सर्वेषां परमात्मनिष्ठतया च प्रतीतिर्ह्यत्र स्वरसतो जायते; तद्वात्र प्रकरणादिवशादनुचितम् । ततश्च साम्यदर्शनमेव विवक्षितमिति वाच्यम् ; तदप्ययुक्तम् , स्वात्मानुसन्धानस्वरूपयोगविपाके परमात्मनोऽन्येषां च स्फुरणाभावादिति पूर्ववच्छङ्कायामाह—अन्योन्येति । अन्यतरदर्शनेनान्यतरदपीति—एकव्यक्तिदर्शनेन व्यक्त्यन्तरमपीत्यर्थः । 'तस्याहम्' इत्यादौ न तावदप्यसनिषेधः

प्र पा ॥ *१८६. पुट व्याख्याता. ॥ | १. मुण्डक. ३-१-३ ॥

शा॥करणः सन् सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः ॥ २९ ॥

एतस्य आत्मैकत्वदर्शनस्य फलम् उच्यते—यो मां पश्यति वासुदेवं सर्वस्य आत्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति, तस्य एव आत्मैकत्वदर्शिनः अहम् ईश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि । स च मे न प्रणश्यति

आ॥ 'आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् । अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि' इति । 'समं सर्वेषु भूतेषु भगवन्तमवस्थितम्' इति च ॥ २९ ॥

फलमाह—यो मामिति । 'तस्याहं न प्रणश्यामि' इति सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति'—सर्वदा मद्भक्तो भवति । सत्यपि स्वामिन्यरक्षस्य

ज्ञा॥दित्याह—तर्ह्येति । 'सर्वत्र समदर्शनः' इत्यस्योक्तार्थतां गीतामन्त्योपपादयति—सममिति॥२९॥

किंचैतदर्थानुवादेन फलप्रतिपादकमुत्तरवाक्यमप्यस्य भगवद्विषयत्वं ज्ञापयतीति भावेनाह—फलमिति । अत्र ध्यानविशेषस्येति शेषः ; ननु भगवान्मद्ध्यायी च सर्वान्प्रति नित्यौ, तत्कथमेतदित्यत आह —तस्येति।कथमनश्यतो लम्भन इत्यत आह —सत्यपीति।अविद्यमानत्वायोऽयमिति भृत्ये प्रसिद्धिः; एवं सत्यपि भृत्येऽभजन्नविद्यमानभृत्योऽयमिति स्वामिनि प्रसिद्धिः।एतदुक्तं भवति—विद्यमा-

रा॥न्यतरदपीदृशमिति पश्यति, तस्य स्वात्मरूपं पश्यतोऽहं तत्साम्यान्न प्रणश्यामि—नादर्शनमुपयामि; ममापि मां पश्यतो मत्साम्यात् स्वात्मानं मत्सममवलोकयन् सदा दर्शनमुपयामि ॥ ३० ॥

ततोऽपि विपाकदशामाह—

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१

योगदशायां सर्वभूतस्थितं मामसंकुचितज्ञानैकाकारतया एकत्वमास्थितः प्राकृत-

---

ता॥क्रियते, नित्यतया बहुप्रमाणप्रतिपादितयोर्जीवेश्वरयोरिदानीमनित्यत्वशङ्काभावात्, तस्य 'न प्रणश्यामि' इत्यादिपरस्परप्रतियोगिनिर्देशानुपपत्तेश्च । न हि किञ्चिदपि वस्तु किञ्चित्प्रत्यनष्टं किञ्चित्प्रति च नष्टं भवति । अतोऽसावदर्शनविषय एवात्र नाशशब्दः । णशिधातोश्च अदर्शनार्थत्वं धातुपाठपठितम् । ततश्च न प्रणश्यामीति कोऽर्थः ; नादर्शनमुपयामीति, तदेतद्दर्शयति—तस्येत्यादिना । तादृशत्वानुसन्धानस्याभावो निषिध्यत इति भावः । 'स च मे न प्रणश्यति' इत्येतद्दृष्टान्तार्थं, साम्यस्य सर्वज्ञबुद्धिविषयतया प्रामाणिकत्वार्थं, पूर्वंवच्छङ्कापरिहारार्थं चेत्यभिप्रायेणाह—ममापीति । सर्वसाक्षात्कारिणोऽपि मम स्वरूपानुसन्धानादेऽपि तत्साम्यात्तत्स्वरूपमप्यनुसंहितं भवति हीत्यर्थः।न इत्यनेन तदवस्थस्य मुक्तप्रायत्वं विवक्षितमिति व्यञ्जयितुमाह मत्साम्यात्स्वात्मानं मत्सममवलोकयन्निति॥ ३०

तृतीयां विपाकदशामाहेत्याह-नन्विति।अकर्मवश्यस्याकारणेश्वरसाम्यदर्शनं पूर्वश्लोकोक्तम्, 'सर्वभूतस्थितम्' इत्यनेन तु कर्मरूपाविद्यावेष्टनविधुरस्यासङ्कुचितज्ञानाकारतया साम्यानुसन्धानम्, तत्संस्कारप्रभावेन च व्युत्थानकालेऽपि स्वरसतस्तथाविधानुसन्धानानुवृत्तिश्चेत्येतदुच्यते । 'यो भजति' 'स सर्वथा वर्तमानोऽपि' इत्यनेन कालभेदसिद्धः नच समाधिदशायामेव यथातथा वर्तमानत्वमुपपद्यते। सर्वभूतस्थितेन परमात्मनैकत्वानुसन्धानं नाम स्वस्यापि सर्वभूतस्थितत्वेन तदेकप्रकारत्वानुसन्धानं तच्चाणोरात्मनस्स्वरूपेण न सम्भवति। धर्मतश्च परिशुद्धात्मनो व्याप्तिः 'बालाग्र' इत्यारभ्य 'सचानन्त्याय कल्पते' इति

प्र-या ॥ १ अं. ५-९ ॥

---

श॥स च विद्वान् मे मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति, तस्य च मम च आत्मैकत्वात्; स्वात्मा हि नाम आत्मनः प्रियतम एव भवति ॥ ३० ॥

यस्मात् च अहमेव सर्वात्मैकत्वदर्शी इत्येतत् पूर्वश्लोकार्थं सम्यग्दर्शनम् अनूद्य तत्फलं मोक्षः अभिधीयते—सर्वथा सर्वप्रकारैः वर्तमानोऽपि सम्यग्दर्शी योगी मयि वै-

---

आ॥नाथः। एवं भृत्येऽप्यभजत्यभृत्य इति हि प्रसिद्धिः। उक्तं च—'सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति । अचला तस्य भक्तिः स्याद्योगक्षेमं वहाम्यहम्' इति गारुडे ॥ ३० ॥

एतदेव स्पष्टयति—सर्वभूतस्थितमिति । एकत्वमास्थितः—सर्वत्र एक एवेश्वर

---

ज्ञा॥नस्यापि स्वयोग्यव्यापाराकरणसादृश्यादुपचारेणाविद्यमानता, प्रकृते तु तथात्वाभावात् 'न प्रणश्यामि' इत्यादिरुढोपचारश्चायम्। अतो न प्रयोजनान्वेषणमिति । अत्र पुराणसंमतिमाह—उक्तं चेति॥ ३०॥

'यो माम्' इति उक्तमेव पुनः किमर्थमुच्यत इत्यत आह—एतदेवेति । 'एकत्वमास्थितः' इत्यस्यान्यथाप्रतीतिनिरासार्थमर्थमाह— एकत्वमिति। मयि वा मद्विकारे वा वर्तमानोऽपीत्यपव्याख्यान-निरासार्थमाह—सर्वेति। न्यायेन वाऽन्यायेन वेत्यर्थः । अपव्याख्याने यद्वृत्तयचो न युक्त इति भावः।

रा॥भेदपरित्यागेन सुदृढं यो भजते,स योगी व्युत्थानकालेऽपि यथातथा वर्तमानः स्वात्मानं सर्वभूतानि च पश्यन् मयि वर्तते मामेव पश्यति— स्वात्मनि सर्वभूतेषु च सर्वदा मत्साम्यमेव पश्यतीत्यर्थः ॥ ३१ ॥

---

ता॥श्रुतिसिद्धा।सूत्रञ्च'प्रदीपवदावेशस्तथाहि दर्शयति'इति अतोऽत्रापि तथैवसाम्य विवक्षितमिति दर्शयितुम्-असङ्कुचितज्ञानाकारतयैकत्वमास्थित इत्युक्तम्।प्राकृतभेदपरित्यागेन— कर्मोपाधिकप्रकृतिविशेषसंसर्गकृतज्ञानतारतम्यरूपभेदपरित्यागेनेत्यर्थः।अनेनैकत्वोक्तेःस्वरूपभेदनिरासार्थत्वं परिहृतम्।सर्वात्मना ब्रह्मापृथक्सिद्धत्वविवक्षयाप्येकत्वोक्तिश्च घटते। आस्थितशब्दस्य तात्पर्यार्थः—सुदृढमिति। ततश्च व्युत्थानकालेऽपि तथाविधानुसन्धानप्रवाहहेतुभूतसंस्कारप्राबल्यं सूचितम्। 'मां भजति' मत्समात्मावलोकनमपि हि मद्भजनमित्यभिप्रायः। 'सर्वथा' इत्यस्य लौकिकक्रियाव्यापृतोऽपीत्यभिप्रायः। 'मयि वर्तते' इत्यस्य परमात्मनि स्थितिर्नार्थः, तस्य योग्ययोगिसाधारणत्वात्। अतो वृत्तिरत्र बुद्धिवृत्तिरित्यभिप्रायेणाह—मामेव पश्यतीति। जीवदर्शनमात्रेण कथं परमात्मदर्शनमित्यत्राह—स्वात्मनीति। व्युत्थानकाले स्वात्मसाक्षात्काराभावेऽपि विशदपरोक्षानुसन्धाने परेषामपि तथात्वसिद्धेः फलितत्वोक्तिरियम् ॥ ३१ ॥

प्र पा॥१ ब्रह्मसूत्रम्.४-४-१५॥ †अस्यार्थः—'आत्मा अणुपरिमाण' इति उक्तम्, कथमनेकशरीरैकस्य अणोरात्माभिमानसम्भव इत्यत्राह—प्रदीपवदावेशस्तथा हि दर्शयति इति। यथा प्रदीपस्यैकस्यैकदेशवर्तिनस्स्वया प्रभया अनन्तदेशावेशः। तद्वदात्मनोऽपि एकदेशस्थस्य स्वप्रभारूपेण ज्ञानेन सर्वदेहेषु यथा सह स्वस्मात्माभिमानानुगुणाव्याप्तिसम्भवति। यथा एकस्मिन्देहे हृदयादिदेशे वर्तमानस्याऽणोरपि सर्वस्मिन्देहेऽहमित्यभिमानानुगुणव्याप्तिः स्वप्रभारूपचैतन्येन तद्वत्। 'दर्शयति हि'-श्रुतिः + 'बालाग्रशतभागस्य शतधा कल्पितस्य च' इति। अमुक्तस्य कर्मनियामकम्, मुक्तस्य तु स्वच्छन्दतः विशेषः।' इति ॥

---

श्री॥ण्यं परमेपदे वर्तते, नित्यमुक्त एव सः,न मोक्षं प्रति केनचित् प्रतिबध्यते इत्यर्थः ॥

---

आ॥इति स्थितः। सर्वप्रकारेण वर्तमानोऽपि मय्येव वर्तते —एवमपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः। तथापि प्रायो नाधर्मं करोति। कुर्वतस्तु महद्दुःखसूचकं भवतीत्युक्तं पुरस्तात्। आह च 'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत्। प्रमादात्तु कृतं पापं स्वल्पं भस्मीभविष्यति॥ आदिराजस्तथा देवैर्ऋषिभिः क्रियते क्रियत्। बाहुल्यात्कर्मणस्तेषां दुःखसूचकमेव तत्' इति ॥ ३१ ॥

---

प्र॥भगवन्तं भजतो धर्माचरणं सर्वथाऽप्यकिञ्चित्करमिति प्रतीतिनिरासायाह —एवमिति। अधर्माचरणेऽपीति शेषः, ज्ञानफलं मोक्षः आनन्दह्रासादिकं तु भवत्येवेति भावः। ननु ज्ञानिनो मोक्षस्त्वापेक्षितः; सोऽधर्माचरणेऽपि न प्रतिबध्यते चेत्, तत्किमधर्मं करोतीत्यत आह—तथापीति। सर्वथाऽप्यकरणे सर्वथा वर्तमानोऽपीत्युक्तमयुक्तमित्यत उक्तम् - प्राय इति। एतेन यद्विदस्य यथेष्टचेष्टता सम्भवतीति परकीयस्वव्याख्यानदूषणमपि निरस्तं भवति। प्रारब्धवशेन कदाचित्तथाभावदर्शनात् कुतो न करोतीत्यत आह—कुर्वतस्त्विति। अत्र प्रमाणमाह—आह चेति। क्रियन्महदिति शेषः। कर्मणः प्रारब्धस्य बाहुल्यादानन्त्यात्। लोके प्रवृत्तिकर्मणो बाहुल्येन चित्तविक्षेपादितिवा ॥ ३१ ॥

रा॥ततोऽपि काष्ठामाह—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२

स्वात्मनश्चान्येषां चात्मनामसंकुचितज्ञानैकाकारतयौपम्येन स्वात्मनि चान्येषु च सर्वत्र वर्तमानं पुत्रजन्मादिरूपं सुखं तन्मरणादिरूपं च दुःखमसंबन्धसाम्यात्समं यः पश्यति, परपुत्रजन्ममरणादिसमं स्वपुत्रजन्ममरणादिकं यः पश्यतीत्यर्थः; स योगी परमो मतः—योगकाष्ठां गतो मतः ॥ ३२ ॥

अर्जुन उवाच—

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ ३३

ता॥प्रबलदुःखहेत्वागमेऽपि निर्विकारत्वापादिका योगविपाककाष्ठाभूता कर्मज्ञानतारतम्यप्रयुक्तसुखदुःखतारतम्यनिवृत्त्यनुसन्धानरूपां चतुर्थीं दशामाहेत्याह—ततोऽपि काष्ठामाहेति। 'आत्मौपम्येन' इत्यस्य न पश्यतिनान्वयः, सममित्यनेन पौनरुक्त्यप्रसङ्गात्। अतस्सर्वत्रात्मौपम्ये इत्यन्वयः। उपमाशब्दस्तुल्यवचनः। तस्य भाव औपम्यं सर्वेषामात्मनां पूर्वोक्तेन देहविलक्षणत्वादिसाम्येनेत्यर्थः। 'सर्वत्र' इत्येतदेव काकाक्षिन्यायेन 'सम पश्यति' इत्यत्राप्यन्वितम्। सर्वेषामत्यन्तविषमतया उपलभ्यमानसुखदुःखान्वयसाम्यभ्रमव्युदासेन व्यतिरेकसाम्यानुसन्धान दर्शयति—असम्बन्धसाम्यादिति। परेष्वसम्बन्धानुसन्धानस्य निष्प्रयोजनत्वादिहाभिप्रेतमाह—परेति। परपुत्रजन्मादेस्स्वात्मनि स्वपुत्रजन्मादेश्च परेषु यथा न सम्बन्धः, तथा स्वात्मन्यपीत्युक्तं भवति। परमशब्दाभिप्रेतमाह—योगकाष्ठाङ्गतो मत इति। जीवात्मयोगकाष्ठेयम्, परमात्मयोगस्य परस्ताद्वक्ष्यमाणत्वात् ॥ ३२ ॥

एवं ज्ञानैकाकारतया निर्दोषतया ब्रह्मतद्गुणसम्बन्धेनेतरासम्बन्धेन च साम्यं श्लोकचतुष्टयेनोक्तम्। अत्र श्लोकद्वयेन साम्यानुसन्धानोक्तिस्तृतीयचतुर्थश्लोकाभ्यां तु दृढतरदृढतमसाम्यानुसन्धान-

शा॥किञ्च अन्यत्—आत्मौपम्येन आत्मा स्वयमेव उपमा तद्भाव औपम्यम्, तेन आत्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति यः अर्जुन। स च किं समं पश्यति इति? उच्यते—यथा मम सुखम् इष्टं तथा सर्वप्राणिनां सुखम् अनुकूलम्। वाशब्दः चार्थे, यदि वा यच्च दुःखं मम प्रतिकूलम् अनिष्टं यथा तथा सर्वप्राणिनां दुःखम् अनिष्टं प्रतिकूलम् इत्येवम् आत्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति, न कस्यचित् प्रतिकूलम् आचरति, अहिंसक इत्यर्थः। यः एवम् अहिंसकः सम्यग्दर्शननिष्ठः स योगी परमः उत्कृष्टः मतः अभिमतः सर्वयोगिनां मध्ये ॥ ३२ ॥

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःखसम्पाद्यताम् आलक्ष्य शुश्रूषुः

आ॥ साम्यं प्रकारान्तरेण व्याचष्टे—आत्मौपम्येनेति ॥ ३२ ॥

ज॥'सर्वत्र समदर्शनः' इत्यस्यान्यथाव्याख्यानमितोऽप्यसदिति भावेनाह—साम्यमिति—साम्यदर्शनम्। समदर्शन इत्युक्ते किं गोगवयादिवद्भवति साम्यदर्शनमित्याकाङ्क्षायामेकत्वमास्थित इति स्वयमेव व्याख्यातम्। इदानीं तु भगवदनुवर्तिविषयतयाऽपि व्याचष्ट इत्यर्थः ॥ ३२ ॥

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४

रा॥योऽयं देवमनुष्यादिभेदेन जीवेश्वरभेदेन चात्यन्तभिन्नतयैतावन्तं कालमनुभूतेषु सर्वेष्वात्मसु ज्ञानैकाकारतया परस्परसाम्येन अकर्मवश्यतया च ईश्वरसाम्येन सर्वत्र समदर्शनरूपो योगस्त्वया प्रोक्तः, एतस्य योगस्य स्थिरां स्थितिं न पश्यामि, मनसश्चञ्चलत्वात् । तथा ह्यनवरताभ्यस्तविषयेष्वपि स्वत एव चञ्चलं पुरुषेणैकत्रावस्थापयितुमश-

ता॥फलपर्वद्वयोक्तिरित्येके। योगाभ्यासविधिश्चतुर्थो योगी चोक्तः । अथ प्रागुक्तस्य योगसाधनं निषाद शङ्कते पुनरर्जुन उवाच—'योऽयम्' इति । देवेत्यारभ्य—अनुभूतेष्वित्यन्तमनादिप्रचितसुदृढविपरीतवासनया साम्यानुसन्धानस्याशक्यत्वप्रदर्शनार्थम् । परस्परवैषम्य—देवमनुष्यादिभेदेनेति । जीवेश्वरभेदेन—कर्मवश्यत्वाकर्मवश्यत्वादिभेदेनेत्यर्थः । अत्यन्तभिन्नतयेति—नक्षत्रखण्डमुण्डादिवत् भेदकधर्ममात्रं, किन्तु विरुद्धस्वभावत्वमेव हि दृश्यत इति भावः । एतावन्तं कालमिति 'कालाध्वनोरत्यन्तसंयोगे द्वितीया'। अकर्मवश्यतया चेश्वरसाम्येनेति चस्साम्यद्वयसमुच्चयार्थः। अकर्मवश्यतया चेश्वरसाम्येन चेति क्वचित्पाठः । तदा पूर्वश्चकार ईश्वरसाम्येऽपि ज्ञानैकाकारत्वसङ्ग्रहार्थः। द्वितीयस्तु पूर्ववत् । ज्ञानपुरुषार्थवैषम्ययोः कर्मवैषम्यफलत्वात् अकर्मवश्यतयेत्यनेनैव तयोरपि निवृत्तिसङ्ग्रहः फलित इति तयोरनुपादानम् । त्वया प्रोक्तः—स्वतस्सर्वज्ञेन त्वयैव ह्येतदनुसन्धातुं प्रवक्तुं च शक्यमिति भावः । 'अहं न पश्यामि' इति अनादिभेदानुसन्धानवानजितचित्तश्चाहं न पश्यामीति भावः । स्थिरां स्थितिं—चिरानुवृत्तिमित्यर्थः । 'मधुसूदन' रजस्तमोमयप्रबलविरोधिनिरसनशीलस्त्वमेव मनोनिग्रहोपायम् उपदिशेति भावः । 'चञ्चलं हि मनः' इत्युत्तरवाक्यानुसन्धानेन मनस इत्यध्याहृतम्। हीति निपातस्य यादवप्रकाशोक्तादचिद्विशेषणार्थत्वादपि स्फुटमुचितं चात्र हेत्वर्थत्वमाह—तथा हीति। हेतुभूतं च चलत्वं सम्प्रतिपन्नस्थले प्रदर्शनीयम् । अतश्चलस्वभावत्वमेव चञ्चलशब्दार्थ इति दर्शयितुम्—अनवरतेत्यादिकम्। चञ्चलत्वफलमाह—पुरुषेणेति। 'प्रमाथि' प्रमथनशीलम्। प्रमथ्य—

प्र·पा॥१. अष्टा.२-३-५॥ 'कालाध्वनोरत्यन्तसंयोगे' —इह द्वितीया स्यात्। मासं कल्याणी । मासमधीते। मासं गुडधानाः । क्रोशं कुटिला नदी । क्रोशमधीते। क्रोशं गिरिः । अत्यन्तसंयोग इति किमर्थं क्रियते? । मासस्य द्विरधीते; क्रोशस्यैकदेशे पर्वतः इत्यत्र माभूदित्येवमर्थम् ॥

शा॥तत्प्राप्त्युपायम् अर्जुन उवाच—यः अयं योगः त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन एतस्य योगस्य अहं न पश्यामि नोपलभे चञ्चलत्वात् मनसः, किं ? स्थिराम् अचलां स्थितिम् ॥ ३३ ॥

आ॥एतस्य योगस्य स्थिरां स्थितिं न पश्यामि मनसश्चञ्चलत्वात्॥ ३३ ॥

ज्ञा॥साम्यस्य योगस्य च प्रकृतत्वात्, 'एतस्य' इति कस्य परामर्श इति न ज्ञायते, अतस्तत्प्रदर्शनाय व्यवहितानां पदानामन्वयमाह—एतस्येति । योगस्य प्राधान्येन साम्यस्य तु तृतीययाऽप्राधान्येन प्रकृतत्वादितिभावः । 'चञ्चलत्वात्' इत्यस्यान्यो धर्मी न प्रतीयते, अतो योग एव सम्बध्यते, तथा च साध्याविशिष्टतेत्यत आह—मनस इति । एतच्चोत्तरवाक्यादवगम्यत इति भावः ॥ ३३ ॥

रा॥कथं मनः पुरुषं बलात्प्रमथ्य दृढमन्यत्र चरति; तस्य स्वाभ्यस्तविषयेष्वपि चञ्चलस्वभावस्य मनसस्तद्विपरीताकारात्मनि स्थापयितुं निग्रहं प्रतिकूलगतेर्महावातस्य व्यजनादिनेव सुदुष्करमहं मन्ये ; मनोनिग्रहोपायो वक्तव्य इत्यभिप्रायः॥ ३३, ३४ ॥

श्रीभगवानुवाच—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६

चलस्वभावतया मनो दुर्निग्रहमेवेत्यत्र न संशयः;तथाप्यात्मनो गुणाकरत्वाभ्यासजनिताभिमुख्येनात्मव्यतिरिक्तेषु दोषाकरत्वदर्शनजनितवैतृष्ण्येन च कथंचिद्गृह्यते.असं-

ता॥व्याकुलीकृत्येत्यर्थः।बलवच्छब्दः प्रमथनक्रियाविशेषणं वा बलवत्त्वात्प्रमाथीति हेतुपरो वेत्यभिप्रायेण —बलात्प्रमथ्येत्युक्तम् । वैपरीत्ये दार्ढ्यमित्याह— दृढमन्यत्रेति। ‘तस्य’ इति परामर्शाभिप्रेतमाह —स्वाभ्यस्तेति। तद्विपरीताकार इति अनभ्यस्तपूर्व इत्यर्थः । स्थापयितुं —स्थापनार्थम् । दार्ष्टान्तिके मनसि प्रदर्शितस्य चञ्चलत्वादेः दृष्टान्ते विवक्षितत्वप्रदर्शनाय —प्रतिकूलेत्यादिकमुक्तम्। मनोनिग्रहोपायदुर्लभत्वज्ञापनाय वायोर्मन्दैर्निग्रहासंभावनार्थं च—व्यजनादिनेवेत्युक्तम् । एवं दुष्करत्ववचनं न प्रतिक्षेपार्थम्, किन्तूपायपरिप्रश्नार्थमित्याह -मन इति ॥ ३३-३४ ॥

अथार्जुनेन कण्ठोक्तमनुवदन् बुभुत्सितमुपायं श्लोकद्वयेनाह - भगवान् ।.तत्र ‘ दुर्निग्रह ’ ‘ चलम् ’ इति पदद्वयमर्जुनोक्तप्रतिज्ञाहेत्वनुवादरूपमाह— चलस्वभावतयेति । असंशयमित्येतत्सत्यमितिवदर्धाङ्गीकारपरम्।तुशब्दाभिप्रेतं विशेषं दर्शयति—तथापीति।अनुकूलतयाभ्यासो हि तत्र प्रावण्यहेतुस्स्यादित्यभ्यासविशेषं तत्फलञ्च व्यनक्ति-आत्मन इति।निर्मलत्वज्ञानत्वानन्दत्वाकर्मवश्यत्वामलत्वादयोऽत्र गुणाः । कथञ्चिदित्यत्रधानार्थम् । एवं मनसो ग्रहणोपाय उक्तः , ततश्च ‘ एतस्याहं न पश्यामि ’ इत्युक्तमर्थं विषयविशेषे व्यवस्थापयति ‘ असंयत ’ इति श्लोकेन । मनोनिग्रहप्रकरणत्वात् असंयत-

प्र-पा ॥ १ असम्भवार्थं पा ॥ | २ गी. ६ ३३ ॥

शं॥प्रसिद्धम् एतत्—चञ्चलं हि मनः कृष्ण । ‘कृष्ण’ इति कृषतेः विलेखनार्थस्य रूपम् । भक्तजनपापादिदोषाकर्षणात् कृष्णः, तस्य सम्बुद्धिः हे कृष्ण । हि यस्मात् मनः चञ्चलं न केवलम् अत्यर्थं चञ्चलं,प्रमाथि च प्रमथनशीलं,प्रमथ्नाति शरीरम् इन्द्रियाणि च विक्षिपत् सत् परवशीकरोति । किञ्च—बलवत् प्रबलं न केनचित् नियन्तुं शक्यं, दुर्निवारत्वात् । किञ्च—दृढं तन्तुनागवत् अच्छेद्यम् । तस्य एवं भूतस्य मनसः अहं निग्रहं निरोधं मन्ये वायोरिव यथा वायोः दुष्करो निरोधः ततोऽपि दुष्करं मन्ये इत्यभिप्रायः ॥ ३४ ॥

आ॥उक्तं च 'मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा । विनाऽभ्यासान्न शक्या

जा॥अवगमं चाह—उक्तं चेति। एतेन‘ असंशयम् ’ इति परिहारवाक्यमपि व्याख्यातम्॥ ३४-३५॥

गा॥यतात्मना अजितमनसा महतापि बलेन योगो दुष्प्राप एव, उपायतस्तु वश्यात्मना पूर्वोक्तेन मदाराधनरूपेणान्तर्गतज्ञानेन कर्मणा जितमनसा यतमानेनाप्यमेव समदर्शनरूपो योगोऽवाप्तुं शक्यः ॥ ३५, ३६ ॥

अथ "नेहाभिक्रमनाशोऽस्ति" इत्यादावेव श्रुतं योगमाहात्म्यं यथावच्छ्रोतुमर्जुनः पृच्छति, अन्तर्गतात्मज्ञानतया योगशिरस्कतया च हि कर्मयोगस्य माहात्म्यं तत्रोदितम्, तच्च योगमाहात्म्यमेव—

ता॥वश्यशब्दसमभिव्याहारसामर्थ्याच्चात्र आत्मशब्दो मनोविषयः। महाबाहुसम्बुद्धिसूचितमाह-महतापि बलेनेति। 'उपायेन तु यच्छक्यं न तच्छक्यं पराक्रमैः' इति भावः। 'मे मतिः' इत्यनेन निस्सन्देहत्वं विवक्षितमित्याह—दुष्प्राप एवेति। उपायतस्तु वश्यात्मनेति—व्याख्येयान्वयप्रदर्शनम्। तद्व्याख्यानं—पूर्वेत्यादि। उक्तलक्षणं कर्ममात्रं मनोनिग्रहोपायः, अभ्यासवैराग्ये तु तस्यैवाङ्गतयोक्ते इति भावः यतमानेन—योगमभ्यस्यतेत्यर्थः ॥ ३५, ३६ ॥

एवं प्रागुक्तमेव योगसाधनं यथावच्छ्रुतम्; अथ प्रागुक्तमेव योगमाहात्म्यं श्रोतव्यं सर्वप्रकारान्वितं प्रपञ्चेन श्रोतुं पृच्छतीत्याह—अथेति। योगमाहात्म्यशब्देन सन्नद्धश्लोकस्थयोगसिद्धिशब्दो व्याख्यातः। सिद्धिकारणं हि माहात्म्यम्; सिद्धिश्चात्र शिथिलस्यापि योगस्य चिरतरमनेकपुण्यलोकावाप्तिः, पुनर्योगयोग्ययोगिकुलसम्भवः, तद्द्वारा पुनर्योगपौष्कल्यं, ततश्चापवर्ग इत्येवंरूपा। एषा च सिद्धिः

प्र-पा॥ *गीता. २ ४० ॥ १. महाबाहुशब्दस्य पा ॥ २.

श्री॥श्रीभगवानुवाच—एवम् एतत् यथा ब्रवीषि असंशयं नास्ति संशयो हि महाबाहो 'मनो दुर्निग्रहं चलम्' इत्यत्र। किन्तु—अभ्यासेन तु, अभ्यासो नाम चित्तभूमौ कस्यांचित् समानप्रत्ययावृत्तिः चित्तस्य। वैराग्येण, वैराग्यं नाम दृष्टादृष्टेषु भोगेषु दोषदर्शनाभ्यासात् वैतृष्ण्यम्। तेन च वैराग्येण च गृह्यते विक्षेपरूपः प्रचारः चित्तस्य, एवं तत् मनः गृह्यते निगृह्यते निरुध्यते इत्यर्थः ॥ ३५ ॥

यः पुनः असंयतात्मा, तेन—असंयतात्मना अभ्यासवैराग्याभ्याम् असंयत आत्मा अन्तःकरणं यस्य सः अयम् असंयतात्मा तेन असंयतात्मना योगो दुष्प्रापः दुःखसंप्राप्यः इति मे मतिः। यस्तु पुनः वश्यात्मा अभ्यासवैराग्याभ्यां वश्यत्वम् आपादितः आत्मा मनः यस्य सः अयं वश्यात्मा तेन वश्यात्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्यः अवाप्तुं योगः उपायतः यथोक्तात् उपायात् ॥ ३६ ॥

आ॥स्याद्वैराग्याद्वा न संशयः' इति व्यासयोगे ॥ ३४ - ३५ ॥

नच कदाचित्स्वयमेव मनो नियम्यते। 'शुभेच्छारहितानां च द्वेषिणां च रमापतौ। नास्तिकानां च वै पुंसां सदामुक्तिर्न युज्यते' इति निषेधाद्ब्राह्मे ॥ ३६ ॥

ज॥'असंयत' इतिश्लोको व्यर्थ इव प्रतीयते, तन्निवर्त्याशङ्कां सूचयन् तात्पर्यमाह—नचेति। यथा मत्तमातङ्गः स्वयमेव श्रान्तः शान्तो भवति, तथा विषयैः दुष्टं मनः कदाचित्स्वयमेव नियतं भवति। किमभ्यासादिनेत्येतन्नैवेत्यर्थः। कुत इत्यत आह—शुभेति। सदेति पूर्वेण सम्बन्धः। अनेनात्र शुभेच्छादिकमप्युपलक्षितमिति सूचितम्। मुक्तिबीजत्वान्मनोनियमनस्य मुक्तिरित्युक्तम् ॥ ३६ ॥

अर्जुन उवाच—

अयतिश्श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८
एतं मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता नह्युपपद्यते ॥ ३९

रा ॥ श्रद्धया योगे प्रवृत्तो दृढतराभ्यासरूपयत्नवैकल्येन योगसंसिद्धिमप्राप्य योगाच्चलितमानसः कां गतिं गच्छति, उभयविभ्रष्टोऽयं छिन्नाभ्रमिव कच्चिन्न नश्यति, यथा मेघशकलः पूर्वस्माद्बृहतो मेघाच्छिन्नः परं बृहन्तं मेघमप्राप्य मध्ये विनष्टो भवति, तथैव कच्चिन्न नश्यति. कथमुभयविभ्रष्टता? अप्रतिष्ठो विमूढो ब्रह्मणः पथीति,

ता॥अनितरसाधारणेन माहात्म्येन।ननु'नेहाभिक्रमनाशोऽस्ति'इत्यादौ कर्मयोगस्य माहात्म्यमुक्तम्, अत्र तु तत्फलभूतस्यात्मावलोकनरूपयोगस्य. अतः कथं श्रुतमित्युक्तम् , तत्राह —अन्तर्गतेति।ततः किमित्यत्राह—तच्चेति। योगाङ्कुरभूतात्मज्ञानगर्भतया पुष्कलयोगस्वरूपसाधनतया च हि कर्मयोगस्य माहात्म्य तत्रोदितम्,ततश्च योगोपाधिके तदङ्गभूतकर्मयोगमाहात्म्येऽभिहिते अङ्गिभूतयोगमाहात्म्यमेवोक्तं भवतीति भावः।'अयतिः'इत्यादिपदानाम् अर्थौचित्यात्क्रमभेदेन अन्वयो दर्शितः।तत्र प्रवृत्तस्य हि ततश्चलितत्वं वाच्यम्,ननु तत्र श्रद्धोपेतमात्रस्येति,अतश्श्रद्धया तत्कार्यलक्षणेत्यभिप्रायेण योगे प्रवृत्त इत्युक्तम्।उपेतशब्द एव वा अत्र श्रद्धाकृतयोगाधिगमपर इत्यभिप्रायः।योगसंसिद्धिमप्राप्य-योगसिद्धेः पूर्वमेवेत्यर्थः । योगाच्चलितमानसः-पुष्कलयोग कर्तुमननुगुणचित्त इत्यर्थः। कामभोगमोक्षनिरयेषु कतमामित्यर्थः । 'का गतिं गच्छति' इति सामान्यनिर्दिष्टमेव 'कच्चित्'इत्यादिना विवृतम्। दृष्टान्तेऽप्युभयभ्रष्टत्वप्रकारं दर्शयति —यथेति । उभयभ्रष्टताविवरणरूपत्वात् 'विमूढो ब्रह्मणः पथि'इत्येकस्याभिधानाच

प्र-पा ॥ १ गी. २ ४० ॥

शं॥तत्र योगाभ्यासाङ्गीकरणेन इहलोकपरलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि, योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तम् इति, योगी योगमार्गात् मरणकाले चलितचित्तः इति तस्य नाशम् आशङ्क्य अर्जुन उवाच—अयतिः अप्रयत्नवान् योगमार्गे श्रद्धया आस्तिक्यबुद्ध्या च उपेतः योगात् अन्तकाले चलितं मानसं मनो यस्य स चलितमानसः भ्रष्टस्मृतिः सः अप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति ॥ ३७ ॥

कच्चित् किं न उभयविभ्रष्टः कर्मयोगात् योगमार्गात् च विभ्रष्टः सन् छिन्नाभ्रमिव नश्यति, किं वा नश्यति अप्रतिष्ठो निराश्रयः हे महाबाहो विमूढः सन् ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

आ ॥ अयतिः—अप्रयत्नः ॥ ३७, ३८, ३९, ४०, ४१, ४२, ४३ ॥

ज॥अचतुर्थाश्रमीति प्रतीतिनिरासायाह -अयतिरिति॥ ३७, ३८, ३९, ४०, ४१, ४२, ४३ ॥

रा ॥ यथावस्थितं स्वर्गादिसाधनभूत कर्म फलाभिसन्धिरहितस्यास्य पुरुषस्य स्वफल साधनत्वेन प्रतिष्ठा न भवतीत्यप्रतिष्ठ प्रक्रान्ते ब्रह्मण· पथि विमूढ· तस्मात्पथ· प्रच्युत , अत उभयविभ्रष्टत या किमय नश्यत्येव, उत न नश्यति, तमेन सशयमशेषत श्छेत्तुमर्हसि, त्वत प्रत्यक्षेण युगपत्सर्व सर्वदा पश्यतस्त्वत्तोऽन्यस्संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३७ ३८, ३९ ॥

श्रीभगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४०

श्रद्धया योगे प्रक्रान्तस्य तस्मात्प्रच्युतस्येह चामुत्र च विनाशो न विद्यते, प्राकृत स्वर्गादिभोगानुभवे ब्रह्मानुभवे चाभिलषितानवाप्तिरूप प्रत्यवायाख्यानिष्टावाप्तिरूपश्च

ता॥ पारिशेष्यादप्रतिष्ठपदं सासारिकफलसाधनकर्मभ्रशाभिप्रायमित्याह—यथावस्थितमिति । कर्मस्व रूपानुष्ठानप्रयास दौ न किञ्चिन्न्यूनम् , अभिसन्धिवैधुर्यात्तु निष्फल सवृत्तमित्यभिप्राय । 'विमूढो ब्रह्मण पथि' इति ब्रह्मपथे अज्ञान न विवक्षितम् , ज्ञात्वोपक्रम्य निवृत्त प्रति पृच्छ्यमानत्वात् । अ ता विमोहकार्ययोगानवृत्तिरत्र विमूढशब्देन लक्ष्यत इत्यभिप्रायेण प्रक्रान्त इत्यादि प्रच्युत इत्यन्तमु क्तम् । ब्रह्मण पथि—ब्रह्मप्राप्त्युपायभूते योग इत्यर्थ ।'एत मे सशयम्'इति निर्दिश्यमानस्य सशय स्यार्थमिद्ध शिरोन्तरमाह—किमय नश्यत्येवेति। अर्हसि—सर्वज्ञत्वकारुणिकत्वप्रियसगत्वादियुक्तस्त्वं योग्योऽसीत्यर्थ । कृष्णशब्दन त्वच्छब्देन चाभिप्रतमाह—त्वत इति। करणाधीनम्, अविशदानुमा नादिप्राय, क्रमभावि कतिपयविषय, कादाचित्कमपि हि त्वदन्यषा ज्ञानमिति भाव । एतेन 'यो वेत्ति युगपत्सर्व प्रत्यक्षेण सदा स्वत । त प्रणम्य हरिं शास्त्र न्यायतत्त्व प्रचक्ष्महे ' इति तु भगवन्नाथमुनि मिश्राणा वचनमनुसहितम्। नह्युपपद्यत इति युक्तिविरोधाभिप्राय ॥ ३७ ३८ ३९ ॥

अथोभयपुरुषार्थान्वयमुखेन उभयविभ्रष्टता परिहरति—'पार्थ'इति। तस्येत्यनेन परामृष्टमाकारद्वय-माह—श्रद्धयेति । इहामुत्रशब्दयोर्भूलोकस्वर्गलोकादिपरत्व परिहृत्यात्र विवक्षितमाह—प्राकृतेति । यथा मुमुक्षो पुण्यमपि पापकोटौ निक्षिप्यते, तथा तस्य स्वर्गादिकमपीहशब्दनिर्देशार्ह प्रकरणसङ्गत चेति भाव । विनाशशब्द 'प्रत्यवायो न विद्यते' इति प्रागुक्तमप्यत्र सर्व सङ्गृह्णातीत्याह—प्रत्यवा याख्येति । कल्याणशब्दस्यात्र प्रस्तुतविशेषपर्यवसानव्यञ्जनायाह—निरतिशयेति। 'गच्छति' इत्यन

प्र पा ॥ १ यावतत्त्वे ॥ २ युक्तिविरोधोऽभिप्रेत पा ॥ ३ गी २ ४० ॥

शा॥एतत् म मम सशय कृष्ण छेत्तुम् अपनेतुम् अशेषत । त्वदन्य त्वत्त अन्य ऋषि देवो वा छेत्ता नाशयिता सशयस्य अस्य न हि यस्मात् उपपद्यत न सम्भवति । अत त्वमेव छेत्तुम् अर्हसि इत्यर्थ ॥ ३९ ॥

हे पार्थ नैव इह लोके नामुत्र परस्मिन् वा लोके विनाश तस्य विद्यते नास्ति । नाशो नाम पूर्वस्मात् हीनजन्मप्राप्ति । स तस्य योगभ्रष्टस्य नास्ति। हि यस्मात् कारणात् कल्याणकृत् शुभकृत् कश्चित् दुर्गति कुत्सिता गतिं हे तात तनोति आत्मान पुत्ररूपेण इति पिता तात उच्यते। पितैव पुत्र इति पुत्रोऽपि तात उच्यते। शिष्योऽपि पुत्रवत् इति अपुत्रोऽपि तात उच्यते । न गच्छति ॥ ४० ॥

स॥विनाशो न विद्यत इत्यर्थः,नहि निरतिशयकल्याणरूपयोगकृत्कश्चित्कालत्रयेऽपि दुर्गतिं गच्छति ॥ ४० ॥

कथमयं भविष्यतीत्यत्राह—

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१

यज्जातीयभोगाभिकाङ्क्षया योगात्प्रच्युतोऽयमतिपुण्यकृतां प्राप्यान् लोकान् प्राप्य तज्जातीयानतिकल्याणान् भोगान् योगमाहात्म्यादेव भुञ्जानो यावत्तद्भोगतृष्णावसानं शाश्वतीस्समास्तत्रोषित्वा तस्मिन् भोगे वितृष्णः शुचीनां श्रीमतां योगोपक्रमयोग्यानां कुले योगोपक्रमे भ्रष्टो योगमाहात्म्याज्जायते ॥ ४१ ॥

अथवा योगिनामेव कुले महति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२

रा ॥ परिपक्वयोगश्चलितश्चेत् योगिनां धीमतां योगं कुर्वतां स्वयमेव योगोपदेशक्षमाणां कुले भवति; तदेतदुभयविधं योगयोग्यानां योगिनां च कुले जन्म, लोके प्राकृतानां दुर्लभतरम्, एतत्तु योगमाहात्म्यकृतम् ॥ ४२ ॥

**तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् ।** ४३
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥**

ता॥'अथवा' इति व्यवस्थितविकल्पार्थम्. अतिशयितजन्मनिर्देशोऽतिशयितहेतुसाकाङ्क्ष इति दर्शयितुम्— परिपक्वयोगश्चलितश्चेदित्युक्तम् । 'योगिनां कुले' इति कस्यचिद्योगिनस्सन्ताने प्रसूतिर्नोच्यते; तावन्मात्रस्यात्यन्तयोगोपकारकत्वाभावात्, किं तूपदेशार्हत्वाय योगिनां सतामेव पुत्रादित्वेन जायत इति दर्शयितुम्— योगं कुर्वतामिति वर्तमाननिर्देशः । 'शुचीनां श्रीमताम्' इत्यन्यस्मादुपदेष्टुर्योगाधिगम प्रत्यानुगुण्यमात्रमुक्तम्, इह तु 'धीमताम्' इति वचनात्तेषामेवोपदेष्टृत्वयोग्यतोच्यत इत्याह— स्वयमेवेति। 'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः' 'तव दास्यसुखैकसङ्गिनाम्' इत्यादिप्रतिपादितवैभवयुक्तेगृहस्थम्। पूर्वश्लोकस्यगेहशब्दतुल्यार्थत्वादत्रापि कुलशब्दो गृहवाची। एतदुभयविधमिति— साधारणस्यैकशमित्यनुवादस्य उभयान्वयित्वमेव ह्युचितमिति भावः । प्रकृतिमात्रदर्शिजनविषयेण लोकशब्दे मुमुक्षुव्यतिरिक्तविवक्षामाह— प्राकृतानामिति । दुर्लभतरं कथं लभ्येतेत्यत्रैतच्छब्दाभिप्रेतमाह— एतत्त्विति ॥ ४२ ॥

ततः किमायातमपवर्गस्य, पूर्वदेहारब्धस्य योगस्य शिथिलत्वात्, योगिकुलजन्ममात्रस्य च मोक्षहेतुत्वाभावादित्यत्रोत्तरं 'तत्र तम्' इति । तत्रशब्दस्य सप्तमीसाम्याद्देहविषयत्वभ्रमव्युदासाय पूर्वोक्तवा-

प्र पा॥१ 'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमम्पदम्'॥ अत्र वैष्णवशब्दो भक्तिसदाचारपरो मन्तव्यः ॥

२. स्तोत्ररत्ने ५५ श्लोके ॥ 'तव दास्यसुखैकसङ्गिनाम्भवनेष्वस्त्वपि कीटजन्म मे । इतरावसथेषु मा स्मभूदपि मे जन्म चतुर्मुखात्मना'॥ अस्यार्थः - पूर्वम् 'भगवन्नाकिमपि प्रयच्छसे' इति भगवदुक्तिं प्रार्थिता, तद्विवृद्धये तत्परत्वेनैव 'त्वदीयेषु भक्तिस्तत्सन्निकर्षश्च मे स्यात्' इत्यभिप्रायेण प्रार्थयत तव दास्यति । तव दास्यसुखैकसङ्गिना - त्वत्कैङ्कर्यप्रीतिमात्रासक्तानामित्यर्थः । एतेन 'ज्ञानानन्दशीलस्य दृढव्रतस्य' इत्यादिप्रसिद्ध वैयधिकसुखनैपुण्य व्यज्यते। ईदृशभागवताभिमानगोचरत्वाय स्थानान्तरगमनानर्हानन्यगतित्वविवक्षया 'कीटजन्मापि' इत्युक्तम् । 'शुचीनां श्रीमतां गेहे' इत्युक्तसुकृतजन्म तिष्ठतु, 'पशुर्मनुष्यः' इत्यादिसूक्तमपकृष्टजन्मापि त्वदीयत्वनियोगसिद्धत्वात् शेषत्वकाष्ठावेदिना मयाऽस्म्, भागवताभिमानविषयभूतदशावासित्व तत्कैङ्कर्यं च मनापेक्षितमिति तात्पर्यम् । 'अपि' शब्दः तत्र गाढाभिसन्धिं द्योतयति । इतरावसथेषु अभागवतनिवेशेषु, चतुर्मुखात्मनाऽपि जन्म मा स्म भूत्, किं पुनर्मनुष्याद्यात्मनेति तात्पर्यम् । त्वदाभिपद्ये चतुर्मुखात्मनाऽपि जन्म मदभिसन्धिविरुद्धमित्यभिप्रायेण पुनरपि 'मे' इत्युक्तम् । एतेन भागवतानाम् अभागवतसंसर्गं परिहार्य इत्युक्तं भवति । 'नेदवित् अनिदविदा समुदियेत, न सह भुञ्जीत, नवमथमाविश्याव' इति बहुचश्रुते —इति ॥

ग्र॥अथवा श्रीमतां कुलात् अन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम् । एतत् हि जन्म, यत् दरिद्राणां योगिनां कुले, दुर्लभतरं दुःखलभ्यतरं पूर्वम् अपेक्ष्य लोके जन्म यत् ईदृशं यथोक्तविशेषणे कुले ॥ ४२ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥ ४३॥

रा॥ तत्रजन्मनि तमेव पौर्वदैहिकं योगविषयं बुद्धिसंयोगं लभेत। ततस्सुप्तप्रबुद्धवद्भूयस्संसिद्धौ यतते। यथा नान्तरायहतो भवति; तथा यतते। तेन पूर्वाभ्यासेन—पूर्वेण योगविषयेणाभ्यासेन सः योगभ्रष्टो ह्यवशोऽपि योग एव ह्रियते। प्रसिद्धं ह्येतद्योगमाहात्म्यमित्यर्थः ॥ ४३॥

जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४

अप्रवृत्तयोगो योगे जिज्ञासुरपि ततश्चलितमानसः पुनरपि तामेव जिज्ञासां प्राप्य कर्मयोगादिकं

ता॥ क्यार्थेन अन्वयमाह तत्र जन्मनीत्यादि। पूर्वदेहे संसारहेतुबुद्धेरपि सद्भावात्तद्व्यवच्छेदाय 'तम्' इत्युक्तमित्याह—योगविषयेति। ततः—बुद्धिसंयोगादित्यर्थः जन्मान्तरे समस्तसंस्कारतिरोधानस्य दृश्यमानत्वात्कथमिदमुपपद्यत इति शङ्कायां पुण्यकृता तथाविधसंस्कारभ्रंशो नास्तीति प्रदर्शनाय सुप्तप्रबुद्धवदिति दृष्टान्त उक्तः। 'संसिद्धौ' इत्यत्रोपसर्गाभिप्रेतमाह—यथेति। तेनेत्यस्यार्थः योगविषयेणेति। 'तेनैव' इत्यवधारणफलितमाह—योग एव ह्रियत इति। हिशब्दार्थमाह—प्रसिद्धमिति। प्रसिद्धिश्चादिभरतविदुरभीष्मादिवृत्तान्तेषु द्रष्टव्या। पार्थकुरुनन्दनशब्दाभ्यामुभयकुलशुद्ध्यादिसूचकाभ्यामर्जुनस्यापि शुचीनां श्रीमतामित्याद्यन्वयस्सूचितः ॥ ४३॥

'जिज्ञासुः' इत्यादि प्रकरणवशाद्वासनाया विच्छिन्नघटकत्वप्रदर्शनार्थमित्याह—अप्रवृत्तेति। 'जिज्ञासुरपि' इति सन्नन्तापिशब्दयोस्सामार्थ्यात्—अप्रवृत्तयोग इत्युक्तम्। यद्यपि 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति कर्मणि षष्ठीनिषेधः, तथाप्यत्र सम्बन्धसामान्यविवक्षया 'योगस्य' इति षष्ठी। योगिनश्चलितस्य योगः, प्रक्रान्तयोगस्य चलितस्य तत्प्रक्रमः, योगमारुरुक्षोश्चलितस्यारुरुक्षेति तत्तदवस्थानुरूपं प्रतिसमाधानमिति भावः। कर्मयोगादिकं - कर्मयोगज्ञानयोगावित्यर्थः। यद्वा, कर्मयोग

प्र-पा॥ १. अष्टा-ध्या. २. ३-३९ ॥

श॥ यस्मात् च—तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं लभते पौर्वदैहिकं पूर्वस्मिन् देहे भवं पौर्वदैहिकम्। यतते च प्रयत्नं च करोति ततः तस्मात् पूर्वकृतात् संस्कारात् भूयः बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन ॥ ४३॥

* यः पूर्वजन्मनि कृतः अभ्यासः सः पूर्वाभ्यासः, तेनैव बलवता ह्रियते संसिद्धौ हि यस्मात् अवशोऽपि सः योगभ्रष्टः; तेन कृतं चेत् योगाभ्यासजात् संस्कारात् बलवत्तरं धर्मादिलक्षणं कर्म, तदा योगाभ्यासजनितेन संस्कारेण आह्रियते; अधर्मः चेत्

आ॥ योगस्य जिज्ञासुरपि ज्ञातव्यो मया योग इति यस्यातीवेच्छा, सोऽपिशब्दब्रह्माति-

ज॥ उप्रत्यययोगे 'नलोकाव्यय' इति षष्ठीनिषेधात् योगस्य स्वरूपमित्यध्याहृत्य कश्चिद्व्याख्यातवान्। श्रमो वृथैव, 'नञा निर्दिष्टमनित्यम्' इत्यस्यानित्यत्वात्। अतः कात्यायनो 'द्विषः शतुर्वावचनम्' इत्याद्यवोचदित्यभिप्रेत्याह—योगस्येति। 'ब्रह्मजिज्ञासे'त्यादाविव विचारार्थताशङ्कानिरासाय व्याचष्टे—ज्ञातव्य इति। अतीवेत्युप्रत्ययस्यार्थः, 'सनाशंसभिक्ष उः' इति तच्छीलादौ तस्य विहितत्वात्, इच्छार्थे बाधकाभावादिति भावः। 'शब्दब्रह्मातिवर्तते' इत्येतद्वेदोक्तकर्मकारिभ्योऽतिरिच्यत इति कश्चि-

पा॥ * कथंभूतं पूर्वदेहबुद्धिसंयोगमिति; तदुच्यते पूर्वेति ॥

